# । प्रस्तावना ।

विदांकुर्वन्तु काव्यरसिका धर्मज्ञाः सज्जनाः ।

इह किल चातुर्गतिकदुःखवारिभृतं संसाराब्धिं तितीर्षुभिर्भव्यैः श्रीतीर्थकृन्निर्मितसद्धर्मतरण्ड एवाश्रयणीयः, तच्चालयितारश्च सद्गुरुनाविकाः सेवनीयाः, यतस्ते द्रव्यानुयोग–चरणकरणानुयोग–गणितानुयोग–कथानुयोगतरण्डकाष्ठैः( पादुकाभिः ) दुःखवारीणि निरस्य पारं प्रापयितारः सन्ति। तेष्विमे श्रीनरचंद्रसूरिगुरवो देवप्रभसूरयः कथानुयोगद्वारा भव्योपकारिण इदं महाकाव्यं गुरुवराणां श्रीदेवानन्दसूरीणामादेशात् षष्ठाङ्गोपनिषद्ज्ञाताधर्मकथा–त्रिषष्टिशलाकापुरुषचरित्राद्यवलोक्याष्टादशसर्गात्मकमष्टसहस्रश्लोकमितं पाण्डवचरित्रनामक सं. १२७० सवत्सरे रचितवन्तः। एतच्च श्रीयशोभद्रसूरि–नरचन्द्रसूरिभ्या संशोधितम्।

पूज्यैश्चामीभिः श्रीदेवप्रभसूरिभिर्धर्मसारशास्त्रापरनामकमृगावतीचरित्रं मुरारिकृतानर्घराघवोपरि अनर्घराघवकाव्यादर्शं च सार्धसप्तसहस्रश्लोकमितं ग्रथितमिति—

"तत्क्रमिको देवप्रभ–सूरिः किल पाण्डवायनचरित्रम्।
श्रीधर्मसारशास्त्रं च, निर्ममे सुकविकुलतिलकः" ॥

१ दृश्यतामत्रैवाष्टादशे सर्गे श्लोक २८०।

गाथेनग्रन्थन्यायकन्दलिपञ्जिकाया लिखितमस्तीति ( जैन साहित्य इतिहास पृ. ३८९ ) इत्यादि ।

पूर्वाङ्गे कोटिकाख्यगणस्य मध्यमानाम्न्यां शाखाया श्रीप्रश्नवाहनकुले श्रीहर्षपुरीयगच्छे श्रीअभयदेवसूरिपट्टपरंपरायां समभूवन्निति ग्रन्थस्यास्य प्रशस्तौ स्पष्टं लिखितमस्ति, परंतु गृहस्थाश्रमे तेषा का जन्मभूमिः ? कौ मातापितरौ ? कदा जन्म ? कदा दीक्षाग्रहणम् ? इत्यादिविज्ञाने किमपि साधनं न मिलितमिति न किमप्यत्र लिख्यते ।

ग्रन्थस्यास्य मुद्रापणे मावपुरस्थसघसत्कज्ञानभाण्डागारात् पुराणं हस्तलिखितं प्रतित्रयं मिलितमतस्तद्दातॄणां महाशयानां शा. कुंवरजी-आणंदजीतिनामधेयानामत्र महोपकारं मन्ये ।

ग्रन्थस्यास्यातिगभीरशब्दार्थालंकारादेः शुद्धिविषये क्षयोपशमानुसारेण सर्वशक्त्या मया कृतेऽपि प्रयत्नेऽल्पज्ञत्व-दृष्टिदोष-मुद्रायन्त्रदोषादिना केनापि कारणेन स्खलनास्थानानि दृष्टवता विद्वद्वर्गेण कृपालुना कृपां कृत्वा संशोधनीयानीति प्रार्थये इति शम् ॥

ली० संशोधकः ॥

पुस्तकप्राप्तिस्थानम्—

**मेसर्स ए. एम, एन्ड कम्पनी.**

पालीताणा–काठियावाड.

# । सर्गविषयाणामनुक्रमणिका ।

ॐ नमोऽर्हद्भ्यः ऐं नमः ।

मलधारि-श्रीदेवप्रभसूरिविरचितं

# श्रीपाण्डवचरित्रम् ।



## प्रथमः सर्गः ।



श्रियं विश्वत्रयत्राण-निपुणः पुण्णातु वः प्रभुः । शंकरः पुण्डरीकाक्षः, श्रीमन्नाभिसमुद्भवः ॥ १ ॥
पान्तु श्रीशान्तिनाथस्य, पदप्रेङ्खन्नखत्विषः । दुरन्तदुरितारण्य-प्रज्वलज्ज्वलनश्रियः ॥ २ ॥
पुण्यप्रसूतिः श्रीनेमेः, पातु वो देशनागवी । घासः स्मरादयो यस्याः, क्षीरं मोक्षसुखं पुनः ॥ ३ ॥

१ तृणम् , भक्ष्यम् ।

पार्श्वनाथः स वः पायाद्, यदङ्गद्युतिसागरे । प्रवालकन्दलायन्ते, फणरत्नप्रभाङ्कुराः ॥ ४ ॥

जयन्ति वर्धमानस्य, जितदम्भोलिवैभवाः । मोहान्धतमसध्वंसे, हेलयः[1] सत्त्वकेलयः ॥ ५ ॥

॥ १ ॥ चरित्रं पाण्डुपुत्राणां, पवित्रमभिदध्महे । श्रुतं हितोपदेशाय, यज्जने पर्यवस्यति ॥६॥ क्व वृत्तं पाण्डवेयानां ?, क्व चाहं जडिमैकभूः ? । मेरुमारोढुकामोऽस्मि, मूढात्मा पङ्गुरप्यतः ॥ ७ ॥ बहुस्तद्बहुमानस्तु, मामत्यन्तमुदस्यति । समीरणेन किं रेणु-रुद्धूतः खे न खेलति ? ॥ ८ ॥

आसीन्निःसीममाहात्म्य-पदमाद्यो महीभृताम् । प्रथमस्तीर्थनाथानां, नाभिभूरिह भारते ॥ ९ ॥ शतमासन् सुतास्तस्य, तेष्वेकः कुरुसंज्ञकः । ख्यातं यस्याख्यया क्षेत्रं, कुरुक्षेत्रमिति क्षितौ ॥ १० ॥ सुतो बभूव हस्तीति, दानोत्तरकरः कुरोः । तदुपज्ञं क्षितावस्ति, पुरं श्रीहस्तिनापुरम् ॥ ११ ॥ स्फुरदम्भःसरोदम्भात्, सैंहिकेय[2]भयादिव । राकामृगाङ्काः संभूय, विभान्ति शरणागताः ॥१२॥ यस्यादर्शोज्ज्वले वप्रः, संक्रान्तः परिखाऽम्भसि । आत्मनः कमनीयत्वं, दिदृक्षुरिव लक्ष्यते ॥१३॥ दारिद्र्यस्यैव दारिद्र्य-मधर्मस्यैव पीडनम् । भयस्यैव भयं तस्मि-न्नन्यायस्यैव निग्रहः ॥१४॥ तत्र हस्त्यन्वयोदन्व-त्कौस्तुभाः[3] स्तुतिभाजनम् । संजज्ञिरे महौजस्काः, परेलक्षाः क्षमाभुजः ॥१५॥ सनत्कुमार इत्यत्र, चक्रवर्ती क्रमादभूत् । चिकित्सति स्म यो भाव-रोगान् वैराग्यभेषजैः ॥ १६ ॥ शान्तिः कुन्थुररश्चैव, तत्र वित्रासितद्विषः । बभूवुश्चक्रिणो धर्म-चक्रिणोऽपि

१ सूर्याः । २ राहुभयात् । ३ हस्तिराजकुलसागरे कौस्तुभमणयः ।

क्रमात्ततः ॥ १७ ॥ विक्रमाक्रान्तसामन्त–चक्रश्चक्रिसमप्रभः । क्रमादनन्तवीर्योऽभू–त्तत्र धात्रीपुरंदरः ॥१८॥ ततो दुर्वा-
रदोर्वीर्यः, कृतवीर्योऽभवन्नृपः । यस्य दानेन नाभूव–न्नर्थिनः पुनरर्थिनः ॥ १९ ॥ अथोग्रमहसां भूमिः, सुभूमि(म)श्चक्र-
वर्त्यभूत् । अतरायत वीरेण, यमदग्नेः सुतेन यः ॥ २० ॥

अतिक्रान्तेष्वसंख्येषु, ततो राजस्वजायत । प्रशान्तः शान्तनुर्नाम, तेजोधाम प्रजापतिः ॥ २१ ॥ अन्यायकन्दमुच्छि-
न्दन, शिश्रन्न्यायमहीरुहम् । समस्तक्षितिपालाना–मुपमानं बभूव यः ॥ २२ ॥ कर्म मर्माविदन्योन्यं, प्रजानामस्तु दूरतः ।
यस्य राज्ये त्रिवर्गोऽपि, नाधाद्बाधां परस्परम् ॥२३॥ निखिलव्यसनत्याग–पवित्रस्यापि शान्तनोः । विवेकिनोऽप्यभूदेकं,
मृगव्ये व्यसनं परम् ॥२४॥ सोऽन्यदाऽनन्यसामान्य–वेगमारुह्य वाजिनम् । दूरवर्धिष्णुपापर्द्धि–बुद्धिर्मृगवनं ययौ ॥२५॥ तत्रैकं
प्रेमरङ्गेण, कुरङ्गीचाटुकारिणम् । दूरात् कुरङ्गमालोक्य, सोऽधिज्यं विदधे धनुः ॥२६॥ स प्रेयसीं पुरस्कृत्य, संत्रासतरलेक्षणाम् ।
पलायमान सारङ्गः, कांदिशीकमनाः पुरः ॥२७॥ स वल्लभानुरोधेन, मन्दं मन्दं प्लुतोऽपि सन् । मनोऽभिराममारामं, विवेश
निराश्रयः ॥ २८ ॥ बाणगोचरभूतेऽपि, दृष्टिमार्गातिगे मृगे । विशति स्म तमारामं, शरं संहृत्य शान्तनुः ॥२९॥ तत्र
प्रासादमालोक्य, समारुह्य च विस्मयात् । एकामालोकयामास, स बालां सप्तमे क्षणे ॥ ३० ॥ अभ्युत्थाय महीनाथ–मौर्य-
मर्यादिशृङ्गरा । सा सत्कृत्य यथौचित्यं, स्वपल्यङ्के न्यवीविशत् ॥ ३१ ॥ विलोक्यानर्गलप्रेम–रोमाङ्कुरकरम्बिताम् । सुमुर्वीं
संमुखासीनां, भूपालस्तामभाषत ॥३२॥ कल्याणि ! काऽसि ? कस्यासि, तनया विनयान्विता ?। प्रभातेऽम्भोजिनीवासि, किं

१ उपरितनभूमौ । २ पृच्छाम ।

वा ? कस्माद्विकस्वरा ? ॥३३॥ इत्याकारेङ्गितज्ञेन, राज्ञा हृष्टेन पृष्टया । ततो दृष्टया तयाऽऽदिष्टा, वयस्यैवं व्यजिज्ञपत् ॥३४॥

विद्याधरपतिर्जह्नु–रस्ति रत्नपुरे पुरे । तस्य पुत्री पवित्राङ्गी, सेयं गङ्गेति गीयते ॥३५॥ अन्यदाऽङ्कस्थितामेतां, जह्नुः स्नेहादवोचत । वत्से ! रूपानुरूपस्ते, कीदृगालोक्यतां वरः ? ॥ ३६ ॥ एषाऽप्युवाच यस्तात, मदुक्तं नातिवर्तते । सुरूपेणापि किं भर्त्रा, वचोऽतिक्रमकारिणा ? ॥३७॥ व्यवस्थयाऽनयाऽनल्पे, जह्नुना नृपसूनवः । एतदर्थं वृताः किं तु, स्त्रीवशत्वं न मन्वते ॥ ३८ ॥ दौर्मनस्यमथैतस्याः, किमप्याविरभूत्तथा । धर्माय स्पृहयामास, यथैकस्मै दिवानिशम् ॥ ३९ ॥ चारणश्रमणात् प्राप्य, दुरापं धर्ममार्हतम् । ततःप्रभृति सौधेऽस्मि–स्तस्थुषी जिनमर्चति ॥ ४० ॥ जिनार्चनकृतार्थानि, लूनान्यपि लताग्रतः । अथैतस्याः फलन्ति स्म, कुसुमानि मनीषितम् ॥४१॥ यदुद्यानेऽत्र पूर्वेद्यु–स्तातेन सह जह्नुना । एत्य नैमित्तिकः सत्य–वाणिरेनामवोचत ॥ ४२ ॥ भद्रे ! भद्रंकरादस्मात्, सिद्धं धर्मात् तवेप्सितम् । मृगानुपदिकः प्रातः, पुमानेकः समेष्यति ॥ ४३ ॥ मनोऽभिरुचितः पुत्रि !, स ते भर्ता भविष्यति । हस्तिनापुरभूपालं, तं तु जानीहि शान्तनुम् ॥४४॥ तदुक्तिश्रवणादद्य, प्रासादशिखरस्थयोः । आवयोर्भवतो मार्गं, पश्यन्त्योः सिद्धमीप्सितम् ॥४५॥ अथोचे नृपतिर्गङ्गां, मृगो मे मृगलोचने ! । महोपकारी येनासि, दर्शिता नेत्रकौमुदी ॥४६॥ नानोपायैर्जनो लक्ष्मी–मखिलोऽप्यभिलष्यति । किं ब्रूमस्तस्य यमियं, स्वयमेवाभिलाषुका ॥ ४७ ॥ त्वद्वचोऽतिक्रमत्यागः, प्रियस्य हितेंहेतवे । वैद्योपदेशनिर्माणं, रोगशान्त्यै हि

मृगानुपदिकस्य शान्तनोर्गङ्गामेलापः ॥

१ यं जनम्, इयं लक्ष्मीः । २ प्रियहेतवे इति प्रत्यन्तरपाठः ।

गोगिणः ॥ ४८ ॥ दण्डोऽयं पुण्डरीकाक्षि !, त्वद्वचोऽतिक्रमेऽस्तु मे । यत्तदैव परित्यागं, कुर्वीथाः सर्वथा मम ॥ ४९ ॥ दर्शादिति वदन्त्येव, नृपे मैन्यमुपागमत् । जह्नुरप्यायर्यौ तत्र, तनयादर्शनोत्सुकः ॥ ५० ॥ सखीमुखेन निःशेषं, तं वृत्तान्तं रपानता । गङ्गा रत्नादयोत्थाय, जनकाय व्यजिज्ञपत् ॥ ५१ ॥ सोऽपि पल्लवितप्रीतिः, स्फीतान्योऽन्यानुरागयोः । तयोर्निर्वर्त्तयामास, पाणिग्रहमहोत्सवम् ॥ ५२ ॥ पाणिमोक्षोत्सवे लब्ध-हास्तिको हस्तिनापुरम् । सदारोऽथ सरोमाञ्च-तनुः शान्तनुरगमत् ॥ ५३ ॥

तत्र प्रेमानुरूपाणि, स्फीतराज्योचितानि च । तौ दम्पती यथौचित्यं, सुखान्यनुबभूवतुः ॥ ५४ ॥ अन्यदा निविडस्थैर्म-प्रेमबन्धस्य शान्तनोः । अन्तर्वत्नी बभौ पत्नी, निधिगर्भेव काश्यपी ॥ ५५ ॥ धामैकधाम गङ्गाया, गङ्गाया इव भास्करम् । गर्भमन्तर्दधानाया, दुरालोकमभूद्वपुः ॥ ५६ ॥ महामहिम्नस्तस्याथ, सा गर्भस्यानुभावतः । सुमेरुं कन्दुकं मेने, पाथोनाथं च गोष्पदम् ॥ ५७ ॥ सा मुहूर्ते शुभे सौम्यं, सुखेन सुषुवे सुतम् । यत्प्रभान्यक्कृतैर्जातं, दीपैश्चित्रगतैरिव ॥ ५८ ॥ तदा तन्नगरं सर्वं, सोन्मादजनसंकुलम् । बभूव केवलं शून्य-प्रचारं चारकान्तरम् ॥ ५९ ॥ गङ्गाऽपत्यस्य गाङ्गेय, इति सार्थकमर्थवित् । तस्यात्मजन्मनो नाम, निर्ममे नृपसत्तमः ॥ ६० ॥

भूपालं मृगयाऽऽरम्भ-गाढसंरम्भमन्यदा । मूर्द्धबद्धाञ्जलिर्गङ्गा, सानुरागं व्यजिज्ञपत् ॥ ६१ ॥ प्रजाप्रियः प्रियन्यायः, प्राणेश ! श्यामधामवान् । परोपकारी प्रजावा-नस्ति कस्त्वादृशः क्षितौ ? ॥ ६२ ॥ परं परमसौन्दर्य-शालिनस्ते कलावतः । मृगव्यव्यसनं

---

१ पाकशासनमूढः । २ स्नेहा-स्थिरता । ३ गर्भिणी । ४ पृथ्वी । ५ तेजसामेकस्थानम् । ६ तेजस्वि । ७ कारागारमध्यम् ।

दोषो, लक्ष्मेव मृगलक्ष्मणः ॥ ६३ ॥ अरण्यबद्धरङ्गाणां, कुरङ्गाणां निरागसाम् । व्यापादनेन मृगया, सत्यं पापर्द्धिरुच्यते ॥ ६४ ॥ वधः कृतापराधानां, निर्मन्तूनां च पालनम् । उर्वीपतीनां सर्वेपा–मेष धर्मः सनातनः ॥६५॥ आपदं श्वापदान्ये(ने)वं, मा स्म नैषीर्नयोज्ज्वल ! । हिंसकानां हि नेदीया–न्नरकोत्सङ्गसंगमः ॥६६॥ तत्त्यज व्याधसाधर्म्यं, धर्म्यं कर्म समाचर । मम विज्ञापनामेनां, नातिक्रमितुमर्हसि ॥६७॥ अथाऽऽह पृथिवीपालः, प्रिये ! साधु त्वमभ्यधाः । इमं चावैमि निःशेषं, पापव्यापारमात्मनः ॥ ६८ ॥ किं तु कान्ते ! दुरुच्छेदः, सैष मे व्यसनग्रहः । यो लङ्घयति ते वाचं, समयस्मरणोपमाम् ॥ ६९ ॥ इत्युक्त्वा तामवज्ञाय, मृगयामगमन्नृपः । सा च तं बालमादाय, पितुर्मन्दिरमभ्यगात् ॥ ७० ॥ पुरे रत्नपुरे तस्मि–न्नाढ्ये वैताढ्यमण्डने । तं शिशुं वर्धयामास, सा सती बन्धुवत्सला ॥ ७१ ॥ पत्नीवृत्तं यथावृत्तं, व्यावृत्तो मृगयावनात् । अथ पर्यश्रुरश्रौषी–न्मेदिनीशः परिच्छदात् ॥७२॥ तत् सकर्णः समाकर्ण्य, सोऽन्वशेत निजाशये । पश्चात्तापकृते कस्य, न स्याद्व्यसनमादृतम् ॥ ७३ ॥ नृपः स्मृत्वा स्मितस्मेर–मात्मजास्यमखिद्यत । विरहः सुसहः केन, तादृशस्याङ्गजन्मनः ॥ ७४ ॥ अथ पुत्रकलत्राभ्यां, विप्रयुक्तोऽवनीपतिः । अग्निमग्न इवानैषी–च्चतुर्विंशतिवत्सरीम् ॥ ७५ ॥ हायनैः सोऽथ तावद्भि–र्विस्मृत्य विरहव्यथाम् । अभूद् भूयोऽपि पापर्द्धि–व्यसनस्य वशंवदः ॥ ७६ ॥

मृगव्यव्यसनी दूरं, विहरन्नन्यदा नृपः । एत्य विज्ञपयांचक्रे, व्याधेनैकेन हर्षतः ॥ ७७ ॥ देव ! देव ! सरित्तीरे, नातिदूरेऽस्ति काननम् । यदेकं ते विनोदाय, पर्याप्तमिति मे मतिः ॥ ७८ ॥ यत्रातिविस्मृतत्रासाः, सन्ति संख्यातिगा

१ चन्द्रस्य। २ सिद्धान्तस्मरणसदृशीम् । " स्मरणेऽपि " इति प्रतित्रयपाठः ।

सगाङ्गेय-
गङ्गायाः
पितृगृहे
गमनम्,
शान्तनो-
र्मृगयायां
गमनं च ॥

घोरैर्घुरघुरारावैः, शूकराश्च भयंकराः ॥७९॥ सन्ति यत्र महाकाया–श्चित्रकायाः सहस्रशः । सरिद्रमितमध्याह्न–
मृगाः । घोरैर्घुरघुरारावैः, शूकराश्च भयंकराः ॥७९॥ सन्ति यत्र महाकाया–श्चित्रकायाः सहस्रशः । सरिद्रमितमध्याह्न–
चामराश्चापि कामराः ॥ ८० ॥ ततस्तं लुब्धकश्रेष्ठं, पृष्ठमाधाय तत्क्षणात् । तदुपद्रोतुमारेमे, काननं मेदिनीपतिः ॥ ८१ ॥
वागुरापाशवीतंस–विहस्तोभयपाणयः । त्रसस्तुः परितः स्वैर–चादिनस्तत्र सादिनः ॥ ८२ ॥ अमुच्यन्त नवाकल्प–सरमाः
सरमासुताः । दधाव विविधारब्ध–कूटः कूटमृगीगणः ॥ ८३ ॥ दुःसाधव्याधहक्काभि–र्भमैर्ज्याघातनिःस्वनैः । क्षणादलभत
क्षोभं, भयात्तत् काननं तदा ॥८४॥ आशशंस शशस्त्राणं, कुरङ्गोऽभूत् कुरङ्गकः । समीपी नाभवद्वीपी, किरति स्म किरिः स्मयम्
॥ ८५ ॥ शरभः शरभङ्गाय, पूर्वकायमुदास्थत । भीतः ससार कासार–नीरं सपदि कासरः ॥ ८६ ॥ गोमायुरायुरन्तेऽभू–त्तै–
रक्षुर्दिक्षु पुप्लुवे । दूरमुद्धुषितान् दध्रे, केसरी केसरान् पुनः ॥८७॥ वनमालोडयन्नेवं, मन्दराद्रिरिवार्णवम् । केनाप्येत्य नृपो
यूना, मा स्म मा स्मेत्यवार्यत ॥८८॥ तद्ध्वनेरध्वनि क्षिप्त–चक्षुः क्षितिपतिः पुरः । मण्डलीकृतकोदण्डं, तूणीरद्वयधारिणम्
॥ ८९ ॥ साक्षादिव धनुर्वेदं, वनं रक्षितुमागतम् । युवानमेकं पीनाङ्ग–मनङ्गोपममैक्षत ॥ ९० ॥ ( युग्मम् ) तमभ्यधाच्च भो
भद्र !, कान्तारान्तरचारिषु । मृगेषु मृगयाशीलान्, कथमस्मान्निषेधसि ? ॥ ९१ ॥ सोऽप्युवाच महाभाग !, वन्यानेतान्नि–
रागसः । भयार्तान् भव्यनीतिज्ञ !, न जन्तून् हन्तुमर्हसि ॥९२॥ भवन्ति हि भवादृक्षाः, सर्वप्राणिप्रियंकराः । प्राणिनां च
प्रियाः प्राणा–स्त्रायस्व तदिमानहो ! ॥९३॥ ऊचे नृपश्चलेष्वेषा, शिक्षा लक्ष्येषु दोर्भृताम् । मृगयेति विदुः पूर्वे, तदलं विचि–
कित्सया ॥ ९४ ॥ तदितोऽपेहि मुग्धोऽसि, विदग्धैर्विप्रतारितः । विलोकय विनोदं मे, सर्वक्षत्रमनोहरम् ॥ ९५ ॥ स युवोवाच

१ वीतंसः–पक्षिमृगग्रहणाय जालः । २ विहस्तः सहितः । ३ लघुव्याघ्रः । ४ भयानभिज्ञान्नीतिज्ञ ! इति प्रतिन्त्रयपाठः ।

साक्षेपं, हुं ज्ञातोऽसि धनुर्धरः । शिक्षाक्रमश्चले लक्ष्ये, गत्वाऽन्यत्र विधीयताम् ॥ ९६॥ इत्थं यदा निषिद्धोऽपि, मृगान् हन्ति स्म भूपतिः । रूक्षाक्षरमदाक्षिण्यं, तदा तेन व्यभाष्यत ॥ ९७ ॥ धिङ्निस्त्रिंश ! वृथा वृद्ध !, गर्भव्याध ! न बाधसे । जन्तून्नरुंतुदैर्बाणैः, किंतु मामेव बाधसे ॥ ९८ ॥ ततो धर्मविरुद्धेऽत्र, प्रथयन् पथि पान्थताम् । इदानीं दुर्नयस्यास्य, सदृशं फलमाप्नुहि ॥ ९९ ॥ इत्याक्षिप्य क्षुरप्रेण, लघुहस्ततया तया । स चिच्छेद बिसच्छेदं, भूपालरथकेतनम् ॥ १०० ॥ हन्तुमोजायमानोऽपि, कल्लोलिकरुणारसः । स्वापं प्रस्वापनास्त्रेण, सोऽनैषीन्नृपसारथिम् ॥ १०१ ॥ नवाभिभवसंभार-प्रबुद्धक्रोधभीषणः । क्षितिपोऽपि निचिक्षेप, क्षिप्रं तं प्रति पत्रिणः ॥ १०२ ॥ महाबलेन ते तेन, सपत्राः पादपा इव । वायुनेव व्यधीयन्त, द्विधा मार्गेऽपि मार्गणाः ॥१०३॥ वीक्ष्य द्वेधाऽपि वैलक्ष्यं, प्रपेदानमथ प्रभुम् । मृगैरिव मृगारातिः, स रुद्धो नृपसैनिकैः ॥१०४॥ स भटः सुभटालोक-रोमाञ्चिततनुस्तदा । तान् प्रत्येकं शरैरेको, निर्ममे दक्षिणेर्मणः[1] ॥१०५॥ काश्यपीशो दशन् कोपा-द्दशनैर्दशनच्छदम्[2] । यावद्धनुषि संधत्ते, सायकं शत्रुशायकम्[3] ॥१०६॥ जितकाशी भृशं ताव-न्निजबाणेन भूपतेः । धनुःस्थं च भुजस्थं च, गुणं द्वेधापि सोऽच्छिदत् ॥ १०७ ॥ तेन विक्रमिणाऽऽक्रान्तः, सिंहसब्रह्मचारिणा । अभूद्विहस्तो[4] हस्तीव, हस्तिनापुरनायकः ॥१०८॥ आससाद विषादस्य, निषादस्येव पाप्मनः । स्पर्शदोषाद्दिशामीशः, सर्वाङ्गमलिनात्मताम् ॥ १०९ ॥

अथ क्ष्मापालमालिन्य-मपनेतुमिवोत्सुका । विज्ञाय गङ्गा संग्राम-मागमत्तं धनुर्धरम् ॥११०॥ अभ्यधत्त च तं वत्स !, तत्र केयमहंयुता[5] ? । समं यन्निजतातेन, ग्रहिलः कलहायसे ॥१११॥ ततोऽसौ विस्मयस्मेरः, पृच्छति स्मेति मातरम् । कथ-

१ दक्षिणे ईर्म-व्रणं येषां तान् दक्षिणपार्श्वविद्धमृगान् तत्सदृशानित्यर्थः । २ ओष्ठम् । ३ शत्रुनिद्राकरम् । ४ व्याकुलः । ५ गर्वः ।

शान्तनु-गाङ्गेययोर्युद्धम्, गङ्गाया आगमनम् ।

मेरा महीनाथ—स्नातो मे वनवासिनः ॥ ११२ ॥ अथाह जननी वत्स !, पिताऽसौ तव शान्तनुः । मृगव्यव्यसनादस्मा—न्न व्यरंसीत् कथंचन ॥ ११३ ॥जातमात्रं तदादाय, त्वामुपागां गृहं पितुः । पितैव शरणं स्त्रीणा—मविधेये हि भर्तरि ॥११४॥ अन्यायात्र स तां मान—येत्प्यैवं तथापि मे । तातोऽपि नाधुना तातः, कर्मठो यः कुकर्मसु ॥ ११५ ॥ असौ प्रत्युत मे शत्रुः, पालितेभ्यो मयाऽनिशम् । बाल्यात् कान्तारजन्तुभ्यो, यदमीभ्योऽपि द्रुह्यति ॥११६॥ पिता वाऽस्तु परो वाऽस्तु, नामुं मुञ्चे कथंचन । प्राणिनो मे प्रियानेता—न्निर्घृणश्चेज्जिघांसति ॥ ११७ ॥ ततो गङ्गा समागत्य, वसुधाऽधिपमभ्यधात् । आर्यपुत्र ! स्वपुत्रेण, कोऽयं ते भीषणो रणः ? ॥११८॥ एतत्तस्या वचः श्रुत्वा, स्फारिताक्षः क्षमापतिः । इयं गङ्गा कथमयं, गाङ्गेयश्चेत्य-तर्कयत् ॥ ११९ ॥ समुद्गतरोमाञ्चो, रथादुत्तीर्य पार्थिवः । प्रौढं प्रमोदमारूढ—स्त्वरितं सुतमभ्यगात् ॥ १२० ॥ अपरोऽप्यप-रोप्याशु, चापं पर्श्रुलोचनः । आगत्य भूमिलुठनैः, पादयोरपतत्पितुः ॥१२१॥ पिताऽप्युत्थाप्य सर्वाङ्ग—मालिङ्गदङ्गजं निजम् । तत्सुखं प्राप पीयूष—सेकतोऽप्यतिरेकि यत् ॥ १२२ ॥ ॥ परं परस्परस्नेहं, वीक्ष्य प्रत्यक्षतस्तयोः । यामुवाह मुदं तां तु, सैव जानाति जाह्नवी ॥ १२३ ॥

अथ पुण्यपरीपाक—संपन्नाङ्गजसंगमः । आलिङ्गनयनैः प्रीत्या, प्रियां प्रोवाच पार्थिवः ॥ १२४ ॥ कस्तूरीस्तबकश्याम—नवश्मश्रुरगो मया । प्रिये ! सुतोऽपि शौण्डीर्य—विस्मयान्नोपलक्षितः ॥१२५॥ कथं कान्तारवास्तव्यः, सुतो मे समजायत ? । कथं वा यौवनावस्था—मिमामानायितस्त्वया ? ॥१२६॥ गङ्गा जगाद राजेन्द्र !, कथयामि निशम्यताम् । पुरे मातामहस्यार्य,

१ 'पदात्' इति प्रत्यन्तरत्रयपाठः । २ 'वाऽस्त्वपरो' इति प्रत्यन्तरत्रयपाठः । ३ 'रोमाऽथ' इति प्रत्यन्तरत्रयपाठः । ४ सङ्गत्य । ५ गङ्गा ।

तदोपेतः समं मया ॥१२७॥ अतुलैर्मातुलानीना-मङ्कपर्यङ्कखेलनैः। पश्चातिक्रामयन् वर्षा-ण्ययमेकाहलीलया ॥१२८॥ विद्याधरकुमाराणां, मध्ये सवयसां स्थितः। तिरश्चकार रूपाणि, तेजांसीव तवात्मजः ॥१२९॥ युग्मम् ॥ ततः पवनवेगेन, मातुलेनायमादरात्। अध्यापयितुमारेभे, विद्यां विद्यान्तदृश्वना ॥ १३० ॥ पपाठाल्पेन कालेन, विनयात्तनयस्तव। वर्धिष्णुप्रतिभो वार्धि-मगस्तिरिव वाङ्मयम् ॥१३१॥ अध्यगीष्ट धनुर्वेद-मनिर्वेदमसौ तथा। गुरुः पवनवेगोऽपि, यथाऽत्यन्तं विसिष्मिये ॥ १३२ ॥ नीतस्तेन ततः सर्व-विद्यापारीणतामयम्। तृणवद्गणयामास, विद्याधरपतीनपि ॥१३३॥ मत्पितुः सदने हास्यात्, सुलभं वोऽवहेलनम्। ततः समस्तैस्तैः सार्धं, पुत्रस्ते कलहायते ॥ १३४ ॥ ज्ञात्युपालम्भतो भीता, त्वत्पाणिग्रहसाक्षिणि। प्रासादे निवसाम्यस्मि-न्नाचरन्ती जिनार्चनम् ॥१३५॥ चारणश्रमणश्रेणि-मुखाद्धर्मं निशाम्यतः। बभूवास्य दयाधर्मः, सुतरां हृदयंगमः ॥ १३६ ॥ ततः कल्लोलितश्रद्धा-निष्पतद्बाष्पशीकरः[3]। व्यधान्निरपराधानां, निषेधं प्राणिनां वधे ॥ १३७ ॥ ततः कारुण्यनिष्णेन, योजनानि चतुर्दश। वनेऽस्मिन् परितोऽनेन, सत्त्वरक्षा प्रवर्तिता ॥१३८॥ नामुनाऽप्यध्वना व्याधः, कोऽपि संचरते भिया। अस्मिन् हिनस्ति हिंस्रोऽपि, न विरोधी विरोधिनम् ॥१३९॥ कान्तारेऽत्र कृतान्तोऽपि, श्वापदानामनापदाम्। त्वत्पुत्रभीतो नैतेषां, प्रभवत्यपमृत्यवे ॥१४०॥ प्राणसत्रं स्वपुत्रस्य, सर्वसत्त्रशिरोमणिम्। आर्यपुत्र! परित्रातुं, सर्वथा तत्त्वमर्हसि ॥ १४१ ॥ पत्नीमुवाच रोमाञ्च-मतनुं[4] शान्तनुर्वहन्। सर्वाऽप्यतः परं त्यक्ता, त्वद्गिरा मृगया मया ॥ १४२ ॥ तदेहि सह पुत्रेण, सच्चरित्रेण संप्रति। उदग्रा जाग्रतु व्यक्तं, पुनर्मे भाग्यसंपदः ॥ १४३ ॥ साऽभ्यधादधुना लीनं, मनो मे

१ मातुलपत्नीनाम्। २ 'वाङ्मयीम्' प्रत्यन्तरपाठः। ३ निर्गच्छदश्रुबिन्दुः। ४ 'रोमाञ्चकवचं' इति प्रत्य०।

धर्मकर्मणि । व्यथन्ते तद्दिनान्यन्तः, प्राच्यान्यप्यफलानि माम् ॥ १४४ ॥ तन्मेऽधुना जिनस्यैव, वासना पर्युपासने । पुत्रं
त्वादाय राजेन्द्र !, व्रज शाधि वसुंधराम् ॥ १४५ ॥ इत्युदीर्य प्रजानाथं, सा तनूजमवोचत । वत्स ! गच्छ पितुः स्वस्य,
ममर्थय मनोरथान् ॥ १४६ ॥ ईदृक्कस्यास्ति जनकः ?, कस्यास्ति त्वादृशः सुतः ? । तदस्तु युवयोर्योगो, बुधचन्द्रमसोरिव
॥ १४७ ॥ ततो जगाद गाङ्गेय-स्त्यक्तुं त्वामम्ब नोत्सहे । त्वं मे पिता च माता च, दृष्टपूर्व्यस्मि नापरम् ॥१४८॥ तवो-
पर्याशून्यं मे, मा स्म भूदेकमप्यहः । इत्युक्त्वा व्यक्तमुक्ताश्रुः, सोऽपतन्मातृपादयोः ॥ १४९ ॥ अथोत्थाप्य प्रमृज्याश्रु,
जनन्या सोऽन्वनीयत । वलिः क्रियेऽहं वत्सस्य, कातर्यमिदमुत्सृज ॥१५०॥ पुत्र ! त्वमसहायस्य, सहायः स्वपितुर्भव । सूनु-
जनपितुश्चिन्ता-भाग्धारी हि वार्धके ॥ १५१ ॥ वात्सल्यं वत्सलस्तात-स्तथा ते प्रथयिष्यति । यथा न त्वमिहस्थाया, मम
वत्स ! स्मरिष्यसि ॥ १५२ ॥ इत्यादियुक्तिभिर्व्यक्तं, बोधितो बुद्धिमानपि । अम्बायाः स विलम्बेन, वचनं प्रत्यपद्यत ॥ १५३ ॥
गङ्गामापृच्छ्य गाङ्गेय-मादाय दयितः क्षितेः । उत्तोरणपताकाङ्क-गोपुरं पुरमाययौ ॥ १५४ ॥
नृपोऽथ सूनवे तस्मै, यौवराज्यपदं ददौ । योग्यं सुतं वा शिष्यं वा, नयन्ति गुरवः श्रियम् ॥ १५५ ॥ एकातपत्रां
सोऽप्युर्वीं, दुष्टनिग्रहितनिग्रहात् । विनीतात्मा तनोति स्म, प्रसादं सदृशं पितुः ॥ १५६ ॥ विनीततनयोत्खात-चिन्ताशल्यश्चिरं
नृपः । स्वच्छन्दोद्दामदानन्दं, विजहार महीतले ॥ १५७ ॥

१ 'हे वत्स !' इति प्रत्यन्तरत्रयपाठः । २ 'प्रसादसदृशं' इति प्रत्यन्तरत्रयपाठो न सम्यक् प्रतिभाति, उर्वीविशेषणे तु
पाठोऽपि कथञ्चित् । ३ क्रियाविशेषणमेतत् ।

अन्यदा यमुनातीरे, विहरन् स मनोहराम् । कन्यामालोकयामास, कांचिन्नावि निषेदुषीम् ॥१५८॥ स तस्याः स्पृहणीयेन, रूपेण हृतमानसः । काऽसि त्वमिति तामेत्य, पप्रच्छ मदनोत्सुकः ॥ १५९ ॥ जगाद साऽपि भूपालं, कालिन्दीकच्छवासिनः । नौतन्त्राधिपतेः पुत्री, कन्या सत्यवतीत्यहम् ॥१६०॥ ताताज्ञां प्राप्य धर्मेण, वाहयामि तरीमहम् । भवेत् कन्या कुलीना हि, पित्रादेशवशंवदा ॥ १६१ ॥ श्रुत्वेति नीतितत्त्वज्ञः, क्षणेन क्षितिपोत्तमः । तदर्थमर्थी भवितुं, ययौ तत्पितुरन्तिके ॥ १६२ ॥ स्वागतक्रिययाऽऽनन्द्य, सोऽपि शान्तनुभूपतिम् । देवाऽऽज्ञया प्रसीदेति, विनयेन व्यजिज्ञपत् ॥ १६३ ॥ अभाषिष्ट निविष्टं तं, पतिर्धात्र्यास्तरीपतिम् । सधर्मचारिणी मेऽस्तु, सुता सत्यवती तव ॥ १६४ ॥ अथाभ्यधत्त नौतन्त्र-स्वामी विनयवामनः । गृहमभ्यागतो देव !, त्वमर्थी केन लभ्यसे ? ॥ १६५ ॥ परं पतिंवरामेनां, न तुभ्यं दातुमुत्सहे । गाङ्गेयः खेचरीगेय-बाहुर्यत्तेऽस्ति नन्दनः ॥ १६६ ॥ सति राज्यधरे तस्मिन्, दोर्ष्मदूष्मनिषूदने[1] । अस्या यस्तनयो भावी, तस्य राज्यं कदापि न ॥ १६७ ॥ वधूनामवरोधत्वं, कारागारं विदुर्बुधाः । यासामभाग्यभाजां हि, राजा भवति नात्मजः ॥ १६८ ॥ तत् प्रसीद कलत्रार्थ-मन्यत्र व्यवसीयताम् । उदारास्त्वादृशां दाराः, संपत्स्यन्ते[2] पदे पदे ॥ १६९ ॥ अपार्थप्रार्थनः सोऽथ, बभार म्लानमाननम् । सकृदप्यपराद्धेषु-र्धानुष्कः किं न दूयते ? ॥ १७० ॥ दध्यौ नृपोऽभ्यधादेष, नौपतिः सोपपत्तिकम् । नृपश्चेन्नास्य दौहित्रः, किं जामात्रा मया फलम् ? ॥ १७१ ॥ न चान्तरेण गाङ्गेयं, धुर्यो राज्यस्य संभवी । न ह्याकाशप्रकाशाय, प्रभुरन्यो विना रविम् ॥ १७२ ॥ दत्तेऽवश्यं न चान्यस्मै, राज्यमूर्जस्वि[3] शान्तनुः । सुधासर्वस्वमम्भोधि-

१ वीरगर्वनाशके । २ 'संभवन्ति' इति प्रत्य० । ३ महत् ।

शान्तनोः
सत्यवती-
याचना ॥

न्यधान पुत्रे कलानिधौ ॥ १७३ ॥ इतः कर्षति चेतो मे, नौतन्त्राधिपतेः सुता । संकटे पतितोऽमुष्मि-न्मूढधीः करवाणि किम् ? ॥ १७४ ॥ इत्थं विकल्पैर्भूपालः, काममाक्रान्तमानसः । मोचकाल इव द्वीपी, निजं पुरमुपाययौ ॥ १७५ ॥

तदानीमागतो गज-सेवानसरलालसः । निर्वर्ण्य तातवैवर्ण्यं, चिन्तां शान्तनवो व्यधात् ॥ १७६ ॥ विनयातिक्रमः किं मे ?, किमाज्ञाऽलङ्घि केनचित् ? । किं वा सस्मार मे मातु-र्यन्मे श्यामाननः पिता ॥ १७७ ॥ तातस्तावन्न पृष्टोऽपि, यथावत् कथयिष्यति । अमात्यात्तातसंधीनः, सर्वं जानाम्यदः पुनः ॥१७८॥ ततः सर्वात्मना यत्नात्, करिष्ये पितुरीप्सितम् । इत्थं विमृश्य सोऽमात्यं, पप्रच्छ विजने सुधीः ॥ १७९ ॥ तस्मान्निःशेषमागम्य, सोऽगमन्नौपतेर्गृहम् । विहितस्वागतश्चैन-मवदन्नृपनन्दनः ॥ १८० ॥ महाभाग ! महाभाग्यै-र्यो शान्तनुराप्यते । इत्थं निराकृथा यत्तत्, सुष्ठु नानुष्ठितं त्वया ॥१८१॥ नादत्नौपतिः प्रीतः, कुमार ! शृणु कारणम् । शान्तनोरपि येनास्मि, प्रार्थनाभङ्गहेतवे ॥१८२॥ सोऽन्धकूपे क्षिपेत् पुत्रीं, गङ्गापत्न्यै ददीत यः । वसन्त्याः शान्तनोर्गेहे, सपत्नोऽस्यास्त्वमेव हि ॥ १८३ ॥ सपत्नीतोऽपि तज्जातं, नितान्तमतिरिच्यते । कोशातक्याः फलेन्वेव, रसः परिसमाप्यते ॥ १८४ ॥ नररत्न ! सपत्नोऽसि, येषां तेषां कुतः सुखम् । जाग्रत्यसहने सिंहे, सुखायन्ते कियन्मृगाः ? ॥ १८५ ॥ अप्रसन्नः प्रसन्नो वा, भवान् येषां द्वयेऽपि ते । आपदां पदमाद्याः स्युः, संपदामपरे पुनः ॥ १८६ ॥ कुमार ! मम दौहित्रो, यस्तु भावी कथंचन । दूरे महोदयस्तस्य, समीपे विपदः पुनः ॥ १८७ ॥ त्वां समुत्सृज्य राज्यश्रीः, श्रीमन् ! किं वृणुते परम् ? । हित्वा वार्धिं महासिन्धुः, किं तडागमुपसर्पति ? ॥ १८८ ॥ यः सर्व-

---

१ निःशुल्यान । २ कामारम ।

२

कमनीयायाः, श्रूयते जनकः श्रियः । प्रजानुरागजलधिः, सोऽपि त्वय्येव जृम्भते ॥ १८९ ॥ स्नेहतो दुहितुः पश्य-न्नायतौ दुःखमायतम् । प्रणयातिक्रमं तेन, कृतवानस्मि ते पितुः ॥ १९० ॥

जगाद शान्तनोः सूनु-र्मातामह ! महान् भ्रमः । तवैष यदिदं वाक्यं, तुच्छोचितमुदाहरः ॥ १९१ ॥ भिदेलिमा हि प्रकृतिः, कुरुवंशान्यवंशयोः । भवेत् स्वभावो न ह्येकः, कलहंसबकोटयोः ॥ १९२ ॥ सापत्न्यमिति संबन्धो, विवेकिनि कुरोः कुले । अभूतपूर्व एवायं, नैव विज्ञायते क्वचित् ॥१९३॥ मम सत्यवती माता, गङ्गातोऽपि विशिष्यते । संबन्धो जन्मसंबन्धात्, प्रतिपन्नो महाननु ॥ १९४ ॥ यस्त्वस्या भविता सूनुः, स ममैवोपयाचितैः । शुभः स देशः कालो वा, यत्र भ्रात्रा समागमः ॥ १९५ ॥ स्वादयिष्यति ते पुत्री, पुत्रेण विहितं मया । सुखं विनयतः पूर्वं, पश्चात्तु तनुजैः कृतम् ॥ १९६ ॥ दूयते किं च तातोऽपि, मया भृशमबन्धुना । रथस्यैकरथाङ्गस्य, प्रत्यूहो हि पदे पदे ॥ १९७ ॥ एकां शृणु प्रतिज्ञां मे, बाहुमुत्क्षिप्य जल्पतः । सत्यवत्यास्तनूजस्य, राज्यं नान्यस्य कस्यचित् ॥१९८॥ अहं तु हन्तुमेतस्य, प्रत्यूहव्यूहमन्वहम् । चापभृत्तां[1] करिष्यामि, सुतोऽस्मि यदि शान्तनोः ॥१९९॥ अद्यैवाप्तं मया राज्यं, तुष्टाश्च मम देवताः । सत्यवत्या सधर्मिण्या, यत्तातः सुमना भवेत् ॥२००॥ उदात्तामिति गाङ्गेय-गिरमाकर्ण्य विस्मितैः । स्थिराणि खेचरैर्व्योम्नि, विमानानि वितेनिरे ॥२०१॥ विस्मयात् फुल्लनयन-स्ततः सत्यवतीपिता । अत्यन्तलुब्धो विश्रब्धं, कुमारं पुनरभ्यधात् ॥२०२॥ साधु साधु कुमारेन्द्र !, त्वमेव पितृवत्सलः । स्फीतं गुणगणक्रीतं, यदेवं राज्यमुज्झसि ॥ २०३ ॥ राजपुत्रा हि राज्यार्थ-मकृत्यान्यपि कुर्वते ।

१ 'चापभृज्जागरिष्यामि' इति प्रत्यन्तरद्वयपाठः ।

उद्दामं तत् क्रमायातं, को नाम त्वमिव त्यजेत् ? ॥२०४॥ परं कुमार ! ये केचि-द्भवितारस्तवात्मजाः । न तेऽन्यस्य सहि-
ष्यन्ते, राज्यमूर्जितवाहवः ॥ २०५ ॥ त्वत्तो ये जन्म लप्स्यन्ते, पवित्रक्षात्रतेजसः । कस्तानीशिष्यते सोढु-मन्यः सिंहानि-
वाहवे ? ॥ २०६ ॥ राज्यमाच्छेत्तुमुत्सिक्तैः, शक्तैस्ते तनुजन्मभिः । आत्तश्रीः पुनरश्रीको, भविता मत्सुतासुतः ॥ २०७ ॥
इत्थं नानाऽर्थिनीं युयं, भावि संभाव्य भूरिशः । सुतायामायतौ तात !, पुनः स्खलति मे मनः ॥२०८॥ इत्युक्तवन्तं तं हृष्य-
न्नन्त' शान्तनवोऽभ्यधात् । एतामपि तवेदानीं, चिन्तां व्यपनयाम्यहम् ॥२०९॥ शृणु त्वं व्योम्नि शृण्वन्तु, सिद्धगन्धर्व-
नरनराः । मर्मके मुषिताशेष-पापग्रहमभिग्रहम् ॥ २१० ॥ स्वर्गश्च सोऽपवर्गश्च, यस्य ख्याता फलद्वयी । आजन्म तन्मयो-
पात्तं, ब्रह्मचर्यमतः परम् ॥२११॥ माता मातामहस्तातो, भाविनो बान्धवाश्च ये । एषामानन्दधुर्यस्य, व्रतस्यास्य किमुच्यते ?
॥ २१२ ॥ चारणश्रमणैः पूर्व-मिति मे प्रतिपादितम् । प्रथमं च चतुर्थं च, व्रतेष्वनुपमे व्रते ॥ २१३ ॥ प्रतिपेदे मया पूर्वं,
प्राणिनामभयव्रतम् । ब्रह्मव्रतमिदानीं तु, मम भाग्यमहो ! महत् ॥ २१४ ॥ अस्तु त्रैस्तविपद्वार्त्तं, तार्तीयीकमपि व्रतम् ।
पितृशुश्रूषणं नाम, ममाजन्म निरत्ययम् ॥२१५॥ इति प्रस्तुवतस्तस्य, श्रद्धालोर्मूर्ध्नि वन्धुरम् । भृङ्गव्रद्स्वनोत्कर्षं, पुष्पवर्ष
दिवोऽपतत् ॥२१६॥ उच्चैरिति वाचश्च, देवा धन्याऽसि जाह्नवि ! । त्वं चासि शान्तनो ! श्लाघ्यः, सोऽयमीदृग्ययोः सुतः
॥ २१७ ॥ नोऽपि ज्ञानिनो ब्रूत, पृच्छामः खेचरा वयम् । यद्येतद्व्रतमाराध्यं, केनापि गृहमेधिना ? ॥ २१८ ॥ तत्त्वसत्त्वैक-

१ 'उद्दामः' इति प्रत्यन्तरद्वयपाठः । २ आत्ता-गृहीता श्रीर्यस्य यस्माद्वा । ३ 'धुर्येन' इति प्रत्यन्तरत्रयपाठः । ४ त्रस्ता
विपदा यासां गम्भानन । ५ 'देवि !' इति प्र० द्वयपाठः ।

नौपतिना गाङ्गेयस्य सत्यवती-पितृकुलं कथितम्॥

निःस्यन्द-मयो यदयमाददे । ईदृग्ब्रह्मव्रतं भीष्मं, भीष्मस्तेनैष गीयताम् ॥ २१९ ॥

सत्त्वं चेदेकमप्यस्ति, किमन्यैर्बहुभिर्गुणैः । तदेव हन्त ! चेन्नास्ति, किमन्यैर्बहुभिर्गुणैः ? ॥२२०॥

अहिंसा ब्रह्मचर्यं च, पितृभक्तिश्च निश्चला । त्रयस्त्रिभुवने श्लाघ्याः, शान्तनोस्तनुजे गुणाः ॥ २२१ ॥ भवेद्व्रतानां पारीणो, मा स्म रीणः[1] क्वचिद्भवेः । इत्यभिष्टुत्य निश्छद्म, सद्म स्वं खेचरा ययुः ॥ २२२ ॥ ततो दुहितरं तूर्ण-माहूयोत्सङ्ग-सङ्गिनीम् । कुर्वन्नुदीरयामास, कुमारं नाविकेश्वरः ॥ २२३ ॥ गुणग्रामैकवास्तव्यो, नास्त्येव त्वत्समः पुमान् । पितुरर्थे कृतं सद्यो, यद्ब्रह्मव्रतमद्भुतम् ॥ २२४ ॥ तवानेन चरित्रेण, चित्रीयितमनाश्चिरम् । वृत्तान्तमेकमाख्यामि, कुमार ! शृणु सांप्रतम् ॥ २२५ ॥

कालिन्दीकूलपालीषु, विहरन्नहमेकदा । अशोकानोकहतले[2], विश्रामाय समागमम् ॥ २२६ ॥ तदात्वजातां[3] केनापि, तत्र निस्त्रिंशचेतसा । सश्रीकामुज्झितामेका-मद्राक्षं मङ्क्षु बालिकाम् ॥ २२७ ॥ अपत्यमनपत्योऽहं, स्पृहयालुरहर्निशम् । सुरूपां तामुपादातुं, प्रवृत्तोऽस्मि सविस्मयः ॥ २२८ ॥ विजातिर्वा सुजातिर्वा, काऽप्यसाविति वेत्ति कः ? । एवं विकल्प्य व्यावृत्य, चलितोऽस्मि[4] स्ववेश्मनि ॥ २२९ ॥ अत्रान्तरेऽन्तरिक्षान्त-रुल्ललास सरस्वती । अस्ति रत्नपुरे स्वस्ति-धाम्नि रत्नाङ्गदो नृपः ॥ २३० ॥ तस्य रत्नवतीकुक्षि-शुक्तिमुक्तेयमात्मजा । खेचरेणापहृत्यात्र, विमुक्ता पितृवैरिणा ॥ २३१ ॥ तामेताम-तनुप्रेमा, शान्तनुः परिणेष्यति । इति व्योमगिरा बालां, ग्राहितस्तामहं तदा ॥ २३२ ॥ तनयामनपत्यायाः, प्रियायास्ता-

१ स्खलितः । २ अनोकहः-वृक्षः । ३ तत्कालोत्पन्नाम् । ४ " चलितश्चास्मि वेश्मनि " प्रत्यन्तरत्रयपाठः ।

मृगाननम् । नामधेयं यथार्थं चास्याः, मत्यं सत्यवतीत्यहम् ॥ २३३ ॥ मम पत्न्या च यत्नेन, वात्सल्यजलकुल्यया । कलिकाननवाटीर-दिग्यं वृद्धिमनीयत ॥ २३४ ॥ त्रिलोकीतिलकीभूता, प्रभूतगुणमन्दिरम् । सेयं सत्यवती पुत्री, कृत्रिमा मम नौर्म्मी ॥ २३५ ॥ पिता भवत्यपत्याना-मीदृशां मादृशः कुतः ? । आस्पदं कल्पवल्ल्या हि, सुमेरुर्न पुनर्मरुः ॥२३६॥ नदस्या दिव्यवाचेव, निर्णीतः शान्तनुः पतिः । वीक्षितुं पितृभक्तिं तु, त्वदीयामित्यजल्पिषम् ॥ २३७ ॥ तदिदानीमुपादत्स्व, मत्सुतां तातहेतवे । अतः परं त्वमेवास्या, विश्रामः सुखदुःखयोः ॥ २३८ ॥ इत्यालप्य कुमारस्य, प्रसरत्पुलकाङ्कुरः । सुतां सत्यवतीं प्रीता-मर्पयामास नौपतिः ॥ २३९ ॥ अलमम्ब ! विलम्बेन, रथोऽयमधिरुह्यताम् । इति तां रथमारोप्य, पुरं शान्तनवो ययौ ॥ २४० ॥

नभश्चरेभ्यो निःशेषं, वृत्तान्तं ज्ञातपूर्विणः । प्रसन्नस्य पितुर्नीत्वा, स चक्रे तामुपायनम् ॥ २४१ ॥ पितापि भीष्ममाश्लिष्य, निर्भरस्नेहपूर्वकम् । आत्मैकवेद्यमानन्द-ममन्दभरमन्वभूत् ॥ २४२ ॥ दृशा पीयूषवर्षिण्या, श्रीविश्राममहीरुहम् । गिरा नु स्नान गाङ्गेय-मुत्सङ्गस्थापितं पिता ॥२४३॥ शृण्वन्ति पितुरादेशं, ये तेऽपि विरलाः सुताः । आदिष्टं ये तु कुर्वन्ति, सन्ति ते यदि पञ्चषाः ॥ २४४ ॥ आत्मना यस्तु विज्ञाय, करोति पितुरीप्सितम् । एक एव स मे सूनु-र्जाह्नवीशुक्तिमौक्तिकम् ॥ २४५ ॥ ततः परमसहस्राणि, वत्सराण्यायुरस्तु ते । एतस्य कुरुवंशस्य, पताकाश्रियमाप्नुहि ॥ २४६ ॥ प्रमोदादेवमाशीर्भि-रभिनन्द्य निजात्मजम् । नृपः सत्यवतीं सौम्ये, मुहूर्ते परिणीतवान् ॥ २४७ ॥

१ न गाङ्गेयजा दृत्यर्थे ।

ततः सत्यवतीं पत्नीं, नवप्रेमां स(मांश)मीयुषः । भूपालस्य पुमर्थेषु, कामः कामं प्रियोऽभवत् ॥२४८॥ "रति–पुत्रफला दारा," इति नीतिवचस्तया । सत्यापयन्त्या सुषुवे, पुत्रश्चित्राङ्गदाभिधः ॥ २४९ ॥ तेजस्वितिलकः पादै–राक्रमन् भूभृतां शिरः । योऽभवज्जातमात्रोऽपि, बालार्क इव दुःसहः ॥ २५० ॥ विचित्रवीर्य इत्यासीत्, सत्यवत्याः सुतोऽपरः । बभूव भूभृतो यस्मा–द्वंशः प्रांशुः प्रसृत्वरः ॥ २५१ ॥ तदा तयोः समग्रेषु, हितकर्मसु जाग्रतः । प्रादुर्बभूव सौभ्रात्रं, गङ्गासूनोरकृत्रिमम् ॥ २५२ ॥ सोऽग्रजन्माऽनुजन्मानौ, कृत्वाऽङ्कतलतल्पगौ । उल्लापैः श्रोत्रपीयूषैः, खेलयामास भूरिशः ॥ २५३ ॥ क्षत्रगोत्रोचितैस्तैस्तै–रन्यबालविलक्षणैः । एतयोर्बाल्यचापल्यैः, स तुतोष क्षणे क्षणे ॥ २५४ ॥

अथाल्पीयो विदित्वायु–रग्रिमस्तत्त्वदृश्वनाम् । शुभध्यानेन तत्याज, शान्तनुर्मानुषीं तनुम् ॥ २५५ ॥ विधिवद्विदधे भीष्मः, पितुः स्वस्यौर्ध्वदेहिकम् । "इह च प्रेत्य च प्रीत्यै, तादृशा हि सुताः पितुः" ॥ २५६ ॥

सोऽथ चित्राङ्गदं राज्ये, शिशुमेव न्यवीविशत् । "न हि विस्मृतिमभ्येति, प्रतिपन्नं महात्मनाम्" ॥ २५७ ॥ स ग्रीष्मेणेव भीष्मेण, तथोग्रं धाम लम्भितः । उदयन्नपि दुष्प्रेक्ष्यो, यथाऽभूद्भानुमानिव ॥२५८॥ अभूत् कश्चित् स भूपानां, हृदि चित्राङ्गदो गदः । नागदो नागदङ्कारः, कोऽप्यासीद्यचिकित्सने ॥ २५९ ॥ तेन नैष्यत भीष्मोऽपि, संविभागी जयेऽपरः । अतः स युद्धमेकाकी, चक्रे सार्धं विरोधिभिः ॥२६०॥ स निर्मलकलासद्म, च्छद्मनाऽभ्येत्य जैग्रसे । नीलाङ्गदेन संग्रामे, शीतांशुरिव राहुणा ॥ २६१ ॥ "शिरःशेषोऽपि चेद्वैरी, तदा बाधेत राहुवत्" । उपानीयत भीष्मेण, सोऽप्यतो नामशेषताम् ॥२६२॥

सत्यवती-शान्तनोर्विवाहः, पुत्रद्वयोत्पत्तिः, शान्तनुमरणम्, चित्राङ्गदस्य राज्यप्राप्तिस्तन्मरणं च ॥

१ भृशम् । २ रतिपुत्रौ फलं यासां ताः । ३ "स हि ग्रीष्मेण भी०" इति प्रत्य० । ४ विनाशितः ।

॥ ९ ॥

अथ राज्यं कनिष्ठाय, गरिष्ठो जाह्नवीसुतः । ददौ विचित्रवीर्याय, वन्धवे वन्धुवत्सलः ॥ २६३ ॥ तं भीष्मचाप-
माहात्म्या-दपनक्ते न कश्चन । " यूथनाथान्तिके केन, कलभः परिभूयते ? " ॥ २६४ ॥ चतसृष्वपि विद्यासु, गतावद्यासु
कौशलम् । नक्ते कनीयसो भ्रातु-र्भीष्मः सज्ये च धन्वनि ॥ २६५ ॥ अनहंयुतयाऽत्यन्तं, भूम्ना वैनयिकेन च । ववन्ध
यान्यरञ्जकं, भीष्मस्तस्मिन् विशेषतः ॥ २६६ ॥ दाराणामनुरूपाणां, भ्रातुरुद्वाहहेतवे । गवेषणाय स प्रैषी-न्निजान् प्रति
दिशं नरान् ॥ २६७॥ मार्गदत्तदृशे तस्मै, कदाचिद्धूलिधूसरः । तेषामेकतमोऽभ्येत्य, कथयामासिवानिति ॥ २६८ ॥
देव ! श्रीकाशिराजोऽस्ति, प्रकाशः काश्यपीतले । यस्य मन्दाकिनी नित्य-मनर्घ्या गृहदीर्घिका ॥ २६९ ॥ अम्बि-
काम्बालिकाऽम्बा च, तिस्रस्तस्यासते सुताः । विभान्ति पुरतो यासां, तृणवत्रिदिवस्त्रियः ॥२७०॥ तासां तातेन विश्रब्धं,
प्रारब्धोऽस्ति स्वयंवरः । रचयांचक्रिरे मञ्चा-स्तत्र वैचित्र्यशालिनः ॥२७१॥ राजानो राजपुत्राश्च, शतशः सन्त्युपस्थिताः ।
आपतन्त्यधुना केचि-दापतिष्यन्ति केचन ॥ २७२ ॥ ततः कलाकलापेन, रूपेण वयसाऽपि च । योग्या विचित्रवीर्यस्य,
गुणाढ्याः काशिभूपतेः ॥ २७३ ॥ गाङ्गेयस्तद्वचः श्रुत्वा, तत्त्वदृष्टिर्व्यतर्कयत् । किमहो काशिराजेन, नानुजो मे निम-
न्त्रितः ? ॥२७४॥ न गन्तव्यमनाहूतै-र्महीपालैः स्वयंवरे । अतो गत्वाऽहमेवैकः करिष्ये सर्वमीप्सितम् ॥ २७५ ॥ एवं विमृश्य
गाङ्गेयो, रथेन प्रस्थितो द्रुतम् । जवनैर्वाजिभिर्वेगा-दगमच्च स्वयंवरे ॥ २७६ ॥ तत्र सिंहासनासीना-नुच्चैर्मञ्चेषु भूपतीन् ।
सोऽपश्यद्भासुराकल्पान्, विमानेष्वमरानिव ॥ २७७ ॥ उरोलोलन्मनोहारि-हारास्तिस्रोऽपि वालिकाः । दृष्ट्वा विचित्रवी-

१ न्यासर्क्तिो भनुपि च । २ अगर्विष्ठतया । ३ 'पृथिवीतले' इति प्र० । ४ 'प्रास्थित' इति प्र० द्वय० । ५ दीप्तभूपणान् ।

यर्थं, स हर्तुमकरोन्मनः ॥२७८॥ प्रत्येकमात्मनः कन्या–लाभं संभाव्य भूपतीन् । तांस्तान् विवृण्वतो भावान्, हसति स्म स मानसे ॥ २७९ ॥ अथ तासां पुरो धात्र्या, कीर्त्यमानेषु राजसु । रथात्तार्क्ष्य इवोत्फालः, स रङ्गाङ्गणमाविशत् ॥ २८० ॥ स तं स्वयंवरं राज–चक्रनक्रसमाकुलम् । बाढं विलोडयामास, पयोधिमिव लीलया ॥२८१॥ आच्छिद्य कन्यारत्नानि, सर्वेषामेव पश्यताम् । रथमारोपयामास, भीष्मो भीष्मपराक्रमः ॥ २८२ ॥ स्यन्दने भयनिस्पन्दा, वेपमानवपुर्लताः । सुताः स काशिराजस्य, स्निग्धमुग्धमभापत ॥ २८३ ॥ वत्साः ! किमपि मा भैष्ट, नानिष्टं वः करिष्यते । भीष्मोऽस्मि शान्तनोः सूनु–र्भवतीनां प्रियंकरः ॥ २८४ ॥ राजा विचित्रवीर्योऽस्ति, जैत्रदोर्वीर्यदुर्जयः । एते सर्वेऽपि यस्याग्रे, गुणैर्बहुतृणं नृपाः ॥ २८५ ॥ अनुभूय प्रियाभूय, तस्य समरसमाकृतेः । हस्तिनापुरसाम्राज्यं, चिरं निर्विशताद्भुतम् ॥ २८६ ॥ विनयावर्जितोऽत्यन्तं, तस्याहं बन्धुरग्रजः । तदर्थं रथमारुह्य, युष्मानानेतुमागतः ॥ २८७ ॥ तस्मिंस्ता निस्तरङ्गेण, रागेणाक्रान्तचेतसः । इदं गाङ्गेयवचनं, तथेति प्रतिपेदिरे ॥ २८८ ॥ प्रतिपत्तिचलन्मौलि–नृत्यत्ताटङ्करश्मिभिः । ताः स्फीतप्रीतयश्चक्रु–स्तस्य नीराजनामिव ॥ २८९ ॥ राज्ञां मनोरथैः सार्धं, रथं भीष्मो न्यवर्तयत् । कुर्वन् कुण्डलितं चाप–मुच्चैःस्वरमुवाच च ॥२९०॥ सर्वे शृणुत भो! भूपाः!, प्रौढदोःस्थामशालिनः । युष्माकं पश्यतां सैष, भीष्मः कन्या हरत्यमूः ॥२९१॥ ततो वः कोऽपि जागर्ति, यदि दोर्दण्डचण्डिमा । तदा कोऽप्यायुधं धत्ता–मयमूर्ध्वंदमोऽस्म्यहम् ॥ २९२ ॥ तदा क्षुब्धार्णवनिभो, रङ्गक्षोभभवो ध्वनिः । स कश्चिदासीन्मन्येऽसौ, विभिदे येन रोदसी ॥ २९३ ॥ रभसोत्थास्नुभूपानां, क्रुध्याभिः सिचयाञ्चलैः ।

१ 'नित्यरङ्गेण' इति प्र० द्वय० । २ 'पूर्लोकाः' इति प्रत्य० ।

भृगनामिमेयं भूमि, प्रग्नतममिथेनुमिः ॥ २९४ ॥ पलायनकृतेऽवश्यं, व्यवस्यन्तोऽपि कातराः । संबाधकृतसंरोधाः, प्रचेलुर्न पदात्पदम् ॥ २९५ ॥ मुक्ताकलापमुक्तानां, चूर्णः कीर्णाऽवनिर्बभौ । अमेयगाङ्गेययश-श्चन्दनेनेव चर्चिता ॥ २९६ ॥ स्वाङ्गनामन्योन्य-कोटिमर्द्दनसंभवः । क्षौमाणि क्षोणिपालाना-मधाक्षीदाशुशुक्षणिः ॥ २९७ ॥ तदानीं तत्र केषांचि-दभ्य-स्मन्नेगकर्मणाम् । मूलोन्मूलितदौर्गत्यः, स्तुत्यः शान्तनवोऽभवत् ॥ २९८ ॥ वीक्ष्य भीष्मं भयक्षोभा-च्छिरस्तः संस्तन-स्थनः । केनापि राजपुत्रेण, किरीटो नोपलक्षितः ॥ २९९ ॥ नृपपश्चाननाः केचि-च्छीलालालमचेतसः । असिमुष्टिमवष्टभ्य, यथास्थितमवस्थिताः ॥ ३०० ॥ अथ शौण्डीरदोर्दण्डाः, केऽपि संभूय भूमिपाः । सद्यः संवर्मयामासु-रस्तिवीरा हि काश्यपी ॥ ३०१ ॥ पुलकोद्भेदमेदस्वि-वपुषां पौरुषस्पृशाम् । तेषां वर्म त्रुटत्संधि, युद्धसन्धां व्यधाद्दृढम् ॥ ३०२ ॥ काशिराजपुरोगैर्म्म-भृशं सर्वाङ्गवर्मितैः । विपक्षक्षितिपैरेत्य, भीष्मो भीष्ममभाष्यत ॥३०३॥ हंहो! क्षत्रकुलोत्तंस!, किम-क्षपं वितन्यते ? । अयं स्वयंवरधर्मो, महांस्ते हेतुरंहसाम् ॥३०४॥ श्रियः स्त्रियो वा मा भूव-न्नाहूता दुर्नयेन याः । विपदा-मर्गलं यत्, पानयन्त्येव ताः पतिम् ॥ ३०५ ॥ तत् प्रतीच्छ शरैस्तीक्ष्णैः, पापस्यास्य व्यपोहकम् । गुरुस्तवास्मदिष्वासः, प्रायश्चित्तं प्रदास्यति ॥ ३०६ ॥ अथाभाषत गम्भीरं, धीरः शान्तनुनन्दनः । भो! भूमिपालाः! सुष्ठूक्तं, युष्माभिर्न्यायि-निष्ठैः ॥ ३०७ ॥ परभूर्वा न कन्या च, सर्वसाधारणी भवेत् । गृह्णातु स हि यस्यास्ति, विक्रमो निपुणः पुनः ॥ ३०८ ॥

१ संबाधः-अन्योऽन्यसमर्पः, तेन कृतः संरोधो येषां ते । २ अग्निः । ३ 'श्रस्तवानधः' इति प्र० द्वय० । ४ वागः । ५ 'गत.' इति प्र० द्वय० ।

नैवास्ति विक्रमो यस्य, स हास्यः स्पृहयन्निमाम् । दरिद्र इव रत्नानि, विविधानि धनं विना ॥ ३०९ ॥ विक्रमेण धनेनैव, विना यत्तस्करा इव । कन्यारत्नानि गृह्णीथ, तद्यूयमपराधिनः ॥ ३१० ॥ आगस्विनां च दण्डाय, कोदण्डो मम पण्डितः । इत्युक्त्वा स क्षुरप्रेण, तेषां केतूनपातयत् ॥ ३११ ॥ अथ तेऽपि रथश्रेणि-प्रारब्धपरिमण्डलाः । मध्येकृत्य शितैर्भीष्मं, पत्रिभिः पर्यताडयन् ॥ ३१२ ॥ अभ्यापतन्तो युगप-न्निपीततपनातपाः[1] । तस्य ते विशिखाऽ[2]छायां, तेनिरे नापनिन्यिरे[3] ॥ ३१३ ॥ वीरंमन्यतया दृप्ता-नन्यनिन्दापटीयसः । स तानवज्ञयाऽपश्य-न्मृगारातिर्मृगानिव ॥ ३१४ ॥ प्रतिक्षिपन्तः स्वच्छन्द-मायुधान्युद्धतानि ते । जैत्रस्थामानमात्मानं, मेनिरे जितकाशिनम् ॥ ३१५ ॥ इत्थं प्रगल्भमानेषु, ससंरम्भेषु तेष्वथ । खिन्ना नरेन्द्रनन्दिन्यः, स्वं निनिन्दुर्मुहुर्मुहुः ॥ ३१६ ॥ धिगस्मान्मन्दभाग्यानां, धुरि वर्तामहे वयम् । इतो भ्रष्टास्ततो भ्रष्टा, भवितास्मोऽधुना ध्रुवम् ॥ ३१७ ॥ क्वैते नृपाः परोलक्षाः, क्व चायं दोर्द्वितीयकः । तदिदानीं विपन्नेऽस्मिन्, विपन्नं नो मनोरथैः ॥ ३१८ ॥ इत्थं ताः कुमुखीर्वीक्ष्य, भीष्मस्तत् कर्म निर्ममे । मूर्धानं धूनयद्भिर्य-त्रिदशैर्ददृशे दिवि ॥ ३१९ ॥ निशितैः सर्वतो मुष्ट्या, तान् प्रत्येकं व्रणाङ्कितान् । शरैश्चकार सुश्लोकां, स्वप्रशस्तिं लिखन्निव ॥ ३२० ॥ यावद्विपक्षमक्षेपं, लघुहस्तः क्षिपन्निषून् । वीक्षांचक्रे स तैरेको-ऽप्यसंख्यैरात्मसंख्यया ॥ ३२१ ॥ भीष्मग्रीष्मरवेः क्षिप्ता, मार्गणैः किरणैरिव । क्वाप्यल्पा अपि नैक्ष्यन्त, क्षत्रनक्षत्रजातयः ॥ ३२२ ॥ राजकः काशिराजस्तु, विच्छायवपुरञ्जसा । रणव्योमैकदेशस्थः, स्तोकस्तोकं विलोकितः ॥३२३॥ हृष्यन्मनोभिः कन्याभि-र्मुक्तामिव विलक्षताम् । जाह्नवीसूनुरह्नाय, तदानीं

१ नितरां पीतः सूर्यातपो यैस्ते । २ बाणाः । ३ न स्खलयाचक्रिरे ।

भीष्मेण सह स्वयंवरागतराजानां युद्धम् ॥

प्रत्यपद्यत ॥ ३२४ ॥ उपेत्य प्रीणयामास, स तथा काशिभूपतिम् । यथा विचित्रवीर्याय, स्वयं प्रादादसौ सुताः ॥३२५॥ स प्रीतिस्फारनेत्राभि–स्ताभिर्बालाभिरन्वितः । हस्तिनापुरमारब्ध–महोत्सवमुपाययौ ॥ ३२६ ॥ स वैवाहिकमाङ्गल्या–स्निग्धमनाः काशिनन्दिनीः । भ्रात्रा विचित्रवीर्येण, प्रमोदादुदवाहयत् ॥३२७॥ ताः प्राप्य नृपतिः प्रेम–रसैककनकालुकाः । सिञ्चन् पञ्चापि विषयान्, सिषेवे सोऽतिशाद्वलान् ॥३२८॥ इषून् पञ्चापि पञ्चेषुः, प्रक्षिपन्नपि लक्षशः । प्रेयसीनामसौ मान्य, इति तस्य प्रियोऽभवत् ॥ ३२९ ॥ कामोऽनासक्तिसेव्योऽपि, तेनादृश्यत गौरवात् । प्रायेण यौवनान्धानां, सुलभो हि विपर्ययः ॥ ३३० ॥ ततो विचित्रवीर्यस्य, संप्राप्तावसरः स्मरः । धर्मार्थौ जग्रसे राहुः, सूर्यचन्द्रमसाविव ॥ ३३१ ॥ स प्रेयसीनां निर्गुणां, यत्तुर्थः सदाऽभवत् । तल्लोके लोकपालानां, भवति स्म न पञ्चमः ॥ ३३२ ॥ कामासक्तस्य तस्येत्थं, प्रावर्तत यक्ष्मगदः । अनङ्गेऽतिप्रसक्तो हि, विरङ्गायैव केवलम् ॥ ३३३ ॥ क्षीयमाणबलं ज्ञात्वा, गाङ्गेयस्तमवोचत । असौ दोषस्त्वयि स्वच्छे, वत्स ! ग्रासो मणाविव ॥३३४॥ पीनवर्मितसर्वाङ्गान्, कथं शत्रून् विजेष्यसे ? । अनङ्गेनापि कल्याणिन् !, यस्त्वमेवमजीयथाः ॥ ३३५ ॥ धर्मार्थाविव न परं, कामासक्तस्य नश्यतः । मूलं सर्वपुमर्थानां, वपुरप्यपचीयते ॥ ३३६ ॥ दुःसहाः पुष्पबाणस्य, बाणाः पुष्पमया अपि । यत्तेऽभूवंस्ततः प्रौढान्, सोढासि कथमायसान् ? ॥ ३३७ ॥ व्यधीयत तवैताभि–रबलाभिर्बलक्षयः । बलवद्भिस्तु रुद्रस्य, न जाने किं भविष्यति ? ॥ ३३८ ॥ कुरङ्गाक्षीषु नात्यन्त–प्रसङ्गः संगतः सताम् ।

१ आल्हु:–पात्रविशेषः ' झारी ' इति भाषायाम् । २ (अत्र च दीर्घकरणम् ' न तिसृचतसृ-' ( ६ । ४ । ४ ) इति पाणिनीयसूत्रविरुद्धं ज्ञेयम्. ) " तिसृणां प्रेयसीनां स " इति वा पाठो ज्ञेयः, प्रतित्रये तिसृणामिति पाठः ।

अत्यासन्नाभिरेताभि-र्दूरे स्युर्गुरवो गुणाः ॥ ३३९ ॥

भीष्मे विचित्रवीर्याय, शिक्षामेवं प्रयच्छति । तत्र पुत्रानुशिष्ट्यर्थ-माययौ सत्यवत्यपि ॥ ३४० ॥ साऽप्यभाषिष्ट तनयं, बाष्पाविलविलोचना । अकस्मादेव मे वत्स!, किं छिनत्सि मनोरथान् ॥ ३४१ ॥ मुखं स्नुषाणामुद्वीक्ष्य, मुदमासादयं पराम् । इदानीमस्मि सोत्कण्ठा, तवापत्यविलोकने ॥ ३४२ ॥ सा तु सांप्रतमेतेन, त्वद्दौर्बल्येन दुर्बला । सहोदयन्त्यया पुत्रैः, सवित्रीणां मनोरथाः ॥ ३४३ ॥ सर्वासां क्षत्रियस्त्रीणां, परं वीरप्रसूरहम् । इमं वत्स! ममोत्सेकं, लीलयैव त्वमच्छिदः ॥ ३४४ ॥ कुरुवंशकुलस्त्रीणां, पुत्रिणीनामहं त्वया । धुरि संस्थापिता वत्स!, त्वयैवोत्थापिताऽधुना ॥ ३४५ ॥ तत्स्वगोत्रोचिताचार-व्यभिचारं समाचरन्। अस्मिंस्त्वत्पूर्वजो ब्रूहि, पथि कः पथिकोऽभवत् १ ॥३४६॥ तदायुष्मंस्तव ज्यायान्-बन्धुर्धत्ते मुदं यथा । यथा सिध्येन्ममेच्छा च, प्रवर्तेथास्तथाऽनिशम् ॥ ३४७ ॥

अनुशिष्टिमिति श्रुत्वा, भ्रातुर्मातुश्च सादरम् । विचित्रवीर्यः स्वं कर्म, स्मृत्वा दूरादलज्जत ॥ ३४८ ॥ अदीपिष्ट तदादिष्टं, निर्मले तस्य चेतसि । अर्पितं दर्पणे भानो-र्भृशमुज्जृम्भते महः ॥ ३४९ ॥ शिक्षामादाय तां मूर्ध्ना, प्राञ्जलिस्तौ विसृज्य च । राजा धर्मार्थकामेषु, समवृत्तिरजायत ॥ ३५० ॥

आबभाराम्बिका गर्भ-मन्यदोद्दामदोहदम् । सुलग्ने सुतमुद्दीप्त-प्रभापूतमसूत च ॥ ३५१ ॥ भीष्मेण सत्यवत्या च, महोत्सवपुरःसरम् । धृतराष्ट्र इति श्लाघ्यं, तस्य नाम विनिर्ममे ॥ ३५२ ॥ स दधौ जनुषाऽन्धत्वं, केनापि प्राच्यकर्मणा । स

१ 'स्वस्वगोत्रो०' प्र० द्वय० ।

भीष्मसत्यवतीभ्यां दत्ता विचित्रवीर्याय शिक्षा, धृतराष्ट्रपुत्रजन्म च ॥

नाम्नि प्रादानिबद्धं हि, यो वध्नाद्रि शुभाशुभे ॥ ३५३ ॥ अम्बालिकाऽपि तनयं, तस्यानुजमजीजनत् । आजन्म पाण्डुरोगित्वा-
यः पाण्डुरिति पप्रथे ॥३५४॥ गुणाम्बुनिधिरम्बाया-स्तनूजः समजायत । यं चक्रुर्गुरवः सर्व-विदुरं विदुराभिधम् ॥३५५॥
अथ तेषु कुरोर्वंशं, जन्मनाऽलंकरिष्णुषु । शुभैरुज्जृम्भितं भावैः, प्रलीनमशुभैः पुनः ॥ ३५६ ॥ सूचकश्चरटश्चौरः, कृपणः
पारदारिकः । एते शब्दास्तदा प्रापु-रभिधेयेन वन्ध्यताम् ॥ ३५७ ॥ लेभे सर्वत्र साम्राज्य-मेकच्छत्रं नयस्तदा । निरन्वय-
विनाशेन, कानयस्तु पुनः पुनः ॥ ३५८ ॥ तदा नाधिर्न च व्याधि-र्बाधते स्म जनं क्वचित् । न दुर्बलो बलिष्ठेन, कथनाप्य-
भ्यभूयत ॥ ३५९ ॥ नावृष्टिर्नातिवृष्टिश्च, तदा प्रादुरभूद्भुवि । ईतिः प्रीतिविघाताय, नान्याऽप्यासीत् कुटुम्बिनाम् ॥३६०॥
पुष्यन्ति स्म फलन्ति स्म, कालेऽवश्यं महीरुहः । पुष्यन्ति स्म रसोत्कर्षं, पुष्पेषु च फलेषु च ॥ ३६१ ॥ अनुभावात् कुमा-
राणा-मित्यभूदुदयो भुवः । भवेद्वाङ्मनसातीतः, प्रभावो हि महात्मनाम् ॥ ३६२ ॥ किं तु स्त्रीव्यसनेनाति-मनोऽभीष्टेन
सर्वदा । चिराय मिलितेनेव, भूयोऽप्यालिङ्गितो नृपः ॥ ३६३ ॥ ततः क्षीणतनुः सोऽभूत्, प्रियास्वासक्तमानसः । " रामासु
भृशमासक्तिः, कारणं राजयक्ष्मणः " ॥ ३६४ ॥ राजयक्ष्मपरीवारः, कासः श्वासोऽपनिद्रता । रुजोऽन्या अपि राजान-मरुं-
रुन्नुरागरम् ॥ ३६५ ॥ चित्रैर्विचित्रवीर्यस्तै-रातङ्कैराकुलीकृतः । संचक्राम परं लोकं, ' कामस्याहो ! दुरन्तता ' ॥३६६॥
तस्मिन्नस्तमिते सुनु-भानौ सत्यवती तदा । शोकान्धकारवैधुर्य-मधत्त द्यौरिवाधिकम् ॥ ३६७ ॥ विललाप च हा !
वत्स !, हा ! परिच्छदवत्सल ! । हा ! कौरवकुलोत्तंस !, हाऽगमः कामिमां दशाम् ? ॥ ३६८ ॥ इत्थं सा विलपन्त्येव,

१ अर्जन । २ समूलनाशेनेत्यर्थः । ३ ' नापि ' इति प्र० प्र० । ४ अपीडयन् ।

मूर्च्छिता भूतलेऽपतत् । अस्तोकं शोकसंतापं, तदा च न विवेद तम् ॥ ३६९ ॥ मूर्छाव्यपगमं प्राप्ता, कथंचिच्चन्दनादिभिः । स्मृत्वा पुत्रगुणान् भूयो, मुक्तकण्ठं रुदोद सा ॥ ३७० ॥ अभ्युपेत्य तदभ्यर्ण–मुरस्ताडनपूर्वकम् । रुदन्ति स्म गलद्बाष्प–मम्बिकाप्रमुखाः स्नुषाः ॥ ३७१ ॥ वयमेकपदे स्वामिं–स्त्वयास्तं समुपेयुषा । दुस्थामवस्थामानीता, नलिन्य इव भानुना ॥३७२॥ क्रीडाद्रिष्वपि न क्रीडा–मेकाकी कृतवानसि । इदानीं तु विमुच्यास्मान्, किमेको गतवानसि ? ॥३७३॥ विप्रयोगासहिष्णूनां, त्वदुपास्तिसुखस्पृशाम् । कस्मादकस्मादस्माक–मिदं वैमुख्यमागमः ? ॥ ३७४ ॥ निजमेनं प्रियावर्गं, जानासि विरहासहम् । तदेहि देहि प्राणेश !, द्रुतं प्रतिवचोऽधुना ॥ ३७५ ॥ एवं विलापवैकल्यं, प्राप्ताः संस्थाप्य तास्तदा । चकार तस्य गाङ्गेयो, निर्वापप्रमुखाः[1] क्रियाः ॥ ३७६ ॥ बाल्यचापल्यललितैः कुमाराणां मनोरमैः । स शोकं स्तोकतां निन्ये, सत्यवत्याः कथंचन ॥ ३७७ ॥

तथाऽजनि कुमाराणां, बन्धुस्नेहः परस्परम् । यथैषां क्षणमप्यस्था–देको नैकतमं विना ॥ ३७८ ॥ बालेष्वपि कुमारेषु, स्वर्गतेऽपि नराधिपे । भयाद्भीष्मस्य राजानो, सीमानं न ललङ्घिरे ॥ ३७९ ॥ तेषां शस्त्रे च शास्त्रे च, भीष्म एवाभवद्गुरुः । अम्भोधराणामम्भोधि–रेव कुक्षिंभरिर्भवेत् ॥ ३८० ॥ नृलोक इव लोकेषु, तेषु त्रिष्वपि बन्धुषु । गोत्राधारतया पाण्डु–र्मध्यमोऽपि व्यशिष्यत ॥ ३८१ ॥ कनिष्ठं धृतराष्ट्रस्तं, गुणज्येष्ठममन्यत । लघीयानपि जायेत, गुणैर्लोकंपृणैर्गुरुः ॥ ३८२ ॥ धृतराष्ट्रमभाषिष्ट, भीष्मो मधुरया गिरा । वत्स ! राज्यमिदानीं त्वां, ज्यायांसमुपतिष्ठताम् ॥ ३८३ ॥ स

१ तर्पणादिकाः ।

पाण्डुविदुरयोर्जन्म, विचित्रवीर्यमरणम्, सत्यवत्यादीनां शोकः ॥

जगाद न योग्योऽस्मि, राज्यस्याहं ध्रुवं ततः । पाण्डुमभ्येति राज्यश्री-र्दिनश्रीरिव भास्करम् ॥ ३८४ ॥ असौ त्रयाणामस्माकं, योग्यो राज्यधुरंधरः । उक्तो मुक्ताकलापेऽपि, मध्यस्थो नायकः परम् ॥ ३८५ ॥ गुणश्रेणिसुधासिन्धु-चन्द्रोरुज्जागरौजसः । अहं तु नित्यमेतस्य, दास्यायैव कृतस्पृहः ॥ ३८६ ॥ इति निर्बन्धतस्तस्य, सुमुहूर्ते महोत्सवात् । राज्याभिषेकमाधत्त, पाण्डोर्भीष्मः प्रमोदतः ॥ ३८७ ॥ कीर्तिज्योत्स्नाभरव्याप्त-रोदसीकन्दरोदरे । तत्रोदिते नवे राज्ञि, भृशं मुमुदिरे प्रजाः ॥ ३८८ ॥ भीष्मे च धृतराष्ट्रे च, धृतराज्यधुरे सति । न विदामास साम्राज्य-चिन्ताभारक्रमं नृपः ॥ ३८९ ॥ दृप्तनिगडनिःशूक-जागरूकभुजद्वयः । पाण्डुः प्रचण्डदोर्दण्डान्, वशीचक्रे विशांपतीन् ॥ ३९० ॥

कन्दर्पकामिनीरूप-दर्पसर्पस्य जाङ्गुलीः । गान्धारीप्रभृतीरष्टा-वुपादायाथ सोदरीः ॥ ३९१ ॥ सुबलक्ष्मापतेः सूनु-र्गन्धारपतिरन्यदा । शकुनिर्भीष्ममभ्येत्य, बद्धाञ्जलिरभापत ॥ ३९२ ॥ ( युग्मम् ) कुलदेव्योपदिष्टाय, विशिष्टक्रमशालिने । विष्णवे धृतराष्ट्राय, स्वसारो मे पतिंवराः ॥ ३९३ ॥ अम्बिकासूनुना नून-मन्यूनगुणधारिणा । एतास्तदार्य ! सोत्साहं, विवाहयितुमर्हसि ॥ ३९४ ॥ इत्थमभ्यर्थितस्तेन, स्वं हि जह्नुसुतासुतः । एतासां पतिमष्टानां, धृतराष्ट्रमतिष्ठिपत् ॥ ३९५ ॥ अनुरूपगुणग्रामा, पाण्डोरुद्दामरौजसः । का कलत्रं भवित्रीति, चिन्ताऽभूद्भीष्मचेतसि ॥ ३९६ ॥ भीष्मः पाण्डुयुतो यातु, पान्थ राजपथे कश्चित् । चित्रचित्रपटव्यग्र-कराग्रं कंचिदैक्षत ॥ ३९७ ॥ नारीरूपं पटे तत्र, दृष्ट्वा पाण्डुरचिन्तयत् । एतस्याग्र पर्याप्तं, सौन्दर्यकथया ध्रुवम् ॥ ३९८ ॥ न ह्येषा रूपरेखा स्या-न्मानुषीषु पुरंध्रिषु । तदियं किं रतिः ? किं वा,

१ निःशूक-निस्तुषः शान्त इत्यर्थः । २ सुदिने । ३ उत्कटबलवतः ।

कमला ? किमु रोहिणी ? ॥३९९॥ एतस्याः कोमलाकारा–वङ्घ्री पङ्केरुहे ध्रुवम् । अङ्गुल्यो यत्र पत्रन्ति, सौन्दर्यं मकरन्दति ॥ ४०० ॥ जङ्घाकाण्डे किलैतस्या, नाले पादसरोजयोः । रम्भास्तम्भायितं चाभ्या–मूरुभ्यां यौवनोत्सवे ॥ ४०१ ॥ नितम्बस्थलमेतस्या, जैत्रभूमिर्मनोभुवः । यत् सदैवात्र वास्तव्यः, शास्ति विश्वत्रयीमसौ ॥ ४०२ ॥ बलिष्ठ एव मध्योऽस्याः, कृशोदर्याः कृशोऽपि हि । यो वलित्रितयाक्रान्तो–ऽप्यधिकं पुष्यति श्रियम् ॥ ४०३ ॥ अपूर्वं निर्वृतिस्थान–मेतस्याः स्तनमण्डलम् । मुक्ता व्यक्तं विलोक्यन्ते, यत्र हारिणि भासुराः ॥ ४०४ ॥ एतस्याः सरलाकारा, रोमराजिर्विराजते । कन्दर्पदन्तिनो बिभ्र–त्यालानस्तम्भविभ्रमम् ॥ ४०५ ॥ यदस्या वदनौपम्ये, पार्वणेन्दोर्विलोकनम् । गुञ्जापुञ्जेन सार्धं त–त्तपनीयस्य तोलनम् ॥४०६॥ अस्याः सुकेश्याः कबरी–भारः केनोपमीयते ? । समालम्बितरोलम्बैः, सुस्निग्धो यस्य कालिमा ॥४०७॥ इत्येवं चिन्तयत्येव, स्मेरवक्त्राम्बुजे नृपे । सौधमानीय गाङ्गेयः, पृच्छति स्म तमध्वगम् ॥४०८॥ भद्र ! प्रबुद्धराजीव–मुखी[1] केयमलिख्यत । इह चित्रपटे नारी, दिव्यनारीविजित्वरी ? ॥ ४०९ ॥ पान्थः पुरस्तादस्तोक–विस्मयस्मेरचेतसे । अथासौ मूलतस्तस्मै, तं वृत्तान्तमचीकथत् ॥ ४१० ॥

मथुरेत्यस्ति वास्तव्यैः, श्रीमद्भिर्भूषिता पुरी । आलिङ्गतीव कालिन्दी, यां मुदा वीचिबाहुभिः ॥ ४११ ॥ तेजोधाम यदुर्नाम, तस्यामासीन्नरेश्वरः । यतोऽभूद्भुवनोत्तंसो, वंशो यादवभूभुजाम् ॥ ४१२ ॥ प्रतापी तनुजस्तस्य, शूरः शूरसमोऽभवत् । लीनं यत्रोदिते शत्रु–कौशिकैर्गिरिकन्दरे ॥ ४१३ ॥ तस्य शौरिः सुवीरश्च, द्वावभूतां तनूद्भवौ । कविबद्धैरपि[2]

१ विकसितकमलमुखी । २ कविभि रचितैः गीतैरिति विरोधपरिहारः

श्रान्तं. भुवि नीतं यशोगुणैः ॥ ४१४ ॥ राज्यं च यौवराज्यं च, तयोर्दत्त्वा यथाक्रमम् । ययौ तपस्यामभ्यास्य, दिवं शूर-
नराधिपः ॥ ४१५ ॥ राम-लक्ष्मणयोः साम्यं, तैस्तैस्तौ भेजतुर्गुणैः । ताभ्यां परमरातिभ्यो, वनक्लेशः समर्पितः ॥ ४१६ ॥
दत्त्वा शौरिः सुवीराय, राज्यमुज्जृम्भवैभवम् । स्वयं कुशार्तदेशेषु, विजहार यदृच्छया ॥ ४१७ ॥ स तेषु वासवस्पर्धि-
शौर्यः शौर्यपुरं न्यधात् । श्रीपतीन् बिभ्रता भूरी-ञ्जिग्ये येनामरावती ॥ ४१८ ॥ अन्धक-वृष्णिप्रमुखा-स्तत्र शौरेस्त-
नूरुहाः । बभूवुर्यन्नो बाहु-स्थामसंस्थापितश्रियः ॥ ४१९ ॥ शौरिर्वितीर्य साम्राज्यं, सुतायान्धकवृष्णये । प्रतिगृह्य
परिव्रज्यां, शिवश्रियमशिश्रियत् ॥ ४२० ॥ संजज्ञिरे सुवीरस्य, भोज-वृष्ण्यादयः सुताः । अम्लायन् यत्प्रतापेन, शत्रु-
मीश्वरकाङ्क्षाः ॥ ४२१ ॥ सुवीरो माथुरं दत्त्वा, साम्राज्यं भोजवृष्णये । सौवीराख्यं पुरं कीर्ति-सिन्धुः सिन्धुषु निर्ममे
॥ ४२२ ॥ विहरन्नन्वहं तत्र, वाप्यां वाप्यां वने वने । पुण्यप्रागल्भ्यलभ्यानि, स सुखानि न्यसेवत ॥ ४२३ ॥ भुञ्जतो
मथुराराज्यं, भोजवृष्णेर्महौजसः । उग्रसेनोऽरिसेनाना-मन्तकृत्तनयोऽभवत् ॥ ४२४ ॥

आसीदन्धकवृष्णेश्च, सुभद्रेति सधर्मिणी । निष्ठां यत्र सदाचार-तारतम्यमुपाययौ ॥ ४२५ ॥ दिशां नाथा इव प्रौढा,
दशाभूवन् सुतास्तयोः । येषु नीतिनिवासेषु, नाभवत् कोऽपि गोत्रहा ॥ ४२६ ॥ समुद्रविजयः पूर्व-मक्षोभ्यस्तदनन्तरम् ।
स्तिमितः सागरश्चैव, हिमवानचलस्ततः ॥४२७॥ धरणः पूरणस्तस्मा-दभिचन्द्राभिधोऽपि च । वसुदेवश्च दाशार्हा,
दशाप्येते प्रकीर्तिताः ॥ ४२८ ॥ ( युग्मम् ) तेषामुपरि पुत्राणां, सुभद्रा सुषुवे सुताम् । परमां मुदमभ्यास्त, यज्जन्मनि जग-

१ धनिकान, पक्षे विष्णून् । २ येन-शौर्यपुरेण.

न्मनः ॥ ४२९ ॥ यज्जन्मलग्नमालोक्य,ज्ञानिनोऽकथयन्निदम् । यद्भवित्री सवित्रीयं, संम्राजामङ्गजन्मनाम् ॥ ४३० ॥ जनानां प्रोषितं दुःखैः, सुखैरुन्मिषितं पुनः । किं न जन्मोत्सवे तस्याः, शुभोदर्कमभूद्भुवि ? ॥४३१॥ पुत्रजन्ममहेभ्योऽपि, विशिष्टोऽन्धकवृष्णिना । तस्या जन्मोत्सवश्चक्रे, "प्रीतिरत्र प्रयोजिका" ॥ ४३२ ॥ कल्याणपुषि पौषेऽह्नि, दीनोद्धरणपूर्वकम् । प्रीत्या पितृभ्यामेतस्या, नाम कुन्तीति निर्ममे ॥४३३॥ सा बभूव शिशुत्वेऽपि, कामं पृथुमनोरथा । पृथेति प्रथितामाख्या–मपरामभजत्ततः ॥४३४॥ प्रापत् प्रसर्पत्कन्दर्पं, सा क्रमान्नवयौवनम् । यत्र पित्रोर्वरस्यार्थे, चिन्ता जागर्ति चेतसि ॥४३५॥ अस्यां स्वच्छन्दमुत्सङ्ग–खेलिन्यामन्यदा नृपः । ज्येष्ठं समुद्रविजयं, व्याजहार तनूरुहम् ॥ ४३६ ॥ एतस्या मम वत्सायाः, को नाम भविता वरः ? । इति मे वत्स ! महतीं, चिन्तामुच्छेत्तुमर्हसि ॥ ४३७ ॥ सोऽप्यभाषिष्ट यद्येवं, प्रेष्यतां कोऽपि पूरुषः । देव ! देशेष्वशेषेषु, वरवीक्षाविचक्षणः ॥ ४३८ ॥ यथा स प्रतिभाप्रौढो–ऽभिरूपं रूपशालिनम् । स्वसुर्मे सदृशं शुद्धा–न्वयमन्वेषते वरम् ॥ ४३९ ॥ स्वयंवरे तु दोषोऽयं, यदेकस्मिन् वरे वृते । ईर्ष्यया कलहायन्ते, नितान्तमपरे नृपाः ॥४४०॥ इति ज्येष्ठात्मजगिरा, मामाहूय महीपतिः । आदिशत् सर्वदेशेषु, यथा कोरक ! गम्यताम् ॥४४१॥ वरः कश्चिद्वरेण्यश्री–र्यस्तुभ्यमवभासते । उपागत्य तमस्माकं, वेगेनैव निवेदयेः ॥ ४४२ ॥ भूपालदुहितुस्तस्या, रूपं चित्रपटे ततः । लेशेनालिख्य देशेषु, क्रमाद्भ्राम्यन्निहागमम् ॥ ४४३ ॥ असौ रूपेण कन्दर्प–दर्पहा पाण्डुभूपतिः । मया दृष्टश्च हृष्टश्च, जातोऽस्मीप्सितलाभतः ॥४४४॥ आर्य ! शौर्यपुरेशस्य, सुता तत् पाण्डुभूभुजा । युज्यतामनुरूपेण, द्विरेफेणेव मालती ॥४४५॥ किं च

१ सार्वभौमानां–महाराजानामिति यावत्.

काञ्चनवर्णाऽस्याः, कनिष्ठाऽस्ति सहोदरा । नाम्ना माद्रीति रूपेण, यस्याः श्रीरेव सोदरा ॥ ४४६ ॥ विख्यातो दमघो-
षाख्य-स्तां वृणीते स्म चेदिपः । ज्यायस्यां किं त्वनूढाया-मियं नोद्वाहमर्हति ॥ ४४७॥ तदार्य ! सर्वकार्येषु, तिष्ठते त्वयि
निर्णयः । एते सुखिन्यौ कन्ये स्ता-मास्तामन्यद्विकल्पनम् ॥ ४४८ ॥ इत्थं तेनार्थितो भीष्म-स्तत्सर्वं प्रत्यपद्यत । "स्वयं
वाञ्छितमागच्छन्, को निराकुरुते कृती ?" ॥४४९॥ अथोत्पाद्य नवं रागं, सा मृगाक्षी मनोभुवा । आलिख्यत पटात्तस्मात्,
पाण्डोर्भित्तिपटे तदा ॥ ४५० ॥ स मध्येमानसं कुन्ती-मश्रान्तं धारयन्नपि । बहिरालोकयामास, स्थाने स्थाने पुरःस्थिताम्
॥ ४५१ ॥ कदा कुन्तीमुखाम्भोजे, मन्नेत्रभ्रमरद्वयी । पाता लावण्यकिञ्जल्क-मित्यासीदुत्सुको नृपः ॥ ४५२ ॥ पृष्ट्वा
सत्यवतीं शौर्य-पुरे कोरकसंयुतम् । कार्यस्थैर्याय भीष्मः स्वं, प्रेषयामास पूरुषम् ॥ ४५३ ॥

अथ शौर्यपुरे गत्वा, समेतस्तेन कोरकः । कुन्तीविभूषितोत्सङ्ग-मपश्यद्यादवेश्वरम् ॥ ४५४ ॥ व्यजिज्ञपच्च राजेन्द्र !
त्वदादेशादितोऽस्म्यहम् । अथाक्रमात् सदामत्त-हास्तिके हस्तिनापुरे ॥ ४५५ ॥ उत्फुल्लपुण्डरीकाक्ष-स्तत्र पाण्डुक्षितीश्वरः ।
अस्त्यगत श्यामैकः, पार्वणश्चन्द्रिकोदयः ॥ ४५६ ॥ नेत्रयोस्तत्र पुंरत्ने, गते विषयतां मया । अद्यापि रत्नगर्भेति, भूरियं पर्य-
मन्यत ॥ ४५७ ॥ तस्य पीनोन्नतावंसौ, लीलाशैलौ नृपश्रियः । विशालं वीरलक्ष्म्याश्च, तल्पकल्पमुरःस्थलम् ॥ ४५८ ॥
प्रीणितार्थिजनस्तस्य, पाणिः कल्पद्रुपल्लवः । विश्वत्राणकृतोर्बाह्वोः, कः पुरीपरिघः पुरः ? ॥ ४५९ ॥ चक्रवर्त्यतिवर्तीनि, तदङ्गे
लक्षणान्यपि । शक्रोऽपि स्पृहयत्येव, यस्मै सौभाग्य-विक्रमैः ॥ ४६० ॥ पात्रं कलाकलापस्य, विश्वस्य नयनोत्सवः । असौ
योग्यो वरः कुन्त्या, रोहिण्या इव चन्द्रमाः ॥ ४६१ ॥ पितृतुल्यः पितृव्योऽस्ति, पाण्डोर्भीष्म इति श्रुतः । स चित्र-

पटवृत्तान्तं, सर्वं वेत्ति स्म मन्मुखात् ॥ ४६२ ॥ कुन्तीं वरीतुं तेनायं, प्रहितो निजपूरुषः । देवः संप्रति कर्तव्य–मेतस्यादिशतु स्वयम् ॥ ४६३ ॥ संभाव्य भूमिपालस्त–मौदासीन्यस्पृशा दृशा । प्रातरावेदयिष्याम, इत्युक्त्वा व्यसृजत्तदा ॥४६४॥ उत्थितायां सभायां च, कोरकः स्वं गृहं ययौ । प्रीता पाण्डुगुणैः कुन्ती, कन्यान्तःपुरमाययौ ॥ ४६५ ॥ पाण्डोरवनिमार्तण्ड–स्यावदातान् गुणान् रहः । धात्र्या निवेदयांचक्रे, कुन्ती साकूतमानसा ॥ ४६६ ॥ पराक्रमेण रूपेण, विनयेन नयेन च । असमः सैष मातस्ते, जामाता प्रतिभाति मे ॥ ४६७ ॥ भाग्यान्याविर्भविष्यन्ति, न जाने कीदृशानि मे ? । "विघटन्ते हि कार्याणि, प्रतिकूले विधातरि" ॥ ४६८ ॥ अथादिष्टो विशां पत्या, प्रातराकार्य कोरकः । पाण्डवे पाण्डुरोगित्वा–न्न दातास्मि निजां सुताम् ॥ ४६९ ॥ कोरकेण नरेन्द्रोक्तं, पुरुषाय न्यवेद्यत । तेनापि भीष्म-पाण्डुभ्यां, हस्तिनापुरमीयुषा ॥ ४७० ॥ एकान्ते तं नरं नीत्वा, पाण्डुः पप्रच्छ सादरम् । ब्रूहि राजसुता भद्र !, किं नु मय्यनुरज्यते ? ॥४७१॥ सोऽशंसद्देव ! तां वेद्मि, रागिणीमिङ्गितैस्त्वयि । यदा त्वां वर्णयामास, कोरकः क्षितिपाग्रतः ॥४७२॥ भृशं रोमाञ्चितौ तस्याः, कपोलफलकौ तदा । निमेषविमुखे जाते, नेत्रे स्फारितपक्ष्मणी ॥ ४७३ ॥ सा श्रोत्रपुटमाधत्त, निषिद्धविषयान्तरम् । सवेपथुं वपुर्यष्टि–मुवाह च मुहुर्मुहुः ॥ ४७४ ॥

मन्मथेनाथ पृथ्वीशः, पञ्चभिर्युगपच्छरैः । प्रहतः प्राप तं तापं, येन नाप रतिं क्वचित् ॥ ४७५ ॥ क्षणं तस्थौ नृपः सौधे, धारायन्त्रगृहे क्षणम् । क्षणं पल्लवपल्यङ्के, कौसुमस्रस्तरे[1] क्षणम् ॥ ४७६ ॥ जलार्द्रा चन्दनं[2] चन्द्रः, कर्पूराण्यपि भूपतेः ।

१ पुष्पशय्यायाम् । २ आर्द्रव्यजनम्.

विलुम्पन्ति मम संतापं, न स्मरज्वरसंभवम् ॥ ४७७ ॥ अविन्दन्नरविन्दाना-मपि तल्पे रतिं क्वचित् । ययावुपवने पाण्डुः, पुष्पाऽम्मरवन्धुरे ॥ ४७८ ॥ कुन्तीविरहदाहार्ति-प्रतीकारचिकीर्षया । तत्र प्रविश्य विश्राम्यन्, सोऽद्राक्षीत् खदिरद्रुमम् ॥ ४७९ ॥ तस्य स्कन्धे निरालम्बं, कीलैः कीलितमायसैः । एकं नरं निरुच्छ्वासं, दुःखितं स समैक्षत ॥ ४८० ॥ स्मरसोदरभाकारं, तमालोक्य क्षितीश्वरः । आचकर्ष बलोत्कर्षा-ल्लीलया लोहकीलकान् ॥ ४८१ ॥ छिन्नद्रुपातमपतत्, सोऽतिमूर्च्छाभिसंप्लुतः । भूपतिर्लम्भयामास, चेतनां चन्दनैश्च तम् ॥ ४८२ ॥ स पुमान्मुद्रिकान्यस्त-मणिस्नपनवारिभिः । सेचं सेचं व्रणश्रेणीं, प्रगुणीकृतवान् स्वयम् ॥ ४८३ ॥ अथोचे पृथिवीनाथः, पृथुना प्रश्रयेण तम् । ब्रूहि कोऽसि महाभाग !, कथं नेयं दशा तव ? ॥ ४८४ ॥ स जगाद जगद्बन्धो !, वैताढ्यगिरिमण्डनम् । अस्त्यनेकास्तिमत्पौरं[1], पुरं हेमपुराभिधम् ॥ ४८५ ॥ तस्य स्वामी विशालाक्ष-नामा विद्याधरोऽस्म्यहम् । भ्रमन् स्वैरविहारेण, महीमिह समागमम् ॥४८६॥ वनस्यास्य प्रियं पद्म-मुपेत्य रिपुभिश्छलात् । बद्धोऽस्मि करिणीव्यग्रः, करीव करिबन्धकैः ॥ ४८७ ॥ यच्छन् प्राणानतुच्छैवं, किं तन्ने यस्य नेशिषे ? । तद्भगं जनः किं ते, प्रियं कर्तुं प्रवर्तताम् ? ॥४८८॥ अवदन्नृपतिर्भ्रातः !, किं ममातः परं प्रियम् ? । यत्त्वं विद्याधरेन्द्रत्वं, कुशली पालयिष्यसि ॥ ४८९ ॥ पुनरूचे विशालाक्षः, सशल्य इव लक्ष्यसे । भद्र ! त्वमपि तद्ब्रूहि, पूर्णं मम मनीषितम् ॥ ४९० ॥ अथाकथयदुर्वीशः, सर्वमाकूतमात्मनः । आवेदिता हि सुहृदां, फलन्त्येव मनोरथाः ॥ ४९१ ॥ ततः प्राह विशालाक्षो, प्रीत्या नृत्यन्मना नृपम् । मम वंशक्रमायाता, मुद्रिका गृह्यतामियम् ॥ ४९२ ॥ असौ तव विना

१ अनेके अस्तिमन्तः—धनिकाः पौराः यस्मिन् तत् ।

क्लेशं, दाता सपदि कामितम्। " देवतोपहितानां हि, वस्तूनां महिमाऽद्भुतः " ॥ ४९३ ॥ अदृश्यीकरणं वश्यी-करणं व्रणरोहणम्। विषनिग्रहणं चास्याः, प्रथमः कुसुमोद्गमः ॥ ४९४ ॥ शतकृत्वश्च निर्णीत-प्रभावेयमिति ब्रुवन्। पाण्डोस्तामर्पयामास, बलाद्विद्याधरेश्वरः ॥ ४९५ ॥ इयं संक्रामतु प्रीति-रावयोः पुत्रसंततौ। स किं स्नेहो न यः पुंसां, संतानमनुधावति? ॥४९६॥ इत्याख्याय विशालाक्षे, स्वपुरीं समुपेयुषि। मुद्रिकां तां धरित्रीशः, पर्यधत्त निजाङ्गुलौ ॥ ४९७ ॥ दृष्टप्रतिकृतिं कुन्तीं, पाण्डुश्चित्ते चकार च। तदात्मानमपश्यच्च, तत्र यत्रास्ति सा वने ॥ ४९८ ॥

तत्र तां निभृतं धात्र्या, समं विश्रम्भभाषिणीम्। अदृश्य एव शुश्राव, प्रजानामधिभूरिति ॥ ४९९ ॥ दुरन्तयाऽनया मात-र्दुःस्थयाऽवस्थया मम। कथंचिद्दिवसो यातः, कथं यास्यति यामिनी? ॥ ५०० ॥ जलार्द्रयाऽनया शुष्कं, शुष्कमेभिश्च पङ्कजैः। मम निर्वर्ण्यतामेषा, वपुःसंतापवर्णिका ॥ ५०१ ॥ मुक्ता मुक्ताकलापस्य, मुक्ताः संतापशान्तये। ध्यानास्फोटं स्फुटन्ति स्म, पश्य मातर्ममोरसि ॥५०२॥ मृणालवलयैरेभि-रेभिश्चन्दनचर्चनैः। अलं मातरलं मातः!, किमु स्वं क्लेशयिष्यसि? ॥ ५०३ ॥ कोरकेण समाख्यातः, स शीतद्युतिशीतलः। मातर्मयि कथंकार-मग्नेरपि विशिष्यते? ॥ ५०४ ॥ निर्मन्तुमपि मां बाणै-र्बाधते कुसुमायुधः। तिरस्कृतोऽपि रूपेण, न तं हन्ति मनागपि ॥ ५०५ ॥ स्मरस्तस्मिन्नपि शरै-र्निशितैः प्रहरेद्यदि। सुभगः सुस्थितंमन्यः, स मां किं न स्मरेत्ततः? ॥५०६॥ गण्डोपर्यपरो ह्येष, विकटः पिटकोदयः। उन्निद्रचन्द्रिकावीचि-रिन्दुर्यदयमुद्गतः ॥ ५०७ ॥ विपर्येति विपर्यस्तै-र्भाग्यैर्भुवनमप्यदः। मम येनोल्मुकायन्ते, चन्द्रस्यापि मरीचयः ॥ ५०८ ॥ हेतोः कुतोऽपि तातो मां, न तस्मै दातुमीहते। हा! हा! मातर्निराशाऽस्मि, शरणं मृत्युरेव मे ॥ ५०९ ॥

पाण्डुविद्याधरयोर्मैत्री, पान्डोः कुन्तीसमीपे गमनम्, कुन्त्यवस्थादर्शनं च ॥

[illegible], वत्से ! मा स्मोत्सुका भव । दुष्प्रापः प्राप्यते प्रेयान्, कृशोदरि ! किमुत्सुकैः ? ॥ ५१० ॥ उपायं [illegible], [illegible] । जटिन्येव यदाकृष्टं, द्रष्टासि पुरतः प्रियम् ॥ ५११ ॥ इत्थमाश्वास्यमानाऽपि, [illegible] । भृशं लब्धात्मलाभेन, संतापेनाभ्यभूयत ॥ ५१२ ॥ तदा धात्री ययौ दूरं नवपल्लवहेतवे । " त्वरन्ते [illegible] हि, [illegible] " ॥ ५१३ ॥

[illegible], [illegible] नन्दिनी । दिष्ट्या निरन्तरागोऽयं, समयो मम मृत्यवे ॥ ५१४ ॥ विचिन्त्येति दृढाबद्ध–[illegible] । अशोकपादपस्याधः, सन्नद्धोद्बन्धनाय सा ॥ ५१५ ॥ इह संनिहिताः सर्वाः, शृण्वन्तु वनदेवताः । [illegible] भूपालः, पाण्डुरेवास्तु मे पतिः ॥५१६॥ अभिधायेति शाखायाः, कण्ठे पाशं न्यधात् पृथा । "अयं प्रायः प्रती-[illegible]" ॥५१७॥ (युग्मम्) पाशालम्बितमात्मानं, सा स्म यावद्विमुञ्चति । असिधेनुकरस्तावद्–धात्रीपति-[illegible] ॥५१८॥ [illegible] बाले !, साहसेन तवाधुना । इति जल्पन्नृपः कण्ठा–त्तस्याः पाशमपाच्छिदत् ॥५१९॥ अधः पत-[illegible]–[illegible] । कृत्वा पृथ्वीपतिः क्षौम–पल्लवैस्तामवीजयत् ॥५२०॥ संज्ञामासेदुषी साऽथ, चिन्तयामास [illegible] ! को नाम, मामेवं नीजयत्यगम् ? ॥५२१॥ पाण्डोरन्यस्य हा ! क्रोडे, शेते कुन्त्यपि धिग्विधिम् । " जीवि-[illegible] हि, [illegible] मलीनतम् " ॥५२२॥ एषोऽपि कोरकाख्यात–रूपसारूप्यमश्नुते । नृणामन्योन्यमाकार–संवादो [illegible] ॥ ५२३ ॥ [illegible] स्पर्शो, मां सिञ्चत्यमृतद्रवैः ? । ममानुकम्पया तत्किं, स एवायमुपागमत् ? ॥५२४॥ [illegible] मे भाग्यानि, भागधेयानि जाग्रति ? । इति चिन्तापरा याव–द्दृशा स्पृशति तद्वपुः ॥५२५॥ कारुण्यादिव शीतांशु–

रस्यास्तावददर्शयत्। नृपकङ्कणयोः पाण्डु–राजस्यैवाक्षरावलीम् ॥ ५२६ ॥ ततः स्निग्धैश्च मुग्धैश्च, सविकल्पैश्च लोचनैः। पश्यन्तीं तामभाषिष्ट, सप्रेमा पृथिवीपतिः ॥ ५२७ ॥ अलं विकल्पैस्तन्वङ्गि !, स एवास्मि तव प्रियः। गुणैः कुन्दावदातैस्ते, समाकृष्टः समागमम् ॥ ५२८ ॥ पटचित्रेऽपि दृष्टा मे, मनः पूर्वमपाहरः। कृशाङ्गि ! वपुरप्यागा–न्मनोऽनुपदि मेऽधुना ॥ ५२९ ॥ मण्डलीकृतकोदण्डः, स्वयं साहायके स्थितः। ममात्तमार्गणो मार्गे, स्मर एवाभवत्पुरः ॥ ५३० ॥ इति वादिनि भूपाले, तत्र धात्री समेयुषी। तैस्तैर्निश्चित्य तं पाण्डुं, चिह्नैः कुन्तीमवोचत ॥५३१॥ वत्से ! पाण्डुमहाराज–स्त्वामुपागात् प्रियोऽतिथिः। प्रथयातिथ्यमुत्थाय, तन्मनःप्रणयोचितम् ॥५३२॥ इत्युक्ता सा समुत्तस्थौ, सलज्जमवदच्च ताम्। जानामि किमहं मात–रुचितं सर्वमाचर ॥ ५३३ ॥ तयोर्विधाय गान्धर्वं, विवाहमथ भूपतिम्। उवाच धात्री धात्रीश !, यत्ते कस्यास्ति तत्कुलम् ? ॥ ५३४ ॥ यत्राभूत्रिजगद्दत्त–शान्तिः शान्तिजिनेश्वरः। द्वेधा क्षमाभृतां चक्रे, चक्रवर्ती बभूव यः ॥ ५३५ ॥ रञ्जितं भवता विश्वं, स्वगुणैर्धवलैरपि। रागं गुणानुरागेण, तदेषाऽपि त्वयि व्यधात् ॥ ५३६ ॥ यादवेन्द्रमतिक्रम्य, मया वां संगमः कृतः। त्वमप्युर्वीश ! कुर्वीथा–स्तद्यत्तव कुलोचितम् ॥ ५३७ ॥ इत्युदीर्य प्रयातायां, तस्यां क्वापि लतान्तरे। तस्य प्रेम्णोऽनुरूपेण, यथा तावप्यदीव्यताम् ॥ ५३८ ॥ मन्मथो मिथुने तत्र, भृशमादेशकारिणि। धर्मार्थाभ्यां पुमर्थाभ्यां, बहुमन्यस्तदाऽभवत् ॥ ५३९ ॥ स्मरः प्राप परां कोटि–मनयोरेकचित्तयोः। मूलं समरसापत्ति–र्निकामं काममोक्षयोः ॥ ५४०॥ तयोः क्रीडाजुषोः स्वैरं, क्षीणा क्षणमिव क्षपा। गच्छन् कालः सुखोत्कर्षी[3], भूयानपि न लक्ष्यते ॥ ५४१ ॥ निशि

१ 'राजस्येत्यक्ष०' प्र० द्वय०। २ यत् कुलं ते तवास्ति, तत्कुलं कस्यान्यस्य अस्ति ? नास्तीत्यर्थः। ३ 'त्कर्षे' प्र० द्वय०।

गोनप्रमानार्या, नृपो धात्र्या व्यसृज्यत । सूनोः प्रच्छन्नमङ्गे स्यात्, तादृशां हि प्रमाणता ॥५४२॥ अङ्गुलीयकमाहात्म्या—
न्नृपः स्वं स्थानमाययौ । अधिपश्च गभस्तीनां, पूर्वशैलेन्द्रचूलिकाम् ॥ ५४३ ॥
संप्राप्तसंगमा प्रावृट्, पयोदेनेव पाण्डुना । अन्तर्वत्नी विभाति स्म, कुन्ती गूढाङ्कुरेव भूः ॥५४४॥ क्रमाद्धात्री तथा-
भूतां तां विज्ञाय विचक्षणा । किमप्यपाटवव्याजं, कृत्वा छन्नमधारयत् ॥५४५॥ आविर्बभूव शौर्यं तत्, तस्या गर्भप्रभा-
वतः । त्रिलोकीतोऽपि येनौजो, मन्यते स्म तृणाय सा ॥५४६॥ तदा तस्याः कृताश्चर्य-मौदार्यं तदजृम्भत । येन सर्वस्वदा-
नेऽपि, किं दत्तमिति खिद्यते ॥५४७॥ प्रत्याशं प्रसरद्दीप्ति-मण्डले मणिकुण्डले । शस्त्राणि च प्रियाण्यासं-स्तस्याः प्रसृमरौजसः
॥ ५४८ ॥ मार्तण्डमण्डलभ्रान्ति-जनकं निजतेजसा । अथ सा नवमासान्ते, सूते स्म सुदिने सुतम् ॥ ५४९ ॥ पुत्रजन्मेति
सानन्दा, प्रच्छन्नमिति शङ्किता । त्याज्योऽयमिति च म्लास्नुः[3], सा दधौ भावसंकरम् ॥५५०॥ शौण्डीर्यौदार्य-साम्राज्य-बीजं
वीक्ष्याङ्गलक्षणम् । कुन्ती धात्र्यावद्येतां, तत्त्यागोपक्रमे तदा ॥ ५५१ ॥ असौ लोकविरुद्धेन, वर्त्मना जात इत्यमुम् । उज्झितुं
रत्नमञ्जूषां, तामथामानीयत क्षणात् ॥५५२॥ क्षिप्त्वा तत्र स्वयं धात्र्या, मणिकुण्डलमण्डितः । रहः प्रवाहयांचक्रे, सोऽन्तर्गङ्गं
सरापगा ॥५५३॥ त्यक्ते कुन्ती सुते तस्मि-न्नुवाह महतीं शुचम् । "तादृशा पुत्ररत्नेन, वियुक्तः को न खिद्यते" ? ॥५५४॥
अथापृच्छि रहो जातु, धात्री राज्ञ्या सुभद्रया । कथमन्यमिवाकारं, धत्ते कुन्ती सुता मम ? ॥ ५५५ ॥ कथं चान्तः
ससल्येव, वहति म्लानमाननम् ? । अथ तं[4] कथयामास, धात्री वृत्तान्तमादितः ॥५५६॥ राज्ञ्यप्याख्यत् क्षितीशाय, तस्याः

१ 'नातिप्रभा०' प्रतिद्वय० । २ गतिमद्दशानाम् । ३ म्लानिं गता । ४ 'तां' इति पाठश्चेत्साधुः ।

रस्यास्तावददर्शयत् । नृपकङ्कणयोः पाण्डु–राजस्यैवाक्षरावलीम् ॥ ५२६ ॥ ततः स्निग्धैश्च मुग्धैश्च, सविकल्पैश्च लोचनैः । पश्यन्तीं तामभाषिष्ट, सप्रेमा पृथिवीपतिः ॥ ५२७ ॥ अलं विकल्पैस्तन्वङ्गि !, स एवास्मि तव प्रियः । गुणैः कुन्दावदातैस्ते, समाकृष्टः समागमम् ॥ ५२८ ॥ पटचित्रेऽपि दृष्टा मे, मनः पूर्वमपाहरः । कृशाङ्गि ! वपुरप्यागा–न्मनोऽनुपदि मेऽधुना ॥ ५२९ ॥ मण्डलीकृतकोदण्डः, स्वयं साहायके स्थितः । ममात्तमार्गणो मार्गे, स्मर एवाभवत्पुरः ॥ ५३० ॥ इति वादिनि भूपाले, तत्र धात्री समेयुषी । तैस्तैर्निश्चित्य तं पाण्डुं, चिह्नैः कुन्तीमवोचत ॥५३१॥ वत्से ! पाण्डुमहाराज–स्त्वामुपागात् प्रियोऽतिथिः । प्रथयातिथ्यमुत्थाय, तन्मनःप्रणयोचितम् ॥५३२॥ इत्युक्ता सा समुत्तस्थौ, सलज्जमवदच्च ताम् । जानामि किमहं मात–रुचितं सर्वमाचर ॥ ५३३ ॥ तयोर्विधाय गान्धर्वं, विवाहमथ भूपतिम् । उवाच धात्री धात्रीश !, यत्ते कस्यास्ति तत्कुलम् ? ॥ ५३४ ॥ यत्राभूत्त्रिजगद्दत्त–शान्तिः शान्तिजिनेश्वरः । द्वेधा क्षमाभृतां चक्रे, चक्रवर्ती बभूव यः ॥ ५३५ ॥ रञ्जितं भवता विश्वं, स्वगुणैर्धवलैरपि । रागं गुणानुरागेण, तदेषाऽपि त्वयि न्यधात् ॥ ५३६ ॥ यादवेन्द्रमतिक्रम्य, मया वां संगमः कृतः । त्वमप्युर्वीश ! कुर्वीथा–स्तद्यत्तव कुलोचितम् ॥ ५३७ ॥ इत्युदीर्य प्रयातायां, तस्यां क्वापि लतान्तरे । तस्य प्रेम्णोऽनुरूपेण, यथा तावप्यदीव्यताम् ॥ ५३८ ॥ मन्मथो मिथुने तत्र, भृशमादेशकारिणि । धर्मार्थाभ्यां पुमर्थाभ्यां, बहुमन्यस्तदाऽभवत् ॥ ५३९ ॥ स्मरः प्राप परां कोटि–मनयोरेकचित्तयोः । मूलं समरसापत्ति–र्निकामं काममोक्षयोः ॥ ५४०॥ तयोः क्रीडाजुषोः स्वैरं, क्षीणा क्षणमिव क्षपा । गच्छन् कालः सुखोत्कर्षी[3], भूयानपि न लक्ष्यते ॥ ५४१ ॥ निशि

१ 'राजस्येत्यक्ष०' प्र० द्वय० । २ यत् कुलं ते तवास्ति, तत्कुलं कस्यान्यस्य अस्ति ? नास्तीत्यर्थः । ३ 'त्कर्षे' प्र० द्वय० ।

नैनाग्रमानायां, नृपो धात्र्या व्यसृज्यत । सूनोः प्रच्छन्नमङ्गे स्यात्, तादृशां हि प्रमाणता ॥ ५४२ ॥ अङ्गुलीयकमाहात्म्या-न्नृपः स्वं स्थानमागमौ । अभिपश्च गभस्तीनां, पूर्वशैलेन्द्रचूलिकाम् ॥ ५४३ ॥

संप्राप्तगमा प्रावृट्, पयोदेनेव पाण्डुना । अन्तर्वत्नी विभाति स्म, कुन्ती गूढाङ्कुरेव भूः ॥ ५४४ ॥ क्रमाद्धात्री तथा-भूतां, तां विज्ञाय विचक्षणा । किमप्यपाटवव्याजं, कृत्वा छन्नमधारयत् ॥ ५४५ ॥ आविर्बभूव शौर्यं तत्, तस्या गर्भप्रभा-वतः । निशौजसोऽपि येनौजो, मन्यते स्म तृणाय सा ॥ ५४६ ॥ तदा तस्याः कृताश्चर्य-मौदार्यं तदजृम्भत । येन सर्वस्वदा-नेऽपि, किं दत्तमिति खिद्यते ॥ ५४७ ॥ प्रत्याशं प्रसरद्दीप्ति-मण्डले मणिकुण्डले । शस्त्राणि च प्रियाण्यासं-स्तस्याः प्रसूमरौजसः ॥ ५४८ ॥ मार्तण्डमण्डलभ्रान्ति-जनकं निजतेजसा । अथ सा नवमासान्ते, सूते स्म सुदिने सुतम् ॥ ५४९ ॥ पुत्रजन्मेति सानन्दा, प्रच्छन्नमिति शङ्किता । त्याज्योऽयमिति च म्लान्तुः, सा दधौ भावसंकरम् ॥ ५५० ॥ शौण्डीर्यौदार्य-साम्राज्य-बीजं वीक्ष्याङ्गलक्षणम् । कुन्ती-धात्र्यावदूयेतां, तत्त्यागोपक्रमे तदा ॥ ५५१ ॥ असौ लोकविरुद्धेन, वर्त्मना जात इत्यमुम् । उज्झितुं स्वमञ्जूषा, तामथानीयत क्षणात् ॥ ५५२ ॥ क्षिप्त्वा तत्र स्वयं धात्र्या, मणिकुण्डलमण्डितः । रहः प्रवाहयांचक्रे, सोऽन्तर्गङ्गं नराशया ॥ ५५३ ॥ त्यक्ते कुन्ती सुते तस्मि-न्नुवाह महतीं शुचम् । "तादृशा पुत्ररत्नेन, वियुक्तः को न खिद्यते" ? ॥ ५५४ ॥

अथापृच्छि रहो जातु, धात्री राज्या सुभद्रया । कथमन्यमिवाकारं, धत्ते कुन्ती सुता मम ? ॥ ५५५ ॥ कथं चान्तः सशल्येव, वहति म्लानमाननम् ? । अथ तं कथयामास, धात्री वृत्तान्तमादितः ॥ ५५६ ॥ राज्यप्याख्यत् क्षितीशाय, तस्याः

१ 'नातिप्रभा०' प्रतिद्व०। २ रात्रिमङ्क्शानाम । ३ म्लानिं गता । ४ 'तां' इति पाठश्चेत्साधुः ।

सोऽप्येवमादिशत् । वरान्तरेण पर्याप्त–मधुना दुहितुः प्रिये ! ॥ ५५७ ॥ इत्यालोच्य निजः सूनु–र्धरणोऽन्धकवृष्णिना । दत्त्वा शिक्षां पृथायुक्तः, प्रहितो हस्तिनापुरे ॥५५८॥ अश्वैरुत्थापितं रेणुं, करेणुमदवारिभिः । स्थापयन्नाप धरणः, पुरं पाण्डुमहीपतेः ॥ ५५९ ॥ भागीरथीतनूजेन, प्रत्युद्यातो यदूद्भवः । पुरीपरिसरे रम्ये, निवासान् स्वैरमाददौ ॥ ५६० ॥ रागिणीं सानुरागेण, स मुदा मुदिताननाम् । कुमारः पाण्डुराजेन, स्वसारं पर्यणाययत् ॥ ५६१ ॥ दत्तं दन्तावलशतं, शतानि दश वाजिनाम् । वराय पाण्डवे तेन, पाणिमोचनपर्वणि ॥ ५६२ ॥ कृत्वा विवाहकार्याणि, कुमारो धरणस्ततः । पाण्डोरवाप्तसत्कारः, संप्राप्तः स्वपुरं क्रमात् ॥ ५६३ ॥

कुन्तीसुतस्य त्यागः । पाण्डोः कुन्तीमाद्रीभ्यां सह विवाहः ।

अथो कुमुद्वती नाम, देवकक्षितिपात्मजा । विदुषा विदुरेणापि, प्रेमतः पर्यणीयत ॥५६४॥ माद्रीति मद्रराजस्य, सुतां सर्वगुणान्विताम् । राज्यवृद्धोपरोधेन, पुनः पाण्डुरुपायत ॥५६५॥ भीष्मे च धृतराष्ट्रे च, भक्तिः पाण्डोरनुत्तरा । नित्यमभ्युदयाशंसि, मनस्तस्मिंस्तयोरपि ॥ ५६६ ॥ अथ पालयतः पाण्डो, राज्यं निर्जितशात्रवम् । अभ्याजगाम सुरभिः, पुष्पैस्तमिव सेवितुम् ॥ ५६७ ॥ रसालस्निग्धकण्ठीभिः, पिकीभिः पञ्चमच्छलात् । प्रावेशिकी वसन्तस्य, ध्रुवा ध्रुवमगीयत ॥ ५६८ ॥ पान्थनिर्मन्थनिर्व्यूढ–गाढप्रौढिर्वने[1] वने । मल्ली भल्लीव भाति स्म, स्मरभिल्लस्य भासुरा ॥५६९॥ ववौ विचित्रवीर्यस्य, सुतानामधिमानसम् । कुसुमायुधजागर्या[2], दक्षिणो दक्षिणानिलः ॥५७०॥ कदाचिन्मदनादेशात्, ते त्रयोऽपि प्रियासखाः । दिनानि निन्युः स्वच्छन्दं, दोलान्दोलनकेलिभिः ॥ ५७१ ॥ प्रेङ्खाप्रेङ्खोलनप्रेङ्ख[3]–द्भयोर्मिभ्यो मुहुर्मुहुः । प्रियाभ्यस्ते

१ प्रौढिः–महत्ता । २ कामजागरणेन । ३ प्रेङ्खाया आन्दोलनेन स्पृशन्तः भयोर्मयः यासां ताभ्यः ।

क्रमन्ते स्म, गाढालिङ्गनकौतुकम् ॥ ५७२ ॥ प्रेक्षासुखप्रकर्षस्य, न तृप्यन्ति स्म तत्प्रियाः । समं प्रियतमैस्तादृक्-संगमो हि कुतोऽन्यथा ॥५७३॥ प्रेयसीभिः समं ताभिः, काननेषु कदाचन । स्वैरं ते विहरन्ते स्म, स्मरादेशवशंवदाः ॥५७४॥ चम्पको-नंगनिर्मिता, माल्यैर्धम्मिल्लबन्धनैः । ते स्वयं रचयांचक्रुः, प्रेयसीनां प्रसाधनम् ॥ ५७५ ॥ मालाकारोपनीतेषु, पुष्पाकल्पेष्व-नेकशः । तासां दूरमनास्थाऽभूत्, न हि ते प्रियकर्तृकाः ॥५७६॥ उत्फुल्लमल्लीनिष्पन्न-पुष्पाऽऽभरणशालिनः । ते भृशं विभरा-मासु-र्मेघोर्मूर्तिमतः श्रियम् ॥ ५७७ ॥ श्रान्ता वनविहारेण, जलकेलिचिकीर्षया । क्रीडावापीषु रम्यासु, तेऽवतेरुः प्रियान्विताः ॥५७८॥ हतास्तोयेन कान्तैस्ताः, प्रमोदेन प्रपेदिरे । अहतास्तु विषादेन, "विपरीतो हि मन्मथः" ॥५७९॥ सार्धं प्रियाभि-रम्यस्त-शिलागृहशायनैः । चन्द्रिका चन्द्रशालासु, वासन्ती तैरसेव्यत ॥५८०॥ मधोरतिक्रमे कामं, जलार्द्रा-चन्द्र-चन्दनैः । अलङ्घ्यन्त तदभ्यर्ण-सेवावसरवासराः ॥ ५८१ ॥ सेकातिरेकमान्द्राणि, मध्येकदलिकाननम् । निकामं कार्यमानानि, कामि-भिर्नैः शिश्येरिरे ॥ ५८२ ॥ प्रावृषि प्रेयसीवर्ग-संसर्गप्रीतचेतसाम् । बभूवुः केकिनां केका-स्तेषां हर्षैकहेतवः ॥ ५८३ ॥ उज्जृम्भितभ्रम-द्भृङ्ग-निकरैर्मकरन्दिभिः । प्रेयसीर्भूषयामासु-स्ते कदम्बकदम्बकैः ॥५८४॥ मिलत्परिमलश्रीषु, मालतीषु प्रियासु न । भृङ्गयूनां न तेषां न, पर्याप्तं भोगसंपदा ॥५८५॥ हित्वा मनोहरान् हारान्, दूरतस्ता मृगीदृशः । पर्यधुर्ग्रथिता नाथैः, शारदेन्दीवरस्रजः ॥ ५८६ ॥ मृगनेत्राः प्रियाः प्राप्य, हैमिनीर्यामिनीश्च ताः । स्मरपारायणं साङ्ग-मध्यगीषत तेऽखिलम् ॥ ५८७ ॥ ते प्रियाणां तदा कण्ठे, गण्डयोः स्तनमण्डले । मसृणैर्घुसृणक्षोदै-र्लिलिखुः पत्रवल्लरीः ॥ ५८८ ॥ प्रियावक्षो-

१ [illegible]गृहाणि । २ [illegible]पुष्पमयूखैः । ३ शारदकमलमालाः । ४ कुङ्कुमचूर्णैः ।

जघर्मोर्मि–निरस्ततुहिनापदाम् । शिशिरोऽप्यकरोत् तेषां, मधुवच्चन्दने स्पृहाम् ॥ ५८९ ॥ दयितादशनौपम्य–सुभगंभावुकं तदा । आसीद्विशेषतस्तेषां, कुन्दमानन्दहेतवे ॥ ५९० ॥ सौधे कदाचन कदाचन काननेषु, वाप्यां कदाचन कदाचन केलिशैले । पञ्चेषुसायकसहाः सह वल्लभाभिः, सर्वर्तुचक्रमतिचक्रमुरेवमेते ॥ ५९१ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते महाकाव्ये पाण्डवपूर्वजवर्णनो नाम प्रथमः सर्गः ॥ १ ॥

# अथ द्वितीयः सर्गः ।

अथाऽन्येद्युरतिस्फीता, पत्यौ प्रीतिमुपेयुषी । बभार गर्भं गान्धारी, शमीवानिल[1]सारथिम् ॥ १ ॥ उन्मीलितमहौद्धत्यो[2], जज्ञेऽन्तर्मनसं मदः । बहिरापीनभावश्च, तस्या वक्षोजकुम्भयोः ॥ २ ॥ अवसादः शरीरस्य, तस्या गर्भभवोऽभवत् । जगदाक्रमणोत्साह–श्चेतसस्तु व्यजृम्भत ॥ ३ ॥ गर्भेणाभ्यधिकं तस्याः, कृतमुज्ज्वलमाननम् । अजायेतां तु वक्षोजौ, कामं श्यामुखौ तदा ॥ ४ ॥ ससत्त्वा धृतराष्ट्रस्य, सा बभूवातिवल्लभा । कृषिः कृषीवलस्येव, संपन्नान्तःफलोदया ॥ ५ ॥ तस्या गर्भानुभावेन, दोहदैर्जातमुद्धतैः । "अन्तर्द्रव्यानुरूपा हि, पयस्यामोदसंपदः" ॥ ६ ॥ उग्रेण विग्रहेणैव, विपदामुदयेन च । जनानां जायमानेन, तस्याः संपेदिरे मुदः ॥ ७ ॥ तस्याः सं[3]नीडसंपन्ना, निगडध्वानवन्धुराः । बबन्धुर्बन्धनागारे, हाकार-

१ अग्निम् । २ विकसितं महत् औद्धत्यं यस्मिन् सः । ३ समीपे प्राप्ताः ।

ानयो भूमिम् ॥ ८ ॥ तथा निष्कारणक्रोध-विकटभ्रकुटीजुषा । पूज्येष्वपि विसृज्यन्ते, न्यक्कारविरसा गिरः ॥ ९ ॥ मत्त-नागकुमारूढा, पुरे पुरुषवेषभृत् । सा स्वच्छन्दविहारेण, पूरयामास दोहदम् ॥ १० ॥ प्रौढभावं बभारान्त-स्तस्या गर्भो यथा यथा । कृष्णेतरेषु शीतांशुः, पाकमागात्तथा तथा ॥ ११ ॥ पृथ्व्याः प्रथमं गर्भो, ममाभूदिति गर्विता । विनयस्य विपर्यासं, सा चकार गुरुष्वपि ॥ १२ ॥

पृथ्व्यपि नतिरस्कार-जागरूकमनःक्षमा । स्पृहयालुरपत्याय, धर्ममेव विनिर्ममे ॥ १३ ॥ फलैः फलार्थिनी तैस्तैः, परिचारकमनोरमैः । वीतरागं तदेकाग्र-स्थिरभक्तिरुपास्थित ॥ १४ ॥ प्रावर्तयद्दयार्तानां, प्राणिनामभयोत्सवम् । साधर्मिकाणां वात्सल्यं, विभवात् सा व्यधत्त च ॥ १५ ॥ सा दीननिवहोद्धार-धुरीणा पाणिभूषणम् । कङ्कणादि गुणीकृत्य, दानं मुख्यतया व्यधात् ॥ १६ ॥ अन्येद्युः सागरं मेरुं, सूर्यं चन्द्रमसं श्रियम् । दृष्ट्वा स्वप्नानिमान् पञ्च, साऽथ राज्ञे व्यजिज्ञपत् ॥ १७ ॥ गाम्भीर्यादिगुणस्तोम-मंदोलितजगत्त्रयः । सुतस्ते भविता देवि !, तस्यै सोऽप्येवमभ्यधात् ॥ १८ ॥ आरभ्य तद्दिनाद्देवी, गर्भमाणिक्यमानन्दत् । "सुरोपितः फलत्येव, सद्यः सुकृतपादपः" ॥१९॥ स्तनयोरपि पीनत्व, पाण्डुभावश्च गण्डयोः । लावण्यं न दर्शोल्लस्या, गर्भं व्यानञ्ज रंहसा ॥ २० ॥ अन्तर्वत्नी विशां पत्युः, पत्नी भृशमधारयत् । अन्तःसंक्रान्तशीतांशु-पीयूषसरसीश्रियम् ॥ २१ ॥ नानाविपद्दवस्कन्द-दीनवृत्तिषु जन्तुषु । कारुण्यलहरीसान्द्रा-स्तस्याः पेतुर्दृशस्तदा ॥ २२ ॥ आसक्तिर्निजधर्मेषु, या तस्याः समजायत । सा नार्थेऽर्थेप्सितो दृष्टा, न कामे कामुकस्य च ॥ २३ ॥ परोपकारः कारान्तः-क्रान्तप्रा-

१ मनोऽभिप्रायः । २ अप्रधानीकृत्य । ३ सन्दोलितं-कम्पम्-वशीकृतमित्यर्थः । ४ "व्यानञ्जुरञ्जसा" इति प्रतिद्वय० । ५ धनेच्छोः ।

णिविमोचनम् । मारिवारणमश्रान्त–मयं तद्दोहदोदयः ॥ २४ ॥ पत्युः प्रसादादेतस्याः, सर्वोऽपूरिष्ट दोहदः । पाण्डौ भर्तरि लोकेषु, तस्याः किं नाम दुर्लभम् ? ॥ २५ ॥

अथ ज्येष्ठायुते चन्द्रे, वारे मङ्गलनामनि । वृश्चिकाख्ये शुभे राशा–वुच्चस्थेषु ग्रहेष्वपि ॥ २६ ॥ अजायत सुतस्तस्या, मुहूर्ते तत्र कुत्रचित् । आक्रान्तचतुराशान्ता, जायन्ते यत्र चक्रिणः ॥ २७ ॥ (युग्मम्) परां तज्जन्मनि प्रीतिं, स्थावराणि चराणि च । भूतान्यनुभवन्ति स, "सर्वमत्यद्भुतं सताम्" ॥२८॥ भीष्मं च धृतराष्ट्रं च, पाण्डुं च विदुरं तथा । दिष्ट्याऽमून् वर्धयामासु–र्जनाः शुद्धान्तवासिनः ॥२९॥ अम्बालिका–म्बिका–म्बानां, सत्यवत्याश्च सत्वरम् । गत्वा दास्यः प्रसन्नास्याः, पुत्रजन्म न्यवेदयन् ॥ ३० ॥ जातमात्रे सुते तस्मिन्, बालार्कसमतेजसि । उच्चचार वियत्युच्चै–रशरीरा सरस्वती ॥ ३१ ॥ असौ सत्यवतां मुख्यः, सतामग्र्यः समग्रधीः । शौण्डीर्य–स्थैर्य–गाम्भीर्य–वसतिर्विनयी नयी ॥३२॥ धर्मबद्धरतिर्भूपः, सार्वभौमो भविष्यति । वार्द्धके व्रतमादाय, निर्वाणं च गमिष्यति ॥ ३३ ॥ (युग्मम्) तत्समाकर्णनान्न स्यु–र्भीष्मादीनां मुदः कथम् ? । अपरेषामपि तदा, हर्षं नाख्यातुमीश्महे ॥ ३४ ॥ स्वयमेव पुरे पौरै–रुत्सवो निर्मितस्तदा । आदेशस्तु विशांपत्यु–रभवत् सिद्धसाधनम् ॥ ३५ ॥ निःशेषदिविषद्वर्ग–प्रमोदपिशुनास्तदा । समाकर्ण्यन्त सानन्दं, दुन्दुभिध्वनयो दिवि ॥ ३६ ॥ सुतस्य तस्य भीष्माद्यैः, किंचिद्वीक्ष्याङ्गलक्षणम् । युधिष्ठिर इति श्लाघ्य–मन्वर्थं नाम निर्ममे ॥३७॥ तपोधर्मैकनिष्ठायाः, पृथाया जात इत्यसौ । लेभे नाम्नी तपःसूनु–र्धर्मसूनुरिति क्षितौ ॥ ३८ ॥ तस्य पश्चादजातारि–रिति त्रैलो-

१ 'तानायाः' प्रतिद्वय० ।

गान्धारी-
कुन्त्योः
दोहदः,
युधिष्ठिर-
जन्म ॥

त्वविश्रुतम् । तेन तेनावदातेन, नामधेयमजायत ॥ ३९ ॥ समाजग्मुर्महीपालैः, प्रहितानि सहस्रशः । प्राभृतानि सहस्राणि, पाण्डोरागन्मजजन्मनि ॥ ४० ॥

उपायनमुपादाय, कुन्त्याः पितृगृहादपि । आययौ विकमद्रोम-कोरकः कोरकस्तदा ॥ ४१ ॥ गौरवार्हविशेषेण, तं पाण्डुर्धरणीपतिः । सत्कृत्य कृत्यनिष्णातः, स्नेहसारमवार्तयत ॥ ४२ ॥ महीतलमिलन्मौलि-माश्वास्य विहितानतिम् । कुन्ती निजान्नजान्मल्यान्, पृच्छति स्मेति कोरकम् ॥ ४३ ॥ श्वश्रूभिः सकृदप्यस्मि, न विसृष्टा पितुर्गृहे । तद्ब्रूहि कुशलं कानि-कन्यागम्य मेऽधुना ? ॥४४॥ बन्धुसंतानवृध्या च, मामानन्दय संप्रति । इति पृष्टोऽभवद्धृष्टो, व्याकरोति स कोरकः ॥ ४५ ॥ श्रृणु त्वं देवि ! साम्राज्यं, देवेनान्धकवृष्णिना । समुद्रविजये न्यस्य, प्रव्रज्या स्वयमाददे ॥ ४६ ॥ भोजवृष्णेश्च तनयो, मथुराराज्यमूर्जितम् । उग्रसेनः करोतीति, प्रागपि ज्ञातवत्यसि ॥ ४७ ॥ ततःप्रभृति मे स्वामी, समुद्रविजयोऽनुजान । आत्मनोऽप्यधिकं पश्य-न्नपाच्छौर्यपुरप्रजाः ॥ ४८ ॥ पूर्वोपार्जितसौभाग्यः, स्वच्छन्दं विचरन् पुरे । वसुदेवः कुमारस्तु, रेमे मन्मथसादनः ॥ ४९ ॥ अन्यदा वसुदेवस्य, तत्रत्यः पुत्रमात्मनः । वणिक् सुभद्रः कंसाख्य-मर्पयामास सेवकम् ॥ ५० ॥ तथा कलाभिस्तेनापि, कुमारः पर्यचर्यत । समानमात्मनो मेने, स यथा तमहर्निशम् ॥ ५१ ॥

अस्ति चात्र जरासंधो, राजा राजगृहे पुरे । स्वैरं क्रीडति यस्याज्ञा, त्रिखण्डक्षितिमण्डले ॥ ५२ ॥ विसृज्य दूतमेतेन, भूमण्डलविडौजसा । अकस्मात् स्वामिनोऽस्माक-मादिष्टमिदमन्यदा ॥५३॥ अस्ति निर्व्याजशौण्डीर्य-सिंहः सिंहपुरे पुरे ।

१ 'साम्राज्य' प्रतिद्वय० । २ "पृष्टः स हृष्टोऽथ," प्रतिद्वय० । ३ 'तपस्या' प्र० द्वय० । ४ 'विहरन्' इति पत्य० ।

नृपः सिंहरथो नाम, स चाज्ञां नो न मन्यते ॥५४॥ जीवग्राहं गृहीत्वाऽमुं, बद्ध्वा पाप्मानमानय । आनीते तत्र दास्यामि, स्वां जीवयशसं सुताम् ॥ ५५ ॥ रुचितं पुरमेकं च, काञ्चनाञ्चितमन्दिरम् । ततो विसृज्य तं दूतं, प्रतस्थेऽसमप्रभुः स्वयम् ॥ ५६ ॥ ( युग्मम् ) प्रणम्य वसुदेवोऽथ, ज्येष्ठबन्धुं व्यजिज्ञपत् । किमिदं देव ! सिंहस्य, चपेटोत्पाटनं मृगे ? ॥ ५७ ॥ सति मय्यपि भृत्ये च, स्वयं कोऽयमुपक्रमः ? । " अरुणे प्रगुणे ध्वान्तं, न ह्यपाकुरुते रविः " ॥५८॥ एवमाबद्धनिर्बन्धं, बान्धवं लघुमात्मवत् । वरूथिन्यामवस्थाप्य, जयाय व्यसृजन्नृपः ॥ ५९ ॥ सोऽपि शौर्यावतंसेन, कंसेन सह जग्मिवान् । बद्ध्वा सिंहरथं वन्धो-र्दिनैरल्पैरुपानयत् ॥६०॥ कृत्वा जयोत्सवं यान्तं, मुदा राजगृहं नृपम् । क्रोष्टुकिः समभाषिष्ट, ज्ञानी रहसि सानुजम् ॥ ६१ ॥ येयं जरासन्धसुता, कर्मण्यत्र पणीकृता । क्षयकृल्लक्षणैरेपा, पितृश्वशुरपक्षयोः ॥ ६२ ॥ इत्यूचिवांसं विद्वांसं, तं विसृज्य प्रजेश्वरः । ऊचे कुमारमारम्भः, शुभोदर्कोऽस्ति नैप नः ॥ ६३ ॥

ततो व्यज्ञपयद्राज्ञे, वसुदेवः कृताञ्जलिः । सा स्यात् कन्या यथाऽन्यस्य, तथोपायोऽस्ति मे स्मृतः ॥६४॥ सावधानोऽधुना देवः, श्रोतुमेतं प्रसीदतु । इतो युष्माकमादेशा-दस्मि सिंहपुरे गतः ॥ ६५ ॥ कन्दरादिव निर्गत्य, सिंहः सिंहरथः पुरात् । भटाँस्त्रासयामास, बलाद्दन्तावलानिव ॥ ६६ ॥ ममाप्यत्यद्भुतैस्तैस्तै-र्भुजविक्रमवैभवैः । तेन प्रादुरभाव्यन्त, भाले घर्मजलोर्मयः ॥ ६७ ॥ प्रसादपात्रं पीनांसः, कंसाख्यो मम सारथिः । भङ्गुरं बलमालोक्य, रथात्तूर्णमवातरत् ॥ ६८ ॥ रथं सिंहरथस्यासौ, जितशक्रपराक्रमः । भुजदम्भोलिना[1] भूभृ-द्गर्वचौरमचूरयत्[2] ॥ ६९ ॥ मयूरबन्धं बद्ध्वा च, ततः सिंहरथो रथी ।

१ भुजवज्रेण । २ भूभृतां-राज्ञां गिरीणां च गर्वं चूरयित्वा ।

कोरक-
कथितो
वृत्तान्तः
कुन्ती-
समीपे।
जरासन्ध-
सिंहरथयो-
र्वृत्तान्तः॥

सन्मानमकरोत्तेन, कंसेनाद्यापि मे पुरः ॥ ७० ॥ ततो विपस्वसुस्तस्या, दुहितुर्मगधेशितुः। असौ सिंहरथानेता, परिणेताऽस्तु संप्रति ॥७१॥ उवाच श्रीसमुद्रोऽथ, समुद्रविजयो वचः। गतापायमुपायं मे, मनोहरमुदाहरः ॥७२॥ परं पुरा वणिक्पुत्र-स्वराज्ञी प्रतिपादिता। तदस्मै वणिजे पुत्रीं, जरासन्धो न दास्यति ॥७३॥ इति जल्पत एवास्य, कंसः सेवार्थमागमत्। नम्रदेवश्च तं गते, कंसोऽसावित्यचीकथत् ॥ ७४ ॥ तेजः साक्षादिव क्षात्रं, तमूर्जस्विभुजार्गलम्। प्रांशुमांसलमालोक्य, नृपतिः पुनरभ्यधात् ॥७५॥ अत्यद्भुतोऽयमाकारः, सुलभो न वणिक्कुले। ततोऽस्य पितरं पृष्ट्वा, क्रियते कुलनिर्णयः ॥७६॥

अथाहूय महीभर्त्रा, पृष्टः शपथपूर्वकम्। सुभद्रः सत्यमाचख्यौ, सर्वं कंसस्य पश्यतः ॥ ७७ ॥ यमुनायामनुस्रोतो, गच्छन्तीमहमेकदा। अपश्यं कांस्यमञ्जूषां, प्रातः शौचार्थमीयिवान् ॥ ७८ ॥ आदाय तामथोद्घाट्य, पार्वणेन्दुसमाननम्। उत्फुल्लप्रभाजाल-मिममालोकयं सुतम् ॥ ७९ ॥ उग्रसेनस्य नामाङ्का-मेतां च मणिमुद्रिकाम्। एतच्च पत्रमत्रेदं, लिखितं वाच्यते यथा ॥ ८० ॥ (युग्मम्) उग्रसेनसधर्मिण्या, धारिण्या गर्भकर्तृकः। अभवद्दोहदो भर्तृ-मांसभक्षणलक्षणः ॥८१॥ कथंचित् पूरिते तस्मि-न्नमात्यमतिशालिभिः। पौषे कृष्णचतुर्दश्यां, विष्टौ सूनुरजायत ॥ ८२ ॥ तं दोहदानुभावेन, निर्णीय जनकाहितम्! विन्यस्य कांस्यपेटाया-मुद्राकारधारिणम् ॥८३॥ माताऽपि तदहर्जातं, मथुरातोऽथ धारिणी। पत्युः क्षेमाय निक्षेप, गम्भीरे यमुनाम्भसि ॥ ८४ ॥ (युग्मम्) इति पत्रार्थतो देव, ज्ञातोऽसावुग्रसेनजः। पुत्रस्नेहस्तथाऽप्यत्र, तदा प्रादुरभून्मम ॥ ८५ ॥ अथानीय निजं गेह-मस्योत्सवपुरःसरम्। कांस्यपेटोपलब्धत्वा-न्नाम कंस इति व्यधाम् ॥ ८६ ॥ अगाद्गुणाद्गरिम्णु-स्तेजः क्षत्रकुलोचितम्। ततः क्रीडन् बलादेष, बालकैः कलहायते ॥८७॥ जनेभ्योऽहमुपालम्भं, लेभे च

प्रतिवासरम् । कुमारवसुदेवस्य, ततोऽमुं सेवकं न्यधाम् ॥ ८८ ॥ ततो जगाद सानन्दं, समुद्रविजयो नृपः । अस्मद्गोत्राद्दते कस्य, दृश्यते बलमीदृशम् ? ॥ ८९ ॥ इत्युक्त्वा सह कंसेन, गत्वा राजगृहे च सः । चक्रे सिंहपुराधीश-मुपदां मगधेशितुः ॥ ९० ॥ अस्यायमवदातस्य, कंसः कर्तेति सादरम् । नृपो निवेदयामास, मगधानां महीभुजे ॥ ९१ ॥ ततः प्रीत्या ददौ पुत्रीं, कंसाय मगधेश्वरः । प्रतिपन्नं युगान्तेऽपि, नान्यथा हि महात्मनाम् ॥९२॥ उग्रसेननृपद्वेषा-न्मथुरामेव सादरम् । कंसाय याचमानाय, स दत्ते स्म प्रसादतः ॥ ९३ ॥ अथ सिंहरथोऽप्युच्चै-रुत्खातप्रतिरोपितः । नत्वा प्रसादयामास, तं फलैः कलमो[1] यथा ॥९४॥ जरासन्धेन सत्कृत्य, विसृष्टाः स्वपुरं प्रति। जग्मुस्तिग्मेन वेगेन, समुद्रविजयादयः ॥ ९५ ॥

सत्यसन्धजरासन्ध-समर्पितबलो बली । कंसस्तु मथुरां गत्वा, तातं निष्करुणोऽरुधत् ॥९६॥ सेनाभिरुग्रसेनोऽपि, तेन सार्धमयुध्यत । अखिद्यत जयश्रीस्तु, तयोर्युद्धे गतागतैः ॥ ९७ ॥ कथंचनापि निर्जित्य, कंसः क्रूरशिरोमणिः । साक्षेपचेताश्चिक्षेप, पितरं काष्ठपञ्जरे ॥ ९८ ॥ दृढं निगडबद्धोऽपि, ज्ञाते तस्मिन्निजात्मजे । सुतेन विजितोऽस्मीति, पिता तु मुदमावहत् ॥ ९९ ॥ सुभद्रवणिजं शौर्य-पुरादानाय्य सोऽञ्जसा । कृतज्ञमानी संपूज्य, पर्युपास्ते स्म तातवत् ॥ १०० ॥

इतश्च केलिशैलेषु, प्रासादेषु वनेष्वपि । शौरिः शौर्यपुरेऽत्यन्तं, विजहार यदृच्छया ॥ १०१ ॥ वसुदेवः सुनेत्राणां[2], नेत्राणाममृताञ्जनम् । मनसस्तु सदा ध्येयो, मन्त्रोऽभूच्चतुरक्षरः ॥१०२॥ समुद्रविजयः पौरै-रेत्य विज्ञापितोऽन्यदा । देव !

१ ‘ कलभो ’ इति पाठः सर्वप्रतिषु दृश्यते, स न साधुः प्रतिभाति । २ नारीणाम् ।

नगाऽपि नाथेन. वयमत्यन्तदुःखिताः ॥ १०३ ॥ कन्दर्पस्य सरूपेण, रूपेणाक्षिप्तचेतसः । शौरिमेवानुधावन्ति, त्यक्त्वा गेहानि नः स्त्रियः ॥ १०४ ॥ अनुगामुकतां शौरे–स्तासु प्राप्तासु सर्वतः । कलत्रकर्तृका काऽपि, शुश्रूषा नास्ति नः प्रभो ! ॥ १०५ ॥ अथ पृथ्वीपतिः प्रीत्या, सान्त्वयित्वा विसृज्य तान् । वसुदेवं समाहूय, रहस्येवं समादिशत् ॥ १०६ ॥ वत्स ! त्वत्कान्तिरत्यभि–रभूरत्यन्तदुर्बलः । कुरु सर्वकलाभ्यासं, सौधमध्यस्थ एव तत् ॥ १०७ ॥ कुर्वन्नुर्वीपतेराज्ञा–मेवं राजानुगोऽन्यदा । कुब्जामपश्यदायान्तीं, दासीमन्तःपुरोदरात् ॥ १०८ ॥ विलेपनं करात्तस्याः, सोऽलुम्पन्नर्मलीलया । ततः सकोपं साक्षेपं, वसुदेवं जगाद सा ॥१०९॥ कुमार ! मेदुरामोद–मङ्गरागं किमाच्छिदः ? । देवाय शिवया देव्या, प्रेमतः प्रहितो ह्यसौ ॥ ११० ॥ सौधमध्ये निरुद्धोऽसि, स्थाने देवेन धीमता । विशल्यविनयादेव, पञ्जरे सिंहशावकः ॥१११॥ साऽथ पृष्टा कुमारेण, निजसंरोधकारणम् । तत्पुरः पौरवृत्तान्तं, सर्वं मूलादचीकथत् ॥११२॥ ततो म्लानमुखाब्जश्री–र्व्यतीत्य कथमप्यहः । वसुदेवो निशायां स–मेकाकी क्वचिद्ययौ ॥ ११३ ॥ प्रातरन्वेषणं पूर्व–प्रतोलीद्वारि दूरतः । दग्धमानुषसंस्थानो, भस्मराशिरदृश्यत ॥ ११४ ॥ प्रतोल्यां लम्बमानं च, पत्रमेकमुदैक्ष्यत । शुचोच्चैर्वाचयामास, समुद्रविजयः स्वयम् ॥ ११५ ॥ पुंसो यस्य गुरून् यावद्–दूषालम्भः प्रवर्तते । तस्य श्रेयस्करो मृत्यु–र्जीवितं तु त्रपाकरम् ॥ ११६ ॥ ततः शौरिः कृतोद्वेगो, गुरूणामगुणैकभूः । विरचय्य चितामत्र, कृशानुमविशत् स्वयम् ॥ ११७ ॥ तदेवं वाचयन्नेव, देवो मूर्छामुपागमत् । ज्ञात्वा विपन्नं सोदर्यं, को हि धैर्यं न मुञ्चति ? ॥ ११८ ॥ व्यलपच्चाप्तचैतन्यो, हा ! वत्स ! गुरुवत्सल ! । दत्त्वा नः शोकमस्तोक–

१ अतिसुगन्धम् । २ 'स्थाने' इति सम्यगर्थेऽव्ययम् । ३ तयोगै० प्रतिद्वय० । ४ गुरून् यावत्–गुरुसमीपे इति भावः ।

मगमः कामिमां दशाम् ? ॥ ११९ ॥ भाग्यैकलभ्यं सौभाग्यं, वसुदेवस्य संस्मरन् । राजानमनुचक्रन्द, सर्वोऽपि विधुरो जनः ॥ १२० ॥ जनन्यास्तु सुभद्रायाः, सुतशोकाशुशुक्षणिः[1] । तथा नितान्तं जज्वाल, प्राणानप्यहरद्यथा ॥ १२१ ॥ न गीतं गीतशालासु, न लास्यं लास्यवेश्मनि । बभूव शौरिशोकेन, न च तूर्यध्वनिः क्वचित् ॥ १२२ ॥ वसुदेवशुचा देवो, न दिदेवे[2] शरद्यपि । वसन्तेऽपि वसन् वेश्म-न्यरोदीद्दीनलोचनः ॥ १२३ ॥ एवं वर्षाणि भूयांसि, भूशक्रस्यातिचक्रमुः । एत्या-न्यदा निमित्तज्ञो, बभाषे क्रोष्टुकिर्नृपम् ॥ १२४ ॥ दिष्ट्या दृष्टं निमित्तेन, भृशं निश्चिन्वता मया । यज्जीवति प्रफुल्लश्री-र्वसुदेवो निरामयः ॥१२५॥ एवं तद्गिरमाकर्ण्य, कर्णपीयुषसारणिम् । भूयोऽपि राजकार्येषु, किंचित् प्रावर्तत प्रभुः ॥१२६॥

स्वयंवरेऽथ रोहिण्याः, सुताया रुधिराह्वयः । अरिष्टनगरस्वामी, स्वामिनं नः समाह्वयत् ॥ १२७ ॥ देवोऽपि बन्धुभिः सार्धं, महर्धिकपरिच्छदः । शौरिशोकविनोदार्थं, न कन्यार्थं पुनर्ययौ ॥१२८॥ जरासन्धमहाराज-प्रमुखे राजमण्डले । आसीने मञ्चमत्युच्च-मध्युवास नृवासवः ॥१२९॥ मन्मथाङ्कररोहिण्या, रोहिण्याऽथ कटाक्षिताः । भूपाः स्वं रोचयांचक्रुः, [3]स्फुटितानन्चेष्टिताः ॥ १३० ॥ परं धात्रीपतेर्धा[4]त्र्या, संकीर्तितगुणश्रियाम् । तेषामेकोऽपि रोहि[5]ण्या, रोचते स्म न कश्चन ॥१३१॥ राज्ञोऽवज्ञाय सर्वास्ता-नेकं पाटहिकं दृशा । ईक्षांबभूव साकाङ्क्षं, सा मृगाक्षी मुहुर्मुहुः ॥१३२॥ सोऽप्येवं वादयामास, पटहं प्रकटाक्षरम् । अकालक्षेपमेर्णाक्षि[6] !, स्रजा क्रीणीहि मामिति ॥ १३३ ॥ गुणैः कुमुद-कुन्दे-न्दु-सुन्दरैः सा वशंवदा ।

१ पुत्रशोकाग्निः । २ चिक्रीड । ३ "स्पष्टितानेकचेष्टिताः" इति प्रत्यन्तरत्रयपाठः साधुः । ४ 'धात्र्यां' प्र० । ५ 'रोहिण्यै' इति प्रत्यन्तरपाठः साधुः । ६ हे मृगाक्षि !

नन्य रूष्टे निनिलेप, मत्नं कुब्जाकृतेरपि ॥ १३४ ॥ तं पाटहिकमप्यूरी-

कृतकोलाहलाः सर्वे, तृते पाणविके तदा । जरासन्धाज्ञया योद्धु-मुपचक्रमिरे नृपाः ॥ १३५ ॥ न हि

कुर्यांत रुधिरं प्रति । तं पराक्रमिणश्चक्रुः, कुन्ताकुन्ति शराशरि ॥ १३६ ॥ उद्बुद्धप्रबलक्रोधो, रुधिरस्तानयोधयन् । समरायो-

धुन्वन्ति शौण्डीराः, प्रत्यर्थिषु बकृन्तापि ॥१३७॥ अथ प्रत्यर्थिभूपालैः, रुधिरे विधुरीकृते । तैः समं तौर्यिकस्तूर्णं, समरायो-

दनिष्ठन ॥ १३८ ॥ नभश्चरोपनीतेन, सायुधेन रथेन सः । तानेकोऽपि पिनष्टि स्म, स वैरितिमिरार्यमा ॥१३९॥ अबलं स्वबलं

वीक्ष्य, जरासन्धो धराधवः । देवं समुद्रमादिक्ष-त्तस्याक्रमणहेतवे ॥१४०॥ तौर्यिकोऽयमिति ज्ञात्वा, सावज्ञमभिषेणयत् ।

गेन निर्लुम्पता सैन्यं, निन्ये देवोऽपि विस्मयम् ॥ १४१ ॥ रूपाद्रिसदृशं तेज-स्तस्य पश्यन् स्वयं ततः । देवः शौर्यपुरा-

धीशः, शरं धनुषि संदधे ॥ १४२ ॥ तेनापि प्रहितं देवो, विनीतमिव सेवकम् । एवं साक्षरमद्राक्षीत्, पादाग्रे पतितं शरम्

॥ १४३ ॥ कौतुकेन तमादाय, व्यक्तां मुक्ताफलोपमाम् । तत्रोच्चैर्वाचयामास, देवस्तामक्षरावलीम् ॥ १४४ ॥ शवदाहमयं

छन्न, कृत्वाज्ञातः पुरा पुरात् । स ते पादाम्बुजं देव !, वसुदेवो नमस्यति ॥१४५॥ मुक्त्वा स्यन्दनमानन्द-स्यन्दमा-

नाश्रुलोचनः । आगच्छ वत्स ! वत्सेति, देवो जल्पंस्तमभ्यगात् ॥१४६॥ सोऽपि स्वरूपमास्थाय, रथादुत्तीर्य वेगतः । ववन्दे

ददपादाब्जं, स्नपयन्नयनाम्बुभिः ॥ १४७ ॥ गाढमालिङ्ग्य देवेन, स पुरो विनयान्वितः । कुत्र वर्षशतं वत्स !, स्थितवानि-

त्यपृच्छ्यत ॥१४८॥ सोऽपि व्यजापयद् देव !, त्वत्प्रभावादशङ्कितः । कृतरूपपरावर्तः, स्वैरं भ्रान्तोऽस्मि भूतले ॥१४९॥

१ तौर्यिक । २ 'एक' प्रतिद्वय० । ३ अनिरस्कृतः ।

इत्थं तदा विदित्वा तं, समुद्रविजयानुजम् । प्रमोदमेदुरं चेतो, दधिरे रुधिरादयः ॥१५०॥ ततः स रोहिणीं रोह-द्विशेषप्रेमविक्लवाम् । उपायंस्त सदानन्द-श्चन्द्रमा इव रोहिणीम् ॥ १५१ ॥ शौरिं जगाद देवोऽथ, वत्सागच्छ निजां पुरीम् । "ग्रहा अपि परक्षेत्रा-च्छ्लाघ्याः स्वं क्षेत्रमागताः" ॥१५२॥ ततः शौरिरभाषिष्ट, त्वदादिष्टं तथेति मे । परं स्वपुरमेष्यामि, कालेन कियताऽप्यहम् ॥ १५३ ॥ स्नुषा[1] वः शतशः सन्ति, नरखेचरकन्यकाः । ततस्ताः शीघ्रमादाय, प्रणन्तास्मि भवत्क्रमौ ॥१५४॥ एवमापृच्छ्य निर्बन्धात्, स जगामोत्तरां दिशम् । देवोऽपि सपरीवारः, पुरमात्मीयमाययौ ॥ १५५ ॥ शौरिशौर्य-कथाबन्धैः, समयं गमयन्मुदा । अश्रौषीदेकदा देवः, कौबेर्यां[2] तूर्यनिःस्वनम् ॥१५६॥ दृशौ व्यापारयंस्तस्या-मपश्यन्मणिनिर्मितम् । स्वामी श्रेणीं विमानाना-मभ्यायान्तीं विहायसा ॥ १५७ ॥ नभोनिभालनोत्फुल्ल-नयनस्य नरेशितुः । एत्य शौरिः समेतीति, कश्चिदूचे नभश्चरः ॥१५८॥ प्रत्युद्गम्य ततो देवः, प्रवर्तितमहोत्सवे । उत्तुङ्गतोरणश्रेणौ, शौरिं प्रावीविशत् पुरे ॥ १५९ ॥ मथुरातः समागम्य, कंसः संस्मृतसौहृदः । शौरेश्चकार माङ्गल्य-मन्यराजन्यजित्वरम् ॥ १६० ॥

अथ देवमनुज्ञाप्य, चिरं शुश्रूषणेच्छया । विनयादनयच्छौरिं, मथुरां मथुरापतिः ॥ १६१ ॥ पुत्रीं निजपितृव्यस्य, देवकस्य स देवकीम् । सुरूपामनुरूपेण, शौरिणा पर्यणाययत् ॥ १६२ ॥ कंसबन्धुर्विविक्तात्मा, मुक्तिकामोऽतिमुक्तकः । उत्सवे तत्र भिक्षार्थी, शमवान् मुनिराययौ ॥ १६३ ॥ कंसपत्नी जीवयशा, यौवनोन्मादमेदुरा । तदानीं संमुखीनाऽऽसीन्निःसीमतपसो मुनेः ॥ १६४ ॥ असौ शिथिलधम्मिल्ला, मुनिं स्रस्तस्तनांशुका । क्षीबा[3] श्लथीभवन्नीवी, दृश्यनाभिस्तम-

१ लघुभ्रातृपत्न्यः-मम भार्याः इत्यर्थः । २ उत्तरस्याम् । ३ मदोन्मत्ता ।

न्मथान् ॥ १६५ ॥ एहि देवर ! नृत्यावः, स्वसुस्तव महोत्सवे । तमित्यालप्य सा दोर्भ्यां, कण्ठे साग्रहमग्रहीत् ॥१६६॥ आः ! नाट्यमहारण्य-भल्लुकि ! निरपत्रपे ! । अपेहीति स तां रूक्ष-मधिक्षिप्योक्तवानिति ॥ १६७ ॥ यद्विवाहोत्सवे मत्ता, नृत्यस्यनन्तगर्भिता । तस्याः सप्तमगर्भेण, तव घातिष्यते पतिः ॥१६८॥ एवं वाङ्मयमन्त्रेण, विश्रामितमदोदया । साऽमुञ्चच्च मुनेः कण्ठं, सोऽगमत यथागतम् ॥ १६९ ॥ सा कंसस्य तदाचख्यौ, सोऽपि क्षोभमगाद्भृशम् । " मृत्युदौर्गत्ययोर्वार्ता, न स्यात् कस्यानिर्वृतये ? " ॥ १७० ॥

मृत्युतो निस्पदन्वेषुः, कंसः कूटैककोविदः । दाक्षिण्यस्य निधिं नीत्वा, रहः शौरिमभाषयत् ॥ १७१ ॥ कृतार्थितार्थिनं मित्र !, किंचित् त्वामहमर्थये । ये गर्भाः सप्त देवक्या, भवेयुस्ते भवन्तु मे ॥ १७२ ॥ बलभद्रादयः सन्ति, भूयांसोऽपि ममात्मजाः । एभिः सप्तभिरेपोऽस्तु, ममापत्यैरपत्यवान् ॥ १७३ ॥ एषोऽप्यमून्यपत्यानि, स्नेहतो लालयिष्यति । दृग्भ्यामालोक्य प्रियां शौरि-स्तथेति प्रतिपन्नवान् ॥ १७४ ॥ ( युग्मम् ) जातमात्रानपि क्रूरः, संरक्ष्यारिष्टमन्दिरे । ततः कंसोऽग्रहीद्गर्भान्, देवक्याः षडपि क्रमात् ॥ १७५ ॥ मथुरायामियं वार्ता, प्रावर्तत समन्ततः । सुताः षडप्यहन्यन्त, ते कंसेन दुरात्मना ॥१७६॥ खेदोऽभूच्छौरिदेवक्यो-रिमां श्रुत्वा जनश्रुतिम् । "पुत्रव्यापादनोदन्तः, पीडायाः परमोऽवधिः" ॥ १७७ ॥ दधौ सप्तमहास्वप्न-सूचितं निश्चितोदयम् । उदारमन्यदा देवी, देवकी गर्भमद्भुतम् ॥ १७८ ॥

पत्युः शशंस सा स्वप्नान्, प्रातस्तामरसानना । भरतार्धपतिः पुत्रो, भावीत्याख्यत् स तत्फलम् ॥ १७९ ॥ अवादीद्

१ 'संस्था०' प्रतिरत्र० । २ सूतिकागृहे । ३ कमलमुखी ।

देवकी देवी, स्वामिन्नात्मजलाभतः । कंसदौष्ट्याच्च मे चेतः, प्रसीदति विषीदति ॥ १८० ॥ त्वयि नाथेऽप्यनाथाऽस्मि, प्रभो ! धिङ्मामपुण्यकाम् । पुत्रं यज्जातमात्रं मे, कंसो विध्वंसते मुहुः ॥ १८१ यद्येनमप्यसौ पुत्रं, पापो व्यापादयिष्यति । देवक्यपि तदा स्वामिन् !, विपन्नैव न संशयः ॥ १८२ ॥ अथाभाषत शौरिस्तां, प्रिये ! जीवन्मृतोऽस्म्यहम् । यस्य मे पश्यतः कंसो, जघान पशुवत् सुतान् ॥१८३॥ तन्मया तनयः सोऽयं, संरक्ष्यः कंसराक्षसात् । स्वगर्भं दोहदैर्हृद्यैः, पालयेर्मा स्म खिद्यथाः ॥ १८४ ॥ रक्षोपायस्त्वसावस्ति, नन्दो मे गोकुलाधिपः । तनूजमेनं यत्नेन, स गुप्तं वर्धयिष्यति ॥१८५॥ इति पत्या कृताश्वासा, जातविश्वासमानसा । देवकी पालयामास, गर्भं सुखसुखेन तम् ॥ १८६ ॥ अयं मे हन्त ! हन्तेति, भीतः कंसोऽपि पत्तिभिः । रक्षां सप्तमगर्भस्य, करोति स्म विशेषतः ॥ १८७ ॥ अथोर्जस्विप्रभाजालं, श्रीवत्साङ्कितवक्षसम् । श्रावणस्यासिताष्टम्यां, लग्ने लोकोत्तरे निशि ॥ १८८ ॥ लक्षणाख्यातसंभाव्य-भरतार्धमहर्द्धिकम् । देवताधिष्ठितं देवी, देवकी सुषुवे सुतम् ॥ १८९ ॥ ( युग्मकम् ) ये तत्र गर्भरक्षार्थ-मासन् कंसपदातयः । ते भरतार्धदेवीभि-र्निद्रामानिन्यिरे तदा ॥ १९० ॥ ज्ञात्वा निद्रावतस्तांस्तु, देवी शौरिमजूहवत् । सोऽपि तं बालमादाय, प्रतस्थे गोकुलं प्रति ॥ १९१ ॥ देवमुक्तपतत्पुष्प-दन्तुरीभूतभूतलम् । प्रज्वलद्दीपिकाश्रेणि-विश्राणितनवश्रियम् ॥१९२॥ शौरिः सुरैर्धृतच्छत्र-मुद्धूताद्भुतचामरम् । तनयं तं नयन्नुग्र-सेनेनाजल्पि गोपुरे ॥१९३॥ ( युग्मम्) किमेतद्दृश्यते नेत्र-प्रियं भावुकमद्भुतम् । कथय प्रथय श्रोत्र-पुटे पीयूषसारणिम् ॥ १९४ ॥ ततः[3] स्मेरमुखः शौरि-रेतस्मात् काष्ठपञ्जरात् । यस्त्वां मोचयिता सोऽय-मिति मन्दमचीकथत्

१ घ्रातकः । २ 'आश्विनस्य' इति क्वचित्पाठो दृश्यते, स न साधुः । ३ 'अथ' इति प्रतिद्वय० ।

॥ १९५ ॥ सोऽप्युन्ने कंसतः प्राप्तो, बन्धोऽप्येष धिनोति माम् । येन जागरितोऽद्राक्ष-मपूर्वमिदमद्भुतम् ॥१९६॥ शिशोस्त-स्यानुभावेन, मुक्तोऽगारमिति द्रुतम् । उत्तीर्य यमुनां शौरि-रगमन्नन्दगोकुलम् ॥ १९७ ॥

तदैव दैवयोगेन, यशोदा नन्दगेहिनी । तनयां जनयांचक्रे, मनोरमतमाकृतिम् ॥ १९८ ॥ तामादाय यशोदायाः, समर्प्य च तनूजम् । कृतकृत्यमनाः शौरिः, स्वस्थानं पुनराययौ ॥ १९९ ॥ तां नन्दपुत्रीं देवक्याः, स च वेगादुपानयत् दृष्टीकृतप्रमादास्ते, पतयश्च जजागरुः ॥ २०० ॥ बालिकां तामुपानिन्यु-स्ते कंसाय निरादराः । सावज्ञं वीक्ष्य सोऽप्येना-मकरोल्लूननासिकाम् ॥२०१॥ प्रीत्या भीत्या च योऽश्रान्तं, स्मर्यते मित्रशत्रुभिः । वध्यः सोऽप्यनया कंसः, कूटसत्यं मुने-र्वचः ॥ २०२ ॥ इत्थं हसित्वा सोल्लुण्ठ-मतिमुक्तमहामुनिम् । स मृत्युंजयमात्मानं, मन्वानो राज्यमादधे ॥२०३॥ (युग्मकम्) कन्यामाज्ञया कंसो, देवक्याः पुनरार्पयत् । "उद्धामरभुजस्थाम्ना-मनास्था क्षामधामसु" ॥ २०४ ॥

अथाभूद्गोकुलं सर्वं, शिशुना तेन कान्तिमत् । पूर्वाद्रिरिव बालेन, प्राक्तेयद्युतिना शिरः ॥ २०५ ॥ तदाऽऽसीदुद्भदानन्दं, मनो नन्द-यशोदयोः । नाह्नम्य सुतस्याप्तौ, को हि नाम न हृष्यति? ॥२०६॥ नन्दोऽथ तस्य कृष्णत्वा-न्नाम कृष्ण इति व्यधात् । अङ्कमारोप्य गोप्यस्तं, लालयन्ति स्म विस्मिताः ॥ २०७ ॥ ववृधे गोकुले बालः, पाल्यमानो यशोदया । सिच्यमानः शचीदेव्या, कल्पद्रुरिव नन्दने ॥ २०८ ॥ गच्छन्नुत्सङ्गमुत्सङ्गात्, पाणिं पाणेश्च संचरन् । स गोकुलमृ-गाक्षीणा-मभूदत्यन्तवल्लभः ॥ २०९ ॥ तं तमुत्सवमुद्दिश्य, तनयालोकनोत्सुका । अगमद्गोकुले देवी, वात्सल्येनान्तरान्तरा ॥

१ अभिज्ञाकुलानाम । २ क्षीणनेत्रस्तु । ३ सूर्येण.

२१० ॥ साऽपीप्यत् सूनवे स्तन्यं, स्नेहतः प्रस्नुतस्तनी । मुहुरुल्लापयांचक्रे, विविधोल्लापपण्डिता ॥ २११ ॥ ध्रुवं भाग्यैरहं त्यक्ता, त्यक्ताऽनेन सुतेन यत् । इति स्वमन्तर्निन्दन्ती, नन्दपत्नीमुवाच सा ॥२१२॥ त्वं यशोदे ! त्रिभुवन–स्त्रीणामुपरि वर्तसे । तनयेनामुना नित्य–मङ्कस्ते यदलंकृतः ॥ २१३ ॥ कुलं वा गोकुलं वाऽपि, रम्यं यत्रैष खेलति । प्रशस्यैवं यशोदां सा, मन्थरं मथुरां ययौ ॥ २१४ ॥ वैरं पूर्वमथ स्मृत्वा, पूतना शकुनिस्तथा । विद्याधर्यावुपागत्य, विष्णोर्निधनमीषतुः ॥ २१५॥ ते च देवतया मृत्युं, लम्भिते कृष्णगृह्यया । "स एव निधनं गच्छे–दिच्छेदत्याहितं सताम्" ॥२१६॥ रिङ्खन्नस्खलितं कृष्णः, कण्ठीरवकिशोरवत् । गोकुले दधिदुग्धानां, हठाद्भाण्डान्यलूलुठत् ॥२१७॥ सोऽभूत्तथापि गोपाल–प्रेयसीनामतिप्रियः । "पश्य कस्यापि न द्वेष्य–स्तपनोऽतितपन्नपि" ॥ २१८ ॥

सप्ताष्टहायनः सोऽथ, यशोभिर्व्यानशे दिशः । चम्पकप्रसवो नव्यः, स्फुटन् परिमलैरिव ॥ २१९ ॥ गुणैर्लोकोत्तरैस्तैस्तै–रिदानीं नन्दनन्दनः । विजयी गोकुलेऽस्तीति, पप्रथे मथुरान्तरे ॥ २२० ॥ कीर्तिकोलाहलं श्रुत्वा, तं सूनोः कंसशङ्कितः । हिताय प्राहिणोच्छौरि–र्बलदेवं तदन्तिके ॥ २२१ ॥ कृष्णः प्रीत्या तमद्राक्षी–दविदन्नपि बान्धवम् । "जन्मान्तरकृतः स्नेहः, प्रह्वयत्येव मानसम्" ॥२२२॥ बलदेवान्तिकेऽध्यैष्ट, स कलाः सकला अपि । उपाध्यायश्च बन्धुश्च, स तस्य द्वयमप्यभूत् ॥ २२३ ॥ अगस्तेः पिबतो वार्धीन्, कालो यावानभूत् पुरा । तावानेव चतुर्विद्या–बोधे कृष्णस्य बुध्यताम् ॥ २२४ ॥ रम्ये वपुषि कृष्णस्य, बाल्य–यौवनयोः समम् । त्रुट्यच्च वर्धमानं च, प्रभुत्वमभवत्तदा ॥ २२५ ॥

१ मरणम् । २ आनन्दयति ।

अभिरूपेण रूपेण, जितः कृष्णेन मन्मथः । जघान स तु गोपस्त्रीः, कोपात् तत्रानुरागिणीः ॥ २२६ ॥ ताडिताः पञ्चभिर्बाणैः, पञ्चबाणेन तास्तदा । कृष्णमेव न्यषेवन्त, तज्जेतारमहर्निशम् ॥ २२७ ॥ काश्चिदत्युच्चरोमाञ्चाः, सानन्दाश्चन्दनद्रवैः । मांगल्येऽङ्गस्थले तस्य, लिलिखुः पत्रवल्लरीः ॥२२८॥ उच्चित्य शिखिपिच्छानि, प्रोच्छलत्पुलकाङ्कुराः । चक्रुः काश्चन कृष्णस्य, मौलिमण्डनमद्भुतम् ॥२२९॥ वेपमानकराः काश्चि-न्नवैः कुसुमदामभिः । वक्षःस्थलमलंचक्रु-स्तस्य श्रीवत्सलाञ्छितम् ॥ २३० ॥ गोप्यस्ताः परितः कृष्णं, मण्डलीबन्धबन्धुरम् । प्रदत्ततालमुन्मील-च्छीलं हल्लीसकं जगुः ॥२३१॥ रतिस्तावत् सुखं तावत्, तावदानंदथुः पृथुः । गोपालसुदृशां तासां, यावत् कृष्णस्य दर्शनम् ॥ २३२ ॥ ताभिरध्यापितः सोऽथ, ललितं मान्मथं तथा । यथा कामकथावादे, पराजीयन्त तेन ताः ॥ २३३ ॥ बन्धुना बलदेवेन, रक्ष्यमाणः प्रतिक्षणम् । इति कृष्णः सुखं क्रीडन्, गोकुले कालमत्यगात् ॥ २३४ ॥

इतश्च श्रीशिवादेवी, स्थिता शौर्यपुरे पुरे । एकदा कार्तिके कृष्ण-द्वादश्यां क्षणदाऽत्यये ॥ २३५ ॥ गर्भावतारपिशुनान्, महास्वप्नांश्चतुर्दश । दृष्ट्वा चित्रागते चन्द्रे, निद्रामुद्रां व्यमुञ्चत ॥२३६॥ (युग्मकम्) प्रहृष्टा यावदाचष्टे, देवी देवाय तान् प्रगे । क्रोष्टुकिस्तावदागच्छ-च्चारणश्रमणोऽपि च ॥२३७॥ तान् निशम्य वरस्वप्नां-स्तत्फलं तावशंसताम्। तीर्थंकराणां जननी, गजस्वप्नान् समीक्षते ॥२३८॥ ततो जगत्त्रयत्राण-व्यवसायविशारदः । लोकोत्तरप्रभावोऽयं, भावी तीर्थंकरः सुतः ॥ २३९ ॥ श्रुत्वेति राजा राज्ञी च, पीवरां प्रीतिमीयतुः । ज्ञानिनो (नौ) बहुमानेन, नत्वा व्यसृजतां च तौ ॥२४०॥

१ कामजेतारम् । २ आनन्दः ।

देवी विशेषलावण्यं, देवश्चाभ्युदयं परम् । देशश्च दुरितध्वंसं, लेभे गर्भानुभावतः ॥२४१॥ श्रावणे श्वेतपञ्चम्यां, चन्द्रे चित्रागते निशि । लग्ने सौम्यग्रहैर्दृष्टे, शिवया सुषुवे सुतः ॥२४२॥ तदानीं दिक्कुमारीभिः, सूतिकर्म विनिर्ममे । स्नात्रं च चक्रे शक्रेण, तस्येत्यश्रोषमाप्ततः ॥ २४३ ॥ कुन्ति ! देवि ! मयापीद-मीक्षितं चक्षुषा पुनः । यद्वैर्यादेवेन्द्रस्य, रत्नैः सौधमपूर्यत ॥ २४४ ॥ आजन्मानाप्तसौख्याना-मपि प्राणभृतां तदा । जातमात्रेऽप्यहो ! तत्र, सुखाद्वैतमजायत ॥ २४५ ॥ तस्य जन्मोत्सवे देवः, कारागारमशोधयत् । अमारिं घोषयामास, दीनांश्चोपचकार च ॥२४६॥ सोऽरिष्टानि पिनष्टि स्म, तदा नेमिर्लता इव । अरिष्टनेमिरित्यस्य, ततो नाम विनिर्ममे ॥२४७॥ उपास्यमानः स सुरै-र्नन्द्यमानश्च यादवैः । पाल्यमानश्च धात्रीभिः, सुखं सुखमवर्धत ॥२४८॥ निर्ममे शौरिणा पूर्वं, कृष्णे जातेऽपि नोत्सवः । मथुरायां ततश्चक्रे, तज्जन्मनि विशेषतः ॥२४९॥

आगतो देवकीं द्रष्टुं, कंसः शौरिगृहेऽन्यदा । छिन्नैकनासिकां कन्यां, क्रीडन्तीं तामुदैक्षत ॥ २५० ॥ तामालोक्य मुनेर्वाक्यं, स्मृत्वा सोऽभूद् भयातुरः । "न मृत्युसदृशं दुःखं, न संतोषसदृक्सुखम्" ॥२५१॥ स सौधमेत्य पप्रच्छ, कंचिन्नैमित्तिकं रहः । मुनिना यन्मयि प्रोक्तं, तत्सत्यं किमुतान्यथा ? ॥ २५२ ॥ सोऽवोचन्नृप ! तत् सत्यं, नान्यथा मुनिभाषितम् । जीवत्येव तवाराति-र्देवक्याः सप्तमः सुतः ॥ २५३ ॥ न वेद्मि क्वचिदस्तीति, ज्ञानोपायं तु ते ब्रुवे । प्रदीपेनेव ते वैरी, येनावश्यं प्रकाश्यते ॥ २५४ ॥ वपुष्मानिव दर्पोष्मा, श्यामलो विन्ध्यबान्धवः । ऊर्जस्विगर्जितो यस्ते, दुष्टो रिष्टाभिधो वृषः ॥ २५५ ॥ यश्चास्ति भृशमभ्यस्त-दौःशील्यः केशिसंज्ञकः । लोकोपद्रवनिःशूकः, शूकलस्ते तुरङ्गमः ॥२५६॥ एतावानीय

१ रथचक्रधारा । (२ निर्दयः । ३ दुर्विनीतः ।)

अरिष्टनेमिजन्म । नैमित्तिकेन कंसस्यवधकज्ञानोपायः कथितः ॥

ताबुभाविभवन्मत्तौ, हेलया यो हनिष्यति। पीनत्व-मुद्दाममदमेदुरौ। मुञ्चेनां मथुरापुर्या, बहिः स्वच्छन्दचारिणौ ॥ २५७॥ दुःस्पर्शमितरैर्जनैः। तस्याधिज्यस्य यः कर्ता, कंसनिपान्तकृत्तेऽसौ, राजकुञ्जर ! नान्यथा ॥२५८॥ शार्ङ्गं यदस्ति ते धाम्नि, एतच्चादिष्टमुत्कृष्ट-ज्ञानैर्मुनिवरैः पुरा प्राणहर्ता नवापि मः ॥ २५९ ॥ शार्ङ्गं तु शार्ङ्गपाणेस्त-द्भविष्यति भविष्यतः। यस्तं हन्ता स ते हन्ता, मा कृथाः कंस ! संशयम् ॥ २६० ॥ (युग्मम्) मल्लस्तेऽप्रतिमल्लो यः, शूरश्चाणूरसंज्ञकः। एतयोर्जीवितान्तस्य, यो विधाता तवापि सः॥ २६२ ॥ ॥ २६१ ॥ गतौ स्वस्ते श्रियः पद्मौ, यौ पद्मोत्तर-चम्पकौ। यस्तस्य दमकः स्वैरं, प्राणानां शमकः स ते ॥ २६३ ॥ श्रुत्वेति राज्ञोऽयो योऽस्ति कालिन्द्यां, कालियो नाम पन्नगः। तूर्णमामन्त्र्य मन्त्रिणम् ॥२६४॥ स्वादुभिर्मृदुभिर्घासै-रेतावानीय श्रीकृष्णकन्यः, कंसः कातरलोचनः। तं विसृज्य ममादिक्षत्, पुष्टि-मुपानय रसायनैः। यथा नियुद्धे गीननाम्। युग्मा-वौ स्वेच्छया मुञ्च, यमुनावनराजिषु ॥ २६५ ॥ चाणूर-मुष्टिकौ यथादिष्टमनुष्ठितम्। निस्तन्द्रचन्द्रशालिन्या, शरदा च गवितौ, नौ च मल्लौ न केनचित् ॥ २६६ ॥ मन्त्रिणा प्रौढमन्त्रेण, सहैव करिणामभूत् ॥ २६८ ॥ विजृम्भितम् ॥ २६७ ॥ जगुर्जगच्चमत्कारि, कलं कलमगोपिकाः। मदः सप्तच्छदामोदैः, गोष्ठोपकण्ठे सोत्कण्ठ- मगोनानां रजःपूर्ति-रयुज्यन्त जलाशयाः। दिगन्तास्तु व्ययुज्यन्त, पयोदानां कदम्बकैः ॥ २६९ ॥ वृन्दं वृन्दावने वने। गोपीयुक्तोऽथ गमकः। चन्द्रिकोल्लिद्रचन्द्रासु, कृष्णश्चिक्रीड रात्रिषु ॥२७०॥ दिवसे तु स धेनूनां, पालयामास गोपाल-बालकैः परिवारितः ॥ २७१ ॥

१ मल्लोऽप्यप्रति० इति प्रत्य०। २ "नैव मल्लेन केनचित्" इति प्रतिद्वय०। ( ३ कलमः शालिधान्यविशेषः। )

अथ कूलेषु कालिन्द्या-स्तदा स्वच्छन्दचारिणौ । अरिष्ट-केशिनौ दुष्टौ, क्रमाद्गोष्ठमुपेयतुः ॥२७२॥ तत्र तौ चक्रतुर्लोकं, सशोकमुपमर्दनात् । पयांसि पंपतुस्तक्र-मन्थनीश्च ममन्थतुः ॥२७३॥ आभ्यां वृष-तुरङ्गाभ्यां, चक्रे गोकुलमाकुलम् । वत्सः कृष्णोऽत्र नास्तीति, नन्दः खेदमुपासदत् ॥२७४॥ गोपेभ्यस्तदुपश्रुत्य, वनाद् गोष्ठमुपागतः । दुर्नयग्रह्वमाह्वास्त, कृष्णस्तं दुर्मदं वृषम् ॥२७५॥ सोऽपि शृङ्गे महाभीष्मे, रोपादाधाय संमुखे । अधावत् कृष्णमाहन्तुं, यमसैरिभसंनिभः ॥२७६॥ मृणालकन्दलीमोटं, मोटयित्वा शिरोधराम् । निष्ठुरं मुष्टिना हत्वा, सोऽन्तं कृष्णेन लम्भितः ॥ २७७ ॥ यः कृष्णे मुष्णति प्राणां-स्तस्याभूद्विधुरो ध्वनिः । स एवासीत् तदा नान्दी, कंसविध्वंसनाटके ॥२७८॥ कृष्णे जयिनि गोपीनां, योऽभूज्जय-जयारवः । स तद्यशःप्रबन्धस्य, प्रथमः पणवोऽभवत् ॥ २७९ ॥ तदैवाथ जनोन्माथ-प्रवृत्तं वीक्ष्य केशिनम् । कृष्णस्तमक्षरै रूक्षैः, साक्षेपमिदमभ्यधात् ॥२८०॥ दुर्विनीत ! विनेतारं, किं रे ! मां न निरीक्षसे । अनाथमिव मथ्नासि, यदेवं मम गोकुलम् ॥ २८१ ॥ इत्याक्षिप्तः स कृष्णेन, खुरैः कुद्दालयन् महीम् । दशनैर्दशनान् पिंप-न्नाभिमुख्यमुपागमत् ॥२८२॥ प्रक्षिप्य कूर्परं तस्य, यमदण्डोपमं मुखे । कृष्णस्तं जीर्णपटवत्, पाटयामास लीलया ॥ २८३ ॥ अश्वलोत्तारणैर्वृद्धा-स्तरुण्यस्त्ववगूहनैः । तस्य प्रचक्रिरे घोप-योषितः पारितोषिकम् ॥ २८४ ॥

नन्दनन्दनचापल्य-कर्तृकोऽरिष्ट-केशिनोः । वधः शशंसे कंसाय, घोषान्तश्चारिभिश्चरैः ॥२८५॥ तं निशम्य मुनेर्वाचं, सत्यां निश्चित्य सोऽन्यदा । आहूयाभिदधेऽमात्यं, मृत्युभीतो बृहस्पतिम् ॥ २८६ ॥ अस्त्यमात्य ! ममारातिः, सानन्दो

१ पित्रतः स्म । २ सैरिभः-महिपः ।

नन्दगोकुले। ततस्तद्ग्रहणोपायं, निरपायं विचिन्तय ॥२८७॥ बृहस्पतिरथोवाच, देव! देवसमोपमम्। रङ्गं शार्ङ्गाधिरोपाय, निर्मापय मनोरमम् ॥२८८॥ आह्वयन्तां च भूपाला-श्चापारोपमहोत्सवे। विहायाहवशौण्डीरान्, दशार्हान् सुतवत्सलान् ॥२८९॥ इदं नाथोग्यतां चापं, यः समारोपयिष्यति। तस्मै कंसः स्वसारं स्वां, सत्यभामां प्रदास्यति ॥२९०॥ निजैरनुत्सुकैः छेकैः, शौण्डीरैरूर्द्ध्वभैर्टैः। [1]गृतासिदण्डैः कोदण्ड-मण्डपः परिवेष्ट्यताम् ॥२९१॥ आयातश्च ततश्चाप-समारोपणकर्मणि। स तैर्गोपस्तवारातिर्जीग्राहं ग्रहीष्यते ॥ २९२ ॥ इत्याग्रूत्रितमन्त्रं तं, मन्त्रिणं मथुरापतिः। त्वमेवेदं विधेहीति, सप्रसादं समादिशत् ॥ २९३ ॥

मन्त्रिणाऽनुष्ठिते तस्मिन्, मिलत्सु क्षोणिभर्तृषु। इमं वृत्तान्तमज्ञासी-दनाधृष्टिर्बलाग्रजः ॥२९४॥ छन्नं शौर्यपुरात् सोऽथ, प्रस्थितो मथुरां प्रति। अवात्सीद्बन्धुवात्सल्या-द्गोकुलेऽनाकुलो निशि ॥ २९५ ॥ बलं बलादनुज्ञाप्य, कृष्णमादाय गच्छतः। भ्रातर्द्रुमाकुले मार्गे, वटेऽस्य स्यन्दनोऽस्खलत् ॥२९६॥ रथं महारथो नेतुं, नालं ज्येष्ठो यदाग्रतः। तदा दूर्वामिवोन्मूल्य, कृष्णो दूरेऽक्षिपद्वटम् ॥२९७॥ वीक्ष्य विष्णोर्भुजस्थाम, हृष्टोऽनाधृष्टिरञ्जसा। तमालिलिङ्ग सर्वाङ्गं, भूयो भूयश्चुचुम्ब च ॥ २९८ ॥ उपेत्य मथुरां सोऽथ, पुष्पप्रकरदन्तुरम्। मुक्तमुक्ताफलोच्चूलं[3], संप्रापच्चापमण्डपम् ॥२९९॥ उच्चमञ्चस्थितान् पश्यन्, स्वःपतीनिव भूपतीन्। रथं मुक्त्वा बहिस्तत्र, स विवेश सकेशवः ॥ ३०० ॥ मण्डपान्तः कृतार्चस्य, धन्वनोऽन्ते निषेदुषीम्। निर्जितामर्त्यरामां स, सत्यभामां न्यभालयत् ॥ ३०१ ॥ निपेतुः सत्यभामायाः, पीवरांसस्थले हरौ। मुग्धाः स्निग्धा विदग्धाश्च, पञ्चेषुविवशा दृशः ॥ ३०२ ॥ कलिङ्ग-वङ्ग-काश्मीर-कीरप्रभृतिभूमिपाः। आगम्य

[1] त्यक्त्वा। २ 'अनेकैः' इति प्रत्य०। ३ उल्लूलः-वितानम्।

धनुरानम्य, स्वं स्वं मञ्चं पुनर्ययुः ॥ ३०३ ॥ हसित्वाताननाधृष्टि-र्धृष्टो धन्वजिघृक्षया । व्यापारितकरो दूरात्, पतति स्म विसंस्थुलः ॥ ३०४ ॥ भग्नमाणिक्यमुकुटः, त्रुटन्मुक्तालतश्च सः । सतालं सत्यभामाया, वयस्याभिरहस्यत ॥ ३०५ ॥ कोदण्डं चण्डदोर्दण्डः, कोपादारोप्य तं तदा । विष्णुरुत्थापयत् तासां, हास्यस्थानेऽद्भुतं रसम् ॥३०६॥ कोऽयं दुर्वारदोर्वीर्य?, इति चिन्ताकुले जने । पत्याऽमुना च भामायां, कृतार्थमन्यचेतसि ॥ ३०७ ॥ प्रसह्य गृह्यतामेष, चापारोपणलम्पटः । मा स्म यासीदसौ येन, रुष्टोऽस्मै मथुरापतिः ॥३०८॥ इति कंसभटोत्तंस-हक्कां केशिनिसूदनः । धीरं शुश्राव गोमायु-निनादमिव केसरी ॥ ३०९ ॥ (त्रिभिर्विशेषकम्) धनाधृष्टिं पुरस्कृत्य, तदानीमकुतोभयः । निरगात् तान् भटान् भित्त्वा, कृष्णो भानुर्घनानिव ॥ ३१० ॥ याति यात्येष गृह्णीत, गृह्णीताह्वाय सादराः । इति ब्रुवाणाः सुभटा, यावद्धावन्ति पृष्ठतः ॥३११॥ रथाश्ववेगतस्ताव-दनाधृष्टिर्जनार्दनम् । गोष्ठे बलान्तिके मुक्त्वा, ययौ शौर्यपुरे स्वयम् ॥ ३१२ ॥

नायमस्माद्दशां साध्य, इत्युपागत्य ते भटाः । कंसायावेदयामासु-स्तस्योर्जितमनुत्तरम् ॥ ३१३ ॥ तदाकर्ण्य भृशं कीर्ण[3]-ज्वलिताङ्गारदुःसहम् । मनोदुःखं वहन् कंसः, प्रकृतिव्यत्ययं ययौ ॥३१४॥ आराध्यमप्यनाराध्यं, गुरुमप्यगुरुं तदा । मथुराधिपतिर्मेने, प्रत्यासन्नविपत्तिकः ॥ ३१५ ॥ कोप-प्रसादावस्थाने, व्यवस्थाया व्यतिक्रमम् । न्यायस्यापि विपर्यासं, स चक्रे मरणातुरः ॥ ३१६ ॥ नियुद्धच्छद्मना पेष्टु-मरिष्टारिं स दुष्टधीः । चापस्योत्सवमारोप्य, पुनर्भूपानजूहवत् ॥ ३१७॥

१ 'रुग्ल,' 'रुग्लु' इति प्रत्यन्तरपाठौ न सम्यक्, 'रुग्ण' इति स्याच्चेत् सम्यक् । २ 'रस्थापयत्' इति प्रत्य० । ३ कीर्णाः-विस्तृताः । ४ 'मारभ्य०' प्रतिद्वय० ।

सत्यभामा-स्वयंवरे कृष्णेन धनुरारोपितम् ॥

वसुदेवोऽर्थ दुर्भावं, तस्य ज्ञात्वाऽऽश्रमानुपात् । रामाय दापयामास, सर्वां शिक्षां मनोगताम् ॥ ३१८ ॥ समुद्रवि-
जयादीनां, सर्वेषामग्रजन्मनाम् । शौरिर्विज्ञापयामास, कंसाचरणमादितः ॥ ३१९ ॥ अजूहवच्च शौरिस्तान्, कृष्णाव-
एकमहेतवे । अन्येव हि मनःस्फूर्ति-र्गुरुत्वस्यर्णवर्तिषु ॥ ३२० ॥ अथ कंसाज्ञया राज्ञः, प्रतीहारो यथोचितम् । तदोपदेश-
नामान, पृथग्मञ्चेषु गौरवान् ॥ ३२१ ॥ ततः क्षौमकृतोल्लोचं, मञ्चमेकं मनोरमम् । कंसोऽपि स्वयमध्यास्त, विमानमिव
नागरः ॥ ३२२ ॥ दशार्हा दशदिक्पाल-समाः शौरिनिमन्त्रिताः । न्यवेश्यन्त कृतोच्चूले, मञ्चे कंसेन सादरम् ॥ ३२३ ॥
अथाल्लोक्य नृपान् कांश्चि-दच्छतो गोकुलाध्वना । अवोचत बलं विष्णु-र्मल्लालोकनकौतुकी ॥३२४॥ मथुरामार्य !
गच्छामः, पश्यावो मल्लसंयुगम् । प्रसीद माऽन्यथा कार्षीः, पूर्यतां मे मनोरथः ॥ ३२५ ॥ एतस्य पितुरादेश-माख्यातुं
समयोऽधुना । इति रामो विनिश्चित्य, यशोदामभ्यभात्तदा ॥ ३२६ ॥ मथुरां गन्तुमिच्छाव-स्ततो नौ स्नपय द्रुतम् । सा
प्यभूत्र न युवयोः, स्नपनावसरो मम ॥ ३२७ ॥ क्रोधारुणाक्षः साक्षेपं, बलस्तां प्रत्यभाषत । अरे ! दासि ! न जानासि, स्वा-
त्मानमतिगर्विता ? ॥३२८॥ तामित्युक्त्वा करे धृत्वा, कृष्णं कृष्णमुखं रुषा । स्नानायाह्वाय कालिन्दीं, कालिन्दीकर्षणो ययौ
॥३२९॥ उपनीरं स वानीर-तले विष्णुमभाषत । वत्स ! विच्छायवदनः, किमिदानीं विलोक्यसे ? ॥३३०॥ हरिः प्रत्याह
दासीति, किमान्य मम मातरम् ? । मातुर्न्यक्कारमाकर्ण्य, सकर्णो हि क्षमेत कः ? ॥३३१॥ रोहिणीतनयः कृष्णं, मूर्ध्नि चुम्ब-
न्नवोचत । यशोदा नैव ते माता, न च नन्दः पिता तव ॥ ३३२ ॥ देवकाङ्गभवा देवी, देवकी जननी तव । स्तन्यं या

१ 'ऽपि' इति प्रतिान्तर० । २ मल्लयुद्धम । ३ बलः ।

बलेन कृतो बोधः कृष्णस्य, कृष्णेन कृतं कालिय-नाग-दमनम् ॥

तुभ्यमभ्येत्य, ददाति स्मान्तरान्तरा ॥३३३॥ पिता च वसुदेवो नौ, सुभगः खेचरार्चितः। कुशार्ताधिपतिर्यस्य, समुद्रविजयोऽग्रजः ॥३३४॥ ममार्य! किमु सोदर्य?, इत्युक्तो विष्णुना बलः। अवदद्वत्स! बन्धुस्ते, वैमात्रेयोऽस्मि केवलम् ॥३३५॥ उद्दामवहुधामानो, यादवा ज्ञातयस्तव। भरतार्धपतिस्त्वं च, ज्ञानिभिः कथितोऽसि नः ॥ ३३६ ॥ ईदृशि त्वादृशां जन्म, न गोपालकुले भवेत्। मरुस्थले हि कल्पद्रु-रात्मलाभं लभेत किम्? ॥३३७॥ देवकीवसुदेवाभ्यां, वत्सवात्सल्यतः परात्। पितृभ्यां गोत्रसर्वस्वं, गोपितोऽसि भयादिह ॥३३८॥ कृष्णः पप्रच्छ संभ्रान्तः, कुतो भयममूदृशाम्?। येन क्षिप्तोऽस्मि पित्राऽस्मिन्, गोकुले गोपसंकुले ॥३३९॥ ततस्तं कंसवृत्तान्तं, व्याजहार हरेर्बलः। कर्षकेणेव सद्बीज-मुप्तं काले फलेद्वचः ॥३४०॥

अथ बन्धुवधोद्बुद्ध-रोषोऽरिष्टारिरभ्यधात्। सर्वे मे सिद्धगन्धर्वाः, प्रतिज्ञां शृणुत क्षणम् ॥३४१॥ सर्वेषां पश्यतां राज्ञां, पापं कंसं न हन्मि चेत्। ध्रुवं तदाऽहं गृह्येय, तदीयभ्रूणहत्यया ॥३४२॥ रोहिण्यङ्गरुहो रोह-त्पुलकाङ्कुरदन्तुरः। ततो भ्रातरमालिङ्ग्य, निजगाद प्रमोदतः ॥३४३॥ साधु वत्स! त्वयाऽऽत्मीय-कुलस्य तिलकायितम्। भूभृदाक्रमणोर्जस्वि, तेजो यस्य रवेरिव ॥ ३४४ ॥ तदिदानीमिह स्नात्वा, व्रजावो मथुरां प्रति। इत्युदीर्य बलः कृष्णं, निनाय यमुनाजले ॥३४५॥ तत्र दृष्टिविषः कालः, कालियो नाम पन्नगः। तीरवासी जले क्रीडन्, कृष्णं दष्टुमधावत ॥ ३४६ ॥ निःशूकं[1] दन्दशूकं तं, लोकः स्फारस्फटोत्कटम्। हरिं च बालमालोक्य, हाहारवपरोऽभवत् ॥३४७॥ सोऽतिभीष्मो विषोल्काभि-र्यावद्दशति केशवम्। असौ तमग्रहीत्ताव-ल्लीलया गलकन्दले ॥ ३४८ ॥ लीलाकमलनालेन, नस्तयित्वा[2] जनार्दनः। आरुह्य वाहयामास, तमहिं

१ निर्दयम्। २ नासिकां विध्वा।

नात्यवाजिनत् ॥ ३४९ ॥ दुर्दमं दम्यमानं तं, पन्नगं वीक्ष्य विस्मिताः । तस्थुर्धृत्वा विमानानि, नभोभागे नभश्चराः ॥३५०॥
कृष्णेन हृदमूर्ध्न्या-माक्रम्य दमितस्तथा । स यथा सर्वथा जज्ञे, निर्विषो मरणावधि ॥ ३५१ ॥ प्रमीतप्रायमालोक्य, लोको-
त्तरकृपापरः । दूरादुत्सृज्य तं विष्णुः, स्नात्वा तीरमुपागमत् ॥ ३५२ ॥ यमुनातीरवास्तव्यै-र्वीतविघ्नैस्तपस्विभिः । स
यथार्थाभिराशीर्भि-रभ्यनन्द्यत भूरिशः ॥ ३५३ ॥ तेन नव्यावदातेन, सानन्दैर्नन्दनन्दनः । घोषादागत्य वेगेन, गोपालैः
पर्यनायंत ॥ ३५४॥ गायद्भिः कृष्णगीतानि, वादयद्भिश्च शृङ्गिकाः । तैः समं राम-गोविन्दौ, चेलतुर्मथुरां प्रति ॥३५५॥
निम्मेषोत्फुल्लनयनै-र्वीक्ष्यमाणः पुरीजनैः । मथुरागोपुरं गोपै-रुपेतः प्राप केशवः ॥३५६॥ अतुल्ययोः प्रतोल्यन्त-र्विशतो
राम-कृष्णयोः । कंसादिष्टमहामात्र-प्रयुक्तौ मदविह्वलौ ॥३५७॥ पद्मोत्तरो हरिं हन्तुं, चम्पकश्च हलायुधम् । उद्धुरौ
सिन्धुरौ प्रेत-पतिप्रायावधावताम् ॥ ३५८॥ युग्मम् ॥ लीलायितशतैस्तैस्तैः, पद्मोत्तरमनुत्तरैः । कुशलो गजशिक्षासु, खेल-
यामास केशवः ॥ ३५९॥ उत्खाय दन्तमुशले, सलीलं तस्य दन्तिनः । निष्ठुरैर्मुष्टिभिर्विष्णु-र्ददौ कीनाशदासताम् ॥३६०॥
कण्ठीरव इवोत्प्लुत्य, भित्त्वा कुम्भस्थलं बलात् । हन्ति स्म रौहिणेयोऽपि, निष्कम्पश्चम्पकद्विपम् ॥ ३६१ ॥ विपुलं बालु-
काकीर्णं, विकीर्णकुसुमोत्करम् । सश्रीकमुत्पताकं तौ, जग्मतुर्मल्लमण्डपम् ॥३६२॥ रङ्गं विशति गोविन्दे, निवृत्तविषयान्तराः ।
लोकस्य विस्मयस्मेरा, निपेतुर्युगपद्दृशः ॥ ३६३ ॥ स एष केशिकीनाशः, स एष वृषमर्दनः । नन्दस्य नन्दनः सोऽयं,
सोऽयं सर्पस्य दर्पहा ॥ ॥ ३६४ ॥ गोपालतिलकः सोऽयं, सोऽयं सिन्धुरघातकः । श्लाघ्यमानो जनैरेव-मदर्शयत परस्प-

१ मृतप्रायम् । २ कीनाशः-यमः । ३ सिंहः ।

रम् ॥ ३६५ ॥ अपरं जनमुत्सार्य, सोत्साहः सपरिच्छदः । आरुरोह दुरारोहं, मञ्चमेकं जनार्दनः ॥ ३६६ ॥ अथाभ्यधत्त तं रामो, वत्स ! सोदर ! वत्सल ! । व्यापार्यतामितो दृष्टि-र्विपद्दृष्टिर्द्विषज्जने ॥ ३६७ ॥ इमं किरीटकेयूर-हारकुण्डलमण्डितम् । उच्चैःसिंहासनासीनं, पश्य कंसं स्ववैरिणम् ॥ ३६८ ॥ असौ ते बन्धुविध्वंस-नवनाटकसूत्रभृत् । तदस्य दर्श्यतामङ्को, मृत्युनामाद्य नूतनः ॥३६९॥ इतोऽपि ज्ञातिवर्गं स्वं, दृशा स्वीकुरु सान्द्रया । असौ तव पिता ज्येष्ठः, समुद्रविजयो नृपः ॥ ३७० ॥ अयं च वसुदेवाख्यः, ख्यातो जनयिता तव । अक्रूराद्यास्तवैतेऽत्र, बन्धवः शौर्यसिन्धवः ॥३७१॥ इतश्चान्येऽपि राजानो, जानन्तस्त्वामुदित्वरम् । विस्मयेन निरीक्षन्ते, निरीक्ष्यन्तां त्वयाऽप्यमी ॥३७२॥ कंसे च ज्ञातिवर्गे च, द्विष्टे प्रीतिपरेऽप्यथ । क्रोधरूक्षा बहुस्नेह-मुग्धाश्चासन् दृशो हरेः ॥३७३॥ समुद्रविजयो राजा, कृष्णं नेत्रपुटैः पिबन् ॥ वसुदेवं प्रति स्निग्धां, मुदा गिरमुदाहरत् ॥ ३७४ ॥

वत्स ! प्रसेदुरस्माक-मद्यैव कुलदेवताः । सुतस्त्रैलोक्यमाणिक्यं, यदसौ ददृशे दृशा ॥३७५॥ इयन्तं समयं याव-द्वञ्चिते मम लोचने । वत्सः कृष्णः सतृष्णाभ्यां, यन्नैताभ्यामपीयत ॥ ३७६ ॥ अथाभाष्यत कंसेन, हरिं वीक्ष्य बृहस्पतिः । शत्रावमुत्र जैत्रे स्यु-र्वाचः कथमृषेर्मृषा ? ॥३७७॥ अरक्ष्यत कथं चासौ, मयि वैरिणि शौरिणा । अथवा सति चाणूरे, रक्षितोऽपि न रक्षितः ॥३७८॥ इति कंसे वदत्येव, तुङ्गजूटोद्भटाकृती । चन्दनद्रवलिप्ताङ्गौ, न्यस्तांसस्थासकौ[1] तदा ॥३७९॥ दृढं चण्डातकौ चण्ड-भुजौ पुष्टवपुष्टरौ[2] । अभ्यूपतुः सभामध्ये, हृष्टौ चाणूरमुष्टिकौ ॥ ३८० ॥ ( युग्मम् ) ततोऽभ्यर्णी-

१ स्थासकः-सुगन्धितैलेन मर्दनम्। २ पुष्टशरीरौ ।

मान्मृत्युः, कातगो मथुरापतिः। निर्युद्धायादिशद्दूरा–चाणूरं दृष्टिसंज्ञया ॥ ३८१ ॥ कृष्णं कटाक्षयन् दृष्ट्वा, चाणूरः क्रूरमानसः। ज्ञानमुखाग्र्याश्चक्रे, राजचक्रस्य पश्यतः ॥ ३८२ ॥ योऽत्रास्ति क्षत्रियोत्तंसः, शूरंमन्यश्च यः किल। अधुना मल्लयुद्धेन, स मया सह युध्यताम् ॥ ३८३ ॥ इत्याक्षिप्तो हरिः क्षिप्रं, फालयोत्तीर्य मञ्चतः। चाणूरस्याग्रतो भूत्वा, प्रगल्भमिदमभ्यधात् ॥ ३८४ ॥ एषोऽस्मि क्षत्रियोत्तंसः, शूरमानी तथास्म्यहम्। तवास्मि रे! कृतान्तश्च, विपक्षक्षोददीक्षितः ॥ ३८५ ॥ अथावोचत चाणूरः, सिन्दूरारुणलोचनः। अरे रे! बाल! गोपाल!, किमलीकं प्रगल्भसे? ॥ ३८६ ॥ नाद्यापि ते मुखस्यास्य, स्तन्यगन्धो निवर्तते। ततस्त्वपन्ते गात्रेऽस्मिन्, पतन्तो मम मुष्टयः ॥३८७॥ पयःपानेन पीनत्व–मानीतो गोस्तनार्णकः। रे! कक्षाकोटरे क्षिप्तो, मया क्षिप्रं विनङ्क्ष्यसि ॥३८८॥ अरिष्टारिरभाषिष्ट, ततो धीरोचितं वचः। विकत्थनं नागनिन्धं, मल्लराज! न राजते ॥३८९॥ आजन्म विहिताभ्यासः, क त्वं मल्लमतल्लिका?। गोपालकुलविद्यानां, पारदृश्वा क नाल्मगद्रम्? ॥३९०॥ किं त्वनेन नियुद्धेन, दृश्यतेऽन्तरमावयोः। चण्डेन पवनेनैव तूलपूल[3]-नगेन्द्रयोः ॥ ३९१ ॥ इत्युक्त्वा सभुजास्फोटं, केशवे वल्गु वल्गति। हाहाकारपरो लोकः, परस्परमभाषत ॥ ३९२ ॥ तरुणः क नु चाणूरः?, क चासौ गोकुलार्भकः?। न युक्तमनयोर्युद्धं, वृष–तर्णकयोरिव ॥३९३॥ एवमाकर्ण्य लोकोक्तिं, कंसः कोपादवोचत। असौ यदृच्छालापी, दृशो दुःशिक्षितो जनः ॥ ३९४ ॥ इह केन समाहूता–वायातौ गोपदारकौ?। दुग्धमत्तौ स्वयं होतौ, युध्येते को निषेधति? ॥३९५॥ इत्याक्षेपवचः श्रुत्वा, शूरसेनमहीपतेः। लोकस्तदा तदाकूतं, मत्वा मौनमशिश्रियत् ॥ ३९६ ॥ गर्वात्

१ नयुद्गीने दीक्षितः। २ भल्लमह्र.। ३ 'पूग०' प्रतिद्वय०।

कुर्वन् भुजास्फोटं, स्फोटयन्निव रोदसी । ततश्चाणूरमल्लोऽपि, नियोद्धुमुपचक्रमे ॥ ३९७ ॥ तयोर्नवनवोन्मील–न्मल्लविज्ञानदर्शिनः । तदेकताना राजानो, जाताश्चित्रार्पिता इव ॥ ३९८ ॥ बाल्यचापल्यललितै–र्हरेर्मल्लातिशायिभिः । समुद्रविजयादीनां, तदा कन्दलिता मुदः ॥ ३९९ ॥ विष्णुर्विज्ञाननिष्णात–स्तदानीं पार्ददर्दरैः । कंसस्य मनसा सार्धं, कम्पयामास मेदिनीम् ॥ ४०० ॥

भीतस्ततो हरिं हन्तु–मपरं मथुरापतिः । दुष्टं मौष्टिकमादिक्ष–न्नास्त्यकृत्यं दुरात्मनाम् ॥ ४०१ ॥ श्रीपतिं प्रति धावन्तं, दृष्ट्वा मौष्टिकमादरात् । सीरपाणिरभाषिष्ट, रोषपाटललोचनः ॥ ४०२ ॥ रे रे ! दुष्ट ! दुराचार !, योद्धुमुत्तिष्ठसे कथम् ? । चण्डदोर्दण्डकण्डूति–मेष व्यपनयामि ते ॥ ४०३ ॥ इत्युदीर्य समुत्तीर्य, मञ्चाद्रोमाञ्चितो हली । द्राग्योधयितुमारेभे, स मुष्टामुष्टि मौष्टिकम् ॥ ४०४ ॥ आहतो हृदये विष्णु–श्चाणूरेणाथ मुष्टिना । यादवानां समं बाष्पैः, पतति स्म भुवस्तले ॥ ४०५ ॥ हरिं मूर्च्छालमालोक्य, चक्रे हाहारवं जनः । उच्छलन्नासनात् कंसः, पुनः किलकिलारवम् ॥ ४०६ ॥ हरेः पुनः प्रहाराय, स स्वं मल्लं समादिशत् । “ भवेदासन्नपातानां, मर्यादाया व्यतिक्रमः ” ॥ ४०७ ॥ समुद्यते हरिं हन्तुं, तस्मिन्नुत्सृज्य मौष्टिकम् । तं दृढैः कूर्पराघातै–र्बलाद्व्यावर्तयद्बलः ॥ ४०८ ॥

अथोन्मीलितचैतन्यः, स्फारोज्जागरपौरुषः । उत्तस्थौ केशवः सार्कं, यादवानां मनोरथैः ॥ ४०९ ॥ मूर्च्छामेघावलीमुक्त–स्तेजस्तीव्रं वहन् हरिः । कंसस्य कौशिकस्येव, भानुवद्दुःसहोऽभवत् ॥४१०॥ कृष्णेन विकसद्वक्त्रा–म्भोजमोजायितं

१ पदाघातैः । २ मल्ले ।

नया । चाणूरेण यथा वेगात्, कृतान्तस्यातिथीयितम् ॥४११॥ कंसस्य वदनाम्भोजे, समुद्रविजयस्य च । हिमांशुश्चाहिमांशुश्च, विष्णुरेकोऽप्यभूत्तदा ॥ ४१२ ॥ मृत्युमेभिरभिज्ञानै-र्ज्ञात्वाऽरिष्टादिदारिभिः । कंसः कक्षीकृतक्षोभः, स्वान् भटानिदमब्रवीत् ॥४१३॥ रे! रे! गृह्णीत गृह्णीत, चाणूरपरिपन्थिनम् । स्वयंभूमल्लमुन्मत्त-मेनं गोपालबालकम् ॥४१४॥ एनद्गुरुश्च संगृह्य, निग्राह्यो निर्भयः परः । "चौरस्वीकारकर्ताऽपि, शीर्षच्छेद्यो हि चौरवत्" ॥ ४१५ ॥

व्याजहार हरिः कंसं, त्रिकटभ्रकुटिस्ततः । किं दुरात्मन्ननात्मज्ञ !, जिह्वामालोच्य नोच्यते ? ॥४१६॥ अस्मिन् रङ्गगृहान्तर्मे, भुजेर्ष्योष्मणा कृतः । त्वया दुष्कर्मकिंपाक-परीपाकोऽनुभूयताम् ॥ ४१७ ॥ इति व्याहृत्य संहर्तुं, कंसं संतमसोपमम् । हरिस्तन्मञ्चमारोह-दुदयाचलसोदरम् ॥४१८॥ बालगान्धवविध्वंस-स्मरणारुणलोचनः । तत्रारूढः पुनः प्रौढ-मभ्यधत्त स निर्भयः ॥ ४१९ ॥ सन्ति ये तव मित्राणि, सन्ति ये ते च बान्धवाः । राजानस्ते महौजस्काः, सन्तु त्राणाय तेऽधुना ॥ ४२० ॥ अरे ! स्मरसि निस्त्रिंश !, जातमात्रान्ममाग्रजान् । निःशूकहृदय ! स्फार-शिलास्वास्फालयिष्यसि ॥ ४२१ ॥ आसीद्दोर्दण्डशौण्डीर्य-गर्वः खर्वेतरस्तव । तत्त्वया त्रातुमात्मान-मायुधे दीयतां मनः ॥ ४२२ ॥ इत्युक्त्वाऽङ्घ्रिप्रहारेण, भङ्क्त्वा मुकुटमुत्कटम् । क्षितौ चिक्षेप तं मञ्चा-त्कृत्वा केशेषु केशिजित् ॥ ४२३ ॥ रामोऽपि युद्धमाधत्ते, मौष्टिकेन समं दृढैः । यत्नैस्तथा यथा मञ्चाः, सर्वेऽप्युच्चैः प्रचुक्रुशुः ॥ ४२४ ॥ प्रस्विद्यद्वेपमानाङ्गः, साश्रुणी भयकातरे । दिक्षु रक्षणसाकाङ्क्षः, कंसश्चिक्षेप चक्षुषी ॥ ४२५ ॥

१ न्यायस्य पक्षपाती । २ 'भुजशौर्यो०' प्रतिद्वय० । ३ बहुतरः ।

अत्रान्तरे कृतान्ताभाः, सुभटा मथुरापतेः । अरे! पापमिमं गोपं, हिंस्त हिंस्तेति वादिनः ॥४२६॥ केचित् कुन्तकराः केचि-त्तीक्ष्णनिस्त्रिंशपाणयः । युगपत्ते हरिं हन्तुं, स्वामिभक्त्या ढुढौकिरे ॥ ४२७ ॥ ( युग्मम् ) रुद्धं कंसभटैः कृष्णं, वीक्ष्य दोःपाशपीडनात् । रामेण मौष्टिकश्चक्रे, चाणूरपरिचारिकः ॥४२८॥ ततः स मञ्चादेकस्मा-दुत्पाट्य स्तम्भमुत्कटम् । भटान्निर्द्रोटयांचक्रे, तांस्तार्क्ष्यः पन्नगानिव ॥४२९॥ मध्येरङ्गं विडम्ब्योच्चै-र्हृदि पादप्रहारतः । कीनाशग्रासतां निन्ये, कंसः केशिविनाशिना ॥ ४३० ॥ कंसेन कृष्णभीतेन, स्वात्मरक्षणकाङ्क्षिणा । जरासन्धस्य यत् पूर्व-मानिन्ये सैन्यमुद्भटम् ॥ ४३१ ॥ हन्तुं कंसस्य हन्तार-महंकारवशाङ्कुशम् । सर्वं संवर्मयामास, तद्युर्योधमुदायुधम् ॥४३२॥ समुद्रविजयानीकै-स्तद्बलं मगधेशितुः । प्रभञ्जनैरिव रज-स्तूर्णं निन्ये विशीर्णताम् ॥४३३॥ बन्धुविध्वंससामर्षः, कंसं स्वकुलपांसनम् । रङ्गाद्बहिर्निचिक्षेप, धृत्वा केशेषु केशवः ॥ ४३४ ॥

इतः किलकिलाराव-मुखराः शौरिवेश्मनि । दत्त्वा श्रीस्थानमास्थानं, तस्थुः सर्वेऽपि यादवाः ॥४३५॥ हृष्टो रथमनाधृष्टि-र्वेलेन सह केशवम् । आरोप्य प्रापयामास, शौरिमन्दिरमादरात् ॥४३६॥ कृष्णमायान्तमालोक्य, लोकोत्तरवपुःश्रियम् । पिबन्तो नेत्रपुटकै-र्यादवाः प्रययुर्मुदम् ॥ ४३७ ॥ शौरिस्तु निस्तुषापत्य-स्नेहसोल्लासमानसः । प्रत्युद्याय हृषीकेश-माशिश्लेष मुहुर्मुहुः ॥४३८॥ पादारविन्दं गोविन्दो, ववन्दे ज्यायसः पितुः । तं सोऽप्युद्धुररोमालि-रालिङ्ग्याङ्के न्यवेशयत् ॥ ४३९ ॥ समुद्रविजयः पश्य-न्नास्यतामरसं हरेः । संपन्नसुमनोभावः, स्वं चक्रे निर्निमेषताम् ॥ ४४० ॥ अभ्येत्य

१. ( 'निर्घोटयांचक्रे' इति स्यात् । ) २ स्वीचक्रे प्रतिद्वय० ।

कृष्णेन कृतः कंसवधः। कृष्णस्य पितृगृहे गमनम् ॥

देवकी तत्र, प्रस्नवत्क्लिन्नकञ्चुका । चिरेण पुत्रगात्रस्य, स्पर्शसौख्यमशिश्रियत् ॥ ४४१ ॥ चकार मथुरानाथ-मुग्रसेनं नरेश्वरः । सत्यभामां सुतां सोऽपि, जिष्णवे विष्णवे ददौ ॥ ४४२ ॥ दिव्यस्य धनुषः पूर्व-मारोपणपणीकृताम् । गुरुभिस्तामनुज्ञातः, परिणिन्ये जनार्दनः ॥ ४४३ ॥

इतः परीतः शोकेन, कंससीमन्तिनीजनः । विललाप विलिप्ताङ्गः, सर्वतः क्षोणिरेणुभिः ॥ ४४४ ॥ समस्ताभिः सपत्नीभिः, समेताऽत्यन्तदुःखिता । ययौ जीवयशास्तत्र, यत्र कंसोऽस्ति संस्थितः ॥४४५॥ व्यात्तदीनाननं दूरा-द्रजोभिरवगुण्ठितम् । तमुद्वीक्ष्य मृगाक्ष्यस्ताः, समस्ता मुमुहुर्मुहुः ॥ ४४६ ॥ अवसाने च मूर्छायाः, प्रोच्छलच्छोकविह्वलाः । सोरस्ताडं सपूत्कार-मरुदन्मेदिनीगताः ॥ ४४७ ॥ अथ कंसस्य संस्कारे, जातेऽपि मगधात्मजा । यादवेष्वतिसाक्षेपा, न निवापाञ्जलिं ददौ ॥४४८॥ उग्रसेनदत्तच, सरामैः सजनार्दनैः । यादवैः सह दास्यामि, प्राणेशाय जलाञ्जलिम् ॥४४९॥ मत्प्रतापाज्जरासन्धात्, क्व द्रवादिव यादवाः । क्रान्दिशीकाः प्रयास्यन्ति, शरणाय मृगा इव? ॥४५०॥ इति प्रतिज्ञामेतस्या, निशशाम विशांपतिः । उद्भुद्रक्रोधकल्लोल-लोलमेतज्जजल्प च ॥४५१॥ प्रगल्भते किमत्रैवं, मुधा मगधनन्दिनी । यच्छिक्षितं तदाख्यातु, पितुर्गत्वाऽधुनैव सा ॥४५२॥ इत्यवज्ञागिरं राज्ञः, श्रुत्वा साऽथ समुत्सुका । जगाम ग्रामनगरा-ण्युल्लङ्घ्य पितुरालयम् ॥ ४५३ ॥

राजा गजगृहे याता-मेतां विज्ञाय सादरम् । अभीत इव भीतोऽपि, सर्वानाह्वास्त यादवान् ॥४५४॥ अथ क्रोष्टुकिमाहूय, नृपः पप्रच्छ तैः सह । विरोधिनि जरासन्धे, यत्कर्तव्यमतः परम् ॥४५५॥ स व्याजहार राजंस्ते, भवितारौ सुता-

१ ग्यानम

ननो ऽत्र्यनीराज्ये, समुद्रविजयादिभिः । मुकुन्दः प्रोद्यदानन्द–सौरभ्यैरभ्यपिच्यत ॥४७३॥ पुरन्दरपुरीसख्यां, राजन्त्यां युग इव । तस्यां पुरि सदानन्दाः, स्वैरं नन्दन्ति यादवाः ॥ ४७४ ॥

लीलावनेषु वापीषु, क्रीडाद्रिषु यदृच्छया । समं नेमिकुमारेण, रेमाते राम–केशवौ ॥ ४७५ ॥ आश्चर्यं पश्चिमा येयं, ज्योतिषामन्तकारिणी । यादवानां पुनः साऽपि, महाभ्युदयहेतवे ॥ ४७६ ॥ इति प्रीतस्य देवस्य, जनार्दनमहोदये । सांप्रतं त्वेतदागात–मुत्सवादुत्सवान्तरम् ॥४७७॥ यद्देवि ! कुन्ति ! ते पुत्र–जन्मना यादवेश्वरः । दिष्ट्येति वर्धितश्चारै–राचातैर्द्वे-स्तिनापुरात् ॥४७८॥ पुत्रोत्पत्ति तवाकर्ण्य, मुदमुद्वहताऽधिकम् । त्वन्माङ्गल्याय देवेन, तदद्य प्रहितोऽस्म्यहम् ॥ ४७९ ॥ इति वृद्धि स्वसन्धूनां, श्रुत्वा सर्वानिशायिनीम् । कुन्ती वहन्ती रोमाञ्चं, प्रत्यवोचत कोरकम् ॥४८०॥ साधु कोरक साधु त्वं, कथामिमामनीकयः । महोत्सवानुबन्धी मे, जातोऽयं तनयोत्सवः ॥४८१॥ बान्धवा मम जीयासु–र्जीयासुर्बन्धुसूनवः । ममाशिषमिमां तेषां, प्रियंवद ! निवेदयेः ॥४८२॥ इत्थमाभाष्य सत्कृत्य, कुन्त्या कृत्येषु दक्षया । कोरकः प्रोद्गतप्रीति–र्गमनाय व्यसृज्यत ॥ ४८३॥ युधिष्ठिरकुमारोऽपि, बालकल्पाङ्घ्रिपोपमः । मातृवात्सल्यपीयूषैः, पोषितो ववृधे क्रमात् ॥४८४॥ अव्यक्तवर्णरमणीयवचःप्रचारो, रिङ्खन् कदाचन कदाचन पादचारी । नव्योल्लसद्दशनहास्यमनोहरास्यः, कस्य प्रतिक्षणमभून्न मुदे कुमारः ? ॥४८५॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये कृष्णनेमिजन्मद्वारिकास्थापन-
युधिष्ठिरजन्मवर्णनो नाम द्वितीयः सर्गः ॥ २ ॥

---

१ धर्मिष्ठगृणाधिष्ठितायाम् । २ 'मालप्य' इति प्रतिद्वय० ।

विभौ । भरतार्धमहर्द्धीनां, विश्रामौ राम–केशवौ ॥४५६॥ किं तु क्षेत्रं च कालं च, समाश्रित्य शरीरिणाम्। भवन्ति भागधेयानि, विविधानि न संशयः ॥ ४५७ ॥ ततः क्षेत्रमिदं मुक्त्वा, पश्चिमाम्भोधिरोधसि । युष्माभिः सपरीवारै–र्गम्यतामधुना द्रुतम् ॥ ४५८ ॥ तस्मिन् यत्र स्थिता कृष्ण–भाग्यजागरडिण्डिमौ । सत्यभामा सुतौ सूते, तत्र स्थाप्या पुरी वरा ॥४५९॥ इत्युपश्रुत्य सत्कृत्य, तं विसृज्य प्रजेश्वरः । कृशार्तमथुरालोकैः, सह प्रस्थानमादधे ॥ ४६० ॥ बिभ्राणो भाविकल्याण–पिशुनैः शकुनैर्मुदम् । सरिद्भूधरकान्तारा–ण्यतिचक्राम स क्रमात् ॥४६१॥ स क्रोष्टुकिसमादिष्टे, पश्चिमाम्भोधिरोधसि । सैन्यं निवेशयामास, वितीर्णनगरभ्रमम् ॥४६२॥ सुतावसूत सत्याऽपि, तत्र सौस्थ्येन तस्थुषी । कल्पद्रुमावनिद्राण–सुवर्णा मेरुभूरिव ॥४६३॥

ततो नैमित्तिकादेशात्, केशवो लवणाधिपम् । सुस्थितं संमुखीकर्तु–मकार्षीदष्टमं तपः ॥४६४॥ आहूतस्तपसा तेन, रत्नप्राभृतसंभृतः । उपेन्द्रमुल्लसत्प्रीति–रुपतस्थेऽथ सुस्थितः ॥ ४६५ ॥ व्याहरच्च हृषीकेशं, निदेशस्थितमात्मनः । जनमेनं विजानीहि, ततः कार्ये नियोजय ॥४६६॥ प्रीत्या प्रत्याह गोविन्द–स्तोयधेः ( धे ! ) संविधेहि मे । प्रवरं नगरीस्थानं, पूर्वकेशवरूढितः ॥४६७॥ इत्युक्तो नगरीभूमिं, पाञ्चजन्यं च मञ्जुलम् । कौस्तुभं च मुकुन्दाय, प्रदायान्तर्दधेऽम्बुधिः ॥४६८॥ अहोरात्रेण तत्रेन्द्र–निदेशाद्धनदः स्वयम् । चक्रे द्वारवतीं नाम, विजितस्वःपुरीं पुरीम् ॥४६९॥ वप्रो वज्रमयस्तस्यां, नभःस्पृक्कपिशीर्षकः । अभ्रंलिहानि वेश्मानि, नानामणिमयानि च ॥४७०॥ दि[1]नानर्धचतुर्थांश्च, यक्षा वैश्रवणाज्ञया । रत्नैरनर्घैर्ववृषु–र्जलैर्वर्षाघना इव ॥४७१॥ तत्राभिरामानारामा–न्नन्दनोद्यानबान्धवान् । किंकरैः कारयामास, कुबेरो वासवाज्ञया ॥४७२॥

१ दिवसान् ।

कंसस्त्रीविलापः । शौरेः समुद्रतीरे गमनम् । द्वारकास्थापनम् ॥

ततो द्वारवतीराज्ये, समुद्रविजयादिभिः । मुकुन्दः प्रोद्यदानन्द–मौरभ्यैरभ्यषिच्यत ॥४७३॥ पुरन्दरपुरीसख्यां, राजन्त्यां गुरा इव । तस्यां पुरि गदानन्दाः, स्वैरं नन्दन्ति यादवाः॥ ४७४ ॥

लीलावनेषु वापीषु, क्रीडाद्रिषु यदृच्छया । समं नेमिकुमारेण, रेमाते राम–केशवौ ॥ ४७५ ॥ आश्चर्यं पश्चिमा येयं, ज्योतिषामस्तकारिणी । यादवानां पुनः साऽपि, महाभ्युदयहेतवे ॥ ४७६ ॥ इति प्रीतस्य देवस्य, जनार्दनमहोदये । सांप्रतं त्वेतदायात–मुत्सवादुत्सवान्तरम् ॥४७७॥ यद्देवि ! कुन्ति ! ते पुत्र–जन्मना यादवेश्वरः । दिष्ट्येति वर्धितश्चारे–राबातैर्हस्तिनापुरात् ॥४७८॥ पुत्रोत्पत्तिं तवाकर्ण्य, मुदमुद्वहताऽधिकम् । त्वन्माङ्गल्याय देवेन, तदत्र प्रहितोऽस्म्यहम् ॥ ४७९ ॥ इति वृद्धिं स्वबन्धूनां, श्रुत्वा सर्वातिशायिनीम् । कुन्ती वहन्ती रोमाञ्चं, प्रत्यवोचत कोरकम् ॥४८०॥ साधु कोरक साधु त्वं, कथामिमामनीकथः । महोत्सवानुबन्धी मे, जातोऽयं तनयोत्सवः ॥४८१॥ बान्धवा मम जीयासु–र्जीयासुर्बन्धुसूनवः । ममाशिषमिमां तेषां, प्रियंवद ! निवेदयेः ॥४८२॥ इत्थमाभाष्य सत्कृत्य, कुन्त्या कृत्येषु दक्षया । कोरकः प्रोद्गतप्रीति–र्गमनाय व्यसृज्यत ॥ ४८३॥ युधिष्ठिरकुमारोऽपि, बालकल्पाङ्घ्रिपोपमः । मातृवात्सल्यपीयूषैः, पोषितो ववृधे क्रमात् ॥४८४॥ अव्यक्तवर्णरमणीयवचःप्रचारो, रिङ्खन् कदाचन कदाचन पादचारी । नव्योल्लसद्दशनहास्यमनोहरास्यः, कस्य प्रतिक्षणमभून्न मुदे कुमारः ? ॥४८५॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये कृष्णनेमिजन्मद्वारिकास्थापन-
युधिष्ठिरजन्मवर्णनो नाम द्वितीयः सर्गः ॥ २ ॥

१ गर्भितनृपाशिष्रितायाम् । २ 'मालम्य' इति प्रतिद्वय० ।

# अथ तृतीयः सर्गः

धर्मकल्पद्रुमस्याथ, पुनरेव फलार्थिनी। नासिक्येऽकारयत् कुन्ती, श्रीचन्द्रप्रभमन्दिरम् ॥ १॥ प्रदीपा यत्र निस्त्रास-नानामणिविनिर्मिते। प्रभाध्वस्ततमःस्तोमे, मङ्गलायैव केवलम् ॥ २ ॥ प्रसादभुक्तिरात्मीया, नासिक्यमिति तत्र सा। गत्वा गत्वा पुनश्चक्रे, जिनधर्मप्रभावनाम् ॥ ३ ॥ धर्मकर्मैकनिर्माण–व्यसनव्यवसायिनी। पुनरापन्नसत्त्वाऽभूत्, पाण्डुराजसधर्मिणी ॥ ४ ॥ तस्याः स्वप्नेऽक्षिपद्वृक्ष–भञ्जनोऽथ प्रभञ्जनः। आनीय नन्दनोद्याना–दङ्के कल्पमहीरुहम् ॥ ५ ॥ पत्ये शशंस सा स्वप्न–मेनमेनोविनाकृता। तदर्थमर्थिकल्पद्रु–स्तत्पुरः सोऽप्यचीकथत् ॥ ६ ॥ पवमानोपमानस्ते, बलिष्ठैकशिरोमणिः। प्रदत्त-जगदाश्वासो, भविता तनयोऽद्भुतः ॥ ७ ॥ इत्याकर्ण्य दधौ साऽन्यं, हर्षरोमाञ्चकञ्चुकम्। "उत्कल्लोलं भवेच्चेतः, श्रुतेऽपि तनुजन्मनि" ॥८॥ उत्पाटयामि शैलेन्द्र–मपि निर्दलयामि वा। तस्याः प्रादुरभूदेवं, स्फूर्तिर्गर्भानुभावतः ॥९॥ दूरमुज्झाग-रौजस्का, वज्रमप्यङ्गुलीमुखैः। सा तदा पक्वकर्पूर–कणचूरमचूरयत् ॥ १० ॥ गर्भाविर्भावितस्थाम–जनितोत्साहसाहसा। अमन्दोन्माद्यदानन्दा, सा दिनान्यत्यवाहयत् ॥ ११ ॥

इतश्च गर्भदौरात्म्यात्, कृतैरौपयिकैरपि। गान्धारी प्रसवं प्राप, न मासैस्त्रिंशताऽपि हि ॥ १२ ॥ उदरं बिभ्रती दूरं–मलिञ्जरसहोदरम्। क्लेशावेशवशाच्चित्ते, गान्धारीदमचिन्तयत् ॥ १३ ॥ अहो ! मे दत्ततापस्य, पापस्य परमो [6] विधिः।

युधिष्ठिर-जन्म। कुन्त्या द्वितीय-गर्भः। गन्धारी-गर्भः।

१ त्रासो मणेर्दोषविशेषः। २ एनः पापं, तद्रहिता इत्यर्थः। ३ स्वप्नभावम्। ४ अङ्गुल्यग्रैः। ५ महत्। ६ 'ऽवधिः' इति स्यात्।

यदेतच्चारकं दुःख-मिहैवानुभवाम्यहम् ॥ १४ ॥ यच्चीदृशं पुरस्तान्मे, कुन्ती सुतमजीजनत् । पश्य सर्वंकषस्यापि, सा दुःखस्यापि चूलिका ॥ १५ ॥ अधुनाऽपि निराधिर्य-न्निकटप्रसवा पुनः । तन्मामन्तः शितैः कुन्तैः, कुन्ती हन्ति प्रतिक्षणम् ॥ १६ ॥ इति चिन्तापरस्वान्ता, नितान्तं दुःखविह्वला । उदरं ताडयामास, मा शीघ्रप्रसवार्थिनी ॥१७॥ पीडोत्पीडकृता बाढ-माधिना ताडनेन च । अभूदपरिपूर्णोऽपि, गर्भस्तस्यास्तदा बहिः ॥ १८ ॥ मांसपिण्डोपमं सा तं, पश्यन्ती साश्रुलोचना । विषादमाससाद, " दत्ते क्रुद्धो विधिर्न किम् " ? ॥ १९ ॥ त्वं मे मनोरथानित्थं, किं निकृन्तसि निष्कृप ! । इति दैवमुपालभ्य, लब्धार्तिः सा मुहुर्मुहुः ॥ २० ॥ किमनेन मांसपिण्डेन, किमनेन ममाधुना ? । इत्युत्स्रष्टुं समारेभे, सा बहिस्तमवज्ञया ॥२१॥

अथ ज्ञातप्रबन्धाभि-रेत्य वृद्धाभिरादरात् । प्रत्यषिध्यत सा बाढं, मा मा मेत्युक्तिपूर्वकम् ॥ २२ ॥ अजल्पंश्च पपातेदं पुत्ररत्नं तवोदरात् । अभाग्येनार्धनिष्पन्नं, वायुनेव तरोः फलम् ॥ २३ ॥ एतत्तु तव कल्याणि !, न मौग्ध्यं ज्ञातुमीश्महे । यदुपक्रमसे त्यक्तु-मवस्करमिवात्मजम् ॥ २४ ॥ अथ साऽकथयत्तथ्यं, मातरः ! शृणुत क्षणम् । गर्भाधाने ममामुष्मिन्, प्रगृत्तमिति चेतसा ॥ २५ ॥ अहं महीपतेः पत्नी, न तावदभवं पुरा । भविष्यामि महीपाल-माता त्वेतत्प्रसादतः ॥ २६ ॥ इत्थं मयि कृताशायां, कुन्त्यसूत युधिष्ठिरम् । तां संप्रत्यहमश्रौप-मासन्नप्रसवां पुनः ॥ २७ ॥ ततो मेदस्विनिर्वेदात्, स्वं निन्दन्ती मुहुर्मुहुः । तूर्णप्रसवसाकाङ्क्षा, कुक्षिं निजमकुट्टयम् ॥ २८ ॥ उशन्ति सत्यमेवैत-द्बुद्धिः कर्मानुसारिणी । तदिदं जानमीक्षध्वं, ब्रूत यत्तत्करोम्यहम् ॥ २९ ॥ ततस्तामभ्यधुर्वृद्धा, आधिं वत्से ! मुधा व्यधाः । कर्माणि हि प्रतिप्राणि, पृथ-

१ प्राप्ता मया । २ अनिर्वेदात् ।

क्प्रसवते फलम् ॥ ३० ॥ वत्से ! मात्सर्यमुत्सार्य, परमार्थे मनः कुरु । पश्यैकाग्रमनाः कुन्ती, धर्ममाराधयत्यलम् ॥ ३१ ॥ धर्मप्रभावसंपन्न-निःशेषाभीष्टसंपदि । ततश्च मत्सरं वत्से !, धत्से कुन्त्यां कथं वृथा ? ॥ ३२ ॥ स्वल्पैः कल्पद्रुमप्रायै-र्धर्मं नोपमिमीमहे । संकल्पतुलया ते हि, यल्लोकमुपकुर्वते ॥ ३३ ॥ यदीच्छावीरुधं वत्से !, विधातासि फलेग्रहिम् । धर्मालवाल-मेतस्याः, सिञ्च श्रद्धामृतैस्ततः ॥ ३४ ॥ लक्ष्यते लक्षणैरेभि-र्भावी बहुयुधिष्ठिरः । तवात्मजोऽपि तन्मा स्म, खिद्यथाः सर्वथा शुभे ॥ ३५ ॥ असौ ते त्रिंशतं मासान्, गर्भे तस्थाविदं कियत् । द्वादशापि समाः कश्चि-त्तिष्ठत्युदरकन्दरे ॥ ३६ ॥ इदानीं तु सुतस्यास्य, जीविताय यतामहे । इत्युक्त्वा ताभिरभ्यक्तः, सर्पिषा तूलसंचयः ॥ ३७ ॥ तेन प्रावृत्य तं बालं, स्वर्णकुंड्यां निधाय च । एकान्ते तां व्यवस्थाप्य, निधानमिव दध्रिरे ॥ ३८ ॥

अथ संपूर्णसर्वाङ्गो, मातुः स्तन्येन सोऽर्भकः । दधौ वृद्धिं परां बाल-विटपीव घनाम्भसा ॥ ३९ ॥ असूत दिवसे यस्मिन्, गान्धारी तं तनूरुहम् । तस्मिन् यामैस्त्रिभिः पश्चात्, सुतं कुन्त्यप्यजीजनत् ॥ ४० ॥ तयोर्भाग्यमहो भिन्न-मप्येकदिनजातयोः । यदाद्योऽजनि दुर्लग्ने, सुलग्ने कुन्तिसूः पुनः ॥ ४१ ॥ उद्दिश्य पाण्डुजन्मान-मभून्नभसि भारती । विजयी वज्रकायोऽय-मुद्दामबलमन्दिरम् ॥ ४२ ॥ भक्तः सहोदरे ज्येष्ठे, जगद्विधुरबान्धवः । भावी मोहच्छिदाच्छेकः, क्रमात्सिद्धिवधूवरः ॥ ४३ ॥ ( युग्मम् ) प्रीता कुन्ती सुतेनैव, दिवि देवा महोत्सवम् । चक्रुश्चकार पाण्डुस्तु, युगपत् सुतयोर्द्वयोः ॥ ४४ ॥ दुर्योधन इत्याद्यस्य, भीम इत्यपरस्य च । धृतराष्ट्रश्च पाण्डुश्च, पुत्रयोर्नाम चक्रतुः ॥ ४५ ॥ भीम-

१ कल्पवृक्षसदृशैः कामघटादिभिरित्यर्थः । २ अत्यन्तं युधिष्ठिरसदृशः इत्यर्थः ।

स्यातोऽमवन्नाम, मरुत्तनय इत्यपि । स्वमे कल्पद्रुमव्याजा–द्दत्तोऽसौ मरुता यतः ॥ ४६ ॥ पञ्चभिर्लालितौ यत्ना–द्धात्रीभिर्मातृवत् सदा । तौ क्रमाज्जग्मतुर्वृद्धिं, पञ्चास्यपृथुकाविव ॥ ४७ ॥ रिङ्खन् दुर्योधनः पश्चा–देत्य भीमेन रिङ्खता । बलिना बालचापल्या–द्धृत्वा पादे व्यकृष्यत ॥ ४८ ॥ कदाचिच्च स भीमेन, प्रीत्या मात्रा समर्पितम् । भक्ष्यं हठेन हस्ताग्रा–दाच्छिद्योच्चैररोद्यत ॥ ४९ ॥ मिथः कलिकरौ जातु, जातु केलिपरायणौ । एकामत्रभुजौ[2] जातु, तावभूतामनारतम् ॥ ५० ॥

आगमयन्नथ वासन्तीं, चन्द्रिकाचन्दनाञ्चितः । मल्लिकामोदसुरभिः, सुरभिः समजृम्भत ॥ ५१ ॥ वसन्तेनोपनीतानि, प्राप्य चूताङ्कुरच्छलात् । नवान्यस्त्राणि पुष्पास्त्र[3]–स्तृणं जगदजीगणत् ॥ ५२ ॥ जगज्जिगीषोः[4] पञ्चेषोः, प्रयाणे जयशंसिनः । व्यनयोऽदुन्दुभीयन्त, मधुराः पिकयोपिताम् ॥ ५३ ॥ गलद्बहुलकिञ्जल्क–पङ्किलीभूतभूतलम् । पुष्पडम्बरितं पाण्डुः, क्रीडायनमथागमत् ॥ ५४ ॥ भीमं पण्मासदेशीय–मादाय मधुराकृतिम् । पत्या सह ययौ कुन्ती, वसन्तश्रियमीक्षितुम् ॥ ५५ ॥ विकाशिकेशरे पुष्प–त्तिलके चारुचम्पके । पत्या सार्धं वने राजा, विजहार मनोरमे ॥५६॥ लीलयाऽपि क्षिपन् पाणिं, बालः गुलभचापलः । मूलादुन्मूलयामास, विविधान् सविधद्रुमान् ॥ ५७ ॥ प्रियया सार्धमासाद्य, दोलान्दोलनकौतुकम् । आरुरोह महीपालः, सहेलः केलिपर्वतम् ॥ ५८ ॥ कुन्त्यपि प्रेक्षितुं शैल–ग्रामणीरामणीयकम् । समारोहद्वरारोहा, पत्यानुपदिकी मुदा ॥ ५९ ॥ स्वैरमाराममारामं, वापीं वापीं सरः सरः । सर्वमालोकयांचक्रे, गिरेस्तस्य नृपप्रिया ॥ ६० ॥ पर्यन्तशिखरस्याग्रे, समासादितजन्मनः । कङ्केलिपादपस्याधः, सा विधत्ते स्म विश्रमम् ॥ ६१ ॥ कुरुवंशनवोत्तंस !, जगन्ने-

१ सिंहकिशोरकौ । २ एकपात्रभुजौ । ३ कामः । ४ जेतुमिच्छोः । ५ समीपवृक्षान् ।

त्रसुधाकर ! । इत्थमुल्लापयामास, भीमं कृत्वाऽङ्कखेलिनम् ॥ ६२ ॥ एवमुल्लाप्यमानस्य, भीमस्योत्सङ्गसङ्गिनः । श्रमध्वंसाय धात्रीव, निद्राऽभून्नेत्रगोचरा ॥ ६३ ॥

वने च विहरन् स्वैर-ममन्दानन्दकन्दलः । स्वयं चम्पकपुष्पाणां, स्रजं जग्रन्थ पार्थिवः ॥६४॥ तामुपादाय दायाद-तुल्यां निजतनुद्युतेः । आत्मसंमुखमायान्तं, कुन्ती कान्तं व्यलोकयत् ॥ ६५ ॥ त्वं कण्ठ ! वर्धसे दिष्ट्या, प्रेम्णा प्रेयानिमां स्रजम् । यत्तुभ्यमुपनेतेति, मुदः साऽभूद्वशंवदा ॥ ६६ ॥ पिबन्ती लोचनैर्नाथ-मभ्युत्तस्थौ झटित्यसौ । विस्मृतात्मा न चाबोधि, भीममुत्सङ्गशायिनम् ॥ ६७ ॥ तदैव नृपतिः कान्ता-कण्ठे चिक्षेप च स्रजम् । भीमोऽतिनिःसहवपु-स्तदुत्सङ्गात् पपात च ॥ ६८ ॥ करौ व्यापारयामास, पुत्ररक्षार्थमेकतः । स्रजोऽर्थे चान्यतः कण्ठं, सा शोक-प्रमदाकुला ॥ ६९ ॥ ततः शृङ्गाल्लुठन् बालो, हाहारवमुखैर्जनैः । गण्डशैलकलां बिभ्रत्, साश्रुनेत्रैरदृश्यत ॥७०॥ अधोऽधः पततस्तस्य, शिलासोपानतः क्रमात् । प्रादुर्बभूवुष्टात्काराः, कुन्तीहृन्मर्मभेदिनः ॥ ७१ ॥ पूर्वकायनता कुन्ती, विलापतुमुला सुतम् । तत्पीडागमनायेव, सिञ्चति स्माश्रुवीचिभिः ॥ ७२ ॥ पश्यतामेव सर्वेषां, लोठं लोठं तटात्तटे । स बालः स्थूलपाषाणा-मुपागमदुपत्यकाम् ॥ ७३ ॥ प्लवंगमा इवोत्प्लुत्य, जङ्घाला वायुरंहसः । तस्यानुपदमुत्ताल-मुत्तेरुर्नृपपत्तयः ॥ ७४ ॥ हा ! वत्स ! क्वासि ? दृश्योऽसि, मया जीवन् पुनः कदा ? । दूरतः पेतुषो वत्स !, यद्वा ते जीवितं कुतः ? ॥७५॥ इत्थं विलापैरत्यन्त-करुणैर्मर्मभेदिभिः । उच्चैः प्रतिरवव्याजा-द्रोदयन्ती गिरीनपि ॥ ७६ ॥ कुन्ती शोकाकुला जात-डिम्बेन सह पाण्डुना । पुत्रालोकनसोत्कण्ठा,

पाण्डुकुन्त्योर्वसन्तक्रीडा। भीमस्य गिरेः पतनम् ॥

१ ‘ विभ्रदश्रुने० ’ प्रतिद्वय० । २ जङ्घाबलवन्तः । ३ डिम्बः-हाहारवः ।

शनैः शोकादवातरत् ॥ ७७ ॥ ( त्रिभिर्विशेषकम् ) उवाच राज्ञी प्राणेश !, केनैताश्चूर्णिताः शिलाः ?। न जानामीति तेनोक्ते, देवी पुनरभाषत ॥ ७८ ॥ अमून् भीमद्रुहः को हि, दारुणान् दारयिष्यति ? । शङ्के स्वेनैव पापेन, शीर्णास्तु कणशः स्वयम् ॥ ७९ ॥ तेनानवाप्तपूर्वेण, नगोत्तारक्रमेन च । पुत्रशोकेन चात्यन्तं, कुन्ती वैक्लव्यमागमत् ॥ ८० ॥

अथातिरंहसा कांश्चि-दाक्रोशांस्यकुशेशयान् । पत्तीनागच्छतो दूरा-द्वीक्षांचक्रे क्षितीश्वरः ॥ ८१ ॥ तत्प्रमोदानुमानेन, परिज्ञाय नृपोऽभ्यधात् । देवि ! त्वं वर्धसे दिष्ट्या, कुशली तव नन्दनः ॥ ८२ ॥ इति वर्धयतो राज्ञीं, राज्ञस्तेऽपि व्यजिज्ञपन् । अग्रेऽसौ विजयी स्वामि-न्नक्षताङ्गस्तवात्मजः ॥ ८३ ॥ देवीक्रोडस्थितस्येव, त्वत्पुत्रस्य मनागपि । पेतुषोऽपि गिरेः शृङ्गा-न्मुखरागो न भिद्यते ॥८४॥ एतत् कथितमस्माभि-रन्यदत्यद्भुतं पुनः । पुरो गत्वा स्वबालस्य, स्वयमालोकयिष्यसि ॥ ८५ ॥ इति वार्तासुधापान-प्रोषितांशेषवेशसा । त्वरितं त्वरितं भीम-जननी पुरतो ययौ ॥ ८६ ॥ राजाऽपि राजमानास्यः, प्रेयसी-पृष्ठतो व्रजन् । समासमाद तं देशं, यत्रास्ति क्षेमवान् सुतः ॥ ८७॥ शिलाचूर्णमये तल्पे, सुखोत्तानशयं सुतम् । अक्षतं शत-पत्राक्षं, तौ निरीक्षांबभूवतुः ॥ ८८ ॥ तमुद्वीक्ष्य तयोरासीत्, प्रीतिर्वाचामगोचरा । तौ समालोक्य बालोऽपि, हर्षादुद्बाहु नृत्यति ॥ ८९ ॥ ऊर्ध्वमूर्ध्वं लमद्बाहुं, भीममादाय वक्षसा । कुन्ती सानन्दमालिङ्ग्य, चुचुम्ब प्रस्नुतस्तनी ॥ ९० ॥ गतग्लानिमुत्फुल्ल-लोचनः पाण्डुभूपतिः । बलादाच्छिद्य पत्नीतः, सानन्दं सस्वजे सुतम् ॥ ९१ ॥ पृथा पप्रच्छ पृथ्वीश-सार्वभौम ! द्रढीयसी । असौ शिला समग्राऽपि, विभिदे कणशः कथम् ? ॥ ९२ ॥ पार्थिवः कथयामास, प्रिये ! तव तनूरुहः ।

१ विकसितमुखकमलान् । २ नष्टसर्वविघ्ना ।

त्रसुधाकर! । इत्थमुल्लापयामास, भीमं कृत्वाऽङ्कखेलिनम् ॥ ६२ ॥ एवमुल्लाप्यमानस्य, भीमस्योत्सङ्गसङ्गिनः । श्रमध्वंसाय धात्रीव, निद्राऽभून्नेत्रगोचरा ॥ ६३ ॥

वने च विहरन् स्वैर–ममन्दानन्दकन्दलः । स्वयं चम्पकपुष्पाणां, स्रजं जग्रन्थ पार्थिवः ॥६४॥ तामुपादाय दायाद–तुल्यां निजतनुद्युतेः । आत्मसंमुखमायान्तं, कुन्ती कान्तं व्यलोकयत् ॥ ६५ ॥ त्वं कण्ठ! वर्धसे दिष्ट्या, प्रेम्णा प्रेयानिमां स्रजम् । यत्तुभ्यमुपनेतेति, मुदः साऽभूद्वशंवदा ॥ ६६ ॥ पिबन्ती लोचनैर्नाथ–मभ्युत्तस्थौ झटित्यसौ । विस्मृतात्मा न चाबोधि, भीममुत्सङ्गशायिनम् ॥ ६७ ॥ तदैव नृपतिः कान्ता–कण्ठे चिक्षेप च स्रजम् । भीमोऽतिनिःसहवपु–स्तदुत्सङ्गात् पपात च ॥ ६८ ॥ करौ व्यापारयामास, पुत्ररक्षार्थमेकतः । स्रजोऽर्थे चान्यतः कण्ठं, सा शोक–प्रमदाकुला ॥ ६९ ॥ ततः शृङ्गाल्लुठन् बालो, हाहारवमुखैर्जनैः । गण्डशैलकलां बिभ्रत्, साश्रुनेत्रैरदृश्यत ॥७०॥ अधोऽधः पततस्तस्य, शिलासोपानतः क्रमात् । प्रादुर्बभूवुष्टात्काराः, कुन्तीहृन्मर्मभेदिनः ॥ ७१ ॥ पूर्वकायनता कुन्ती, विलापतुमुला सुतम् । तत्पीडागमनायेव, सिञ्चति स्माश्रुवीचिभिः ॥ ७२ ॥ पश्यतामेव सर्वेषां, लोठं लोठं तटात्तटे । स बालः स्थूलपाषाणा–मुपागमदुपत्यकाम् ॥ ७३ ॥ प्लवंगमा इवोत्प्लुत्य, जङ्घाला वायुरंहसः । तस्यानुपदमुत्ताल–मुत्तेरुर्नृपपत्तयः ॥ ७४ ॥ हा! वत्स! क्वासि? दृश्योऽसि, मया जीवन् पुनः कदा? । दूरतः पेतुषो वत्स!, यद्वा ते जीवितं कुतः? ॥७५॥ इत्थं विलापैरत्यन्त–करुणैर्मर्मभेदिभिः । उच्चैः प्रतिरवव्याजा–द्रोदयन्ती गिरीनपि ॥ ७६ ॥ कुन्ती शोकाकुला जात–डिम्बेन सह पाण्डुना । पुत्रालोकनसोत्कण्ठा,

१ 'बिभ्रदश्रुने०' प्रतिद्वय० । २ जङ्घावलवन्तः । ३ डिम्बः–हाहारवः ।

पाण्डुकुन्त्योर्वसन्तक्रीडा । भीमस्य गिरेः पतनम् ॥

शनैः शोकादवातरत् ॥ ७७ ॥ ( त्रिभिर्विशेषकम् ) उवाच राज्ञी प्राणेश !, केनैताश्चूर्णिताः शिलाः ?। न जानामीति तेनोक्ते, देवी पुनरभाषत ॥ ७८ ॥ अमून् भीमद्रुहः को हि, दारुणान् दारयिष्यति ? । शङ्के स्वेनैव पापेन, शीर्णास्तु कणशः स्वयम् ॥ ७९ ॥ तेनानवाप्तपूर्वेण, नगोत्तारक्रमेण च । पुत्रशोकेन चात्यन्तं, कुन्ती वैक्लव्यमागमत् ॥ ८० ॥

अथातिरंहसा कांश्चि-द्व्याकोशास्यकुशेशयान्[1] । पत्तीनागच्छतो दूरा-द्वीक्षांचक्रे क्षितीश्वरः ॥ ८१ ॥ तत्प्रमोदानुमानेन, परिज्ञाय नृपोऽभ्यधात् । देवि ! त्वं वर्धसे दिष्ट्या, कुशली तव नन्दनः ॥ ८२ ॥ इति वर्धयतो राज्ञीं, राज्ञस्तेऽपि व्यजिज्ञपन् । अग्रेऽग्रौ विजयी स्वामि-न्नक्षताङ्गस्तवात्मजः ॥ ८३ ॥ देवीक्रोडस्थितस्येव, त्वत्पुत्रस्य मनागपि । पेतुषोऽपि गिरेः शृङ्गा-न्मुखरागो न भिद्यते ॥ ८४ ॥ एतत् कथितमस्माभि-रन्यदत्यद्भुतं पुनः । पुरो गत्वा स्वबालस्य, स्वयमालोकयिष्यसि ॥ ८५ ॥ इति वार्तासुधापान-प्रोषिताशेषवेशसा । त्वरितं त्वरितं भीम-जननी पुरतो ययौ ॥ ८६ ॥ राजाऽपि राजमानास्यः, प्रेयसी-पृष्ठतो व्रजन् । समाससाद तं देशं, यत्रास्ति क्षेमवान् सुतः ॥ ८७ ॥ शिलाचूर्णमये तल्पे, सुखोत्तानशयं सुतम् । अक्षतं शत-पत्राक्षं, तौ निरीक्षांबभूवतुः ॥ ८८ ॥ तमुद्वीक्ष्य तयोरासीत्, प्रीतिर्वाचामगोचरा । तौ समालोक्य बालोऽपि, हर्षादुद्बाहु नृत्यति ॥ ८९ ॥ ऊर्ध्वमूर्ध्वं लसद्बाहुं, भीममादाय वक्षसा । कुन्ती सानन्दमालिङ्ग्य, चुचुम्ब प्रस्नुतस्तनी ॥ ९० ॥ गतप्रत्यूहमुत्फुल्ल-लोचनः पाण्डुभूपतिः । बलादाच्छिद्य पत्नीतः, सानन्दं सस्वजे सुतम् ॥ ९१ ॥ पृथा पप्रच्छ पृथ्वीश-मार्यपुत्र ! द्रढीयसी । असौ शिला समग्राऽपि, विभिदे कणशः कथम् ? ॥ ९२ ॥ पार्थिवः कथयामास, प्रिये ! तव तनूरुहः ।

---

१ विकसितमुखकमलान् । २ नष्टसर्वविघ्ना ।

वज्रकायोऽयमाख्यायि, भारत्या ननु दिव्यया ॥ ९३ ॥ तदस्य वपुषा बाढं, वज्रेणेवाभिताडिता । शिलेयं केलिशैलस्य, चूर्णीभावमुपाययौ ॥ ९४ ॥ योऽपि खण्डीकृतो दृष्टः, प्रस्तरोऽद्य त्वया पथि । तदपि त्वत्तनूजस्य, तनूघातविजृम्भितम् ॥९५॥ तच्छ्रुत्वा विस्मितस्वान्ता, कुन्ती कान्तिमुपेयुषी । आदाय दयिताद्भीम-मालिलिङ्ग मुहुर्मुहुः ॥९६॥ प्रपातभूमिं भीमस्य, भृङ्गारावर्जितैर्जलैः । निषिच्य श्रेयसे वृद्धाः, क्षणादानर्चुरक्षतैः ॥ ९७ ॥ ततो मुदितयोपात्त-सुतया प्रियया समम् । उत्तम्भितध्वजां राजा, राजधानीमुपाययौ ॥ ९८ ॥

अभ्रमूवल्लभारूढं, निशाशेषे कदाचन । स्वप्ने महेन्द्रमद्राक्षीत्, पृथा पृथुमनोरथा ॥ ९९ ॥ सा स्वप्नं कथयामास, पत्युः प्रातः प्रमोदिनी । तस्यै सोऽपि समाचख्यौ, शक्राभं भाविनं सुतम् ॥ १०० ॥ ततः प्रीतिं परां प्राप्ता, श्लाघ्यं गर्भं बभार सा । "प्रातःकालोपलब्धो हि, स्वप्नः सद्यः फलप्रदः" ॥ १०१ ॥ स्वयं सागरपर्यन्तां, मेदिनीमनुपद्रवाम् । मण्डलीकृतकोदण्डा, कर्तुमीहांबभूव सा ॥ १०२ ॥ समयेऽपि समागत्य, प्रजाः संहरतस्तदा । कृतान्तस्यापि सा कर्तुं, स्पृहयामास निग्रहम् ॥ १०३ ॥ सूर्याचन्द्रमसौ जातु, यत्तुतोद विधुंतुदः । तस्मिन्नपि बभूवेय-मभिषेणनकाङ्क्षिणी ॥ १०४ ॥

इत्थं गर्भप्रभावोत्थ-धीरोदात्तमनोरथा । तनयं जनयामास, सा मुहूर्ते मनोहरे ॥ १०५ ॥ तदैव दिवि वाग्देवी, सर्वतः शुश्रुवेतराम् । असावाराधितज्येष्ठो, जगदेकधनुर्धरः ॥ १०६ ॥ दुर्धर्षोऽत्यन्तसौम्यास्यः, सामर्षो नयवत्सलः । भविष्यति क्रमात् कर्म-निर्मुक्तो मुक्तिवल्लभः ॥ १०७ ॥ ( युग्मम् ) तदनन्तरमाकाशे, संगीतमुदजृम्भत । रम्भो-र्वशीप्रभृतयो, नृत्यम-

१ तनूः-शरीरम् । २ ऐरावणगजारूढम् । ३ राहुः । ४ सक्रोधः ।

प्रसमो व्यधुः ॥ १०८ ॥ जगुर्जगन्मनोहारि-मूर्छनं किन्नरेश्वराः । अजायत पुनर्वाद्य-नादाद्वैतं तथा दिवि ॥ १०९ ॥ प्रदत्तत्रिदशानन्दे, तस्मिन्नात्मजजन्मनि । प्रमोदकृतसंवादं, पाण्डुश्चक्रे महोत्सवम् ॥ ११० ॥ तं चकार स नाम्नाऽपि, गुणैरर्जुनमर्जुनम् । इन्द्रस्य दर्शनात् स्वप्ने, जातोऽसाविन्द्रसूरिति ॥ १११ ॥

अथ श्लाघ्यतमस्वप्न-सूचितौ निचितौ श्रिया । यमलौ जनयांचक्रे, मद्रराजसुता सुतौ ॥ ११२ ॥ तावप्याकाशभारत्या, कथितौ यन्नाम्यतः । सत्त्वशौर्ययुतौ सिद्धि-गामिनौ गुरुवत्सलौ ॥ ११३ ॥ प्रदत्तया पितृभ्यां तौ, विनीतौ नयशालिनौ । नकुलः सहदेवश्चे-त्याख्यया ख्यातिमीयतुः ॥ ११४ ॥ अमी कुमाराः पञ्चापि, दिविपत्पादपा इव । यशःकुसुमसौरभ्य-सुभगाः ख्यातिमाययुः ॥ ११५ ॥

गान्धारीप्रमुखाश्चाष्टौ, धृतराष्ट्रस्य याः प्रियाः । अजायन्त सुतास्तासां, क्रमाद्दुर्योधनानुजाः ॥ ११६ ॥ पुत्राणां नवनवति-स्तेषां नामानि तद्यथा । आसीद्दुःशासनः पूर्वो, दुःसहो दुःशलस्तथा ॥ ११७ ॥ रणः श्रान्तः समाढ्यश्च, विन्दः सर्वसहोऽपि च । अनुविन्दः सुभीमश्च, सुबाहुर्दुष्प्रधर्षणः ॥ ११८ ॥ दुर्मर्षणः सुगात्रश्च, दुष्कर्णो दुःश्रवास्तथा । वरवंशो विकीर्णश्च, दीर्घदर्शी सुलोचनः ॥ ११९ ॥ उपचित्रो विचित्रश्च, चारुचित्रः शरासनः । दुर्मदो दुष्प्रगाहश्च, युयुत्सुर्विकटाभिधः ॥१२०॥ ऊर्णनाभः सुनाभश्च, तथा नन्दो-पनन्दकौ । चित्रबाणश्चित्रकर्मा, सुवर्मा दुर्विमोचनः ॥ १२१ ॥ अयोबाहुर्महाबाहुः, श्रुतवान् पद्मलोचनः । भीमबाहुर्भीम-

१ जगतो मनोहारिणी मूर्छना यस्मिन् कर्मणि यथा स्यात्तथा । २ इन्द्रसदृशम् । ३ 'चित्रवर्मा' प्र० द्वय० ।

बलः, सुषेणः पण्डितस्तथा ॥ १२२ ॥ श्रुतायुधः सुवीर्यश्च, दण्डधारो महोदरः । चित्रायुधो निषङ्गी च, पाशो वृन्दारकस्तथा ॥ १२३ ॥ शत्रुंजयः शत्रुसहः, सत्यसन्धः सुदुःसहः । सुदर्शनश्चित्रसेनः, सेनानीर्दुष्पराजयः ॥१२४॥ पराजितः कुण्डशायी, विशालाक्षो जयस्तथा । दृढहस्तः सुहस्तश्च, वातवेग–सुवर्चसौ ॥१२५॥ आदित्यकेतुर्बह्वाशी, निर्बन्धोऽपि प्रयास्यपि । कवची रणशौण्डश्च, कुण्डधारो धनुर्धरः ॥ १२६ ॥ उग्ररथो भीमरथः, शूरबाहुरलोलुपः । अभयो रौद्रकर्मा च, तथा दृढरथाभिधः ॥ १२७ ॥ अनाधृष्यः कुण्डभेदी, विराजी दीर्घलोचनः । प्रमथश्च प्रमाथी च, दीर्घालापश्च वीर्यवान् ॥ १२८ ॥ दीर्घबाहुर्महावक्षा, दृढवक्षाः सुलक्षणः । कनकः काञ्चनश्चैव, सुध्वजः सुभुजस्तथा ॥ १२९ ॥ विरजाश्चेत्यमी सर्वे, रणकर्मविशारदाः । सर्वे शौण्डीरदोर्दण्डाः, सर्वे सर्वास्त्रकोविदाः ॥ १३० ॥

धृतराष्ट्रोऽथ भीष्मादी–नुपवेश्य परेद्यवि । मौहूर्तिकान् समाहूय, पप्रच्छ स्वच्छमानसः ॥ १३१ ॥ आख्यातमशरीरिण्या, भारत्या यद्युधिष्ठिरः । भविता भुवनश्लाघ्यो, न कोऽप्यत्रास्ति संशयः ॥ १३२ ॥ किं त्वनन्तरमेतस्मा–द्राजा दुर्योधनः किमु । भविष्यति न वेत्येवं, ज्ञानेनालोच्य शंस नः ॥ १३३ ॥ अत्रान्तरे दिगन्तेषु, रजोभिः परिजृम्भितम् । उदतिष्ठन्त निर्घाता–श्चकम्पे च वसुंधरा ॥ १३४ ॥ शिवाश्चाशिवशंसिन्यो, विरेसुर्विरसं तथा । मार्तण्डमण्डलं चाभूत्, परिवेषेण भीषणम् ॥ १३५ ॥ एतानि दुर्निमित्तानि, प्रेक्ष्य तल्लक्षणानि च । ज्ञानिनः सर्वविदुरं, विदुरं प्रत्यचीकथन् ॥ १३६ ॥

१ 'प्रयाद्यपि' प्रतिद्वय० ।

अर्जुन-
नकुल-
सहदेव-
जन्म ।
धृतराष्ट्र-
पुत्राणां
नवनवते-
र्जन्म ॥

॥ ४० ॥

अयमूर्जस्वलो राजा, राजचक्रविजित्वरः । भविष्यति परं कालः, कुलस्य च जनस्य च ॥ १३७ ॥ इति नैमित्तिकादिष्ट–मनिष्टं विदुरस्ततः । मभागमक्षमाचख्यौ, धृतराष्ट्रस्य पृच्छतः ॥१३८॥ तच्चाकर्ण्य विषं कर्ण–पुटयोरम्बिकासुतः । पुनः पर्यनुयुङ्क्ते स्म, कुले शान्तिः कथं भवेत् ? ॥ १३९ ॥

अथ संदेहसंदोह–च्छिदुरो विदुरस्तथा । अप्रेयोऽपि वचः पथ्यं, तथ्यं च तमुदाहरत् ॥ १४० ॥ निखिलस्य कुलस्यास्य, क्षेमं चेन् कर्तुमिच्छसि । तदेनमेनसां पात्रं, दुष्पुत्रं त्यक्तुमर्हसि ॥ १४१ ॥ तनयेनापि किं तेन, कुलप्रलयकारिणा ? । तेन हेम्नाऽपि किं कार्य–मार्य ! कर्णौ छिनत्ति यत् ॥ १४२ ॥ आसतां शतमेकोन–मपि स्वस्तिकृतः सुताः । अल्पमल्पेतरस्यार्थे, त्याज्यमित्थं विदुर्बुधाः ॥ १४३ ॥ आम्बिकेयस्तदाकर्ण्य, न यावत् प्रत्यभाषत । पाण्डुरुद्दामरप्रीति–स्तावद्विदुरमभ्यधात् ॥ १४४ ॥ ईदृशानि न लभ्यन्ते, पुत्रभाण्डानि कुत्रचित् । ममोपयाचितैरेष, जातो दुर्योधनः सुतः ॥ १४५ ॥ क्षयः कुलस्य चेन् पुत्रा–द्वृद्धिस्तर्हि कुतो भवेत् ? । भानोश्चेद् ध्वान्तमाकाशे, प्रकाशः स्यात् कुतस्ततः ? ॥१४६॥ युधिष्ठिरादपि ज्येष्ठः, पूर्वं गर्भावतारतः । असौ राज्याञ्जसविता, भविता गोत्रवर्धनः ॥ १४७ ॥ तच्छिवाः सन्तु पन्थानः, स्वस्थानगमनाय वः । अभिधायेदमास्थाना–दुदस्थात् पाण्डुभूपतिः ॥ १४८ ॥ दुर्योधनस्य दुःशल्या, नाम यामिर्बभूव या । सिन्धूनामधिराजस्ता–मुपयेमे जयद्रथः ॥ १४९ ॥

अथ ते धृतराष्ट्रस्य, वर्धन्ते स्म शतं सुताः । दोष्णोर्येषां स्म जागर्ति, स्फूर्तिस्त्रैलोक्यतोलने ॥ १५० ॥ धार्तराष्ट्राः

१ तन्त्रान । २ अग्रिमपि । ३ वहोः प्रयोजनाय । ४ स्वसा ।

शतं पञ्च, पाण्डवास्ते तु संहताः । शतं पञ्चोत्तरं स्वैरं, रेमिरे हस्तिनापुरे ॥ १५१ ॥ भीष्मं च धृतराष्ट्रं च, पाण्डुं च विदुरं च ते । प्रतिप्रभातमभ्येत्य, नमस्यन्ति स्म भक्तितः ॥ १५२ ॥ ततः सत्यवतीं पूज्या-मम्बिकाऽम्बालिके तथा । अम्बा-गन्धारिका-कुन्ती-मुख्याश्च प्राणमन्नमी ॥ १५३ ॥ मातॄणां च पितॄणां च, तया वात्सल्यवत्तया । निर्विशेषं मनस्तेषु, "गुरवो हि समाशयाः" ॥ १५४ ॥ शैशवादप्यजायन्त, पाण्डवाः परमार्हताः । "यस्य यादृक्परो लोक-स्तस्य चेष्टा हि तादृशी" ॥ १५५ ॥ दिवा वा यदि वा नक्तं, भक्तिप्रह्वीकृता इव । चेतस्तेषां न मुञ्चन्ति, पञ्चापि परमेष्ठिनः ॥ १५६ ॥ रंहस्वितापरीक्षार्थं[1], निर्णीतपणपूर्वकम् । सहस्ततालमुत्ताला-स्ते कदाचिद्धाविरे ॥ १५७ ॥ गङ्गायाः पुलिने जातु, सिकताकणकोमले । सर्वे कुमाराश्चिक्रीडु-स्ते शश्वत् पांशुकेलिभिः ॥ १५८ ॥ तुङ्गात्तटीविटङ्कात्ते, जलकेलिकुतूहलात् । यमुनायां कदाचिच्च, झम्पापातं वितेनिरे ॥ १५९ ॥ रंहःकेलि-रजःकेलि-जलकेलिषु लीलया । तान् बन्धूनधरीचक्रे, बलोदारो वृकोदरः ॥ १६० ॥ सदाऽवदातप्रकृति-र्धर्मात्मा धर्मनन्दनः । बबन्ध बन्धुषु स्नेहं, विशेषेण सुयोधने ॥ १६१ ॥ वत्सलोऽपि निसर्गेण, बान्धवेषु वृकोदरः । क्रीडयाऽलोलयद्बालान्, दुःशासनमुखानिति ॥ १६२ ॥ क्षिप्ताः कदाचित् कक्षायां, भीमेन भुजपीडनात् । श्वासावरोधदौस्थ्येन, संस्थिता[2] इव तेऽभवन् ॥ १६३ ॥ भीमः कदाचिदेतेषा-मन्योन्यं शिरसा शिरः । नालिकेरद्वयास्फाल-मास्फालयदनेकशः ॥ १६४ ॥ धृत्वा कदाचित् पादाग्रे, क्रोशमात्रां भुवं नयन् । नासा-जानु-ललाटादौ, त्वचयामास तानसौ ॥ १६५ ॥ तान् बध्ध्वा बाहुपाशेन, मज्जयित्वा चिरं जले । भीमः केलिप्रियो जातु, मृतप्राया-

१ वेगवत्तापरीक्षार्थम् । २ मृताः ।

नमुश्चत ॥ १६६ ॥ धार्तराष्ट्राः कनीयांसः, क्रीडन्तस्ते कदाचन । कुतूहलात् कपित्थादी-नुच्चानारुरुहुस्तरून् ॥ १६७ ॥ ततः पादप्रहारेण, तानाहत्य महीरुहान् । फलैः सार्धमपात्यन्त, ते भीमेन भुवस्तले ॥ १६८ ॥ खेदिता अपि भीमाय, न ते किंचन चुक्रुधुः । स्नेहोऽयं न पुनर्द्रोह-स्तस्येति ज्ञातपूर्विणः ॥ १६९ ॥ लब्धास्पदं मनोधात्र्यां, वैरभूरुहकारणम् । मात्सर्यबीजमा बाल्या-दभूद्दुर्योधनस्य यत् ॥ १७० ॥ तदानीं भीमसेनस्य, बल-विस्फूर्ति-कीर्तिभिः । तच्चक्रे किंचिदुच्छूनं, नव्याभिरिव वृष्टिभिः ॥ १७१ ॥

ओजायितानि भीमस्य, खिद्यमानांश्च बान्धवान् । वीक्ष्यावलेपात् कोपाच्च, बाढं दुर्योदनोऽभ्यधात् ॥ १७२ ॥ कदर्थ्यन्ते कथं भीम !, भ्रातरोऽमी स्तनंधयाः ? । तव दोर्दण्डकण्डूति-हरोऽस्मि तदुपेहि माम् ॥ १७३ ॥ तेनेत्थं स्पर्धमानेन, समाहूतो वृकोदरः । अभ्यधत्त महाभाग !, नाहं बन्धुषु दुर्मनाः ॥ १७४ ॥ परमित्थं मम स्नेह-चापल्यं पर्यवस्यति । वनेषु दन्तिनो दन्त-क्रीडाऽपि तरुभञ्जिनी ॥ १७५ ॥ ततोऽवलेपं कोपं वा, मुधा दुर्योधन ! व्यधाः । "यद्वा नैवास्ति मर्यादा, काऽप्यनालोच्य वादिनाम्" ॥ १७६ ॥ त्वया हि मम दोःकण्डू-र्न मनागप्यपोह्यते । "न ह्येरण्डो गजेन्द्रस्य, कटकण्डूयने क्षमः" ॥ १७७ ॥ अस्ति चेत्तव दोर्दर्पो, यद्वाऽसूया बलीयसी । तदेहि त्वं नियुध्यस्व, बुध्यस्व बलमात्मनः ॥ १७८ ॥ इत्याक्षिप्तः स भीमस्य, नियुद्धाय पुरोऽभवत् । " किं लोकाधिकधामानः, सहन्ते तेजसो वधम् ? " ॥ १७९ ॥ यदा विरमतो नतौ, निरोद्धरि युधिष्ठिरे । तदा तौ परितस्तस्थुः, कुमाराः प्रेक्षकाः परे ॥ १८० ॥ मर्मप्रहारनिर्मुक्त-मनलंकृतरम्ययोः । नियुद्धमेतयोरासी-दशिक्षितमनोहरम् ॥ १८१ ॥ तयोर्द्वयोरपि ख्यात-बलिभ्योऽपि बलिष्ठयोः । प्रावर्ततौत्तराधर्य-परावृत्तिः

क्षणे क्षणे ॥ १८२ ॥ दिनेन्दु-दिननाथाभै-स्तयोर्जयपराजयौ । दुःशासना-र्जुनादीना-मकथ्येतां मुखैस्तदा ॥ १८३ ॥ नियुध्यमानो वज्राङ्गः, क्रीडयाऽपि वृकोदरः । क्रमादुर्योधनं दूरा-न्निन्ये निःसहदेहताम् ॥१८४॥ चिरादभ्रं बिभ्राणः, पराजयपराभवम् । श्यामास्यः प्रययौ बन्धु-मध्यादुर्योधनः शनैः ॥ १८५ ॥

तथैवावस्थितं रङ्गे, भीममेत्य युधिष्ठिरः । रजोऽवगुण्डितं प्रेम्णा, प्रममार्ज स्ववाससा ॥ १८६ ॥ बन्धोर्नियुद्धखिन्नस्य, वपुर्विपुलमंसलम् । स्नेहात् संवाहयामास, मृदुपाणिर्धनंजयः ॥१८७॥ नकुलः सहदेवश्च, प्रमोदादभितः स्थितौ । स्वाञ्चलव्यजनैर्भीमं, वीजयांचक्रतुश्चिरम् ॥ १८८ ॥

दुर्योधनो रहःस्थाने, स्थित्वा चक्रे जडोचितान् । निजाशयप्रमाणेन, विकल्पानञ्जनालवत् ॥ १८९ ॥ अर्धराज्यहरो योऽपि, सोऽपि वध्यो महौजसाम् । किं पुनर्ब्रूमहे तस्य ?, सर्वराज्यहरो हि यः ॥ १९० ॥ ततः सर्वप्रकारेण, मम वध्यो युधिष्ठिरः । "उदीयमानोऽप्युच्छेद्यो, विरोधी व्याधिवद्बुधैः" ॥१९१॥ किं त्वसाध्यः परीतोऽयं, भीमेन विजयेन च । भूपाल इव संपन्नो, विक्रमेण नयेन च ॥१९२॥ ततो भीमा-र्जुनावेव, पुरस्ताद्वधमर्हतः । यौ दुर्वारमहावीर्या-वजाता[3]रेर्भुजाविव ॥ १९३ ॥ तत्रापि प्रथमं निर्भी-र्भीमो निःसीमविक्रमः । कीनाश[4]पुरवास्तव्यः, कर्तव्यः प्रसभं[5] मया ॥ १९४ ॥ व्यापादिते मयाऽमुष्मिन्, युधिष्ठिर-किरीटिनौ । भवितारौ हठात् कृष्ट-स्तम्भप्रासाददुर्बलौ ॥१९५॥ तदा नियुद्धसंबद्ध-रजःपरिचयादिव । मलीमसामिमां सन्धां, चक्रे दुर्योधनो रहः ॥ १९६ ॥ ततश्छिद्राणि दुष्टात्मा, भीमस्य स्वच्छचेतसः । नित्य-

१ "दिनेश-दिनचन्द्राभैः" इति प्रतिद्वयपाठः । २ प्रभूतम् । ३ युधिष्ठिरस्य । ४ कीनाशः-यमः । ५ बलात् ।

मन्त्रेषयामास, स नटः कूटनाटके ॥ १९७ ॥ परं विविधकेलीभि-र्गङ्गायाः कूलपालिषु । समं सर्वैः कुमारैस्तैः, सोऽपि चिक्रीड
सर्वदा ॥ १९८ ॥ कुमारान् क्रीडतस्तत्र, विदित्वा सुतवत्सलः । भूपतिः [1]कायमानानि, कमनीयान्यकारयत् ॥ १९९ ॥ क्रीडा-
शौण्डतया तेषु, भुक्तिं सुप्तिं च ते व्यधुः । सर्वदाऽप्यधिकः किं तु, भीमोऽभूद्भोजनादिभिः ॥ २०० ॥

कूले परेद्युर्गङ्गायाः, सौगन्धिकसुगन्धिनि । सुष्वाप सिकतातल्पे, केलिश्रान्तो वृकोदरः ॥ २०१ ॥ आहारं मधुरं स्निग्धं,
तस्य भुक्तवतस्तदा । बभूव सुखनिद्राऽपि, दीर्घनिद्राविजित्वरी ॥ २०२ ॥ इदमन्तरमासाद्य, दुष्टबुद्धिः सुयोधनः । भीमं
बद्ध्वा लतापाशैः, प्रचिक्षेप छलाज्जले ॥ २०३ ॥ लतापाशान् विसच्छेदं, [2]छेकश्छित्त्वा वृकोदरः । स्नात्वा क्षणेन गङ्गायाः,
करीन्द्र इव निर्ययौ ॥ २०४ ॥ निद्रायमाणमन्येद्यु-स्तं तथैवाङ्गमर्मसु । धार्तराष्ट्रोऽतिधृष्टात्मा, [3]दन्दशूकैरदंशयत् ॥ २०५ ॥
सकोपाः सफणाटोपा, दंष्ट्रया गरलोग्रया । तीक्ष्णाग्रया दशन्तोऽपि, बिभिदुस्ते न तत्त्वचम् ॥ २०६ ॥ क्रमाज्जागरितो निर्भी-
र्भीमस्तानवहेलया । दूरेणापोह्यन्नागा-ञ्शिशुनागानिव क्षणात् ॥ २०७ ॥ ततः सुयोधनो दौष्ट्या-द्भीमे भोक्तुमुपस्थिते ।
अज्ञातमशनस्यान्त-र्विषमं विषमक्षिपत् ॥ २०८ ॥ सद्यः प्राणहरे तस्मिन्, दत्ते भीमं सुयोधनः । कृतान्तदन्तयन्त्रान्त-र्गत-
वन्नममन्यत ॥ २०९ ॥ प्रत्युतोर्जितमातेने, तेन भीमस्य तत्क्षणात् । "पुंसां जाग्रत्सु भाग्येषु, विपत्तिरपि संपदे" ॥२१०॥
क्रीडामात्रमिदं सर्व-मेतस्येति विचिन्तयन् । भीमो न कोपमलिनं, मनश्चक्रे मनागपि ॥ २११ ॥ धृतराष्ट्रतनूजास्तु, निष्फ-
लारम्भदुःस्थिताः । तेजोभिः पाण्डुपुत्राणां, दन्दह्यन्ते स केवलम् ॥ २१२ ॥

१ तृणगृहाणि । २ चतुरः । ३ सर्पैः ।

विदित्वा विदुरस्तेषा–मेनमुच्छृङ्खलं कलिम् । विजने भीष्ममुख्यानां, पुरस्तादिदमभ्यधात् ॥ २१३ ॥ अमी वर्महराः सर्वे, प्रतिभोत्कर्षशालिनः । कुमाराः समजायन्त, तन्नोपेक्षितुमर्हथ ॥ २१४ ॥ कलाकलापोपनिष–न्निषण्णमनसो यथा । एते भवन्त्युपाध्यायात्, प्रयतध्वं तथाऽधुना ॥ २१५ ॥ अस्त्वेषां कः कलाचार्यः, सर्वविद्याब्धिपारगः । साकाङ्क्षमिति पृष्टस्तै–राचष्ट विदुरः पुनः ॥ २१६ ॥ अत्रैवास्ति कृपो नाम, कलाचार्यः प्रसिद्धिभाक् । देवस्य शान्तनोर्नित्यं, यत्रासीत् पुत्रवासना ॥ २१७ ॥ स वः प्रार्थनया विद्वा–नेतानध्यापयिष्यति । लभ्यतेऽयमुपाध्यायः, पुण्यैरत्यन्तपीवरैः ॥२१८॥ तत्समाकर्ण्य गाङ्गेयः, कुमारान्निखिलानपि । समाकार्य कृपाचार्य–मध्यापयितुमार्पयत् ॥ २१९ ॥ अध्यगीषत ते शास्त्रं, शब्दपारायणादिकम् । ततः प्रारेभिरेऽध्येतुं, धनुर्वेदमनिर्विदः ॥२२०॥ लघुसंधान–विच्छेद–प्रहारच्छेकबाहवः । तेषामभूवन् भूयांसः, शस्त्रैः[1] सब्रह्मचारिणः ॥ २२१ ॥

इतोऽभूत् तत्र वास्तव्यः, सधर्मा[2] विश्वकर्मणः । पुमानतिरथिर्नाम, सदाचारैकमन्दिरम् ॥२२२॥ विधोरिवानुराधाऽभूत्, तस्य राधा सधर्मिणी । कदाचिदपि या नैव, ज्येष्ठोपास्तिमपास्थत ॥२२३॥ तयोः कर्ण इति ख्यातः, सुतः सत्त्वैकभूरभूत् । यत्रौदार्यं च शौर्यं च, द्वयं निःसीमतां गतम् ॥ २२४ ॥ पङ्कोपमे कुले तस्मिन्, परां वृद्धिमुपेयुषः । नलिनस्येव तस्यासीत्, उत्तमैरेव संगतिः ॥ २२५ ॥ कलाकूपारपाराय[3], स्पृहयालुरहर्निशम् । स शिक्षां शस्त्र–शास्त्राणा–मियेष गुरुसंनिधौ ॥ २२६ ॥ प्रणिपत्य कृपाचार्य–मेत्य सोऽपि खलूरिकाम्[4] । कुमारैः सममाधत्त, शस्त्रश्रममनारतम् ॥ २२७ ॥ कृपाचार्योपदेशाख्य–

१ शस्त्रैः सदृशाः । २ सदृशः । ३ कलासमुद्रपारगमनाय । ( ४ शस्त्राभ्यासभूमिम् । )

पाण्डव-कौरवाणां बालक्रीडा। तेषां कलाभ्यासः ॥

म्यातिवर्पस्य सर्वतः । तेषु कर्ण–किरीटिभ्यां, मुक्ताशुक्तिपुटायितम् ॥२२८॥ आत्तेऽपि विद्यासर्वस्वे, कृपाचार्यात् समंततः ।
किरीटि–कर्णयोः प्रज्ञा, मनागपि न तृप्यति ॥ २२९ ॥ क्रीडाजुषां कुमाराणां, पुरीपरिसरेऽन्यदा । तदीयाघातभीत्येव,
कूपान्तः कन्दुकोऽपतत् ॥ २३० ॥ विदधुर्विविधोपायान्, कन्दुकाकर्षणं प्रति । परां क्लान्तिं कुमारास्ते, वृथारम्भास्तु
लेभिरे ॥ २३१ ॥
तेष्वेवं क्लिश्यमानेषु, वर्षीयान् पथिको द्विजः । विप्रेण सममेकेन, यूना कश्चिदुपागमत् ॥२३२॥ ततो जगदिरे तेन, कुमा-
राम्ते द्विजन्मना । एतस्य कन्दुकस्यार्थे, कथं ताम्यत (थ) पुत्रकाः ! ? ॥२३३॥ इयं वो मधुरा मूर्ति–रियं वः स्फूर्तिरुत्तरा ।
इयं वश्चातुरी चापे, किणसंचयसूचिता ॥२३४॥ तदल्पीयसि कार्येऽस्मिन्, किमारम्भोऽयमीदृशः ? । "करप्राप्ये फले को हि,
समारोहति भूरुहम् ? " ॥२३५॥ तदेषोऽहमिदानीं वः, करिष्यामि समीहितम् । इत्युक्त्वाऽदर्शयत् तेषा–मिषीकाः[2] करवर्तिनीः
॥ २३६ ॥ मयाऽभिमन्त्रिता ह्येताः, समानेष्यन्ति कन्दुकम् । इत्याख्यायाक्षिपत् तासा–मेकां विप्रोऽनुकन्दुकम् ॥ २३७ ॥
बिभेद कन्दुकं सद्यः, सा च नाराचलीलया । "सुहस्तहस्तमुक्तानि, बाणायन्ते तृणान्यपि" ॥२३८॥ अन्ते तामन्ययाऽविध्यत्,
तामप्यपरया तथा । एवं परम्परायोगा–दुपादत्त स कन्दुकम् ॥ २३९ ॥ भुवनाद्भुतभूतेन, कर्मणा तेन विस्मिताः । प्रणम्य
बद्धाञ्जलयः, कुमारास्तं व्यजिज्ञपन् ॥ २४० ॥ आर्येक्षांचक्रिरेऽस्माभि–श्चापाचार्याः सहस्रशः । परं नृलोके नालोकि, कस्यापि
प्रौढिरीदृशी ॥२४१॥ गुरुर्वा त्वं पिता वा त्व–मस्माकमसि संप्रति । एते स्मः किंकराः सर्वे, ब्रूहि किं करवाम ते ? ॥२४२॥

---

१ अनिरुद्धः । २ शरशलाकाः ।

कुरुवंशे ध्वजायध्व-मध्वनीनाः[2] सदध्वनि । इत्याश्वास्य द्विजः सर्वान्, प्रसन्नांस्तानवोचत ॥२४३॥ अध्वश्रमाविलं[3] दूर-मनेन विनयेन वः । मनो मे कतकेनेव, वारि निन्ये प्रसन्नताम् ॥ २४४ ॥ दर्शयध्वमुपाध्यायं, ममेदानीं तमात्मनः । ननु युष्माकमातिथ्यं, भवतादिदमेव मे ॥ २४५ ॥ स हि युष्मदुपाध्यायः, कृपाख्यः स्वजनो मम । तस्यान्तेवासिनो युष्मान्, दृष्ट्वा हृष्टोऽस्मि संप्रति ॥ २४६ ॥ इत्युक्तैर्मण्डलीभूय, सर्वैस्तैः परिवारितः । पार्थदत्तभुजालम्बः, प्रविवेश द्विजः पुरे ॥ २४७ ॥

गृहाभिमुखमायान्तं, तमालोक्य गुणालयम् । प्रत्युज्जगाम रोमाञ्च-संवर्मितवपुः कृपः ॥ २४८ ॥ स्वच्छन्दनिर्यदानन्द-बाष्पवीचिविलोचनः । पञ्चाङ्गालिङ्गितक्षोणि-र्नमस्यति[4] च तं कृपः ॥ २४९ ॥ कृपं दृशा पिबन् सोऽपि, प्रसारितभुजद्वयः । तथाऽऽलिङ्गद्यथा जातौ, तावेकवपुषाविव ॥ २५० ॥ कृपः सिंहासने भक्त्या, निवेश्य तमभाषत । अद्येदं मन्दिरं पूतं, यदाक्रान्तं भवत्क्रमैः ॥ २५१ ॥ संवत्सरे समग्रेऽपि, वासरोऽयं सुवासरः । अवतारः सरस्वत्या-स्त्वं यत्रातिथिरागतः ॥ २५२ ॥ अनमस्यत् कृपाचार्य-मादरेण द्विजो युवा । अभ्यनन्दत् तमाशीर्भिः, सोऽपि स्वजनवत्सलः ॥ २५३ ॥ कोऽयं महात्मा ? यस्येत्थं, कुरुध्वे पर्युपासनाम् । इति राजसुतैः पृष्टः, कृपः पुनरवोचत ॥ २५४ ॥

वत्साः ! सोऽयं गुरुर्द्रोणः, कलानां कुलमन्दिरम् । अयमेव रहस्यज्ञो, धनुःपारायणे पुनः ॥ २५५ ॥ प्रख्यातः सूनुरस्याय-मश्वत्थामेति नामतः । न परं पितरं मूर्त्या, योऽनुचक्रे गुणैरपि ॥ २५६ ॥ इत्याख्याय विसृष्टेषु, कुमारेषु मुदा

१ ' ध्वजायिध्व० ' ' ध्वजायित्व० ' इति प्रतिद्वयपाठो न सम्यक् प्रतिभाति । २ पान्थाः । ३ मार्गश्रमेण मलिनं-व्याकुलं मे मनः । ४ ' नमस्यामास तं ' प्रतिद्वय० ।

कृपः । द्रोणाचार्याय विदधा–वातिथ्यमतिथिप्रियः ॥ २५७ ॥ प्रसन्नमन्यदा द्रोणं, व्याजहार रहः कृपः । प्रणयात् प्रार्थये किंचि–न्नान्यथा कर्तुमर्हसि ॥२५८॥ चापाचार्यस्त्वदन्योऽस्ति, यथा न भुवनत्रये । तथाऽमीभ्यः कुमारेभ्यो, नास्ति गम्रनिभः परः ॥ २५९ ॥ व्याकुरुष्व तदेतेभ्य–श्चापोपनिषदं निजाम् । स्थानन्यासेन विद्याया–स्त्रैलोक्यप्रथितो भव ॥२६०॥ शालिर्बीजं च विद्यां च, वप्तुकामैर्मनीषिभिः । सुक्षेत्रं च सुपात्रं च, विना पुण्यैर्न लभ्यते ॥ २६१ ॥ एतावद्भिर्दिनैरेते, मिचितमनिन्नकर्मणाम् । मया त्वदुपदेशाना–मुपानीयन्त योग्यताम् ॥ २६२ ॥

तथेत्यङ्गीकृते तेन, गत्वा भीष्मान्तिकं कृपः । सर्वमावेदयामास, द्रोणवृत्तान्तमादितः ॥ २६३ ॥ द्रोणाचार्यमथाकार्य, सत्कृत्य कनकोत्करैः । अर्पयामास गाङ्गेयः, पौत्रान् ग्राहयितुं कलाः ॥ २६४ ॥ तदा वैकटिकस्येव, माणिक्येषु गुज्जातिषु । संस्कारस्तेषु सर्वेषु, दिदीपे सुतरां गुरोः ॥२६५॥ संयोगो गुरुशिष्याणा–मन्योन्यं प्रीतिशालिनाम् । तेषामत्यद्भुतः सोऽभू–दिन्दुकैरवयोगवत् ॥ २६६ ॥ वृष्टिं मेघ इवाचार्यः, शिक्षां समतया ददौ । सा त्वाधारवशादध्रे, परिणामं पृथक् पृथक् ॥२६७॥ उपदिष्टं धनुर्वेदं, सर्वं वेत्ति स्म फाल्गुनः । विवेदानुपदिष्टं तु, स्वयं शुश्रूषणं गुरोः ॥२६८॥ धनंजयस्य गुर्वङ्ग–संवाहनभवश्रमः । महान्तमपि हन्ति स्म, शस्त्राभ्यासपरिश्रमम् ॥ २६९ ॥ सुधास्वादु गुरोः पाद–पयः पीत्वा रजस्वलम् । निद्रां कपिध्वजश्चक्रे, चित्रं प्रज्ञामनाविलाम् ॥२७०॥ विनयं कुर्वताऽत्यर्थ–मर्जुनेन विशेषतः । सर्वशिष्यप्रियस्यापि, गुरोरावर्जितं मनः ॥२७१॥ गुरुभक्तिसुधासेक–संपत्त्या सितवाजिनः । शिक्षावल्लिः फलस्फाति–माततानातिशायिनीम् ॥ २७२ ॥

१ मणिपरीक्षकस्य । २ अर्जुनः ।

सर्वातिशायिसद्बोध-मकरन्दकरम्बिते । शिष्यप्रसूनपुञ्जेऽस्मि-न्नर्जुनेनाम्बुजायितम् ॥ २७३ ॥ लक्ष्ये स्थिरे चले दूरे-ऽनपराद्धेपुमर्जुनम् । पश्यञ्जज्ञे सकर्णोऽपि, कर्णो मनसि मत्सरी ॥२७४॥ असौ साधारणः पन्थाः, पुत्रो भवति यत् प्रियः । गुणैर्गुरोस्ततोऽप्यागात्, प्रियतामर्जुनः पुनः ॥२७५॥ अवोचदेकदाऽऽचार्यो, विनयावर्जितोऽर्जुनम् । कर्तास्मि त्वां गुणैरेभिर्जगत्येकधनुर्धरम् ॥ २७६ ॥ प्रसादः स गुरोस्तच्च, चापचातुर्यमद्भुतम् । पार्थस्येदं द्वयं बाढं, बाधते स्म सुयोधनम् ॥ २७७ ॥ ॥ सद्गुणैः पाण्डवैः सार्ध-मुच्छलन्मत्सरौ तदा । कर्ण-दुर्योधनौ मैत्री-मन्वभूतां परस्परम् ॥ २७८ ॥

अनध्यायदिने क्वापि, गोधाधारी[1] धनुर्धरः । वने पुष्पकरण्डाख्ये, किरीटी क्रीडितुं ययौ ॥२७९॥ अपश्यत् तत्र तूणीवत्, पूर्णास्यमफलैः शरैः । सारमेयममेयान्त-र्विस्मयः कंचिदर्जुनः ॥२८०॥ अभूत् तस्य मनस्येवं, तं वीक्षितवनस्तदा । अस्ति क्वापि प्रदेशेऽस्मिन्, धुर्यः कश्चिद्धनुष्मताम् ॥२८१॥ अथासावग्रतो गच्छन्, योग्या[2]निरतमुन्नतम् । एकं पुमांसमद्राक्षी-ल्लक्ष्यभेदैककोविदम् ॥२८२॥ संधाना-ऽऽदान-मोक्षेषु, तस्य संप्रेक्ष्य लाघवम् । पार्थस्त विस्मितोऽपृच्छत्, कोऽसि त्वं ? कश्च ते गुरुः ? ॥ २८३ ॥ सोऽवदद्भद्र ! पल्लीन्दो-र्हिरण्यधनुषः सुतः । एकलव्याभिधानोऽस्मि, पुलिन्दकुलसंभवः ॥२८४॥ शस्त्रतत्त्वाम्बुधिद्रोणी, द्रोणाचार्यश्च मे गुरुः । श्रूयते धन्विनां धुर्यः, शिष्यो यस्य धनंजयः ॥२८५॥ प्रत्यावृत्तस्ततः पार्थो, निच्छायवदनः पथि । आगच्छन्नुच्छलन्मन्यु-र्मनस्येवमचिन्तयत् ॥२८६॥ कुन्दे-न्दुधवलैरेप, मां पराजयते गुणैः । शङ्के शिष्यप्रसादोऽपि, चक्रेऽस्य गुरुणाऽधिकः ॥२८७॥ इति चिन्तामपीलेप-श्यामलः साश्रुलोचनः । पार्थो व्यर्थश्रमंमन्यो, गुर्वन्तिकमुपाययौ ॥२८८॥

द्रोणपार्श्वे कुमाराणां कलाभ्यासः । अर्जुनपुलिन्दयोः समागमः ॥

१ हस्तबन्धनचर्मपट्टकधारी । २ योग्यायां-शस्त्राभ्यासे निरतं-तत्परम् ।

॥ ४५ ॥

अथोन्नमय्य चिबुकं, तं स्नेहाद्गुरुरब्रवीत्। दिनेन्दुवत् कथं वत्स!, वहसि म्लानमाननम्? ॥२८९॥ कृतान्तः कुपितस्तस्य, तस्य संनिहितोऽशनिः। साक्षेपस्तक्षकस्तस्य, निकारं ते चकार यः ॥२९०॥ यथार्थमवदत् पार्थः, कः प्रभो! न्यक्करोति माम्?। "किं केशरिकिशोरोऽपि, केनचित् परिभूयते?"। ॥२९१॥ किं त्वाश्लिष्य पुरा प्रोक्त-स्त्वयाऽहं वत्स! ते समः। मम शिक्षामधीयानो, न धन्वी भविता परः ॥२९२॥ इति प्राक् सुकृताऽऽसाद्यात्, प्रसादाद्यदुदीरितम्। वचस्तत् ते भवन्मिथ्या, मथ्नाति मम मानसम् ॥२९३॥ यत् ते शिक्षाग्रणीरेको, मयाऽद्य ददृशे वने। अहं प्रभो! पुरस्तस्य, कलां नाप्नोमि षोडशीम् ॥२९४॥ उज्जगार गुरुर्वत्स!, शिष्यो मे नास्ति कश्चन। यस्त्वया हन्त तुल्योऽपि, त्वदाधिक्ये तु का कथा? ॥ २९५ ॥ एवं वादिनमाचार्य-मर्जुनो विनयान्वितः। एतं वो दर्शयामीति, वदन् निन्ये तदन्तिके ॥२९६॥ पादपान्तरितो भूत्वा, तत्तादृक् तस्य लाघवम्। गुरुः प्रथममालोक्य, जगाम पुरतस्ततः ॥२९७॥ आयान्तमेकलव्योऽपि, द्रोणमुद्वीक्ष्य दूरतः। आगत्य भूमिलुठन्-न्यपतन् तस्य पादयोः ॥२९८॥ ज्याकठोरप्रकोष्ठाङ्कं, प्रशान्तं ब्रह्मचारिणम्। चिरं संभावयामास, द्रोणस्तं सान्द्रया दृशा ॥२९९॥ अब्रवीच्च कुतो वत्स!, सैष शिक्षाक्रमस्तव?। न हीदृशममाम्नायं, भवेत् कार्मुककौशलम् ॥३००॥ विहस्य गुरवेऽशंस-देकलव्यः कृताञ्जलिः। विदांकुरुत मे विद्यां, द्रोणाचार्याज्जगद्गुरोः ॥३०१॥ नासौ विद्योपदेशस्ते, मत्तः किं भाषसे मृषा?। यथार्थं भद्र! जल्पेति, गुरुस्तं भृशमभ्यधात् ॥ ३०२ ॥

एवमुक्तो विनीतात्मा, पल्लीपतितनूरुहः। मृण्मयं दर्शयामास, स द्रोणं द्रोण-पार्थयोः ॥ ३०३ ॥ पार्थः पृथुलवे-

१ अपमानम्। २ मदभ्यासं विना।

दिस्थां, चम्पकैरर्चितार्चनाम् । तां गुरोः प्रतिमां वीक्ष्य, वन्दते स्म मुहुर्मुदा ॥ २०४॥ एकलव्यं च पप्रच्छ, भ्रातरावेद्यतां मम । आजगाम गुरुर्द्रोणः, कुत्र ते नेत्रपात्रताम् ? ॥२०५॥ सोऽप्यस्मै कथयामास, महाभाग ! मयैकदा । गुरुरभ्यर्थित-श्राप-शिक्षाहेतो रहःस्थितः ॥२०६॥ तदा विनयनम्रोऽपि, योग्योऽयोग्योऽप्यहं सखे ! । हेतोः कुतोऽपि गुरुणा, सर्वथाऽपि निराकृतः ॥ २०७ ॥ गुरुपादाः प्रसादाय, [1]ध्यानाध्यक्षीकृता अपि । भवन्त्येवेति निश्चित्य, प्रदेशेऽत्र समागमम् ॥ २०८ ॥ साक्षादिव गुरु पश्य-न्नभ्यर्च्य प्रतिमामिमाम् । दिवानिशमिषू[2]नस्ये-न्नभ्यासमहमादधे ॥ २०९ ॥ नमोऽस्तु गुरवे तस्मै, प्रसादाद्यस्य पश्यत । मादृशो मलिनात्माऽपि, विधत्ते चापचापलम् ॥ २१० ॥ यो हि स्मरणमात्रेण, हन्ति संतमसं भृशम् । अत्राप्नोतु गुरोस्तस्य, तरणिः करणिं कथम् ? ॥ २११ ॥

इति जल्पन्तमानन्दात्-तं सरोमाञ्चकञ्चुकम् । अतुच्छपार्थवात्सल्य-विवशो गुरुरब्रवीत् ॥२१२॥ पल्लीन्द्रपुत्र ! चेदस्मि, गुरुरङ्गीकृतस्त्वया । तदत्रार्थे कृतार्थेन, दीयतां गुरुदक्षिणा ॥ २१३ ॥ एकलव्यस्तदाकर्ण्य, विकस्वरमुखाम्बुजः । तं बभाषे प्रभो ! ब्रूहि, वस्तु किं तेऽस्तु दक्षिणा ? ॥२१४॥ विभवो वा शिरो वाऽस्तु, मदीयं तव दक्षिणा । एतेनाप्याधमर्ण्यात् ते, न विमुच्येय निश्चितम् ॥ २१५ ॥ इत्युक्तो गुरुरप्यूचे, वाचं निस्त्रिंशतोचिताम् । वामेतरकराङ्गुष्ठो, निर्लूय मम दीयताम् ॥२१६॥ तन्निशम्य प्रसन्नास्यः, कृतार्थमन्यमानसः । सोऽसिधेनुकया छित्त्वा, गुरवेऽङ्गुष्ठमार्पयत् ॥ २१७ ॥ पुष्पवृष्टिः सुरैर्मुक्ता, तस्योपर्यपतत् तदा । [3]गुरुभक्तिद्वितीयेन, कः सत्त्वेन न रज्यते ? ॥२१८॥ द्रोणाचार्योऽपि साश्चर्यः, प्रीतचेतास्त्रपानतः । तमा-

१ ध्यानेन प्रत्यक्षीकृताः । २ क्षिपन् । ३ गुरुभक्तिः द्वितीया यस्मिन् तेन ।

शिष्यास्यधाद्वत्स !, दुष्करं कृतवानसि ॥ ३१९ ॥ अतःप्रभृति कोदण्ड–मङ्गुलीभिरपि स्फुटम् । आकर्षन्नपराद्धेषुः, कदाचिन्न भविष्यसि ॥ ३२० ॥ इति प्रीत्या तमाश्वास्य, व्यावृत्तो वर्त्मनि व्रजन् । गुरुर्धनंजयेनैत–द्विनयादन्वयुज्यत ॥३२१॥ नम्नैः शिष्यगुणैः काम–मुपेतोऽपि प्रभो ! त्वया । असौ गुणैकगृह्येण, कथं न ग्राहितः श्रमम् ? ॥३२२॥ इति पर्यनुयुक्तोऽथ, द्रोणाचार्योऽप्यचीकथत् । शृणु कारणमत्रार्थे, वत्स ! त्वं गुरुवत्सल ! ॥३२३॥ शस्त्रे शास्त्रे च केनापि, मा स्म पार्थोऽतिशय्यताम् । इयं मम प्रतिज्ञाऽस्मि–न्नवज्ञाहेतुतां ययौ ॥३२४॥ यथार्थमिदमासाद्य, गुरोरुत्तरमर्जुनः । मेने प्रत्युपकाराय, प्राणानपि न किंचन ॥ ३२५ ॥

अथागत्य विनीतांस्ता–ञ्शिष्यानध्यापयद्गुरुः । अमुक्ते करमुक्ते च, शस्त्रे तेऽपि व्यधुः श्रमम् ॥ ३२६ ॥ अशिक्षेतां गदायुद्धं, भीम–दुर्योधनौ पुनः । कलापारंगमैर्जातं, कुमारैरखिलैः क्रमात् ॥ ३२७॥ शिखिपिच्छमवस्थाप्य, तालपादपमूर्धनि । द्रोणाचार्योऽथ कोदण्डे, तानारेभे परीक्षितुम् ॥ ३२८ ॥ लक्ष्याभिमुखमालीढं, स्थानमास्थाय तिष्ठत । शरस्तु मद्गिरा मोच्यो, गुरुस्तानित्यशिक्षयत् ॥ ३२९ ॥ मण्डलीकृत्य कोदण्डं, गुर्वादेशानुसारतः । निक्षिप्तचक्षुषो लक्ष्ये, ते तस्थुः स्थिरचेतसः ॥ ३३० ॥ प्रत्येकं तेऽन्वयुज्यन्त, गुरुणा किमु पश्यथ । मां च वृक्षं च लक्ष्यं च, बन्धूनेतांश्च पुत्रकाः ! ॥ ३३१ ॥ तेऽप्यभापन्त पश्याम–स्त्वां चैनं च महीरुहम् । सर्वांश्च बान्धवानेतान्, लक्ष्यं चैतत् पुरःस्थितम् ॥ ३३२ ॥ तेन तद्वचसाऽऽचार्यः, सव्यथोऽन्तरचिन्तयत् । अज्ञात्वरतवदमी, योग्या नोत्तरकर्मणः ॥ ३३३ ॥ अथ पार्थं व्यवस्थाप्य, तथैव गुरुरादि-

१ स्खलितबाणः ।

शत् । प्रेक्षे चन्द्रकमेवाहं, पिच्छेऽस्मिन्निति सोऽवदत् ॥ ३३४ ॥ तामर्जुनगिरं श्रुत्वा, निश्चिन्ये मुदितो गुरुः । राधावेधोपदेशस्य, योग्योऽयमिति चेतसि ॥ ३३५ ॥ अन्यदा स्वर्णदीतोये, मज्जनाय गुरुर्ययौ । कुमारा अपि सर्वेऽपि, सुविनीतास्तमन्वयुः ॥ ३३६ ॥ मज्जन्तमन्तःसलिलं, गम्भीरिमगुरुं गुरुम् । जङ्घाकाण्डेऽथ जग्राह, ग्राहः कश्चिद्दृढग्रहः ॥ ३३७ ॥ स विक्रमकलासारान्, कुमारानखिलानपि । अलंभूष्णुरपि ग्राह-निग्रहाय समादिशत् ॥ ३३८ ॥ अगाधजलदुर्गस्थं, ते च तं हन्तुमक्षमाः । उदासांचक्रिरे सर्वे, गुरोः पार्श्वचराश्चिरम् ॥ ३३९ ॥ अकिंचित्करतां तेषां, विभाव्य गुरुरादरात् । मुखमालोकयामास, प्रह्वबाहोः किरीटिनः ॥३४०॥ गुरुं रक्षन् निजग्राह, ग्राहं पार्थः पतत्रिभिः । "हस्तवांश्च मनस्वी च, किं न कुर्याद्धनुर्धरः ?" ॥ ३४१ ॥ द्रोणाचार्योऽथ पार्थाय, पृथुदोर्वीर्यशालिने । राधावेधोपदेशाख्यं, प्रददौ पारितोपिकम् ॥ ३४२ ॥ प्रदत्तोपनिपत्तेन, भृशं रेजे धनंजयः । वार्धिविश्राणितसुधा-सर्वस्व इव वासवः ॥ ३४३ ॥

आकलय्य कुमारांस्तान्, सर्वविद्यास्वधीतिनः । द्रोणाचार्योऽथ भीष्माद्यै-रुपेतं पाण्डुमभ्यगात् ॥ ३४४ ॥ सत्कृत्य विष्टरेऽभ्यर्णं, स भूपेनोपवेशितः । अभाषत सभां दन्त-ज्योत्स्नाभिः स्नपयन्निव ॥ ३४५ ॥ महाराज ! कुमारास्ते, समस्तेऽप्यस्त्रवर्त्मनि । परमां प्रौढिमारूढाः, परीक्ष्यन्तां ततोऽधुना ॥ ३४६ ॥ अभिनन्द्य गुरुं प्रीत्या, राजा विदुरमादिशत् । पुरीपरिसरे रम्ये, रच्यतां रङ्गभूरिति ॥३४७॥ अपशल्यां समां सौम्यां, भुवमर्णपाथसम् । अदर्शयत् तदोपेत्य, विदुरस्य गुरुस्ततः ॥ ३४८ ॥ तत्राद्वेन गुरुणा, निर्मिते बलिकर्मणि । विदुरोऽपि क्षितीशार्थं, प्रेक्षागारमकारयत् ॥ ३४९ ॥ अवरोध-

१ गङ्गानदीजले । २ समुद्रेण दत्तं सुधासर्वस्वं यस्य सः । ३ 'सज्ज्यतां' प्रतिद्वय० । ४ जलसमीपस्थाम् ।

मधुहेनो-र्वेदिकाश्च गरीयसीः । उर्वीगवर्गयोग्यांश्च, मञ्चानुच्चानचीकरत् ॥ ३५० ॥ दिने गुरुसमादिष्टे, दूताहूता महीभुजः । एत्य मञ्चानलंचक्रु-र्गिरीनिव मृगारयः ॥ ३५१ ॥ महितो धृतराष्ट्रेण, जाह्नवीयेन चान्वितः । प्रेक्षागारमगात् पाण्डुः, पुत्रशिक्षादिदृक्षया ॥ ३५२ ॥ कुन्ती निजतनूजानां, विक्रमालोकनोत्सुका । सत्यवत्यादिभिस्तत्र, समं श्वश्रूभिराययौ ॥ ३५३ ॥ कुमारास्त्रपरीक्षायां, क्ष्माचर-व्योमचारिणाम् । रेजे समाजो निर्व्याज-प्रीतिसंमीलितस्तदा ॥३५४॥ द्रोणाचार्य-कृपाचार्यौ, विविधायुधपाणिभिः । तैरानुपदिकैः सार्धं, रङ्गं प्राविशतां तदा ॥ ३५५ ॥ युधिष्ठिरं तदा भीम-कर्ण-दुर्यो-धना-र्जुनान् । मुक्त्वाऽन्येषां गुरुः प्रादा-दनुज्ञां श्रमदर्शने ॥ ३५६ ॥

केचित् तेषु कुमारेषु, गजा-श्वाद्यधिरोहिणः । कोदण्डे दर्शयामासु-र्निजं शिक्षासु कौशलम् ॥३५७॥ तेषामा बाणसंधाना-छरभेदावधेरपि । एकमेव जनः कालं, कलयामासिवांस्तदा ॥ ३५८ ॥ संचरत्सु यथालक्ष्यं, तद्बाणेषु नभोऽङ्गणे । भयेन संक्रामन्ति स्म, मर्त्यतः प्रेक्षिणो जनाः ॥३५९॥ राजन्य[3]तनयोपज्ञे, लक्ष्यभेदे पदे पदे । साधु साध्विति लोकस्य, कलः कल-कलोऽभवत् ॥ ३६० ॥ स्थिरत्वं सौष्ठवं केचि-ल्लाघवं दृढमुष्टिताम् । आश्रित्य दर्शयामासु-स्ते खड्गादिषु कौशलम् ॥ ३६१ ॥ अमुक्तं यन्त्रमुक्तं च, पाणिमुक्तेऽप्यदर्शयन् । समस्तेऽप्यायुधे केचि-द्गुरुशिक्षां विचक्षणाः ॥ ३६२ ॥

अथोपतस्थे रङ्गान्त-र्गुर्वादिष्टो युधिष्ठिरः । लोकश्च तत्र चिक्षेप, स्रग्दामसदृशो दृशः ॥ ३६३ ॥ एकां लक्ष्ये निचिक्षेप, निजां दृष्टिं मुनिश्चलाम् । तस्मिन् विस्मयनिष्पन्दां, कोटिसंख्यां जनः पुनः ॥३६४॥ असावचिन्त्यमाहात्म्य-प्रह्वीकृत-

१ 'प्रेक्षागेहम्' प्रतिद्व० । २ अन्वागच्छद्भिः । ३ राजपुत्रकृते ।

जगत्रयः । असावशेषशौण्डीर-चूडारत्नमनुत्तरम् ॥ ३६५ ॥ असावनुपमन्याय-पथैकपथिकोत्तमः । असावनन्यसामान्य-सत्य-पूतवचःक्रमः ॥ ३६६ ॥ इत्थं लोककृतां श्लाघां, श्रुत्वाऽतिप्रीतचेतसः । पुण्डरीकोपमाः पाण्डो-र्दृशः पेतुर्युधिष्ठिरे ॥३६७॥ (त्रिभिर्विशेषकम्) रथी सोऽथ रथारूढः, प्रौढविक्रमसंक्रमः । निःशेषं दर्शयामास, शस्त्रकौशलमात्मनः ॥ ३६८ ॥

अथ तौ नित्यसंहृष्टौ[1], दुर्योधन-वृकोदरौ । गदायुद्धाय संनद्धौ, रङ्गोत्सङ्गेऽवतेरतुः ॥ ३६९ ॥ रङ्गेण रङ्गगगने, सूर्याचन्द्रमसाविव । तौ प्रदक्षिणचारीभि-रभितश्चेरतुश्चिरम् ॥ ३७० ॥ तौ विस्मयेन पश्यन्त-स्तदा दिविषदो दिवि । फलमाकलयामासु-र्नेत्रयोर्निर्निमेषयोः ॥३७१॥ दुर्योधने च भीमे च, पक्षपातात् पृथक् पृथक् । एकाऽपि परिषत् तत्र, द्वैधीभावमुपाययौ ॥ ३७२ ॥ धैर्यं दुर्योधनस्याहो !, भीमस्याहो सुसौष्ठवम् । इति लोकप्रशंसाभिः, शब्दाद्वैतं तदाऽभवत् ॥ ३७३ ॥ ततो हृदि स्थितो भीम-प्राणनाशोपदेशकृत् । गुरुर्दुर्योधनस्योच्चै-र्जागरामास मत्सरः ॥ ३७४ ॥ ततो लोचनयोः किंचिद्गान्धारीतनुजन्मनः । क्रोधाश्रेयाश[2]ज्वालेव, प्रादुरास पिशङ्गता ॥ ३७५ ॥ धृतराष्ट्रतनूजस्य, क्रोधान्धस्य शरीरतः । स्वेदबिन्दुव्रजव्याजा-न्निर्ययुर्मत्सरोर्मयः ॥३७६॥ ततो वीक्ष्य तदाकारं, निर्विकल्पमना अपि । विदाञ्चकार परित-स्तदाकूतं वृकोदरः ॥ ३७७ ॥ क्रोधधूम[3]ध्वजस्फूर्ज-द्धूमसंचयसंनिभः । उज्जृम्भते स्म भीमस्य, मूर्ध्नि मूर्धरुहोच्चयः ॥ ३७८ ॥ क्षणाद्दशनभीत्येव, स्फुरति स्मौष्ठपल्लवः । तस्याङ्गान्यपि रोमाञ्च-व्याजात् प्रासान[4]सज्जयन् ॥३७९॥ कोपाटोपादधावेतां, तावुद्दुर्ण[5]गदौ ततः । संहारमारुतोद्धूता-विव विन्ध्य-हिमालयौ ॥ ३८० ॥ संजग्माते न तौ यावत्, प्रहाराय परस्परम् ।

---

१ 'ससृष्टौ' इत्यपि क्वचित् पाठः । २ आश्रयाशः-अग्निः । ३ धूमध्वजः-अग्निः । ४ कुन्तास्त्राणि । ५ उत्क्षिप्तगदौ ।

अमाणिष्ट गुरुस्ताव–दश्वत्थामानमात्मजम् ॥३८१॥ वत्स ! वत्सौ महावीरौ, निवारय जवादिमौ । मा भूत् क्षोभः क्षणादेवं, रङ्गस्यास्य गरीयसः ॥३८२॥ उभावपि ततस्तेन, वारितौ गुरुसूनुना । तावुपाविशतां स्थानं, सार्वहित्यौ निजं निजम् ॥३८३॥

निवार्य तूर्यनिर्घोषं, रोदसीमेदभैरवम् । कोलाहलं च लोकानां, गुरुर्गिरमवोचत ॥ ३८४ ॥ यो मे पुत्रादपि प्रेयान्, प्राणेभ्योऽपि प्रियंकरः । सर्वास्त्राम्भोधिपारीण–स्तं पार्थं पश्यताधुना ॥ ३८५ ॥ आनद्धोभयतूणीरः, करोपहितकार्मुकः । बद्धगोधाङ्गुलित्राणः, कवचच्छन्नविग्रहः ॥ ३८६ ॥ ततो विवेश बीभत्सु–र्गिरान्तःसदसं गुरोः । मध्येसुरपुरं यन्तु–र्यत्नेनेव गुरुद्विपः ॥ ३८७ ॥ ( युग्मम् ) त्रिजगत्येकवीरोऽय–मयमस्त्रविदां वरः । कुरुगोत्रप्रदीपोऽय–मयं भुवनरक्षिता ॥ ३८८ ॥ तेजसामेकधामाय–मयं न्यायनिकेतनम् । कीर्तीनां कुलवेश्माय–मयमुत्साहमन्दिरम् ॥ ३८९ ॥ इत्यानन्दाज्जनैरुक्ताः, भृण्वन्त्याः सर्वतो गिरः । प्रस्रवेण समं कुन्त्याः, पेतुः प्रीत्याऽश्रुविप्रुषः ॥ ३९० ॥ ( त्रिभिर्विशेषकम् ) धृतराष्ट्रस्य पाण्डोश्च, पुलकच्छद्मना बहिः । फाल्गुनं पश्यतोर्जाताः, शुभस्नेहाङ्कुरा इव ॥ ३९१ ॥ दिदृक्षयेव पार्थस्य, लोकवक्त्रेषु राकया । एत्यामावस्यया तस्थे, गान्धारीवदने पुनः ॥ ३९२ ॥ संसंजनोत्थितैस्तैस्तै–रर्जुनस्तुतिघट्टनैः । दिदीपे कोपसप्तार्चिः, सुयोधनशमीतरौ ॥ ३९३ ॥ कर्णस्तु सर्वशस्त्राब्धि–कर्णधारभुजोर्जितः । सार्जुनं तं जनं हन्तु–मियेष प्रस्तुतस्तुतिम् । ॥ ३९४ ॥ कलितोद्दण्डकोदण्ड–मालीढस्थानमास्थितः । किरीटी ददृशे साक्षा–द्धनुर्वेद इवाङ्गवान् ॥ ३९५ ॥ जनस्याभून्मुदा तूर्य–निनादैरभिनन्दितः । ब्रह्माण्डभाण्डभेदीव, कलः कोलाहलो महान् ॥ ३९६ ॥ उपजग्मुषि विश्रान्ति–मथ

१ रजस्यौ । २ अर्जुनः । ३ नियन्तुः । ४ अर्जुनम् । ५ ' सुतस्ने० ' प्रतिद्वय० । ६ संसत्–सभा ।

तस्मिन् कथंचन । अस्त्रकौशलमात्मीयं, दर्शयामास फाल्गुनः ॥ ३९७ ॥ लक्ष्ये चले स्थिरे स्थूले, लघीयसि च लाघवम् । के नाम विस्मयं नापुः, पश्यन्तः सव्यसाचिनः ? ॥ ३९८ ॥ दृढानि दृढमुष्टित्वा–दुर्भेद्यान्यपि भिन्दिना । जिष्णुना वैरिवारस्य, दृढं चेतोऽप्यभिद्यत ॥ ३९९ ॥ तस्मिन् बहूनि चित्राणि, विचित्राणि वितन्वति । चित्रीयन्ते स्म के नाम, न माद्यद्दोर्मदा अपि ? ॥ ४०० ॥ शरग्रहण–संधान–समाकर्षण–मुक्तयः । शतशो लक्ष्यभेदाश्च, तस्यैक्ष्यन्त समं जनैः ॥ ४०१ ॥ न यत्र निपतन्ति स्म, नायना अपि रश्मयः । लक्ष्यं तत्राप्यणीयोऽपि, भिन्दन्ति स्मार्जुनेषवः ॥ ४०२ ॥ चक्रवद्भ्रमतो लोह–वपुषो यन्त्रपोत्रिणः । निचखान मुखे पञ्च, बाणान् युगपदर्जुनः ॥ ४०३ ॥ राधावेधादिकं तत्तत्, पार्थोऽन्यदपि दुष्करम् । करोति स्म यदालोक्य, सुरैरपि विसिष्मिये ॥ ४०४ ॥ चक्र-प्रास-गदा-खड्ग–प्रभृतिष्वपि कौशलम् । शस्त्रेषु श्वेतवाहस्य, निर्वाहमगमत् परम् ॥ ४०५ ॥ क्षणात् प्रांशुः क्षणाद्ध्रस्वः, क्षणाद्भूमौ क्षणाद्दिवि । क्षणात् क्रीडन्नथक्रोडे, तत्र जिष्णुरदृश्यत ॥ ४०६ ॥ मन्त्रास्त्राण्यप्यनुध्यान–मात्रजातोदयानि सः । आग्नेय–वारुणादीनि, कुरुभर्तुरदर्शयत् ॥ ४०७ ॥

ततः समर्थितप्राये, तस्मिन् महति कर्मणि । सभालोके च सर्वस्मि–न्नानन्दमकरन्दिते ॥४०८॥ संवर्त–पुष्करावर्त–निध्वानप्रियबान्धवः । भुजास्फोटध्वनिः कर्ण–स्फोटकृद्भैरवोऽभवत् ॥ ४०९ ॥ ( युग्मम् ) भूभृतः किमु शीर्यन्ते ?, दीर्यते किमु मेदिनी ? । पतन्ति विद्युतः किंस्वित् ?, क्षुभ्यन्ति किमुताब्धयः ? ॥ ४१० ॥ विकल्पजातमित्यन्तः, कुर्वन्नुद्भ्रान्तमानसः । विसंस्थुलं समुत्तस्थौ, सर्वोऽथ स सभाजनः ॥ ४११ ॥ ( युग्मम् ) आवव्रे पञ्चभिर्द्रोणः, पाण्डवैः सायुधैस्तदा । मूर्तिमान्

१ अर्जुनस्य । २ यन्त्रवराहस्य । ३ अर्जुनस्य । ४ उन्नतः ।

परमात्मेव, महाभूतैः शरीरिभिः ॥ ४१२ ॥ अश्वत्थामान्विताः स्थाम–बन्धुरा बान्धवाः शतम् । तारका इव शीतांशुं, परिवव्रुः सुयोधनम् ॥ ४१३ ॥ अमन्दमन्दरक्षुब्ध[1]–क्षुभ्यदम्भोधिभैरवम् । कातरीकृतशौण्डीरं, सिंहनादं समावहन् ॥४१४॥ भुजास्फोटानुसारेण, प्रक्षिप्तनयनाम्बुजैः । विस्मयस्तिमितैस्त्रास–लोलैश्चालोकितो जनैः ॥ ४१५ ॥ भीमाकृतिरतिप्रांशुः, शासि-तूणीर-कार्मुकः । काञ्चनं कवचं बिभ्रत्, सुमेरुरिव जङ्गमः ॥ ४१६ ॥ बीभत्सुं प्रति बीभत्से, क्षिपन् गुञ्जारुणे दृशौ । रङ्गमध्यमथाध्यास्त, कर्णः शौर्यमहार्णवः ॥४१७॥ (चतुर्भिः कलापकम्) ततः कर्णः कृपाचार्यं, द्रोणं च द्रुहिणोपमम्[2] । ननाम नामितारातिर्नीतिप्रह्वान्तराशयः ॥४१८॥ ततः सगर्वं सोऽवोचत्, पार्थ ! माऽनेन कर्मणा । मंस्थाः कर्मठमात्मानं, मामालोकय संप्रति ॥४१९॥ अथ पार्थो यथा यद्यत्, कर्म निर्मितवान् पुरा । कर्णः सातिशयं तत्तत्, प्रथयामासिवांस्तथा ॥४२०॥

ततः सहर्षमुत्थाय, धृतराष्ट्रात्मजाग्रणीः । कर्णं निबिडमालिङ्ग्य, प्रणयादित्यवोचत ॥ ४२१ ॥ कर्ण ! त्वमेकवीरोऽसि, त्वं त्रिलोकीविभूषणम् । त्वं धनुर्वेदविद्यायाः, परां सीमानमीयिवान् ॥४२२॥ त्वमेव वैरिदोर्दर्प–संपदां पश्यतोहरः[3] । त्वमेव कीर्तिनिर्वास–डिण्डिमः सर्वधन्विनाम् ॥ ४२३ ॥ इदं राज्यमिमे प्राणा, इमाः कुरुकुलश्रियः । सर्वं त्वदीयमेवैत–द्ब्रूहि येन प्रयोजनम् ॥ ४२४ ॥ कर्णोऽप्युवाच मेऽस्त्येव, समस्तं सुहृदि त्वयि । प्रार्थये केवलं भूयात्, सौहार्दं ते मयि स्थिरम् ॥ ४२५ ॥ किं तु पार्थस्य दोर्दण्ड–कण्डूतिज्वरितात्मनः । इच्छति द्वन्द्वयुद्धेन, भुजो भिषजितुं मम ॥ ४२६ ॥ गिरमाकर्ण्य कर्णस्य, तामधिक्षेपपांशुलाम्[4] । हुतो वह्निरिव क्रोधा–ज्ज्वलितः फाल्गुनोऽभ्यधात् ॥ ४२७ ॥ कर्ण ! निर्नाम ! निर्मज्जन्,

१ क्षुब्धः–मन्थानः । २ ब्रह्मोपमम् । ३ चौरः । ४ अधिक्षेपेण–तिरस्कारेण पांशुलां–सपापाम् ।

मदीयशरसागरे । अस्रोदकैर्निजस्त्रीणां, दृशः किं प्लावयिष्यसि ? ॥ ४२८ ॥ कर्णस्ततोऽब्रवीत् कोपात्, पार्थ ! केयं बिभीषिका । गृहाणास्त्रं हराम्येष, सर्वं गर्वं तवाधुना ॥ ४२९ ॥ ततो द्रोणाभ्यनुज्ञातः, प्रगृह्य सशरं धनुः । युद्धश्रद्धाय कर्णाय, कपिकेतुरतिष्ठत ॥ ४३० ॥

तयोः समरसंरम्भ-दर्शनोत्सुकचेतसाम् । आसीत् कुसुमितेव द्यौ-र्विमानैस्त्रिदिवौकसाम् ॥ ४३१ ॥ तदीयसमरारम्भ-विलोकनकुतूहली । अनूरुसारथिस्तस्थौ, स्थिरीकृतरथः क्षणम् ॥ ४३२ ॥ तौ प्रजाभिरदृश्येतां, रणायान्योन्यसंमुखौ । विन्ध्याद्रिविपिनोत्सङ्गे, मत्तौ दन्तावलाविव ॥ ४३३ ॥ अभूवन् कर्णतः केचित्, केचिदर्जुनतः पुनः । खेचरामरमर्त्यानां, तदा द्वैधमजायत ॥ ४३४ ॥ पुरः कर्णस्य को जिष्णु-रिति दुर्योधनादयः । कः कर्णोऽग्रेऽर्जुनस्येति, दधुर्भीमादयो मुदम् ॥ ४३५ ॥ कुन्ती तु कुन्तभिन्नेव, तनयस्नेहविक्लवा । मूर्च्छान्धकारविधुरा, पपात जगतीतले ॥ ४३६ ॥ तां तथा विदुरः प्रेक्ष्य, प्रेष्याभिश्चन्दनद्रवैः । क्षणादाश्वासयामास, शीतैश्च व्यजनानिलैः ॥ ४३७ ॥ विषमैव गतिः कामं, समरस्येति कातरम् । पाण्डोर्वदनमालोक्य, राधेयमवदत् कृपः ॥ ४३८ ॥

कुन्तीकुक्षिसरोहंसः, कुरुवंशैकमौक्तिकम् । पाण्डुहेमाद्रिकल्पद्रु-र्बीभत्सुर्विदितोऽस्ति नः ॥ ४३९ ॥ तत्त्वमप्यात्मनो ब्रूहि, मातरं पितरं कुलम् । ताम्यतस्तत्र चेत्राहू, रणाय कपिकेतुना ॥ ४४० ॥ तां कृपस्य कृपाणाग्र-शितामाकर्ण्य भारतीम् । झटित्युत्थाय संरम्भा-दभापत सुयोधनः ॥ ४४१ ॥ किं कुलेन पितृभ्यां वा ?, गौरवं हि गुणैर्नृणाम् । अधिरोहति

१ अर्जुनः । २ सूर्यः । ३ 'नूतनस्ने०' प्रतिद्वय० । ४ कर्णम् । ५ अर्जुनः ।

मूर्धान-मगरिन्दं किमन्वयम् ? ॥ ४४२ ॥ रणः शौण्डीरिमापेक्षः, कुलं न काप्यपेक्षते । शौण्डीरस्तद्बलात् कर्णः, फाल्गुनं योधयिष्यति ॥ ४४३ ॥ किं नाम सोऽपि शौण्डीरः ?, क्षमते यः परानपि । न नाम सहते सिंहो, गर्जाभिः स्फूर्जतो घनान् ॥ ४४४ ॥ अथ जल्पय नाराज्ञा, विधत्ते युद्धमर्जुनः । राज्ये कर्णस्तदङ्गाना-मभिषिक्तो मयाऽधुना ॥ ४४५ ॥ इत्युदीर्य कृपाचार्य—प्रमृतीन् धृतराष्ट्रसूः । कर्णराज्याभिषेकाय, तत्कालमुपचक्रमे ॥ ४४६ ॥

पुरोहितमथाहूय, कर्णं स्वर्णासनस्थितम् । स्वभुक्ते सोऽङ्गसाम्राज्ये-ऽभ्यषिञ्चत् तीर्थवारिभिः ॥४४७॥ निष्कलङ्कमृगाङ्काभं, तस्य च्छत्रमधार्यत । अर्जितं निजदोर्दण्डै-र्यशः स्वमिव पिण्डितम् ॥ ४४८ ॥ प्रकीर्णकानि कर्णस्य, धूयन्ते स्म वधूजनैः । अभिषेक्तुं तमायाता, गङ्गोर्मय इवाम्बरात् ॥ ४४९ ॥ चिरं जयाङ्गराजेति, शब्दोद्गारपुरःसरम् । तस्य भोगावलीं पेठु—र्वै-न्दिनो विश्वनन्दिनः ॥ ४५० ॥ कर्णः प्रत्युपकाराय, ययाचेऽथ सुयोधनम् । स्थेमानमर्थयांचक्रे, सोऽपि सौहार्दसंपदः ॥ ४५१ ॥ सौहार्दं हि कियन्मात्रं ?, प्राणा अपि तवैव मे । इत्युक्तवन्तं राधेयं, मुदाऽश्लिष्यत् सुयोधनः ॥ ४५२ ॥ ततः प्राप्ताङ्गसाम्राज्यः, पुनरादाय कार्मुकम् । रणारम्भाय राधेयो, दूरादाह्वास्त फाल्गुनम् ॥ ४५३ ॥

साम्राज्यमङ्गदेशाना-मुपश्रुत्यात्मजन्मनः । सारदानन्दसंदोह-विसंस्थुलपदक्रमः ॥४५४॥ स्रस्तोत्तरीयसिचयः, प्रफुल्ल-नयनोत्पलः । कर्णस्य जनकोऽभ्यागात्, तत्रातिरथिसारथिः ॥४५५॥ युग्मम् ॥ कर्णः पितरमालोक्य, दूरादुत्सृज्य कार्मु-कम् । पपात पादयोस्तस्य, "दैवतं हि परं पिता" ॥४५६॥ अङ्गराज्याभिषेकार्द्र-मानन्दाश्रुकणोदकैः । पुनरुक्तं शिरः सोऽपि,

१ चामराणि । २ स्तुतिम् । ३ सुयोधनः ।

तनूजस्याभ्यषिञ्चत ॥ ४५७ ॥ आलिङ्गति स्म सर्वाङ्गं, सुतमुत्थाप्य सारथिः । उन्मीलत्पुलको मूर्ध्नि, भूयो भूयश्चुचुम्ब च ॥४५८॥ विज्ञाय विज्ञतिलक–स्तमित्थं सारथेः सुतम् । कर्णमभ्यर्णमागत्य, वदति स्म वृकोदरः ॥४५९॥ सूतात्मज ! न पार्थेन, कथंचिद्योद्धुमर्हसि । गृह्यतां प्राजनं चाप–मपहाय कुलोचितम् ॥ ४६० ॥ अङ्ग ! त्वमङ्गसाम्राज्य–योग्योऽसि न कथंचन । मृगारातिपदे हन्त, गोमायुः किमु जायते ? ॥ ४६१ ॥ इति व्याहरति स्वैरं, भीमे भीमभुजोर्जिते । आगत्य रभसाद्रात्–मध्याद्दुर्योधनोऽभ्यधात् ॥४६२॥ वीराचारानभिज्ञोऽसि, भीम ! यत् कुलमीक्षसे । चुलुकाचान्तसप्ताब्धेः, कुलं कुम्भोद्भवस्य किम् ? ॥४६३॥ तच्चान्तरं किमप्येतत्, कर्ण इत्युदितं भुवि। दिव्याङ्गलक्षणं सूती, न सूते सुतमीदृशम् ॥४६४॥

अथातिरथिराह स्म, साधु साधु सुयोधन ! । असौ मे नाङ्गजः सूनु–र्यथा प्राप्तस्तथा शृणु ॥४६५॥ त्रिस्रोतःस्रोतसि पुरा, प्रभाते गतवानहम् । अपश्यं रत्नमञ्जूषां, पुण्यलक्ष्मीं निजामिव ॥ ४६६ ॥ गृहे नीत्वा पुरः पत्न्या–स्तामुद्घाट्य तदन्तरे । सकुण्डलं स्फुरत्कान्तिं, वचनागोचरश्रियम् ॥ ४६७ ॥ राजकुञ्जरदर्पोष्म–ध्वंससंभाविताकृतिम् । एकमालोकयं बालं, सिंहार्भकमिवोद्भटम् ॥ ४६८ ॥ ( युग्मम् ) तमालोक्य कृतालोकं, पत्नीं राधामथाभ्यधाम् । अनपत्या प्रिये ! संप्रत्यनेन भव पुत्रिणी ॥ ४६९ ॥ इत्युक्ता साऽपि मामाह, प्राणेश ! घुसृणारुणे । जाते प्राच्या दिशो वक्त्रे, स्वप्नोऽद्य ददृशे मया ॥४७०॥ जानामि भानुमानेत्य, सप्रसादं जगाद माम् । वत्से ! संपत्स्यते तेऽद्य, शौण्डीरतिलकः सुतः ॥ ४७१ ॥ तं दृष्ट्वा दधती हर्ष–मुज्जागरमजागरम् । तदैव च त्वयाऽनेन, दिष्ट्या पुत्रेण वर्धिता ॥ ४७२ ॥ इत्याख्याते शुभे स्वप्ने, प्रियायाः

१ अश्वनोदनयष्टिः । २ अगस्त्यमुनेः । ३ सारथिभार्या । ४ कृतप्रकाशम् । ५ कुङ्कुमारुणे ।

कुमाराणां कला-परीक्षा । कर्णस्य वृत्तान्तः ॥

पुलकस्पृश: । मञ्जूपातः ममाकृष्य, तमङ्के बालमक्षिपम् ॥ ४७३ ॥ कर्णस्याधः करं कृत्वा, सुतः प्राप्तोऽयमित्यसौ । प्रापितः कर्ण इत्याख्यां, तनयः सुदिने मया ॥ ४७४ ॥ स्वप्ने रविवितीर्णत्वा–दपरं रविभूरिति । अस्योद्यद्भागधेयस्य, नामधेयमजायत ॥ ४७५ ॥ भवन्ति स्म गुणा बाल्या–दस्मिन्नसमकुलातिगाः । पङ्के पङ्केरुहो वृद्धिः, सौरभं तु स्वतोभवम् ॥ ४७६ ॥ असौ गजकुले क्वापि, लब्धजन्मा न संशयः । इति कुन्दोज्ज्वलैरस्य, गुणैरनुमितं मया ॥ ४७७ ॥ असौ मद्वंशजत्वेन, यन्निक्षिप्यते मुहुः । काकोलकुलजत्वेऽपि, कुत्सनं कोकिलस्य तत् ॥ ४७८ ॥

इमामाकर्ण्य कर्णस्य, कथामतिरथेर्मुखात् । दधुः सभासदः सर्वे, विस्मयस्तिमितं मनः ॥ ४७९ ॥ कुन्ती तु चिन्तयामास, दिष्ट्या जीवति मे सुतः । नेत्रयोश्चिररात्राय, ममाभूत् पारणाविधिः ॥ ४८० ॥ सैवेयं यन्मणिस्तोम–मण्डिता कुण्डलद्वयी । अहमेकैव धन्याऽस्मि, यस्याः कर्णा–र्जुनौ सुतौ ॥४८१॥ कोऽन्यः स्पर्धेत पार्थेन ?, यो हि न स्यात् सहोदरः । अमृतेनामृतामीशु–रेव स्पर्धितुमर्हति ॥ ४८२ ॥ कर्णो वः सोदरो बन्धु–रिति संबन्धमादितः । समये धर्मजादीनां, ज्ञापयिष्यामि जातुचित् ॥ ४८३ ॥ एवं विकल्पकल्लोलैः, कुन्त्यामाक्रान्तचेतसि । सभायां भुजमुत्क्षिप्य, क्रुधा दुर्योधनोऽभ्यधात् ॥ ४८४ ॥ अभिषिक्तोऽयमङ्गेषु, यादृशस्तादृशो मया । नाभीष्टो यस्य कस्यापि, स नामयतु कार्मुकम् ॥ ४८५ ॥ तामाकर्ण्य गिरं पाण्डु–सूनुषु ज्वलितात्मसु । भयोद्भ्रान्तस्य लोकस्य, जज्ञे कोलाहलो महान् ॥४८६॥ पाण्डुर्द्रोणमभाषिष्ट,

१ 'पान्तः' प्रतिद्वय० । २ काकोलः–द्रोणकाकः–काकजातिविशेषः इत्यर्थः । ३ चिरकालेन । ४ चन्द्रः । ५ 'भीष्टं' प्रतिद्वय० ।

दृष्ट्वा तदसमञ्जसम् । प्रचण्डः पुत्रभाण्डाना-मकाले कलहः किमु ? ॥ ४८७ ॥ एषामस्माभिरास्त्रि, कलामात्रपरीक्षणम् । कुमाराणां विरोधोऽयं, तदाचार्य ! निवार्यताम् ॥ ४८८ ॥ मिथो विरोधं बन्धूना-मवेक्षितुमिवाक्षमः । तदानीं च पतिर्भा-सा-मस्तगह्वरमाविशत् ॥ ४८९ ॥ अथोत्क्षिप्य भुजं द्रोणः, पाण्डवान् कौरवानपि । सिंहपोतानिवान्योन्यं, युध्यमाना-न्यवारयत् ॥४९०॥ भुजोत्कर्षाच्च बीभत्सोः, कुमाराणां च मत्सरात् । आनन्दश्च विषादश्च, समं पाण्डोरभूद्द्वयम् ॥४९१॥ धृतराष्ट्र-कृप-द्रोण-गाङ्गेयादिभिरन्वितः । विसृज्य संसदं पाण्डु-र्निजमन्दिरमासदत् ॥ ४९२ ॥ कृतकर्णस्तुतिः कश्चित्, कश्चित् पार्थस्तवोल्बणः । कश्चिद्दुर्योधनस्तोता, जनः स्वं स्वं गृहं ययौ ॥ ४९३ ॥

इतरेतररन्ध्रवीक्षिणस्ते, विनयाच्छादितमत्सराः कुमाराः ।
सकलासु कलासु केलियोग्या, मिलिता एव वितन्वते स्म नित्यम् ॥ ४९४ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये भीम-दुर्योधनादिजन्मकुमारकलारोपणास्त्रदर्शनवर्णनो नाम तृतीयः सर्गः ॥ ३ ॥

# अथ चतुर्थः सर्गः ।

अथान्यदाऽवदातश्रीः, श्रीमान् पीनांसकुट्टिमः । खण्डितारातिदोष्काण्डः, पाण्डुः संसदमासदत् ॥ १ ॥ हिरण्मयमयं मेने, शारदाम्भोधरद्युतिः । भद्रासनं शशिकान्त-सुमेरुशिखरोपमम् ॥२॥ दधार रत्नकेयूरे, स प्रभाऽरुणिताम्बरे । वमन्त्याविव बाहुभ्यां, प्रतापं मूर्त्ततां गतम् ॥ ३ ॥ अरातिकीर्तिसर्वस्व-मावर्त्येव विनिर्मितम् । स बभारोज्ज्वलं हार-मुरःस्थलविलम्बिनम् ॥ ४ ॥ शिरस्युवाह पीनानां, विपक्षमहसामिव । अमान्तमन्तः संदोहं, स रत्नमुकुटच्छलात् ॥ ५ ॥ कपोलदर्पणे द्रष्टु-मात्मीयकमनीयताम् । विकर्तनाविवायातौ, स दधौ स्वर्णकुण्डले ॥ ६ ॥ जयप्रशस्तिमेतस्य, चामरग्राहिणीगणाः । कङ्कणौघरणत्कार-कैतवेन वितेनिरे ॥ ७ ॥ हारयष्टिं महीपृष्ठे, तस्यैव विशदं यशः । पुञ्जयन्तः क्षितीशास्तं, प्रणम्योपाविशन् पुरः ॥ ८ ॥ मणिकोटीरसंक्रान्त-मूर्तिरार्तबान्धवः । उह्यमान इव भ्रेजे, शिरोभिः सोऽवनीश्वरैः ॥ ९ ॥ स्त्यानीभूयं गतैर्मूर्ति-मद्भिः कामरसैरिव । निर्मिताः परितो वार-नार्यस्तं पर्यवृण्वत ॥ १० ॥ गाङ्गेय-धृतराष्ट्रादि-गुरुवर्गोऽपि गौरवात् । अलंचक्रे तदास्थान-मानन्दभरमेदुरः ॥ ११ ॥ यथास्थानमथासीने, सामन्ता-मात्यमण्डले । स्तुवत्सु तद्यशो विश्व-श्रोत्रानन्दिषु वन्दिषु ॥ १२ ॥ पुष्पावचूलरोलम्ब-कदम्बध्वनिडम्बरैः । मुहुर्निह्नूयमानासु, गाथकीकलगीतिषु

१ सूर्यौ । २ कोटीरः-मुकुटः । ३ रोलम्बा-भ्रमराः ।

॥ १३ ॥ नानासूक्तीः कवीन्द्रेषु, रसभङ्गितरङ्गिताः । उद्गिरन्तु जनश्रोत्र–पुटपीयूषवर्षिणीः ॥ १४ ॥ विशारदेषु पुरतो, भरतादिमहीभुजाम् । प्रथयन्तु कथास्तथ्या, नितान्तमघमर्पणी[1]ः ॥ १५ ॥ अभ्येत्य भूमिन्यस्तैक–जानुरानम्य भूपतिम् । मूर्धन्यञ्जलिमाधाय, प्रतीहारो व्यजिज्ञपत् ॥ १६ ॥

देव सेवककल्पद्रो !, द्रुपदस्य महीपतेः । आकारविदिताकूतो, दूतस्ते द्वारि वर्तते ॥ १७ ॥ जाह्नवेय-धृतराष्ट्र–विदुराणामथाशयम् । ज्ञात्वोर्वीपतिरादिक्षत्, तत्प्रवेशाय तं भ्रुवा ॥ १८ ॥ आक्षिप्तचक्षुरालान–लालितैः केलिलोलुपैः । सविभ्रमाभ्रमातङ्ग[2]–बन्धुभिर्गन्धसिन्धुरैः ॥१९॥ वनायुदेश्यै[3]र्देवाश्व–देशीयैर्मन्दुरोदरे[4] । भृशमोजस्विभिः क्लृप्त–नेत्ररङ्गैस्तुरङ्गमैः ॥ २० ॥ संगीतरङ्गनिःसङ्ग–मृदङ्गध्वनिलासिभिः । हृष्यन्नजस्रविस्रम्भा–[5]दलोलैः केलिकेकिभिः ॥२१॥ वपुर्विसारिसौरभ्य–संभावितनभोऽन्तरे । निविष्टदृष्टिरुत्फाले, केलिकस्तूरिकामृगे ॥२२॥ स दूतः पूतवाङ्निन्दन्, संसदं शार्[6]तमन्यवीम् । उपतस्थे नृपास्थानं, प्रतीहारपुरःसरः ॥ २३ ॥ ( पञ्चभिः कुलकम् ) स प्रणम्य यथास्थान–मुपविश्य विशांपतिम् । विज्ञो विज्ञपयामास, मौलिकुड्मलिताञ्जलिः ॥ २४ ॥ अरिव्रातकृतासेव !, देव ! द्रुपदभूपतिः । प्राहिणोदनणुप्रेम–प्रणयी मां त्वदन्तिके ॥ २५ ॥ सुताऽस्य द्रौपदीत्यस्ति, प्राणेभ्योऽपि प्रियंकरा । इमां स यस्मै कस्मैचि–द्दातुमुत्सहते न हि ॥ २६ ॥ व्यक्तं च वक्ति यः कोऽपि, राधावेधं विधास्यति । तस्मै सुतेयमस्माभि–र्दास्यते पारितोषिकम् ॥ २७॥ आम्ना[7]तिनो धनुर्वेदे,

१ पापक्षयकारिणीः । २ अभ्रमातङ्ग–ऐरावणः । ३ वनायुदेशो–अरवस्थाने भवाः तैः । ४ अश्वशालामध्ये । ५ ' दालोलैः ' प्रतिद्वय० । ६ इन्द्रसंबन्धिनीम् । ७ सदभ्यासवन्तः ।

मर्वाञ्जित्वाऽस्त्रकोविदान् । वर्तन्ते भवतो विश्व–विश्वानन्दननन्दनाः ॥ २८ ॥ ततः सत्यपि दोर्दण्ड–मण्डने राजमण्डले ।
नेतुर्नः[1] पूरयिष्यन्ते, नूनमेतैर्मनोरथाः ॥२९॥ मत्तद्विपकपोला हि, मदपानकुतूहलम् । पूरयन्ति द्विरेफस्य, नाऽऽलेख्यकरिणां
कटाः ॥ ३० ॥ जगत्यामेकधानुष्के–रागत्य सह सूनुभिः । स्वयंवरं भुवो भर्तु–स्तदलंकर्तुमर्हसि ॥ ३१ ॥ मतमादाय
गाङ्गेय–प्रभृतीनां कुरूद्वहः । दूतस्य भारतीमेता–मोमिति प्रत्यपद्यत ॥३२॥ रत्न-कुण्डल-केयूर–कङ्कणाद्यैरनेकशः । काम-
मानन्द्य तं दूतं, विससर्ज विशांपतिः ॥ ३३ ॥
अथ प्रतस्थे काम्पील्यं, पृतनाभिः प्रकम्पयन् । मेदिनीमण्डलं पाण्डु–र्भुग्न[2]भोगीन्द्रधारितम् ॥ ३४ ॥ प्रस्थानमङ्गलं
तस्य, महितस्य तनूरुहैः । विदधे कुलवृद्धाभि–र्मूर्ताभिरिव सिद्धिभिः ॥ ३५ ॥ तत्कालोन्मीलदानील–दानाम्भःश्रु( स्नु )–
तिभिर्भृशं । त्रैतीयिकीं वितन्वन्तं, कलिन्दतनयामिव ॥ ३६ ॥ गर्जाभिः स्निग्धमन्द्राभिः, शिखण्डिकुलताण्डवम् । कुर्वाणं
वारणाधीश–मारुरोह महीपतिः ॥ ३७ ॥ ( युग्मम् ) दुकूले कलयामास, स प्रयाणक्षणोचिते । दधच्चन्द्रातपाश्लिष्ट–गिरीश[3]-
गिरिविभ्रमम् ॥ ३८ ॥ नासौ मदुपजीव्यस्य, रवेस्तेजः क्षमिष्यते । इति छत्रच्छलान्मन्ये, तस्येन्दुरुपरि स्थितः ॥ ३९ ॥
युधिष्ठिरादयः पञ्च, शतं दुर्योधनादयः । विविधं यानमारूढाः, परिवव्रुस्तमात्मजाः ॥ ४० ॥ हयौघहेषितैर्दन्ति–बृंहितैरुप-
बृंहितः । आविर्बभूव गम्भीरः, प्रयाणपटहध्वनिः ॥४१॥ वाहिनी हास्तिका-श्वीय–रथ्या-पादातमेदुरा । तमन्वगच्छदह्नाय,
जाह्नवीव भगीरथम् ॥४२॥ निस्वाननिस्वनस्तस्य, दारयन् गिरिकन्दरान् । उच्चचार[4] स्वमाधार–मम्बरं स्फारयन्निव ॥ ४३ ॥

१ अस्माकं नेतुः–द्रुपदनृपस्य । २ भुग्नः–अवनतः । ३ गिरीशस्य–महादेवस्य गिरिः–कैलासपर्वतः । ४ ऊर्ध्वं चचार ।

पाण्डव-कौरवाणां काम्पील्यं प्रति-गमनम् ॥

अनुकूलानिलोद्धूताः, स्वयंवरदिदृक्षया । पुरो गन्तुमिवेच्छन्त्यो, वैजयन्त्यो विरेजिरे ॥ ४४ ॥ अनुयातः स सामन्तैः, समन्तात् परमर्द्धिभिः । साक्षात् सुरैरिव हरिः, परीतो ददृशे जनैः ॥ ४५ ॥ असौ कुन्त्या च माद्र्या च, याप्ययानाधिरूढया । बभौ गङ्गा-मृडानीभ्यां[1], चन्द्रचूड[2] इवान्वितः ॥४६॥ धृतराष्ट्रादिभिः सर्वैः, स्वस्वशुद्धान्तशालिभिः । स बभौ वल्लभाबद्ध-सङ्गैर्भृङ्गैरिव द्रुमः ॥४७॥ सैन्धवोद्धूतधूलीभिः, पिदधे घर्मदीधितिः । तद्यशश्चन्द्रमाः कामं, जगत्यामद्युतत् पुनः ॥४८॥ नेत्रैः सेन्दीवरा वक्त्रैः, सेन्दवोऽङ्गैः सवीरुधः । तद्दिदृक्षुमृगाक्षीणां, विरेजुः पुरवीथयः ॥४९॥ अभिरामगुणग्राम-गरीयान् नगरश्रियम् । अवेक्षमाणः स प्राप, प्रतोलीमतुलद्युतिः ॥५०॥ अन्योन्यजङ्घासंघट्ट-सीदन्निखिलसादिका । दूरत्रस्तजनोर्जस्वि-गर्जत्तुङ्गमतङ्गजा ॥ ५१ ॥ जाह्नवीव तुषाराद्रि-सद्मपद्महृदोदरात् । निर्जगाम चमूः पाण्डोः, शनकैः पुरगोपुरात् ॥५२॥ ( युग्मम् ) कुरूणां प्रवरैश्छाया-प्रवाल-फल-कुड्मलैः[3] । प्रथयामासुरातिथ्यं, जाह्नवीतीरभूरुहः ॥ ५३ ॥ सैनिकानां नगोत्तुङ्ग-वीचिसंचारमन्थरैः । स्वेदाम्बुततिराचेमे, गाङ्गेयैः पवनोर्मिभिः ॥ ५४ ॥ हैयङ्गवीनगोमुख्यै-र्ग्रामीणोपायनैरसौ । मुमुदे मेदिनीपालः, कालः प्रत्यर्थिनां पथि ॥५५॥ रथा-श्वे-भादिभिः सीम-सामन्तानभ्युपस्थितान् । स पश्यन्नन्दयामास, प्रसादस्निग्धया दृशा ॥५६॥ मनोहरसरःशैल-केलिदुर्ललिता क्रमात् । कौरवी दूरमध्वान-मतिचक्राम सा चमूः ॥ ५७ ॥

काम्पील्यस्याथ सीमान-माससाद कुरूद्वहः । प्रमोदस्तु विवेशान्त-रुत्फुल्लजनसूचितः ॥ ५८ ॥ तमभ्यगच्छदुत्सर्पि-बलोर्मितुमुलैर्दिशः । द्रुपद्रो बधिरीकुर्वन्, मृगाङ्कमिव नीरधिः ॥५९॥ अम्भोदरवगम्भीरः, परस्परचमूचरैः । दूरमाक-

१ गङ्गापार्वतीभ्याम् । २ शिवः । ३ कुड्मलः-पुष्पकलिका ।

र्णयामासे, वाहिनीतुमुलध्वनिः ॥६०॥ तुरङ्गमखुरक्षुण्णः, क्षोणिरेणुः परस्परम् । सस्वजे प्रणयेनेव, सैन्ययोरुभयोरपि ॥६१॥ द्वयोरपि वरूथिन्यो-र्दुन्दुभिध्वनिभिस्तयोः । स्वैरं दिगन्तविश्रान्तैः, प्रतिशब्दायितं मिथः ॥ ६२ ॥ बलौघः पाण्डुजन्मा च, द्रौपदी च पताकिनी । अयुध्येतां तदा ताव-द्भाव्यर्थपिशुनाविव ॥ ६३ ॥ ते वाहिन्यौ तदाऽन्योन्य-मेकीभावमुपागते । चक्रामामागतुर्गङ्गा-पतङ्गतनये इव ॥ ६४ ॥ पदातौ द्रुपदे जाते, संत्यज्य जयकुञ्जरम् । उज्झांचकार करटि-प्रकाण्डं पाण्डुभूपतिः ॥ ६५ ॥ तौ वितत्य भुजौ प्रीत्या, सस्वजाते यशस्विनौ । अन्योन्यं विकटं वक्षो, मिमानाविव वक्षसा ॥६६॥ वालेयज-नीलाश्म-कुरुविन्दकरम्बितम् । विडौजसा जितेनेव, प्रतापैरुपदीकृतम् ॥ ६७ ॥ रथं पवनजङ्घालो-त्तालकाम्बोजवाजिनम् । उपानिनाय काम्पील्य-काश्यपीनाथसारथिः ॥६८॥ ( युग्मम् )॥ दत्तहस्तावलम्बस्तं, स्वयं काम्पील्यभूभुजा । पुरः प्रेङ्खत्पताकाङ्क-मारुरोह कुरूद्वहः ॥ ६९ ॥ क्रान्तविश्वस्य तेजोभि-रुष्णरश्मेरिवारुणः । चकार कुरुनाथस्य, सारथ्यं पृथिवीपतिः ॥ ७० ॥ प्रियालापमिवान्योन्यं, प्रीत्या ज्ञातेयजातया । कुर्वाणे किङ्किणीक्वाणै-स्तयोश्छत्रे विरेजतुः ॥ ७१ ॥ दुन्दुभिध्वनिभिस्तारै-रनश्यमुभयैरभूत् । ब्रह्माण्डभाण्डनिर्भेद-शङ्की पङ्केरुहासनः ॥७२॥ ईक्षांबभूव काम्पील्य-मावासैरवनीभुजाम् । परीतं परितः प्रीत्या, पाण्डुः शाखापुरैरिव ॥ ७३ ॥ तरङ्गहस्तविन्यस्त-विकस्वरसरोरुहा । मुदाऽर्घमुत्क्षिपन्तीव, ददृशे तेन जाह्नवी ॥ ७४ ॥ उदारमञ्जरीसार-सहकारप्रियंकरे । विकासिबकुले फुल्ल-मल्लिकामोदमालिनि ॥ ७५ ॥ कदम्ब-

१ दृषद्नृपसत्वङ्गिनी । २ 'तदाऽतीवभाव्य०' प्रतिद्वय० । ३ पतङ्गतनया-सूर्यपुत्री-यमुना इत्यर्थः । ४ वालवायजः-वैदूर्यमणिः । ५ कुरुविन्दः-रत्नविशेषः । ६ ज्ञातित्वेन जातया । ७ गङ्गा ।

जम्बू–जम्बीर–निकुरुम्बकरम्बिते । विपाकपिङ्गनारङ्ग–पिशङ्गितदिगन्तरे ॥ ७६ ॥ असङ्गभृङ्गसंगीत–सुभगंभावुकद्रुमे । रसालाङ्करवाचाल–कोकिलालापशालिनि ॥ ७७ ॥ द्रुपदस्य गिराऽगृह्णा–न्निवासान् भूमिवासवः । वसन्त इव कुत्रापि, स्वःसरित्तीरकानने ॥ ७८ ॥ ( कुलकम् )

तस्मिन् विलासवापीषु, स्नायं स्नायमनेकशः । विनिन्ये सैनिकैर्दूर–मार्गचङ्क्रमणक्रमः ॥ ७९ ॥ हित्वा हिरण्यकोटीरान्, कुरुविन्दाङ्कराङ्कितान् । चक्रुः सकिंशुकैः केचि–चम्पकैरवतंसकान् ॥८०॥ नित्यमेकधुरीणानि, पूर्णेन्दुकरकन्दलैः[1] । केचिन्मृणालनालानि, मुक्ताहारपदे दधुः ॥ ८१ ॥ नवस्रस्तरमास्तीर्य, कि( क )ङ्केल्लिद्रुमपल्लवैः । केऽपि च्छायासु सान्द्रासु, पथिश्रान्ता विशश्रमुः ॥ ८२ ॥ पीयूषरसगण्डूप–मदमोषीणि हर्षुलैः । नालिकेरीफलाम्भांसि, कैश्चिदापपिरे भृशम् ॥ ८३ ॥ मृगारिकरजाकारान्, वीक्ष्य किंशुककोरकान् । वारणेन्द्राः प्रणश्यन्तः, कथंचित्तत्र धारिताः ॥ ८४ ॥ सैकते कुसुमभ्रश्यत्परागपरिपिञ्जरे । वाह्लीकान्[2] वेल्लयांचक्रु–रक्रमेण तुरङ्गिणः ॥८५॥ भारावरोहणायान्यैः, कृतयत्नशतैरपि । नाक्षम्यतौक्षकं[3] नेतुं, सारणीतृणलोलुपम् ॥ ८६ ॥ क्षुद्रेतरैः परिक्षिप्ते, कदलीकेलिकाननैः । आदर्शदर्शितातङ्क–मृगाङ्कमणिकुट्टिमे ॥ ८७ ॥ सारणीशीकरासार–लघुसंचारमारुते । उन्मीलन्मुकुलामोद–मदिरामोदितालिनि ॥ ८८ ॥ सान्द्रशीततरच्छाये, बकुलोर्वीरुहस्तले । द्रुपदादेशिनस्तेनुः, पाण्डवं पटमण्डपम् ॥८९॥ ( त्रिभिर्विशेषकम् ) स्थलेभ्योऽभ्यधिकं दूर्वा–सहजास्तरणा[4] न्यधुः । प्रमोदमवरोधाना–मतिमुक्तकमण्डपाः ॥ ९० ॥ स्मेरयन्तोऽधिकं दर्पं, श्रियः साक्षादिवर्तवः । महीरुहः श्रयन्ति स्म, सामन्ताः

१ कन्दलं–नवाङ्कुरः । २ अश्वान् ( ' वाह्लीक ' इत्यमरकोषे ) । ३ वृषयूथम् । ४ दूर्वा एव स्वाभाविकम् आस्तरणं येषु ते ।

केऽपि कानपि ॥ ९१ ॥ तस्मिन् युधिष्ठिरप्रष्ठ–कुमारकुलकैतवात् । कानने विहरन् रेजे–ऽनेकमूर्तिरिव स्मरः ॥ ९२ ॥

काम्पील्यनाथः कल्याणी–भक्तिः प्रीतेन पाण्डुना । अनुज्ञातोऽथ सानन्द–मन्तर्नगरमाविशत् ॥ ९३ ॥ सोऽप्रीणयन् तथा पाण्डो–रुपचारैश्चमूचरान् । निजस्य न यथा कामं, स्मरन्ति स्म पुरस्य ते ॥ ९४ ॥ शिल्पिभिः कल्पयामास, सर्वैर्विश्वकर्मणः । सधर्माणं सुधर्मायाः, स स्वयंवरमण्डपम् ॥ ९५ ॥ महानीलमयी तत्र, बभार तलमेदिनी । प्रतिच्छायाच्छलादन्त–र्द्वितीयमिव मण्डपम् ॥ ९६ ॥ नीलाश्मकुट्टिमे तस्मिन्, श्वेतसोपानभूर्बभौ । कालिन्दी[1]–शङ्खयोर्वीचि–रारोहन्तीव जाह्नवी ॥ ९७ ॥ स्तम्भाः स्वर्णमयास्तस्मि–न्नश्मगर्भमयक्षितौ । वातोत्थयमुनापद्म–पांसुदण्डनिभा बभुः ॥ ९८ ॥ तस्मिन् स्वयंवरालोक–कौतुकात्त्रिदिवाङ्गनाः । प्रतिस्तम्भमुपारूढाः, शालभञ्जीनिभा बभुः ॥ ९९ ॥ नीलवेदीपरिक्षिप्ता, क्वचिदिन्दूपलक्षितिः । वनीवलयितक्षीर–नीरधिश्रियमश्नुते ॥ १०० ॥ तस्मिन् हरिन्मणिस्तम्भाः, पद्मरागप्रभाञ्चिताः । लीनां(लां)नीलत्विषः क्वापि, तन्वते पीतवाससः ॥ १०१ ॥ क्वचित् कार्तस्वरस्तम्भा–स्तस्मिन्नीलाश्मकन्दलैः । मेरुं विडम्बयामासु–र्जम्बूराजिविराजितम् ॥ १०२ ॥ क्वचिन्नीलमणिक्षोणी–परितोऽर्काश्मवेदिका । दध्रेऽम्भोधितटाश्लिष्ट–निर्घृष्टाम्भोदविभ्रमम् ॥ १०३॥ कर्केतना–कैमाणिक्य–वज्र–वैडूर्यकान्तिभिः । तस्य च्छन्नः करामर्शा–द्वारदेशोऽप्यगम्यत ॥ १०४ ॥ नीलाश्मद्वारशाखांशु–श्रेणिरुत्पलकोमला । तत्र शाश्वतिकं दध्रे, कदलीस्तम्भविभ्रमम् ॥ १०५ ॥ संध्याम्भोदसनाभीनि, तत्प्रदेशेष्वनेकशः । शिल्पिनः पद्मरूपाणि, वितानानि वितेनिरे ॥१०६॥ तस्मिन् मुक्तावचूलेषु, स्थान-

---

१ कालिन्दी–यमुना । २ कृष्णस्य ।

जम्बू–जम्बीर–निकुरुम्बकरम्बिते । विपाकपिङ्गनारङ्ग–पिशङ्गितदिगन्तरे ॥ ७६ ॥ असङ्गभृङ्गसंगीत–सुभगंभावुकद्रुमे । रसालाङ्करवाचाल–कोकिलालापशालिनि ॥ ७७ ॥ द्रुपदस्य गिराऽगृह्णा–न्निवासान् भूमिवासवः । वसन्त इव कुत्रापि, स्वःसरित्तीरकानने ॥ ७८ ॥ ( कुलकम् )

तस्मिन् विलासवापीषु, स्नायं स्नायमनेकशः । विनिन्ये सैनिकैर्दूर–मार्गचङ्क्रमणक्रमः ॥ ७९ ॥ हित्वा हिरण्यकोटीरान्, कुरुविन्दाङ्कुराङ्कितान् । चक्रुः सकिंशुकैः केचि–च्चम्पकैरवतंसकान् ॥८०॥ नित्यमेकधुरीणानि, पूर्णेन्दुकरकन्दलैः[1] । केचिन्मृणालनालानि, मुक्ताहारपदे दधुः ॥ ८१ ॥ नवस्रस्तरमास्तीर्य, कि( क )ङ्केल्लिद्रुमपल्लवैः । केऽपि च्छायासु सान्द्रासु, पथिश्रान्ता विशश्रमुः ॥ ८२ ॥ पीयूषरसगण्डूष–मदमोषीणि हर्षुलैः । नालिकेरीफलाम्भांसि, कैश्चिदापपिरे भृशम् ॥ ८३ ॥ मृगारिकरजाकारान्, वीक्ष्य किंशुककोरकान् । वारणेन्द्राः प्रणश्यन्तः, कथंचित्तत्र धारिताः ॥ ८४ ॥ सैकते कुसुमभ्रश्यत्परागपरिपिञ्जरे । वाह्लीकान्[2] वेल्लयांचक्रु–रक्रमेण तुरङ्गिणः ॥८५॥ भारावरोहणायान्यैः, कृतयत्नशतैरपि । नाक्षम्यतौक्षकं[3] नेतुं, सारणीतृणलोलुपम् ॥ ८६ ॥ क्षुद्रेतरैः परिक्षिप्ते, कदलीकेलिकाननैः । आदर्शदर्शितातङ्क–मृगाङ्कमणिकुट्टिमे ॥ ८७ ॥ सारणीशीकरासार–लघुसंचारमारुते । उन्मीलन्मुकुलामोद–मदिरामोदितालिनि ॥ ८८ ॥ सान्द्रशीततरच्छाये, बकुलोर्वीरुहस्तले । द्रुपदादेशिनस्तेनुः, पाण्डवं पटमण्डपम् ॥८९॥ ( त्रिभिर्विशेषकम् ) स्थलेभ्योऽभ्यधिकं दूर्वा–सहजास्तरणा[4] व्यधुः । प्रमोदमवरोधाना–मतिमुक्तकमण्डपाः ॥ ९० ॥ स्मेरयन्तोऽधिकं दर्पं, श्रियः साक्षादिवर्तवः । महीरुहः श्रयन्ति स्म, सामन्ताः

१ कन्दलं–नवाङ्कुरः । २ अश्वान् ( ' वाह्लीक ' इत्यमरकोषे ) । ३ वृषयूथम् । ४ दूर्वा एव स्वाभाविकम् आस्तरणं येषु ते ।

पाण्डव-कौरवाणां काम्पील्ये निवासः ॥

केऽपि काननि ॥ ९१ ॥ तस्मिन् युधिष्ठिरप्रष्ठ–कुमारकुलकैतवात् । कानने विहरन् रेजे–ऽनेकमूर्तिरिव स्मरः ॥ ९२ ॥

काम्पील्यनाथः कल्याणी–भक्तिः प्रीतेन पाण्डुना । अनुज्ञातोऽथ सानन्द–मन्तर्नगरमाविशत् ॥ ९३ ॥ सोऽप्रीणयन् तथा पाण्डो–रुपचारैश्चमूचरान् । निजस्य न यथा कामं, स्मरन्ति स्म पुरस्य ते ॥ ९४ ॥ शिल्पिभिः कल्पयामास, सर्वस्वैर्विश्वकर्मणः । सधर्माणं सुधर्मायाः, स स्वयंवरमण्डपम् ॥ ९५ ॥ महानीलमयी तत्र, बभार तलमेदिनी । प्रतिच्छायाच्छलादन्त–र्द्वितीयमिव मण्डपम् ॥ ९६ ॥ नीलाश्मकुट्टिमे तस्मिन्, श्वेतसोपानभूर्बभौ । कालिन्दी[1]शङ्कयोद्वीचि–र्यरोहन्तीव जाह्नवी ॥ ९७ ॥ स्तम्भाः स्वर्णमयास्तस्मि–न्नश्मगर्भमयक्षितौ । वातोत्थयमुनापद्म–पांसुदण्डनिभा बभुः ॥ ९८ ॥ तस्मिन् स्वयंवरालोक–कौतुकाद्विदिवाङ्गनाः । प्रतिस्तम्भमुपारूढाः, शालभञ्जीनिभा बभुः ॥ ९९ ॥ नीलवेदीपरिक्षिप्ता, क्वचिदिन्दूपलक्षितिः । वनीवलयितक्षीर–नीरधिश्रियमश्नुते ॥ १०० ॥ तस्मिन् हरिन्मणिस्तम्भाः, पद्मरागप्रभाञ्चिताः । लीनां(लां)नीलत्विषः क्वापि, तन्वते पीतवाससः[2] ॥ १०१ ॥ क्वचित् कार्तस्वरस्तम्भा–स्तस्मिन्नीलाश्मकन्दलैः । मेरुं विडम्बयामासु–र्जम्बूराजिविराजितम् ॥ १०२ ॥ क्वचिन्नीलमणिक्षोणी–परितोऽर्काश्मवेदिका । दध्रेऽम्भोधितटाश्लिष्ट–निर्दृष्टाम्भोदविभ्रमम् ॥ १०३॥ कर्केतना–कैमाणिक्य–वज्र–वैडूर्यकान्तिभिः । तस्य च्छन्नः करामर्शात्प्रदेशोऽभ्यगम्यत ॥ १०४ ॥ नीलाश्मद्वारशाखांशु–श्रेणिरुत्पलकोमला । तत्र शाश्वतिकं दध्रे, कदलीस्तम्भविभ्रमम् ॥ १०५ ॥ संध्याम्भोदसनाभीनि, तत्प्रदेशेष्वनेकशः । शिल्पिनः पञ्चरूपाणि, वितानानि वितेनिरे ॥१०६॥ तस्मिन् मुक्तावचूलेषु, स्थान-

१ कालिन्दी–यमुना । २ कृष्णस्य ।

स्थानावलम्बिषु । पेतुर्मधुव्रतव्राताः, पुष्पस्तबकशङ्किनः ॥१०७॥ तस्मिन् भान्ति स्म संक्रान्त-कान्तप्रालम्बमौक्तिकाः । पुष्पोपहारहारिण्यः, सदैव मणिभूमयः ॥१०८॥ कुर्वतः सर्वतः स्वर्गि-विमानश्रीविमाननाम् । नृपस्तं परितो मञ्चा-नुच्चकैर्निरमापयत् ॥ १०९ ॥ विश्वकर्माऽपि निर्माण-नैपुण्यमवलोकयन् । मन्ये तच्छिल्पिनामैच्छ-दन्तेवासित्वमात्मनः ॥ ११० ॥ नानारत्नमयं तेषा-मेकैकमपि पश्यतः । द्रुपदे स्वर्गलुण्टाक-वासना कस्य नाभवत् ? ॥१११॥ तानालोक्यात्मनः संप-ल्लोपाशङ्कापिशाचकी । भूमौ लुठन् रसत्युच्चै-र्यापि ध्रुवमर्णवः ॥११२॥ सुदुस्तपतपःक्लेश-प्राप्तं नूनमवेक्ष्य तान् । अनिन्द्यत गतानन्दैः, सुरैः स्ववासवैशसम्[1] ॥ ११३ ॥

स्तम्भमुत्तम्भयामास, हैमं मध्येस्वयंवरम् । पञ्चालभूपतिर्जम्बू-द्वीपान्तर्मेरुविभ्रमम् ॥ ११४ ॥ रेजुर्भ्रमन्ति चत्वारि, वामं चत्वारि दक्षिणम् । रत्नचक्राणि नक्षत्र-चक्राणीवास्य मूर्धनि ॥ ११५ ॥ भाति स्म रत्नपाञ्चाली, मूर्ध्नि तेषामवाङ्मुखी । तद्भ्रमोग्रजवालोक-कौतुकेनेव निश्चला ॥ ११६ ॥ अधः स्तम्भस्य दम्भोलि-सारैरिव विनिर्मितम् । राजाऽमुञ्चत् क्रमायातं, देवताऽधिष्ठितं धनुः ॥ ११७ ॥

अथ मौहूर्तिकादिष्टे, दृष्टे पूर्णशुभग्रहैः । उच्चस्थैश्चास्थिते लग्ने, प्रीतिनिर्मग्नमानसः ॥ ११८ ॥ पञ्चालपृथिवीपालः, सायमर्वाचि[2] वासरे । प्रातराहूतये दूतान्, प्राहिणोत् प्रतिपार्थिवम् ॥११९॥ ( युग्मम् ) तदा रविरलंकर्तु-मिव द्रुपदनन्दिनीम् । रत्नसारमुपादातु-माशु रत्नाकरेऽविशत् ॥ १२० ॥ वयं दवीयोवास्तव्याः[3], स्वयंवरकुतूहलम् । न द्रक्ष्याम इतीवाशा-स्तमः-

१ वैशसं-विघ्नः । २ प्रथमे । ३ दूरतरनिवासिन्यः ।

श्यामास्यतां दधुः ॥ १२१ ॥ कला काऽप्यस्ति भूपानां, द्रौपदीप्राप्तिकारणम् । इति ज्ञातुमना मन्ये, कलानां निधिरुद्ययौ
॥ १२२ ॥ पाञ्चाली नयनौपम्य-महमेव लभे परम् । इत्यवश्यमिदं हर्षा-दुन्मिमील महोत्पलम् ॥ १२३ ॥ पाञ्चालीस्पृह-
यालूनां, भूभुजामथ मन्मथः । मुमोच मार्गणश्रेणि-मीर्ष्ययेव समं हृदि ॥ १२४ ॥ अङ्गेष्वनल्पसंकल्प-भूनुसंतापशान्तये ।
स्वयंनिकिरे केचि-ज्जाह्नवीमम्बुरुहाम् ॥ १२५ ॥ द्रौपदीवदनाम्भोज-प्रतिस्पर्धितया स्फुटम् । अभूत् केषांचिदानन्द-न्निन्दु-
रप्यास्पदं रुषाम् ॥ १२६ ॥ प्रेङ्खोलयन्निरत्युष्ण-निःश्वासपवनोर्मिभिः । शातितः शीतिमा कैश्चित्, कदलीदलमारुतैः ॥ १२७ ॥
आगतानीह ज्ञातेय-मम्मदुत्मङ्गसङ्गिनी । सुहृदं केचिदित्यूचुः, कार्मुकाभ्यासकर्मठाः ॥ १२८ ॥ अङ्गारीयति हारोऽयं, हिमां-
शुस्तपनीयति । तमस्तोमीयति ज्योत्स्ना, स्वगुत्तीयति पङ्कजम् ॥ १२९ ॥ नाडिका यामकल्पाऽद्य, यामोऽभूद्यामिनीसमः ।
यामिनी वर्षदेश्या च, धिगियं विपरीतता ॥ १३० ॥ द्वीपान्तरेऽपि कस्याश्चित्, स्वयंवरमहोत्सवम् । रविरालोकयत्यद्य, नाभ्यु-
देति किमन्यथा ? ॥१३१॥ इति द्रुपदकन्याङ्ग-संगमोत्सवमिच्छताम् । बभूव सर्वभूपानां, कोटियामेव यामिनी ॥ १३२ ॥
( चतुर्भिः कलापकम् । ) अन्तर्विचिन्त्य पाण्डुस्तु, दोर्दण्डानात्मजन्मनाम् । अपास्तचिन्तासंतापः, सुखी सुष्वाप निर्भरम्
॥ १३३ ॥ कुरुवंशाङ्कुराणां त-द्विलोक्य ललितं वपुः । पर्णं पञ्चालभूपालः, स्वं निनिन्द मुहुर्मुहुः ॥ १३४ ॥ इत्थं पृथ्वीभुजां
नाना-विकल्पाक्रान्तचेतसाम् । कष्टलब्धाल्पनिद्राणां, विरराम विभावरी ॥१३५॥ दिगुद्भूतारुणोद्भेदा, बभासे शार्तमन्यवी

१ सङ्कल्पभूनुः-कामः । २ उच्छलद्भिः । ३ नाशितः ध्वस्त इत्यर्थः । ४ चन्द्रः । ५ स्वगुमा-लताविशेषः 'रीसामणी'
इति भाषायाम् । ६ ऐन्द्री-पूर्वा इत्यर्थः ।

सकाश्मीराङ्गरागेव, पत्यौ भास्वत्युपेष्यति ॥ १३६ ॥ राजाऽस्मि निर्वसुः प्रात-र्लज्जिष्ये राजमण्डले । इत्यालोच्येव पीपूषद्युतिर्देशान्तरं ययौ ॥ १३७ ॥ मुक्ताकणभ्रमादुच्चैः, पाञ्चालीहारहेतवे । उच्चितानीव केनापि, नक्षत्राणि क्षणाद्ययुः॥ १३८ ॥ कलङ्क्यपि ममोच्छेद-कारीन्दुः किमु निर्मलः?। कृष्णास्येन्दुर्विधातेति, भियेव विभिदे तमः॥ १३९ ॥ संमुखं सर्वभूपाल-मनोभिरभिधावितैः । रविः करेष्विवाकृष्य, पूर्वाद्रिमधिरोपितः ॥ १४० ॥ राजन्यमुखराजीव-सरोराजीवकानने । तुल्यमुल्लासयन् भानु-र्नभोङ्गणमगाहत ॥ १४१ ॥

अथ काम्यतमाकल्प-कल्पनाल्पेतरश्रियः[1] । मञ्चानारोढुमौत्सुक्या-द्धावन्ति स्म धराभुजः ॥ १४२ ॥ मञ्जुलैर्मङ्गलातोद्यै-र्वन्दिकोलाहलैरपि । विहाय विकसच्चक्षुः, शनैर्निद्रां सुखासिकाम् ॥१४३॥ विधाय विधिवत्सर्व-प्रातःकृत्यानि कृत्यवित् । प्रतिपाल्य मिलत्सैन्य-सामन्तामात्यमण्डलम् ॥ १४४ ॥ औचित्यरचिताकल्पान्, कल्पवृक्षाङ्कुरानिव । कुमारान् स्वान् पुरस्कृत्य, नित्यदोर्दण्डमण्डनान् ॥ १४५ ॥ ययौ स्वयंवरं पाण्डु-रखण्डमहिमोदयः । रम्यं च मञ्चमारोहत्, काम्पील्यपतिदर्शितम् ॥ १४६ ॥ ( चतुर्भिः कलापकम् ) सिंहासने स नीलाश्म-मयूखपरिवेषिणि । स्वरक्षार्थमयःशाल-शालिनीव न्यविक्षत ॥ १४७ ॥ बद्धकायानिव न्याया-नुत्साहानिव देहिनः । वपुष्मन्तीव तेजांसि, मूर्तान् कीर्तिचयानिव ॥ १४८ ॥ कुमारान् मारजैत्रांस्तान्, पश्यतां काश्यपीभुजाम् । राज्येऽप्यभवदाच्छेद-शङ्कापङ्काविलं मनः ॥१४९॥ ( युग्मम् ) साक्षादिव धनुर्वेदं, वीरं रसमिवाङ्गिनम् । ज्योतिर्विवर्त[2]मुत्तीर्ण-मादिपुंस इवावनौ ॥ १५० ॥ तेषामपि विशेषेण, विलोक्य कपिकेतनम्[3] ।

१ इष्टतमभूषणानां रचनयाऽनल्पशोभावन्तः । २ ज्योतिषां समूहः । ३ अर्जुनम् ।

नान्मानमपि के नाम, निस्मरन्ति स्म भूभुजः ॥ १५१ ॥ ( युग्मम् ) तनूरुहपरीवार-स्तस्मिन् रेजे स राजके । पाण्डुर्वृद्ध-फलः कल्प-शिखरीनार्यकेशिषु ॥ १५२ ॥

अथ स्वयंवरागार-मानेतुं नित्ययौवनाम् । साधु प्रसाद(ध)यामासुः, प्रीतिप्रह्वाः प्रसाधिकाः ॥ १५३॥ अलक्तकरस-स्तस्याः, पादयोर्निहितो बभौ । जितैः पङ्केरुहैः शङ्के, स्वकान्तिरुपदीकृता ॥ १५४ ॥ तस्याः स्वर्णाभमत्यच्छ-चन्दनच्छु-रितं वपुः । बिभर्ति स्माभ्रकच्छन्न-प्रदीपकलिकोपमाम् ॥ १५५ ॥ तस्या विम्बोष्ठयोर्व्यक्त-मलक्तकरसच्छलात् । आदधे रागसर्वस्व-निधानं कुसुमायुधः ॥ १५६ ॥ अरालनीलभ्रूवल्लि-प्रतिबिम्बविडम्बिनी । बभौ कपोलयोस्तस्याः, कस्तूरीपत्रव-ल्लरी ॥ १५७ ॥ तस्याः शङ्के दृशौ पुष्प-धन्वनः केलिदीर्घिके । लावण्यजलजम्बाल-मञ्जुलं कज्जलं पुनः ॥ १५८ ॥ तस्याः स्म भासते भाले, मृगनाभिललाटिका । कृताक्रान्तिरिव क्रुद्धो, विधुबुद्ध्या विधुंतुदः ॥ १५९ ॥ धम्मिल्लो मल्लिदा-माङ्क-स्तस्या मूर्धन्यधारयत् । मुक्तैरमिथःश्लिष्ट-शशिस्वर्भानुविभ्रमम् ॥ १६० ॥ असौ विशदकौशेय-संवीतवपुराबभौ । तपस्यासमये गङ्गा-वीचिश्लिष्टेव पार्वती ॥१६१॥ तस्याश्चकासे माणिक्य-किरीटकिरणोत्करः । उदेष्यत इवानङ्ग-तरणेररुणो-दयः ॥ १६२ ॥ निर्मलः संपदे सद्यः, श्रितानामिति नान्यथा । द्विरुक्तिमीयतुस्तस्याः, कुण्डले तेन गण्डयोः ॥ १६३ ॥ कर्णोत्तंसमणिव्याजा-देत्य देवः स्वयं स्मरः । तस्याः कटाक्षविक्षेप-निदेशाकाङ्क्षया स्थितः ॥ १६४ ॥ जगज्जिगीषोः कामस्य, तस्या वक्षःस्थलाश्रमे । तपस्यतोऽक्षमालेव, भाति सैकावलिच्छलात् ॥ १६५ ॥ परितो रत्नकेयूर-मरीचिपटलच्छलात् ।

१ तनूरुहेषु । २ द्रौपदीम् । ३ अराला-वक्रा । ४ जम्बालः-सेवालः । ५ कस्तूरितिलकम् । ६ स्वभानुः-राहु । ७ अभ्रकः ।

रागोऽन्तर्मानसं तस्याः, प्रविविक्षुरिवैक्ष्यत ॥ १६६ ॥ लक्ष्म्यादिललनाकीर्ति-मावर्त्येव विनिर्मिते । करयोः कङ्कणे मुक्ता-मये तस्या विरेजतुः ॥ १६७ ॥ तस्याश्चकासे जघने, रसनागुणनिस्वनः । तुमुलः कामसैन्यस्य, निवासानिव गृह्णतः ॥ १६८ ॥ झङ्कारमुखरौ तस्याः, पादयोर्मणिनूपुरौ । विभ्राजेते स्म सर्वाङ्ग-लक्ष्मीवैतालिकाविव ॥ १६९ ॥ इति प्रसाधिता साऽभू-दतिमात्रमनोहरा । कामं रम्या हि वासन्ती, वसन्तश्रीवतंसिता ॥ १७० ॥

अथ बन्धुपुरंध्रीणा-मुलूलुध्वनिबन्धुरे । स्फुरत्यम्भोधिगम्भीरे, विश्वतस्तूर्यनिःस्वने ॥ १७१ ॥ उन्मीलत्यभितो वैता-लिककोलाहले मुहुः । वेत्रिणां बद्धतुमुले, मूर्च्छत्युत्सारणाध्वनौ ॥ १७२ ॥ किङ्किणीक्वाणनिर्वाण-पुष्पोच्चूलालिनिक्वणम्[1] । तपनीयपताकान्त-मूर्च्छन्मार्तण्डदीधिति[2] ॥ १७३ ॥ विमानरत्नमारुह्य, नरवाह्यं नृपात्मजा । व्योमाङ्कमिन्दुलेखेव, स्वयंवर-मवातरत् ॥ १७४ ॥ ( चतुर्भिः कलापकम् )

तां भवानीभ्रमान्नेत्रै-रेकहेलानिपातिभिः । भूपाः सौभाग्यभाग्याय, भेजुरिन्दीवरैरिव ॥ १७५ ॥ तस्मिञ्शिल्पाद्भुते विश्व-शिल्पिनः कन्यकामये । दू(दौ)त्यायेव मनः सर्वे, प्राहिण्वन्नवनीभुजः ॥ १७६ ॥ तां पश्यन्तोऽतिनिर्बन्धात्, सर्वेऽप्युर्वीभुजस्तदा । स्वनेत्रायापि तेऽकुप्य-न्निमेषमधिकुर्वते ॥ १७७ ॥ तां दृशामुत्सवज्योत्स्ना-मेवमेवापि पश्यते । ईर्ष्यामासुर्मुहुः प्राण-प्रियाय सुहृदेऽपि ते ॥ १७८ ॥ समस्तकरणस्तोम-स्तैस्तदा निखिलैरपि । व्यापारं लोचनस्यैव, कलयन्नभ्यलक्ष्यत ॥ १७९ ॥ तेषामनीक्षमाणस्य, मृगाक्षीं तां शतक्रतोः । निन्दास्पदं तदा नेत्र-सहस्रतयमप्यभूत् ॥ १८० ॥

---

१ 'निक्वणः' प्रतिद्वय० । २ किङ्किणीशब्देन शान्तः पुष्पमयध्वजपटस्थभ्रमराणां शब्दः यस्मिन् तत् । ३ 'मूर्च्छे' प्रतिद्वय० ।

प्रलोभनाय तचेतो–मृगस्य स्वैरचारिणः । रोमहर्षमिपादेते, दधुर्दूर्वाङ्कुरोत्करान् ॥ १८१ ॥ जगन्नयनपीयूष–नवकादम्बिनीमिमाम् । पश्यन्तश्चिन्तयामासु–रन्तः सर्वेऽपि भूभुजः ॥ १८२ ॥ भुवनस्य य एवास्य, निर्माताऽस्याः स एव न । तदीयशिल्पसीमा हि, स्थिता गौरी–न्दिरादिषु ॥ १८३ ॥ यद्वा तस्यापि यः कश्चि–दाचार्यः शिल्पकर्मणि । त्रिलोकीमण्डनं नून–मियं तेनैव निर्ममे ॥ १८४ ॥ मुखेन्दू रचयत्यस्या, नित्यराकामयीं महीम् । जडप्रकृतिरेवाय–मुद्गच्छन्मृगलाञ्छनः ॥ १८५ ॥ नश्चुर्निमज्जदेतस्या, लावण्यक्षीरसागरे । उरोऽन्तरीपमासाद्य, निर्वृतिं लभते यदि ॥ १८६ ॥ इत्यादीन् कोटिशस्तर्कान्नन्वन्तः स्मेरितस्मराम् । विलोकयन्तः पाञ्चाली–मचेष्टन्तेति भूभृतः ॥ १८७ ॥

तस्याः किमिह वास्तव्या, लक्ष्मीरम्येति तुल्यताम् ? । इतीवालोकयांचक्रे, कश्चिल्लीलासरोरुहम् ॥ १८८ ॥ अन्यस्य करमाम्रा–मप्याच्छेत्तुमलंतमाम् । इमामहमितीवांसं, मुहुः कश्चिदवैक्षत ॥१८९॥ निपतन्ति मयि स्वैरं, कुतोऽमी स्मरमार्गणाः ? । इतीव पार्श्वतः कश्चित्, पश्यति स्म मुहुर्मुहुः ॥१९०॥ कश्चिदैक्षिष्ट कस्तूरी–तिलकं रत्नकङ्कणे । भालाक्षरलिपीस्तस्या, लाभायेव निभालयन् ॥ १९१ ॥ राधावेधे तवैवास्मिन्, मुखमीक्षामहे वयम् । इतीव भुजमस्प्राक्षत्, कोऽपि केयूरकैतवात् ॥१९२॥ कश्चित् कुपितपुष्पेषु–शरपातभयादिव । प्रावारवाससा चक्रे, सर्वाङ्गमवगुण्ठनम् ॥ १९३ ॥ कश्चिन्नागरखण्डानि, खण्डयन् दशनाङ्कुरैः । प्रकुप्यतः स्मरस्याग्रे, क्षिपतीव मुखेऽङ्गुलीः ॥१९४॥ बहिर्विभाव्यमानाऽपि, योगिनीवेयमीक्ष्यते । कथमन्तरितीवान्यो, हृदयं मुहुरैक्षत ॥१९५॥ परिभ्रष्टमिव कापि, निजमालोकयन्मनः । लिलेख कश्चिदानम्रः, पादाङ्गुष्ठेन पीठिकाम् ॥१९६॥

१ 'मुखेन्दो' प्रतिद्वय० । २ उर एव द्वीपम् । ३ 'स्मारित' प्रतिद्वय० । ४ पृथ्वीम् ।

इत्याविर्भूतभावेषु, तेषु सर्वेषु राजसु । चिक्षेप क्षोणिभृत्कन्या, स्वभावसरलां दृशम् ॥१९७॥ पाण्डोः पुत्रांस्तु पश्चापि, विभाव्य मधुराकृतीन् । धृतिं बबन्ध तच्चक्षुः, पणमुद्वीक्ष्य चाधृतिम् ॥१९८॥ विमानादथ रम्भेव, देवभूमीभृतस्तले । हेममूर्तेरधो राधास्तम्भस्येयमवातरत् ॥१९९॥ तस्मिन्नूर्ध्वमधस्तिर्य-क्संक्रान्तप्रतियातना* । पाञ्चाली काममेकापि, बभार बहुरूपताम् ॥२००॥

ऊर्ध्वीकृत्य भुजं लोक-तुमुलं प्रतिषिध्य च । धृष्टद्युम्नस्ततो वाच-मुवाच द्रुपदात्मजः ॥ २०१ ॥ दोर्दण्डचण्डिमाक्रान्त-जगतो जगतीभृतः । गिरमेतामुभाकर्णि, सर्वेऽप्याकर्णयन्तु मे ॥ २०२ ॥ साक्षीकृत्य वियत्यर्क-सिद्ध-गन्धर्व-खेचरान् । क्षितौ च ललना-बाल-गोपालप्रमुखं जनम् ॥ २०३ ॥ इदमस्मत्कुलोत्तंसं, देवताशतसेवितम् । चापमारोप्य यः कोऽपि, राधावेधं विधास्यति ॥ २०४ ॥ भुवनाद्भुतसौभाग्य-भागिनी भगिनी मम । शौण्डीर्यवेतनं तस्मै, कृष्णेयं कल्पयिष्यते ॥ २०५ ॥ ( त्रिभिर्विशेषकम् )

अथाभ्युत्तिष्ठतो भूपान्, कार्मुकारोपकर्मणि । प्रगल्भवाक्प्रतीहारी, याज्ञसेन्यै[3] व्यजिज्ञपत् ॥ २०६ ॥ भूपतिर्दमदन्तोऽयं, रिपुदन्तिमदान्तकृत् । चापारोपार्थमुत्तस्थौ, देवि ! त्वामभिलाषुकः ॥ २०७ ॥ श्रियो विहितविश्रान्ते-र्यस्य दोर्दण्डमण्डपे । भाति वैडूर्यपर्यङ्क, इव ज्याकिणपद्धतिः ॥ २०८ ॥ संमुखीनक्षुतेनाय-मागच्छन् विनिवारितः । आसने पुनरप्राप्त-तेजोहानिरुपाविशत् ॥ २०९ ॥

उत्तिष्ठत्येष वामाक्षि !, धरो नाम धराधवः । नवालवालं ( लो ) यत्कीर्ति-वीरुधो मथुरापुरी ॥ २१० ॥ यच्छुद्धान्त-

१ मेरुपर्वतस्य । * प्रतियातना-प्रतिमा । २ 'वेतने' इति वा पाठः । ३ द्रौपद्यै ।

बभूनेव-कज्जलैर्जलकेलिषु । हृतैरिव बभूवेयं, कालिन्दी कालिमास्पदम् ॥ २११ ॥ यमुनाया इवासक्तेः, प्रकामश्यामलत्विषः । तन्वते तन्वि ! यत्सेवा-नन्दं वृन्दावनद्रुमाः ॥ २१२ ॥ उपत्यकावने यस्य, क्रीडतः प्रेयसीजुषः । विलासवेश्मतां यान्ति, गोवर्धनगिरेर्गुहाः ॥ २१३ ॥ किमेष पर्षदं राज्ञा-मवज्ञायोपहासिनीम् । अवतीर्यावनौ मश्वं, पुनरप्यधिरोहति ॥ २१४ ॥

चिराद्राधिपतिः सोऽय-मामनादुचलन्निव । लक्ष्यते मृगशावाक्षि !, वीरलक्ष्मीस्वयंवरः ॥ २१५ ॥ काङ्क्षन्ती कीर्तिसंहर्षान् धामारोढुमिवोच्चकैः । देवि ! यस्यांसशैलाग्र-मश्रान्तं श्रीरशिश्रियत् ॥ २१६ ॥ करसंपर्कमासाद्य, यस्य सूते धनुर्लता । शरश्रेणीं च कीर्तिं च, युगपद्वैरिदुःसहाम् ॥ २१७ ॥ भूपतिः किमयं भूमि-मागत्य कियतीमपि । जातस्तम्भ इवाक्रस्मा-त्तस्थौ चित्र इवार्पितः ॥ २१८ ॥

असौ वैरिमनःशल्यं, शल्यो नाम सुमध्यमे ! । उज्जिहीते जगन्नेत्रा-नन्दी नन्दिपुरेश्वरः ॥ २१९ ॥ आरोहति परां कोटिं, गुणश्चापस्य चास्य च । परेभ्यः शरणायाता-नरातीनपि रक्षतः ॥ २२० ॥ यत्खड्गदण्डे निःश्वास-पवनं पीवयत्यपि[3] । स्फुरन्ति चित्रं शत्रूणां, भाले घर्मोदबिन्दवः ॥ २२१ ॥ उल्लसद्दैवतज्योतिः-पराहतविलोचनः । चापमप्येतदब्जाक्षि !, क्षमते नायमीक्षितुम् । ॥ २२२ ॥

कुमारः सहदेवोऽयं, देवि ! देवसमाकृतिः । दूरादुपहसन्नेनं, झगित्यासनमत्यजत् ॥ २२३ ॥ अस्ति दोर्विक्रमाक्रान्त-त्रिखण्डक्षितिमण्डलः । जैत्रकीर्तिर्जरासन्धो, राजा राजगृहेश्वरः ॥ २२४ ॥ आहुतीकृत्य भूदेवो, यश्चक्रोर्दोर्चिपि द्विपः ।

१ ' प्रेयसीयुजः ' प्रतिद्वय० । २ ' सदर्पा ' प्रतिद्वय० । ३ वर्धयति । ४ चक्राग्नौ ।

राजेति लिपिमुल्बणाम् । असूययेव लुम्पन्ति, यस्य
प्रतापं वर्धयामास, यशश्चागमयद्दिवम् ॥ २२५ ॥ नमद्भूपालभालेषु, राजेति लिपिमुल्बणाम् । असूययेव लुम्पन्ति, यस्य
पादरजःकणाः ॥ २२६ ॥ आस्थानीमास्थिते यस्मि-न्निदेशैकाभिलाषिणः । अश्रान्तमेव तिष्ठन्ति, देवा अप्यौपजानुकाः ॥
२२७ ॥ तस्मादसौ महातेजाः, प्रदीप इव पावकात् । अजायत जगज्जैत्रो, जयन्त इव वासवात् ॥ २२८ ॥ शुचिर्यद्विक्रमस्ता-
लु-चारीणि रिपुयोषिताम् । भालव्योमाङ्कमारोप्य, वर्षत्यश्रुकणच्छलात् ॥ २२९ ॥ आत्मनैकधुरीणेऽस्मिन्, न्यस्तविश्वंभरा-
भरः । अपरां विषयग्राम-चिन्तां वितनुते पिता ॥ २३० ॥ कोदण्डमिदमादाय, कान्तिदायादचन्द्रिके ! । पुनर्विमुञ्चत्यानम्य,
सोऽयमप्युल्लसत्त्रपः ॥ २३१ ॥

कृशाङ्गि ! शिशुपालोऽयं, चेदीनामधिदैवतम् । बान्धवैरुपरुद्धोऽपि, राधावेधाय धावति ॥२३२॥ खड्गेनाम्बुभृता सिक्ताः,
प्रतापग्रीष्मतापिते । हृदये नोदगुः कस्य, यस्य विक्रान्तिवीरुधः ॥ २३३ ॥ शौण्डीर्याहंकृतीः कामं, निर्वास्य चिरवासिनी (नीः)
तेनिरे येन वास्तव्या, विद्विषां हृदये भियः ॥ २३४ ॥ क्षणं बाणावलीर्वर्षन्, जिहीर्षोः किल रुक्मिणीम् । चक्रे यश्चक्रिणो-
ऽप्यन्तः, शङ्कापङ्काकुलं मनः ॥ २३५ ॥ अरिकीर्तीः क्षिपंस्ताराः, पद्मोल्लासं दिशन् युधि । प्राक्सन्ध्यां करिसिन्दूरै-र्यस्य कालः
करोत्यसिः ॥ २३६ ॥ कार्मुकं नमयन् बाहु-सारसर्वाभिसारतः । अयमप्यवनीपालैः, सस्मितैरवलोक्यते ॥ २३७ ॥
देवि ! दर्पादनुत्थासु-रपि मित्रोपरोधतः । नृपः कर्णोऽयमभ्यर्ण-मभ्येति धनुषः शनैः ॥ २३८ ॥ धनुर्वेद-

१ जानुसमीपे स्थायिनः । २ भोगसमूहचिन्ताम् । ३ कान्तिविभागग्राहिणि ! चन्द्रिकावत् आनन्ददायिनि ! । ४ शिशुपालस्य ।
५ 'कृती' प्रतित्रयपाठो न सम्यग् भाति । ६ 'वासिनी' प्रतिचतुष्टयपाठो न सम्यग् भाति ।

कृतं ज्ञान-चक्षुर्व्योमगरस्थितम् । प्रयोगे पुनरेतस्य, ततोऽपि पुरतोऽगमत् ॥ २३९ ॥ समरे येन निर्माय, मण्डपं काण्डपङ्क्तिभिः । पाणौ चक्रे परावृत्तां, द्विषां श्रीरपि रक्षिता ॥ २४० ॥ मार्गणाः संगरे यस्य, पश्चान्मुञ्चन्ति कार्मुकम् । द्विषां प्राणास्तु तद्भेद-भियेव पुरतो ययुः ॥ २४१ ॥ संयुगे यस्य पश्यद्भि-रिष्वासाभ्यासलाघवम् । स्वर्वीरैः कृतकृत्येन, मन्यते निर्निमेषता ॥ २४२ ॥ दत्ते लक्ष्यमसौ प्राणा-नप्यस्य रिपवः पुनः । तत्कं स्तुम इतीवात्रा-ङ्मुखा यन्मार्गणा रणे ॥२४३॥ अथास्यामिति जल्पाक्या-मुन्मीलत्स्वेदमेदुरा । श्यामीभवन्मुखाम्भोजा, पाञ्चालीदमचिन्तयत् ॥ २४४ ॥ सूतसूति-रिति ख्यातो, जगत्येकधनुर्धरः । अस्मिंश्च रमते हन्त, मनो मे न मनागपि ॥ २४५ ॥ रतिं त्वेतेऽङ्गजन्मानः, पाण्डोस्ता-ण्डवयन्ति मे । विडम्बयितुमारब्धा, तत्किं नामास्मि वेधसा ? ॥ २४६ ॥ मया बद्धोऽञ्जलिर्बाढ-मयं वः कुलदेवताः ! । रक्षणीयः पतिः पाण्डो-रात्मजेभ्यो ममापरः ॥ २४७ ॥ इति पृथ्वीपतेः पुत्री-मन्तश्चिन्तां वितन्वतीम् । व्याजहार प्रती-हारी, पुनः श्रोत्रामृतं वचः ॥ २४८ ॥

हेलया चापमारोप्य, हठग्रहकुतूहली । राधावेधी न राधेयो, जनन्या नामसाम्यतः ॥ २४९ ॥ परं त्वत्कुलदेवीनां, प्रभावप्रहतौजसः । न हि स्वयंवरक्षोभे, कस्यापि प्रभविष्णुता ॥ २५० ॥ बल-प्रद्युम्न-साम्बाद्यैः, प्रवीरैः परिवारितः । अत्राप्यासीन एवास्ते, कृष्णः केनापि हेतुना ॥ २५१ ॥ अन्धसा कंसरूपेण, कीनाशं भोजयिष्यता । चाणूराद्याः कृता

१ 'श्रीरपरिक्षता' प्रतित्रयपाठः । तत्र न परिक्षता-नष्टाऽखण्डितेति यावत् । २ देवैः । ३ 'लक्ष०' प्रतित्रयपाठः । ४ 'रिपवस्तु नः' प्रतित्रय० 'रिपवस्तु न' इत्येका प्रतिः । ५ 'लत्स्वेद०' प्रतित्रय० । ६ सूतपुत्रः-कर्णः । ७ ओदनेन ।

येन, तेऽफलाः फलिकापदे ॥ २५२ ॥ कंसक्षेत्रेषु भास्वान् यत्, प्रतापः पत्रवल्लरीः[3] । अशोषयत्तथा भूयः, प्ररोहन्ति स्म नो यथा ॥ २५३ ॥ द्वैराज्यस्य द्विषन् कंचित्, स्वदायादमवेक्षितुम् । विवेश हृदि नो कस्य, यद्भुजस्तम्भविक्रमः ? ॥ २५४ ॥ वैरिनारीदृशो यस्य, ददतीवाश्रुकैतवात् । प्रियस्यास्तमुपेतस्य, विलासस्य जलाञ्जलिम् ॥२५५॥ वक्षोऽङ्कितं द्विषद्दन्ति-दन्ताघातकिर्णार्बुदैः[4] । यस्य श्रीराश्रयदुर्ग-मिवानेकाद्रि[5]दुर्ग्रहम् ॥ २५६ ॥ असौ लोलेक्षणे ! सर्व-कर्मीणभुजवैभवान् । कर्मणीह कृतोत्साहान्, सुतानपि निषेधति ॥ २५७ ॥

धृतराष्ट्राङ्गभूयोध-लक्ष्ययोधी सुयोधनः । स एष मातुर्गान्धार्या, रोमाञ्चेन सहोत्थितः ॥ २५८ ॥ यस्यांसशैलमालम्ब्य, घनपल्लवितश्रियम् । कुरुवंशः परां कांचि-दुत्तंसयति संपदम् ॥ २५९ ॥ आकृष्य प्रीतिलुण्टाकीः, सुहृच्चेतोनिकेतनात् । योऽस्त्रयद्धियः शत्रु-मनःकाराकुटुम्बिनीः ॥२६०॥ केचित्तत्कालमानम्राः, क्षणात् केऽपि पलायिताः । नास्यं यस्याभ्यमित्रस्या-प्यपश्यन् वैरिणो रणे ॥ २६१ ॥ त्राणाय शत्रुभिर्यस्य, बृहत्कटकशालिनः । उभयेऽपि निषेव्यन्ते, महीयांसो महीभुजः[6] ॥ २६२ ॥ दर्पादिष्वासमादातुं, नम्रीभूतोऽपि भामिनि ! । हेतोः कुतोऽप्यसौ कामं, नमस्यति महाभुजः ॥ २६३ ॥ अन्येऽपि धृतराष्ट्रस्य, सुता दुःशासनादयः । दोर्वैभवावधिं वीक्ष्य, निषीदन्ति विषादिनः ॥ २६४ ॥ एते तु भगदत्ताश्व-त्थाम-भूरिश्रवः-शलाः । जयद्रथ-महासेन-चारुदेष्णादयोऽपि च ॥ २६५ ॥ तथैव तस्थुर्दोःस्थाम, निजमालोच्य

१ शाकस्थाने । २ कंसभार्यासु । पक्षे सुगमार्थः । ३ चन्दनादिलेपान् । ४ अर्बुदः—पर्वतविशेषः । 'अम्बुदैः' 'आयुधैः' इति प्रतिपाठो न सम्यग् भाति । ५ 'नेकारि०' इति प्र० । ६ पर्वताः राजानश्च ।

चेतसि । गतामात्मव्रता नाम, महर्द्धिमहिमास्पदम् ॥ २६६ ॥ ( युग्मम् )

प्रचेलुर्मंक्षतः पश्य, देवि ! भ्रूसंज्ञया हरेः । विसयस्मेरराजन्य–नेत्रनीराजिताननाः ॥ २६७ ॥ कटाक्षकोटिभिः प्रत्यु–द्याताः रूस्याश्चिदादरात् । स्मरेपव इवोचण्डाः, पाण्डोः पञ्चापि सूनवः ॥ २६८ ॥ ( युग्मम् ) देवि ! पञ्चभिरप्येतैः, कुलं कुरुनरेशितुः। पाण्डवैर्मण्डयांचक्रे, शरीरं करणैरिव ॥ २६९ ॥ रसौ वीरश्च शान्तश्च, व्योम्नीवार्कनिशाकरौ । तिष्ठतो यत्र किं नाम, तस्याजातरिपोः स्तुवे ? ॥ २७० ॥ भुजैर्युद्धेष्वरिस्तोम–यमयोर्यमयोरपि । स्वःकुरङ्गदृशां भर्तृ–सुभिक्षं निर्ममे–नमाम् ॥ २७१ ॥ रिपुघ्नं युधि नामापि, भीम-फाल्गुनयोः पुनः । हरेर्वित्रासयत्येव, प्रतिशब्दोऽपि दन्तिनः ॥ २७२ ॥ व्योम्नि ग्रस्तासुरस्रैणे, ग्रहितैः कलितैः पुनः । युधि क्रीडति भीमोऽयं, कुञ्जरैः कन्दुकैरिव ॥ २७३ ॥ अर्जुनस्य पुनर्बाणाः, शत्रुप्राणापहारिणः । अमुक्ता अपि चापेन, विविशुः कस्य नो हृदि ? ॥ २७४ ॥ शरैर्यस्यारिनारीणां, लूनाः पत्रलतास्तथा । यथा सह व्यलीयन्त, कटाक्षसुमनोलिहः ॥ २७५ ॥ ईदमस्यास्तु कल्पान्त–स्थायिन्येषां तु भूरिति । मन्ये यन्मार्गणा लक्ष्य–मादायापि भ्रमन्ति ताम् ॥ २७६ ॥ यस्य बाणा रणे वक्षो, मश्नन्ति प्रतिपन्थिनाम् । तच्छुद्धान्तवधूनां तु, स्रंसन्ते हारवल्लयः ॥ २७७ ॥ केयमात्तविमुक्तीना–मपि नः कर्मनिम्नता ? । इत्यादित्यमिव प्रष्टुं, द्यां ययुर्यच्छरा रणे ॥ २७८ ॥ धनुर्वेदोपनिषदं, पश्यन् यत्रात्मनोऽधिकाम् । गुरुर्द्रोणोऽपि नियतं, यं गुरुं कर्तुमिच्छति ॥ २७९ ॥ इत्यस्यां वेत्रधारिण्यां, धात्रीशदुहितुः पुरः । निगदन्त्यां मुदा प्राप, चापसामीप्यमर्जुनः ॥ २८० ॥

१ अन्त्रैः । २ युगलयोः–सहदेवनकुलयोः । ३ देवीनाम् । ४ सिंहस्य । ५ हस्ते गृहीतैः । ६ लक्ष्यम् ।

कस्यापि विस्मयस्मेराः, कस्याप्युत्प्रासपांशुराः । क्रोधताम्राश्च कस्यापि, दृशः पेतुः किरीटिनि ॥ २८१ ॥ क्षणात् प्रदक्षिणीकृत्य, प्रणिपत्य च कार्मुकम् । ज्येष्ठबन्धोरथादेशा-दुच्चिक्षेप कपिध्वजः ॥ २८२ ॥ साहंकारस्ततस्तार-मुज्जगार वृकोदरः । एतदत्यद्भुतं कर्म, कुर्वाणे कपिकेतने ॥ २८३ ॥ दोर्भृतो यस्य कस्यापि, शिरःशूलमुदेष्यति । गदेयमगदंकारः, तस्य जागर्ति मामकी ॥ २८४ ॥ ( युग्मम् ) पार्थोऽप्यनमयच्चापं, समं मानैर्महीभृताम् । निनाय शिञ्जिनीकोटि-मात्मना सह धन्विषु ॥ २८५ ॥ तदानीमासदन् कान्ति, सुहृदां वदनेन्दवः ॥ तत्प्रणुन्न इव ध्वान्तो, मुखमाशिश्रियद्द्विषाम् ॥ २८६ ॥ अमुञ्चदङ्कुरान् कुन्ती, मनस्यानन्दकन्दलान्[3] । गान्धारी हृदि तु स्वैर-मप्रीतिविषवल्लरीम्[4] ॥ २८७ ॥ आसन् युधिष्ठिरादीनां, प्रमोदविशदा दृशः । तदा दुर्योधनादीनां, पुनर्दोषकषायिताः ॥ २८८ ॥ अभूत् कर्मेदमेतावत्, पुरो भवतु देवता । इत्याशंसारसाद्भेजे, द्रौपदी विवशां दशाम्[5] ॥ २८९ ॥ पाण्डुं च धृतराष्ट्रं च, भीष्मं च गुरुरब्रवीत् । अर्जुनस्य भुजौर्जित्य-मितः पश्यत पश्यत ॥ २९० ॥ शनकैराकृषेर्वत्स !, चापमेतच्चिरंतनम् । सहिष्यते न ते सार-मिति भीमेऽनुशासति ॥ २९१ ॥ आसनाद्भसोत्ताल-वाचालवदनोदरे । पश्यति द्रुतमुत्थाय, पृथिवीपालमण्डले ॥ २९२ ॥ कुतूहलान्मिलन्तीनां, सिद्धगन्धर्वयोषिताम् । व्योम्नि वक्त्रैर्विमानान्त-र्लक्षितैः शतचन्द्रिते[6] ॥ २९३ ॥ सुहृद्वपुषि रोमाञ्चः, प्रस्वेदो द्वेषिवर्ष्मणि । काण्डः[7] कोदण्डदण्डे च, संदधे सव्यसाचिना ॥ २९४ ॥ ( चतुर्भिः कलापकम् ) अथान्तस्तैल-

१ उपहासेन पापिष्ठाः । २ प्रत्यञ्चाग्रम् । ३ 'न्दलः' प्रतित्रयपाठः । ४ 'वल्लरी' प्रतित्रयपाठः । ५ 'विशदां दृशं' 'विवशां दशाम्' प्र० । ६ शतचन्द्रवति कृते सति । ७ शरः ।

क्रुम्ब्य, प्रतिबिम्बवतामधः। जवेन भ्राम्यतां तेषां, चक्रकाणामरान्तरे ॥२९५॥ लक्ष्यीकुर्वन् नमद्वक्त्रो, राधाया वामनीक्षणम्। ऊर्ध्वीकृत्य दृशं पूर्वां, वक्षोऽन्तमपरां नयन् ॥ २९६ ॥ कटाक्षैः सह कृष्णायाः, कुन्त्याः अस्रवनिर्झरैः। पितुरानन्दवाष्पैश्च, चकर्ष धनुरर्जुनः ॥ २९७ ॥ ( त्रिभिर्विशेषकम् ) तथाभूतः स भाति स्म, हन्तुं देवानिवोद्यतः। दीनं न तन्मुखाम्भोज-मनीक्षितुमना इव ॥२९८॥ अदभ्रसंभ्रमैः कैश्चि-दासनात् पतयालुभिः। स्थगयद्भिः श्रुती पाणि-पल्लवाभ्यां न कैश्चन ॥ २९९ ॥ उद्बुद्धमाध्वसैः कैश्चित्, परिभ्रष्टोत्तरीयकैः। अतिभूरिभयोद्भ्रान्तै-र्वेपमानैश्च कैश्चन ॥ ३०० ॥ भिन्दानो गद्रितटीमन्वन, शब्दाद्वैतमयं जगत्। फाल्गुनाकृष्टकोदण्ड-टंकारः श्रूयते स्म सः ॥३०१॥ ( त्रिभिर्विशेषकम् ) मन्ये तस्माद्धनुर्ध्मानात्, त्रस्तैरश्वैर्विनस्यतः। एकचक्रो रथश्चक्रे, मेरोरास्फाल्य सानुषु ॥ ३०२ ॥ भुजैः सह महीशानां, मार्गणो गुणमत्यजत्। बिभेद मत्स्यं[1] लक्ष्यं च, तदीयहृदयैः समम् ॥ ३०३ ॥ क्षणादूर्ध्वं शरः प्राप, शरण्यं[2] सव्यसाचिनः। लोकाग्रं पुनरसेद्-र्भुवनविस्फूर्तिकीर्तयः ॥ ३०४ ॥ पुष्पवर्षं मरुत्पर्ष-दुपरिष्टात् किरीटिनः। दिवोऽङ्कादमुचत् प्राप्त-मानन्दमिर मूर्ततनाम् ॥ ३०५ ॥ विलेसुर्दिनि गीर्वाण-दुन्दुभिध्वनयोऽधिकम्। धनंजयधनुर्ध्वान-प्रतिध्वानसनाभयः ॥ ३०६ ॥ मुदा लोकस्य सर्वस्या-प्युल्ललास जयध्वनिः। सूत्रयन्मातृकां देवीं, वर्णद्वयमयीमिव ॥ ३०७ ॥ आनन्दैकमयं संप-न्मयं स्फीतयशोमयम्। तदा कुन्त्याश्च पाण्डोश्च, बभूव निखिलं जगत् ॥ ३०८ ॥

गाकाङ्क्षमथ पश्यन्ती, दृशः कोणेन कोटिशः। सुतान् पञ्चापि पाञ्चाली, पाण्डोरुद्दण्डविक्रमान् ॥३०९॥ रोमहर्षमिपा-

---

१ 'दृढं' प्रतिमय०। २ त्राणः। ३ लक्ष्यम्।

न्व्य-स्मराङ्कुरकरम्बितम्[1]। वपुर्लीलावनं भून्ना, सिञ्चन्ती स्वेदवारिभिः ॥ ३१० ॥ स्वैरमुज्जृम्भितस्तम्भा[2], पृथुप्रथितवेपथुः । मदौ-त्सुक्य-त्रपा-हर्ष-साध्वसस्फारचारिमा[3] ॥ ३११ ॥ वरीतुकामा पञ्चापि, लोकनिर्वादशङ्किता । दौवारिकीकराब्जाभ्यां, कण्ठपीठे किरीटिनः ॥ ३१२ ॥ वरमालां निचिक्षेप, सा तु दिव्यानुभावतः । लोकैः प्रत्येकमेकाऽपि, तेषां कण्ठेष्वदृश्यत ॥ ३१३ ॥ ( पञ्चभिः कुलकम् ) उच्चचार ततस्तारा[4], व्योम्नि वागशरीरिणी । साधु साधु वृतं राज-कन्यया मा स्म शङ्क्य-ताम् ॥ ३१४ ॥ चिन्ता चतुर्णामन्येषा-मनुरूपा स्नुषाऽस्तु मे । इदानीमपयातेय-मिति कुन्ती मुदं दधौ ॥ ३१५ ॥ किमेषामपि भाग्येन, दत्तभूयिष्ठसौष्ठवः । कर्मेदमादधे जिष्णु-रिति पाण्डुर्विसिष्मिये ॥ ३१६ ॥ परिवेत्ता[5] भविष्यामि, नाहमुद्वाहशालिनि । तपःसुते च भीमे चे-त्यप्रीयत कपिध्वजः ॥ ३१७ ॥ पञ्चभ्यस्तनयामेकां, नामीभ्यो दातुमुत्सहे । ददानो हि गमिष्यामि, साधूनामुपहास्यताम् ॥३१८॥ वरमाला च पञ्चाना-मपि कण्ठे लुलोठ । सा दिव्यवाक् केयमुत्तस्थौ ?, तत् किं नाम भविष्यति ? ॥३१९॥ इति चिन्तातुरो याव-दभूद्द्रुपदभूपतिः । चारणश्रमणः कश्चि-त्तावदागाद्दिवोऽध्वना ॥ ३२० ॥ ( त्रिभिर्विशेषकम् )

दिशः काञ्चनकान्ताभि-र्दिग्धानं[6] देहकान्तिभिः। परमज्योतिषः प्रासं, विवर्तमिव मूर्त्तताम् ॥ ३२१ ॥ तमभ्युदस्थुः पाञ्चाल-विष्वक्सेनादयो नृपाः । स्फुरदम्भोरुहाराम-पवमान[7]मिवालिनः ॥ ३२२ ॥ ( युग्मम् ) तमासयित्वा सर्वेऽपि, रत्न-

१ करम्बितं-सहितम् । २ प्राप्तस्तब्धता । ३ चारिमा-सुन्दरता । ४ महती । ५ " परिवेत्ताऽनुजोऽनूढे, ज्येष्ठे दारपरिग्रहात् " इत्यमरः । ६ लिम्पन्तम् । ७ पवमानः-वायुः ।

सिंहासने मुनिम् । धात्रीलुठितमूर्धानः, प्रणेमुः पृथिवीभुजः ॥ ३२३ ॥
सिंहासने मुनिम् । धात्रीलुठितमूर्धानः, प्रणेमुः पृथिवीभुजः ॥ ३२४ ॥ सोऽब्रवीदेतया

अथावसरमासाद्य, देशनान्ते मुनीश्वरम् । किं धवाः पञ्च पाञ्चाल्या ?, इत्यपृच्छज्जनार्दनः ॥ ३२४ ॥ सोऽब्रवीदेतया
पूर्व-जन्मोपार्जितनिदानया । वृताः पञ्च धवास्तद्भोः !, कृतं मीमांसयाऽनया ॥ ३२५ ॥ पुरा हि पुरि चम्पायां, भूमिदेवा-
स्त्रयोऽभवन् । सोमदेव-सोमभूति-सोमदत्ताः सहोदराः ॥ ३२६ ॥ तेषामासन् क्रमात्तिस्रः, प्रेमजन्मभुवः प्रियाः । नाग-
श्रीश्च भूतश्री-र्यक्षश्रीश्चेति नामतः ॥ ३२७ ॥ मिथः स्निग्धतया तेषा-मियमासीद्व्यवस्थितिः । यत् पर्यायेण भोक्तव्यं,
सर्वैरेकस्य वेश्मनि ॥ ३२८ ॥ अथ क्रमात् समायाते, भुक्तिवारकवासरे । नागश्रीराश्रितानेक-रसां रसवतीं व्यधात् ॥३२९॥
कटुतुम्बीफलं तस्या-मनेकद्रव्यसंस्कृतम् । अपाक्षीदियमज्ञासीत्, पाकान्ते च कथंचन ॥ ३३० ॥ नानावस्तुव्ययोद्भूतं, कार्प-
ण्येन न साऽत्यजत् । केवलं क्वचिदेकान्ते, निधाय तदधारयत् ॥३३१॥ तदन्यैर्विविधैर्भोज्यैः, स्वादुभिः पति-देवरान् । भोज-
यामास सा प्रीता, क्षणात् तेऽपि बहिर्ययुः ॥३३२॥ तदा सुभूमिभागाख्ये, पुरोद्याने महामनाः । धर्मघोषाभिधः सूरि-
र्ज्ञानवान् समवासरत् ॥ ३३३ ॥ तस्य धर्मरुचिः शिष्यो, मासक्षपणपारणे । किरात्या इव कल्पद्रु-र्गृहं नागश्रियो ययौ
॥ ३३४ ॥ वृथा मा भूदिदं ताव-द्भवेदेषोऽपि तोषितः । इत्यालोच्य तया तस्मै, तत्तुम्बीव्यञ्जनं ददे ॥ ३३५ ॥ अपूर्वमिति
संचिन्त्य, तद्ग्रहानुग्रहेच्छया । असौ वसतिमागत्य, गुरूणां तददर्शयत् ॥ ३३६ ॥ तेऽपि तद्गन्धमाघ्राय, वात्सल्यादिदमूचिरे ।
यदीदं भोक्ष्यसे वत्स !, सद्यो मृत्युमवाप्स्यसि ॥ ३३७ ॥ विशुद्धे स्थण्डिले मङ्क्षु, तत् परिष्ठापय क्वचित् । इत्यादेशाद्गुरोः

१ 'सर्वेषामेव वेश्मनि' उत्कमप्रतिपाठः । २ 'व्ययोद्भूतका०' प्रतित्रयपाठः । ३ ग्रहः-आग्रहः ।

सोऽपि, जगाम नगराद्बहिः ॥३३८॥ बिन्दौ निपतिते तस्य, कथंचित् तत्र पात्रतः। सक्ताः स मुनिरद्राक्षी-न्म्रियमाणाः पिपीलिकाः ॥ ३३९ ॥ दध्यौ च बद्धसंवेगो, बिन्दुरप्यस्य यद्यसौ। प्राणिनामियतां हन्ता, तत्सर्वं किं करिष्यति ? ॥ ३४० ॥ वरमेकस्य मे मृत्युः, कोटिशो न तु देहिनाम्। इत्यालोच्य सरोमाञ्च-स्तदसौ बुभुजे स्वयम् ॥ ३४१ ॥ सिद्धप्रत्यक्षमालोच्य, समाधिमधुरं मनः। दधत् सर्वार्थसिद्धेऽगा-न्मुनिः प्राणान् विहाय सः ॥३४२॥ बहिर्धर्मरुचेः कस्मा-द्विलम्ब ? इति वेदितुम्। गुरुः श्रीधर्मघोषोऽथ, निदिदेश परान् मुनीन् ॥ ३४३ ॥ तं परासुं बहिर्वीक्ष्य, तद्रजोहरणादिकम्। आदाय गुरुपादानां, तेऽपि सर्वं न्यवेदयन् ॥ ३४४ ॥ विज्ञायातीन्द्रियज्ञानो-पयोगेन यथास्थितम्। सर्वं मुनीनां नागश्री-वृत्तान्तं तेऽप्यचीकथन् ॥३४५॥ ज्ञात्वा कथंचिल्लोकानां, वाक्परम्परया जनाः। सोमदेवादिविप्राणां, तस्या दुश्चेष्टितं जगुः ॥ ३४६ ॥ काममाक्रुश्य विप्रास्ते, तां गृहान्निरवासयन्। लोकैर्धिक्क्रियमाणा च, साऽपि बभ्राम सर्वतः ॥ ३४७ ॥ कास-श्वास-ज्वरो-त्कम्प-कुष्ठाद्यैः क्रान्तविग्रहा। रोगैः षोडशभिर्लेभे, साऽत्रैव नरकव्यथाम् ॥ ३४८ ॥ क्षु-त्पिपासार्दिता लोकै-र्निन्द्यमाना पदे पदे। दुःखं भ्रमन्ती सा मृत्वा, षष्ठं नरकमासदत् ॥ ३४९ ॥ तस्मादुत्पद्य मीनेषु, सप्तमं नरकं ययौ। पुनर्मीनत्वमासाद्य, तस्मिन्नेव जगाम सा ॥ ३५० ॥ द्विर्द्विरेवं सिषेवेऽसौ, नरकान् सकलानपि। पृथ्वीकायादिभूत्पेदे, तदुद्वृत्ता च भूरिशः ॥ ३५१ ॥ चम्पायामथ सा कर्म-लाघवात् सुकुमारिका। सुता सागरदत्तस्य, सुभद्राकुक्षिभूरभूत् ॥३५२॥ जिनदत्तात्मजस्तत्र, भद्राजश्चास्ति सागरः। वेश्मस्थां तत्पिताऽन्येद्यु-र्ददर्श सुकुमारिकाम् ॥ ३५३ ॥ तनयस्य मदीयस्य, योग्येयमिति चिन्तयन्। सह बन्धुभिरभ्येत्य, पितरं तामयाचत ॥ ३५४ ॥ सोऽप्यूचेऽतिप्रिया मेऽसौ, न भवाम्यनया विना। ममास्तु गृहजा-

माता, सागरस्तत् तदात्मजः ॥३५५॥ सुतमालोचयामीति, जिनदत्तोऽगमद् गृहम्। सागरस्य तदाख्यच्च, मौनमालम्ब्य स स्थितः ॥ ३५६ ॥ अनिषिद्धं ह्यनुमत–मिति न्यायेन तत्पिता। मेने सागरदत्ताय, गृहजामातरं सुतम् ॥३५७॥ आश्चर्यकृन्नगरीजने, पाणिग्रहमहोत्सवः। नक्तं शिश्रियतुस्तौ च, पल्यङ्कं वासवेश्मनि ॥ ३५८ ॥ पूर्वकर्मवशात्तस्याः, स्पर्शमङ्गारसोदरम्। आसाद्य सागरस्तस्थौ, क्षणं तत्र कथंचन ॥३५९॥ तस्यां सुखप्रसुप्तायां, स प्रणश्य गृहं ययौ। निद्रात्ययेऽरुदत् कान्त–मपश्यन्ती न सा भृशम् ॥३६०॥ अथादिष्टा तयोर्दन्त–शौचहेतोः सुभद्रया। प्रातरैक्षिष्ट तां चेटी, रुदन्तीं वल्लभोज्झिताम् ॥ ३६१ ॥ सा गत्वाऽऽख्यत् सुभद्रायै, साऽपि स्वश्रेयसे क्षणात्। पितुरेषोऽपि जामातु–रुपालम्भं ददौ स्वयम् ॥३६२॥ सोऽप्याह तनयं वत्स !, न युक्तं विदधे त्वया। गच्छाधुनाऽपि तत् तत्र, माऽन्यथा मद्वचः कृथाः ॥३६३॥ सागरोऽप्यूचिवानग्नौ, वरं झम्पां तनोम्यहम्। न पुनस्तात ! गन्तास्मि, वेश्म तस्याः कदाचन ॥ ३६४ ॥ इदं सागरदत्तोऽपि, तन्[1]यान्तरितोऽशृणोत्। जगाद च गृहं गत्वा, निरागः सुकुमारिकाम् ॥ ३६५ ॥ कथंचित् सर्वथा वत्से !, विरक्तः सागरस्त्वयि। तन्मा खिद्यस्व कोऽप्यन्यः, पतिस्तव विधास्यते ॥ ३६६ ॥ कौपीनाम्बरमात्रैक–कर्परं मक्षिकावृतम्। भिक्षुकं कंचिदद्राक्षीत्, स गवाक्षस्थितोऽन्यदा ॥ ३६७ ॥ आहूय तेन सोऽम्भोभिः, स्नपयित्वा सुगन्धिभिः। विलिप्य चन्दनैर्दिव्यवासांसि परिधाप्य च ॥ ३६८ ॥ ऊचे तुभ्यं मया दत्ता, पुत्रीयं सुकुमारिका। मदीयां विलसन् लक्ष्मीं, सुखमास्स्व सहानया ॥ ३६९ ॥ (युग्मम्) इत्युक्तः सोऽविशद्वास–वेश्म साकं तया निशि। मेने च तद्वपुःश्लेष–मग्निप्लोषमिवात्मनः ॥३७०॥

[1] अभिगमम्।

सहसोत्थाय वेषं स्व-मादाय स पलायितः । तथैव रुदतीं तां च, विलोक्य जनकोऽब्रवीत् ॥ ३७१ ॥ सोऽयं प्राक्कर्मणां वत्से !, विपाकोऽन्यत्र कारणम् । तदास्स्व ददती दानं, शान्तात्मा मम वेश्मनि ॥ ३७२ ॥ तथैव कुर्वती तस्थौ, सा धर्मैकपरायणा । प्रापुस्तद्गेहमन्येद्युः, साध्व्यो गोपालिका इति ॥३७३॥ शुद्धैरशनपानाद्यैः, सा भक्त्या प्रतिलाभ्य च । तन्मुखाद्धर्ममाकर्ण्य, विरक्ता व्रतमग्रहीत् ॥ ३७४ ॥ तपोऽथ कुर्वती नित्यं, तुर्य-षष्ठा-ष्टमादिकम् । आर्यिकाभिः सहैताभि-र्विहारमकरोदियम् ॥ ३७५ ॥ आर्यास्ताः सा कदाऽप्यूचे, तनोम्यातापनामहम् । सुभूमिभागोद्यानस्था, दत्तदृष्टिर्विवस्वति ॥ ३७६ ॥ सा प्रत्यभिदधे ताभि-रिति ह स्मागमोक्तयः । आतापना न साध्वीनां, कल्पते वसतेर्बहिः ॥ ३७७ ॥ अनाकर्ण्य च तद्वाचं, वने तस्मिन्नुपेत्य सा । यावदारभते क्षिप्त-चक्षुरातापनां रवौ ॥ ३७८ ॥ तावदुत्सङ्गमेकस्य, श्रयन्तीमपरस्य तु । अङ्के न्यस्ताङ्घ्रिमन्येन, बध्यमानावतंसकाम् ॥ ३७९ ॥ परेण विधृतच्छत्रां, वीजितामितरेण च । गणिकामागतां तत्र, देवदत्तां ददर्श सा ॥ ३८० ॥ ( त्रिभिर्विशेषकम् ) तां वीक्ष्यापूर्णभोगेच्छा, निदानमिति साऽकरोत् । भवेयं तपसाऽनेन, पञ्चप्रेयस्य-साविव ॥ ३८१ ॥ तन्वती देहशौचाद्य-मभ्युक्षन्ती क्षणे क्षणे । वार्यमाणेयमार्याभि-र्मनसीदमधारयत् ॥ ३८२ ॥ पुरा बहु-मताऽभूव-मार्यिकाणामगारिणी । तिरस्कुर्वन्ति मामेता, भिक्षुकीमधुना पुनः ॥ ३८३ ॥ इत्यालोच्य विनिर्गत्य, विभिन्न-वसतिस्थिता । व्रतं सा पालयामास, चिरं स्वच्छन्दवर्तिनी ॥ ३८४ ॥ मासान् संलेखनामष्टौ, कृत्वाऽनालोच्य संस्थिता । नवपल्योपमायुष्का, सौधर्मे देव्यभूदियम् ॥ ३८५ ॥ च्युताऽभवच्च कृष्णेयं, प्राचीनाच्च निदानतः । भर्तारो जज्ञिरेऽमुष्याः,

१ मृता ।

इत्येतां गिरमुद्दीर्य, जगाम नभसा मुनिः। कुर्वते चिरमेकत्रा–वस्थितिं न हि तादृशाः ॥३८७॥
पर्श्वेते कोऽत्र विस्मयः ?॥३८६॥ इत्येतां गिरमुद्दीर्य, जगाम नभसा मुनिः। विकासमुदये भानो–ररविन्दाकरा इव ॥ ३८८ ॥ अथ वैवाहिकं कर्म, प्रार-
पाण्डवानां वधूलाभे, दधुः स्वजनभूभृतः । विकासमुदये भानो–ररविन्दाकरा इव ॥ ३८८ ॥ अथ वैवाहिकं कर्म, प्रार-
मेने स्म तन्वणान् । पाण्डुः पाञ्चालभूपश्च, लक्ष्मीसंभारभासुरम् ॥ ३८९ ॥ प्रमोदोत्फुल्लनेत्राभिः, सौधमानीय सादरम् ।
पाञ्चाली कुलवृद्धाभिः, स्नानपीठे न्यवेश्यत ॥३९०॥ उद्गिरन्ती बहिः स्नेहं, पाण्डुपुत्रेष्विवाऽन्तरम् । कृष्णा सुगन्धिभि-
र्तैलैः, कृताभ्यङ्गा स्म भासते ॥ ३९१ ॥ तस्याः पिष्टातकक्षोद–क्षरदुद्वर्तनीमिषात् । विक्षिप्तं यौवनेनाङ्गात्, खण्डयित्वेव
र्गरम् ॥ ३९२ ॥ रत्नैरिव निधानानि, श्रीखण्डतिलकान्विव । तस्याः सहर्षमङ्गेषु, चक्रिरे कुलयोषितः ॥ ३९३ ॥ नवीनयौ-
वनाराम–केदारिव तदङ्गके । तर्कुसूत्रमिषात् सूत्रं, स्वगोत्राविधवा दधुः ॥ ३९४ ॥ जृम्भते स्म भृशं विश्व–श्रोत्रपीयूषवर्षिणः ।
कुलनीलावतीवर्ग–मङ्गलध्वनयस्तदा ॥३९५॥ चिक्षिपुः कुलवामाक्ष्यो, द्रौपदीमिति वर्णके । तथैव तस्याः सानन्द–मुद्वर्णक-
मपि व्यधुः ॥३९६॥ अथान्तःक्षिप्तकर्पूर–कस्तूरी–कुङ्कुमैरिमाः । वारिभिः स्नपयांचक्रुः, कवोष्णैर्नित्ययौवनाम् ॥ ३९७ ॥
मार्जितं गन्धकाषाय्या, पाञ्चाल्याः शुशुभे वपुः । नवमाणिक्यपाञ्चाल्या, इव तत्कालसंस्कृतम् ॥ ३९८ ॥ आचार इति
नाम्नैस्तै–र्भूषणैस्तामभूषयन् । न हि प्रकृतिरम्याणा–माहार्यः काऽप्यलंकृतिः ॥ ३९९ ॥ लावण्यवारिधाराभि–र्वर्षन्तीव दशा-
मिषात् । परिणेत्रदुकूलानि, सा तदा पर्यधाप्यत ॥ ४०० ॥ उत्पाद्य योषितो हर्षा–दिमां मातृगृहेऽनयन् । आसयंश्च स्मर-
स्मेर–लोचनां काञ्चनासने ॥४०१॥ पाण्डवा अपि निर्वृत्त–वर्णको–द्वर्णकक्रियाः । निर्माय मङ्गलस्नान–मामुक्तोचितभूषणाः

१ कमलाकराः । २ कृत्रिमे. ।

॥ ४०२ ॥ औपवाह्यानथारुह्य, वारणेन्द्रान् पृथक् पृथक् । समं पञ्चापि पाञ्चालीं, परिणेतुं प्रतस्थिरे ॥ ४०३ ॥ ( युग्मम् ) मौलिनीलमणिज्योति-र्भानुज्योतिःपराहतम् । मूर्ध्नीव पिण्डितं तेषां, मायूरच्छत्रमाबभौ ॥ ४०४ ॥ रेणुर्मङ्गलतूर्याणि, पुरस्तेषामनेकशः । तारैराकारयन्तीव, दिशामीशान् प्रतिस्वनैः ॥ ४०५ ॥ पश्चादुच्चैरुरुद्रीन्द्र-कन्दरादारणोल्बणाः । शात्रवावस्थिति-क्रोधा-दिव निस्वाननिस्वनाः ॥ ४०६ ॥ सर्वंकषेषु तेजस्वि-तेजसां पाण्डुसूनुषु । पतन्ति नित्यमेतस्य, जगत्यां किममी कराः ॥ ४०७ ॥ मिलत्स्वजनभूपाल-तुरङ्गमखुरोद्धतः । इतीव स्थगयामास, पांशुरंशुमतो वपुः ॥ ४०८ ॥ ( युग्मम् ) अध्यासितुं मदश्रोतो, भूपाकुसुमदाम च । सामन्तसामजेन्द्राणां, द्विरेफाः समशेरत ॥ ४०९ । स्वजनोर्वीपतिश्वेत-च्छत्रैश्छन्नं नभो बभौ । विवाहमीक्षितुं सर्व-राकेन्दुभिरिवागतैः ॥ ४१० ॥ ध्वजैर्विरेजे वेल्लद्भि-रनुकूलेन वायुना । द्रौपदीकौतुकागार-वर्तनीदेशकैरिव ॥ ४११ । नारीमङ्गलसंगीत-श्रवणप्रवणाश्चिरम् । सादिनं खेदयामासु-स्ते पतङ्गतुरङ्गमाः ॥ ४१२ ॥ तदा कुन्ती च माद्री च, गान्धारीप्रमुखा अपि । शृङ्गारैरद्भुतैः प्रापु-र्देवानामप्यवेक्ष्यताम् ॥ ४१३ ॥ श्रुतीर्मत्सरिणां तूर्यैः, स्फोटयद्भिः स्फुटारवैः । आलोकनाय लोकं च, विकर्षद्भिरितस्ततः ॥ ४१४ ॥ सर्वतः स्तूयमाने च, बन्दिभिर्भुजवैभवे । अथ क्रमात् समाजग्मु-र्मण्डपद्वारि पाण्डवाः ॥४१५॥ ( युग्मम् ) कृतं प्रतीक्ष्य श्वश्रूभि-रवतारणमङ्गलम् । मातृगेहमुपाजग्मु-स्तेऽथ तिग्मांशुतेजसः ॥ ४१६ ॥ पाञ्चाल्या दक्षिणः पाणि-स्तदीयैर्दक्षिणैः करैः । तत्र संगमयांचक्रे, वेधसेव पुरोधसा ॥ ४१७ ॥ वृद्धावचोभिः पाञ्चाली, त्रपातरलितां दृशम् । कथंचिन्मिश्रयामास, दृशा पाण्डुतनूरुहाम् ॥ ४१८ ॥ ततो दधन्ति

१ दध्वनुः । २ वाजित्रध्वनयः । ३ सूर्यस्य । ४ सूर्यस्य ।

पश्चाङ्ग–मन्त्राक्षराणीव मूर्तताम् । साक्षाल्लक्ष्म्येव काम्पील्य–नाथनन्दनयाऽन्विताः ॥४१९॥ वैवाहिकीर्ऋचोऽधीत्य, हुतं हव्यैर्द्विजन्मना । दक्षाः प्रदक्षिणीचक्रु–स्ते वेद्यां जातवेदसम् ॥ ४२० ॥ ( युग्मम् ) द्रुपदोऽप्युपदीचक्रे, पाणिमोचनपर्वणि । पाण्डवानां विना दारान्, गृहसर्वस्वमात्मनः ॥ ४२१ ॥ पिकीपञ्चमनिर्ह्रादि–कलमङ्गलगीतयः । दुन्दुभिध्वनिभिस्तारै–राहूतपुरयोपितः ॥ ४२२ ॥ राजलक्ष्मीमिवाध्यक्षा–मादाय द्रुपदात्मजाम् । पाण्डवा रथमारुह्य, निजावासमुपागमन् ॥ ४२३ ॥ ( युग्मम् )

कृष्णादिभिर्नृपैरासैः, सदारैः स्वात्मजन्मभिः । अनुद्रुतः प्रतस्थेऽथ, पाण्डुर्निजपुरं प्रति ॥ ४२४ ॥ अनुगच्छन्तमाक्रम्य, कियतीमपि मेदिनीम् । बलान्निवर्तयामास, पाण्डुर्द्रुपदभूपतिम् ॥ ४२५ ॥ अथ प्रत्यालयोन्मील–न्नीलचन्दनमालिकम् । सर्वराजपथोत्क्षिप्त–पताकापीतपुष्करम्[1] ॥ ४२६ ॥ स्थानस्थानोल्लसन्मञ्च–विमानितविमानकम् । ककुप्कुक्षिंभरिक्षुभ्य–न्नादकम्पितमानकम् ॥४२७॥ प्रेक्षाकौतूहलाहूत–नारीनयनपङ्क्तिभिः । नवेन्दीवरकेदार–करम्बितमिवाभितः ॥४२८॥ अनुयातः समायात–स्वजनोर्वीशमण्डलैः । तैः सदारैः कुमारैश्च, पाण्डुः स्वपुरमाविशत् ॥ ४२९ ॥ ( चतुर्भिः कलापकम् ) सिंहाय कृष्णं सत्कृत्य, हास्तिका–श्वीय–काञ्चनैः । विससर्ज स्वदेशेभ्यः, सर्वं राजाऽथ राजकम् ॥४३०॥ लीलाशैलोच्चयोद्यान–केलिवापीषु पाण्डवाः । दिनान्यतीयुः क्रीडन्तः, समं कृष्णेन यामवत् ॥ ४३१ ॥ अथालोच्यायतिं स्नेहात्, कृष्णः शुभफलोदयाम् । समाहूय रहः किंचि–द्यावद्वदति पाण्डवान् ॥ ४३२ ॥ तावद्व्योम्ना महःपुञ्ज–धौतदिक्कुञ्जकालिमा ।

१ पुष्करम्–आकाशम् ।

आययौ नेत्रपीयूष-नीरदो नारदो मुनिः ॥ ४३३ ॥ प्रीतान्तःकरणः काम-मभ्युत्थानासनादिभिः । पाण्डवेभ्योऽनुशिष्टिं स, वितताार हरेर्गिरा ॥ ४३४ ॥

आकर्ण्य कर्णपीयूषं, युष्मदुद्वाहमङ्गलम् । प्राप्तोऽस्मि परमब्रह्म-लयादप्यधिकां मुदम् ॥ ४३५ ॥ वत्साः ! किं त्वेकजानित्वं, किंचिदन्तर्दुनोति वः । वैरवारिधरोल्लास-प्रावृषः खलु योषितः ॥ ४३६ ॥ आरूढस्य परां प्रौढिं, बन्धुस्नेहमहीरुहः । हन्त दावानलज्वाला-माहुर्मृगविलोचनाम् ॥ ४३७ ॥ स्रोतस्विनीप्रवाहाणा-मिव बान्धवचेतसाम् । द्वैधीभावकरी शैल-तटीव तरलेक्षणा ॥ ४३८ ॥ वत्साः ! कुटुम्बसंहार-कारणं हरिणेक्षणा । यथा समभवत् पूर्व-माकर्णयत तां कथाम् ॥ ४३९ ॥

अस्ति रत्नपुरं नाम, पुरं भरतभूषणम् । न यत्रार्थिजनाभावात्, कोऽपि त्यागीति विश्रुतः ॥ ४४० ॥ तत्र श्रीषेण इत्यासी-द्दासीभूतरिपुर्नृपः । न्यायविक्रमयोर्येन, धर्मः संधिकरः कृतः ॥४४१॥ तस्याभिनन्दितेत्याद्या, द्वितीया शिखिनन्दिता । प्रिये बभूवतुः प्रीति-रती इव मनोभुवः ॥४४२॥ सतीललाम सूते स्म, नन्दनावभिनन्दिता । जगदुद्द्योतनौ प्राची, सूर्याचन्द्रमसाविव ॥४४३॥ इन्दुषेण इतीन्दुश्री-राद्योऽभून्नयनोत्सवः । स्मरलीलालताकन्दो, बिन्दुषेणस्ततोऽपरः ॥ ४४४ ॥ कुमारयोस्तयोः शङ्के, शास्त्रस्पर्धाऽनुबन्धतः । शस्त्रमप्यभवत् सर्व-जगतो मात्रयाधिकम् ॥ ४४५ ॥ क्रमान्मदसरस्तीर-सान्द्रदुर्विनयद्रुमम् । तौ स्मरानेकपक्रीडा-वनं यौवनमीयतुः ॥४४६॥ गुरुस्ताभ्यां गुणाराम-राजिनी राजकन्यकाः । अनेकरसपीयूष-वाहिनीरुदवाहयत् ॥ ४४७ ॥ तस्मिन्नेव पुरे सर्व-कलानां पारदृश्वरी । गणिकाऽनङ्गसेनेति, गुणानां जन्म-

१ दाता । २ अनेकपः-हस्ती ।

भूरभूत् ॥ ४४८ ॥ तस्यां लावण्यपीयूष-सरस्यां रागिणां दृशः । मज्जन्त्यः प्राप्य वक्षोज-कुम्भौ प्रीतिं ययुः पराम् ॥४४९॥ गूनां तदीयवैदग्ध्य-वागुरापतितं मनः । स्वच्छन्दमदनव्याध-विद्धं न पदमप्यगात् ॥ ४५० ॥ द्वावप्युर्वीपतेः पुत्रौ, तस्या-मासक्तमानसौ । तौ मिथः कलहायेतां, करिण्यां करिणाविव ॥४५१॥ कुर्वाणौ कलहं नित्य-मत्यन्तोत्रासितत्रपौ । खेदाद-न्येद्युराहूय, तौ महीपतिरन्वशात् ॥४५२॥ वत्सौ ! किमिदमारब्धं, मलीमसकुलोचितम् ? । कलहायेत नान्योऽपि, वेश्यार्थे किमु बान्धवौ ? ॥ ४५३ ॥ स्वल्पाऽप्युज्जृम्भते यासु, न प्रेमसलिलार्द्रता । सुखशाखिप्ररोहोऽस्तु, कस्तास्वद्रिशिलास्विव ? ॥ ४५४ ॥ विलोकन्तेऽन्यमन्यस्य, कण्ठाश्लेषं वितन्वते । चित्ते दधति याश्चान्यं, तासु वेश्यासु का रतिः ? ॥४५५॥ यासां ...ार्द्रता नाम-धावद्दानाम्बुवृष्टयः । वेश्यासु मरुदेश्यासु, तासु रज्येत कः सुधीः ? ॥४५६॥ निर्धनत्वादिपुष्पस्य, नरका-...फलस्य च । मूलं वेश्यैव जानीतं, महाव्यसनशाखिनः ॥ ४५७ ॥ नित्यमित्यादिभिर्वाक्यै-र्भूभृता बोधितावपि । तौ नितान्तमयुध्येता-मत्यन्तोत्सिक्तमत्सरौ ॥ ४५८ ॥ तयोः संरब्धयोरेवं, द्रष्टुं मृत्युमनीश्वरः । विषमं विषमास्वाद्य, परलोकं ययौ नृपः ॥४५९॥ पत्युर्विपत्तिशोकेन, विक्लवे ते अपि द्रुतम् । विपेदाते तथैवाभि-नन्दिता-शिखिनन्दिते ॥ ४६० ॥ ...नुरागावत्यन्तं, तस्यां तदपि निस्त्रपौ । मिथः क्रोधोद्धतौ युद्ध्वा, मृत्युं तावप्यवापतुः ॥ ४६१ ॥ इत्थं कुटुम्बसंहारः, ...निमित्तोऽभवत् पुरा । अनर्थबीजं राजीव-चक्षुषो हि प्रचक्षते ॥ ४६२ ॥

...त्मास्तद्वो रिरंसुना-मेकामेव मृगीदृशम् । क्षेमं खलु न पश्यामि, तत एवागतोऽस्म्यहम् ॥ ४६३ ॥ तत्सर्वैरपि युष्माभि-

१ अतिनिर्लज्जौ । २ कुपितयो. । ३ कमलनेत्राः स्त्रियः ।

रात्मनः शिवतातिभिः[1] । अनेन समयेनैव[2], वर्तितव्यमहर्दिवम् ॥ ४६४ ॥ यदा युष्माकमेकस्य, द्रौपदी वासवेश्मनि । कार्य-
तोऽपि तदाऽन्येन, न गन्तव्यं कथंचन ॥ ४६५ ॥ कथंचिदथ यः कोऽपि, भिनत्ति समयं यदि । वनवासाय गन्तव्यं,
तेन द्वादशवत्सरीम् ॥ ४६६ ॥ मुनेर्गिरमिमां काम-मायतिक्षेमकारिणीम् । अनुमेने मुकुन्दोऽपि, कौन्तेयानां
हितेच्छया ॥ ४६७ ॥ तां वाचमुररीचक्रु-र्वाचंयमपतेर्मुदा । पाण्डवा अपि को नाम, नात्मनीनाय[3] धावति ? ॥ ४६८ ॥
मुनीन्द्रोऽपि यथार्थाभि-राशीर्भिरभिनन्द्य तान् । विकस्वरमनाः स्वैर-मुत्पपात विहायसा ॥ ४६९ ॥ कामं हृष्यन् हृषीकेशो-
ऽप्युपचारैरनेकशः । पाण्डुं पाण्डुतनूजान-प्यापृच्छ्य द्वारकां ययौ ॥ ४७० ॥

इति समयनिरुद्धकामचाराः, प्रणयप्रह्वधियः परस्परेण ।
सहविहितसमस्तकेलिरम्यं, गमयन्ति स्म दिनानि पाण्डवेयाः ॥ ४७१ ॥

इति मलधारिश्रीदेवप्रभसूरिरचिते पाण्डवचरिते महाकाव्ये
द्रौपदीस्वयंवरवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

१ मङ्गलश्रेणिभिः । २ प्रतिज्ञया । ३ आत्महिताय ।

पाण्डवानां नारदोपदेशः ॥

# अथ पञ्चमः सर्गः।

अथानुजग्मुषां तेषा-मन्वहं ममयं मुनेः। परस्परमभूत् प्रीति-रखण्डा पाण्डुजन्मनाम् ॥ १ ॥ मनोभिः पञ्चभिस्तेषां, कृतमेकं महन्मनः। तेनैव नियतं ख्याता, महामनस इत्यमी ॥ २ ॥ अवश्यमेक एवात्मा, तासु मूर्त्तिषु पञ्चसु। न खल्वेकैव पत्नी स्या-द्भूयसां पतिदेवता ॥ ३ ॥ अविशेषकृतोपास्तिः, शशिलेखेव शूलिनाम्। निष्कलङ्कैव पाञ्चाली, तेषामासीदतिप्रिया ॥४॥ पतिव्रता न गङ्गाऽपि, द्रुतादम्भोधिमीयुषी। श्रयन्ती हन्त पञ्चापि, द्रौपदी तु पतिव्रता ॥ ५ ॥ पञ्चभ्योऽपि क्रमान् तेभ्यः, प्रियेभ्यस्त्रिजगत्प्रियान्। लोकपालोपमान् पञ्च, पाञ्चाली प्रापदात्मजान् ॥ ६ ॥ पाञ्चालीलब्धजन्मत्वात्, पृथग्भिन्नाभिधा अपि। एते पञ्चापि पाञ्चाला, इति पप्रथिरे भुवि ॥ ७ ॥

सौभ्रात्रं पाण्डुपुत्राणां, द्रौपद्याश्च सतीव्रतम्। अवलोकितुकामेव, ततः शरदुपागमत् ॥ ८ ॥ भेजे विप्रोषितप्रावृड्-भर्तृश्रीरिपरन्निर्गतः। औषधीशकरामर्शा-दिव वैशद्यमम्बुदैः ॥ ९ ॥ घनोपरोधनिर्मुक्तो, ध्वस्तध्वान्तरिपुः शशी। भाति स्म दिग्गृह्रिश्रि-नेक्षत्रैरक्षतैरिव ॥ १० ॥ नम्रीभूतशिरःपक्व-शालिकेदारकं बभौ। जनकस्येव जीमूत-कालस्य विरहासहम् ॥ ११ ॥ त्रिगीषुनृपसैन्याश्च-रजोमलिनमम्बरम्। अहसन्नमलाः स्मेरा-म्भोजव्याजाज्जलाशयाः ॥ १२ ॥ दिशः शरदमायातां, चिरात्

---

१ चन्द्रकिरणस्पर्शात्।

प्रियसखीमिव । आलपन्त्य इवैक्ष्यन्त, सरसैः सारसारवैः ॥१३॥ मरालैः[1] कमलोत्तंसाः, सरस्यः पुनराश्रिताः । सेव्यते हि प्रभुः प्रायो, विशदैरपि संपदि ॥ १४ ॥ दृप्तसप्तच्छदामोदा, विरेजुर्वनभूमयः । क्रीडत्कामेभसंभूत-दानाम्भःसौरभा इव ॥ १५ ॥ संपन्नसर्वसस्यौघ-मण्डितां पाण्डुसूनवः । शरदं निर्विशन्ति स्म, शश्वदुद्यानकेलिभिः ॥ १६ ॥

गोचरेऽपररात्रस्य[2], निर्गतं बहिरन्यदा । समस्तमप्यपाहारि, तस्करैः पुरधेनुकम् ॥ १७ ॥ तत्क्षणाद्दक्षिणेमार्ण[3]-स्तस्करश्रेणिमार्गणैः । भूशक्रस्यैत्य पूच्चक्रु-र्मन्दिरद्वारि वल्लवाः ॥ १८ ॥ तदीयध्वनिमाकर्ण्य, कर्णयोः क्रकचोपमम् । उज्झांचकार बीभत्सु[4]-र्निद्रातन्द्रालुतां क्षणात् ॥ १९ ॥ ततो जीवधनं दस्यु-हृतं विज्ञाय तन्मुखात् । शौण्डीरचूडामाणिक्य-मन्तर्जज्वाल फाल्गुनः ॥ २० ॥ अर्जुनेन प्रजाकार्ये, प्राणानपि जिहासता । तदा समयभेदो[5]ऽपि, सानन्दमुररीकृतः ॥ २१ ॥ ततो धनुः सतूणीर-मादातुं फाल्गुनोऽविशत् । वासवेश्मनि कृष्णायाः, क्रोडक्रीडद्युधिष्ठिरे ॥ २२ ॥ आदाय विजयस्तस्मा-न्निजतूणीरकार्मुके । तस्करानुपदं वीरः, क्रोधावेशादधावत ॥ २३ ॥ स वीरग्रामणीर्बाणै, रणे निर्जित्य तस्करान् । प्रीत्याऽभिनन्दितः पौरैः, पुरस्कृत्याऽऽनिनाय गाः ॥२४॥ विगाहते स्म गायद्भि-स्तद्भुजस्फूर्तिचर्चरीः । गोपैरेत्य वृतः प्रीत्या, नरो नारायणोपमाम्[6] ॥ २५ ॥ पार्थस्येव यशः साक्षात्, क्षरन्त्यः क्षीरमुज्ज्वलम् । स्वस्ववत्सोत्सुका गावः, स्वं स्वं धामोपतस्थिरे ॥ २६ ॥

कश्चिदभ्येत्य बीभत्सो-रादेशादथ पार्थिवम् । कुन्ती-युधिष्ठिरप्रष्ठ[7]-कुटुम्बोपेतमभ्यधात् ॥ २७ ॥ दिष्ट्या त्वं वर्धसे

१ हंसैः । २ रात्रिचरमसमये । ३ पारधिना दक्षिणपार्श्वे विद्धो मृगो दक्षिणेर्मोच्यते, स प्राणधारणे निराशो भवति तत्सदृशा इमे वल्लवाः-गोपाः । ४ अर्जुनः । ५ प्रतिज्ञाभङ्गः । ६ पमः, पमा, पमम्, इति प्रतिपाठाः । ७ प्रष्ठः-मुख्यः ।

पश्वपाश्वालजन्म । तस्करहृतं पुरधेनुकं अर्जुनेन प्रत्याहृतम्।

देव !, भुजैः पार्थस्य यैस्तव । पुरजीवधनत्राणात्, कीर्तयः सुरभीकृताः ॥ २८ ॥ पुरद्वारि स्थितो मूले, सहकारमहीरुहः । किं तु विज्ञापयन्त्येवं, देव ! त्वां कपिकेतनः ॥ २९ ॥ अभिद्यत मुनेरद्य, प्रजार्थे समयो मया । विवेचयन्ति नो किंचित्, कुलसंध्या हि नत्कृते ॥ ३० ॥ करिष्ये तीर्थयात्रां त-द्वने द्वादशहायनीम् । ताः प्रमाणीभवन्त्वद्य, गरीयस्यो मुनेर्गिरः ॥ ३१ ॥ तन्मे तीर्थाद्रिकान्तार-विहाराय प्रसीदत । अविघ्नं च करिष्यन्ति, युष्मत्पादाः स्थिता हृदि ॥ ३२ ॥

तामाकर्ण्य गिरं दुःख-जननीमवनीपतिः । सपरीवार एव द्रा-ग्जगामोपकपिध्वजम् ॥ ३३ ॥ स्वेदमेदस्विनिःश्वासः, करे धृत्वा किरीटिनम् । सोऽन्वशात् किं त्वयाऽऽरब्धं, वत्स ! विश्वैकवत्सल ! [१] ॥३४॥ नवे वयसि कोऽयं ते, तीर्थारण्यमनोरथः ? । सुतोपहितभारा हि, कुरवो वनवासिनः ॥ ३५ ॥ तदस्मत्कृत्यमेवैत-न्नैव त्वं कर्तुमर्हसि । भारे महोक्षवाह्ये हि, किमु दम्यो [२] नियम्यते ? ॥ ३६ ॥ सर्वतोऽस्मत्प्रतापाग्ने-र्वैरिवंशान् दिधक्षतः । प्रभञ्जनायते [३] वत्स !, तवैव भुजविक्रमः ॥ ३७ ॥ मा गाल्लनः कनिष्ठेहि, नेत्रानन्दं चिराय मे । इति जल्पति भूपाले, कुन्ती साश्रुरवोचत ॥ ३८ ॥

पितुर्वाचनमिमां वत्स !, नान्यथाकर्तुमर्हसि । प्रायश्चित्तं गुरूणां हि, वचांसि निखिलैनसाम् ॥ ३९ ॥ मामुदश्रुमुखीमेवं, त्यक्तुमुत्सहसे कथम् ? । हा ! मम त्वां विना वत्स !, वत्सरीयति वासरः ॥ ४० ॥ दाधिकैरथ सार्पिष्कैः, पायसैरपि पोषितम् । कथं वर्तिष्यते वत्स !, वन्याहारैर्वपुस्तव ? ॥ ४१ ॥ रुद्धस्पर्शः पुरा छत्रै-र्भानुः सेर्ष्य इवाधुना । तापसर्वाभिसारेण, पथि त्वां व्यथयिष्यति ॥ ४२ ॥ नवानुरागकल्लोलां, स्नुषामिन्दुमुखीमिमाम् । पर्यश्रुलोचनां वत्स ! विहातुं कथमीहसे ? [४] ॥ ४३ ॥

---

१ अकृथाः । २ दमनयोग्यो वत्सतरः । ३ वायुरिवाचरति । ४ 'देहि' प्रतिद्वय० ।

पञ्चपाञ्चालजन्म । तस्करहृतं पुरधेनुकं अर्जुनेन प्रत्याहृतम्।

प्रियसखीमिव । आलपन्त्य इवैक्ष्यन्त, सरसैः सारसारवैः ॥१३॥ मरालैः कमलोत्तंसाः, सरस्यः पुनराश्रिताः । सेव्यते हि प्रभुः प्रायो, विशदैरपि संपदि ॥ १४ ॥ दप्तसप्तच्छदामोदा, विरेजुर्वनभूमयः । क्रीडत्कामेभसंभूत–दानाम्भःसौरभा इव ॥ १५ ॥ संपन्नसर्वसस्यौघ–मण्डितां पाण्डुसूनवः । शरदं निर्विशन्ति स्म, शश्वदुद्यानकेलिभिः ॥ १६ ॥

गोचरेऽपररात्रस्य, निर्गतं बहिरन्यदा । समस्तमप्यपाहारि, तस्करैः पुरधेनुकम् ॥ १७ ॥ तत्क्षणाद्[3]दक्षिणेर्माण–स्तस्करश्रेणिमार्गणैः । भूशक्रस्यैत्य पूत्चक्रु–र्मन्दिरद्वारि वल्लवाः ॥ १८ ॥ तदीयध्वनिमाकर्ण्य, कर्णयोः क्रकचोपमम् । उज्झांचकार [4]बीभत्सु–र्निद्रातन्द्रालुतां क्षणात् ॥ १९ ॥ ततो जीवधनं दस्यु–हृतं विज्ञाय तन्मुखात् । शौण्डीरचूडामाणिक्य–मन्तर्जज्वाल फाल्गुनः ॥ २० ॥ अर्जुनेन प्रजाकार्ये, प्राणानपि जिहासता । तदा [5]समयभेदोऽपि, सानन्दमुररीकृतः ॥ २१ ॥ ततो धनुः सतूणीर–मादातुं फाल्गुनोऽविशत् । वासवेश्मनि कृष्णायाः, क्रोडक्रीडद्युधिष्ठिरे ॥ २२ ॥ आदाय विजयस्तस्मा–न्निजतूणीरकार्मुके । तस्करानुपदं वीरः, क्रोधावेशादधावत ॥ २३ ॥ स वीरग्रामणीर्बाणै, रणे निर्जित्य तस्करान् । प्रीत्याऽभिनन्दितः पौरैः, पुरस्कृत्याऽऽनिनाय गाः ॥२४॥ विगाहते स्म गायद्भि–स्तद्भुजस्फूर्तिचर्चरीः । गोपैरेत्य वृतः प्रीत्या, नरो नारायणो[6]पमाम् ॥ २५ ॥ पार्थस्येव यशः साक्षात्, क्षरन्त्यः क्षीरमुज्ज्वलम् । स्वस्ववत्सोत्सुका गावः, स्वं स्वं धामोपतस्थिरे ॥ २६ ॥

कश्चिदभ्येत्य बीभत्सो–रादेशादथ पार्थिवम् । कुन्ती–युधिष्ठिर[7]प्रष्ठ–कुटुम्बोपेतमभ्यधात् ॥ २७ ॥ दिष्ट्या त्वं वर्धसे

१ हंसैः । २ रात्रिचरमसमये । ३ पारधिना दक्षिणपार्श्वे विद्धो मृगो दक्षिणेर्मोच्यते, स प्राणधारणे निराशो भवति तत्सदृशा इमे वल्लवाः–गोपाः । ४ अर्जुनः । ५ प्रतिज्ञाभङ्गः । ६ पमः, पमा, पमम्, इति प्रतिपाठाः । ७ प्रष्ठः–मुख्यः ।

देव !, भुजैः पार्थस्य यैस्तव । पुरजीवधनत्राणात्, कीर्तयः सुरभीकृताः ॥ २८ ॥ पुरद्वारि स्थितो मूले, सहकारमहीरुहः । किं तु विज्ञापयत्येवं, देव ! त्वां कपिकेतनः ॥ २९ ॥ अभिग्रह मुनेरद्य, प्रजार्थे समयो मया । विवेचयन्ति नो किंचित्, कुर्वन्त्या हि तत्कृते ॥ ३० ॥ करिष्ये तीर्थयात्रां त-द्वने द्वादशहायनीम् । ताः प्रमाणीभवन्त्वद्य, गरीयस्यो मुनेर्गिरः ॥ ३१ ॥ तन्मे तीर्थाद्रिकान्तार-विहाराय प्रसीदत । अविघ्नं च करिष्यन्ति, युष्मत्पादाः स्थिता हृदि ॥ ३२ ॥

तामाकर्ण्य गिरं दुःख-जननीमवनीपतिः । सपरीवार एव द्रा-ग्जगामोपकपिध्वजम् ॥ ३३ ॥ स्वेदमेदस्विनिःश्वासः, करे धृत्वा किरीटिनम् । सोऽन्वशात् किं त्वयाऽऽरब्धं, वत्स ! विश्वैकवत्सल ! ? ॥३४॥ नवे वयसि कोऽयं ते, तीर्थारण्यमनोरथः ? । धुरोपहितभारा हि, कुरवो वनवासिनः ॥ ३५ ॥ तदस्मत्कृत्यमेवैत-न्नैव त्वं कर्तुमर्हसि । भारे महोक्षवाह्ये हि, किमु दम्यो नियम्यते ? ॥ ३६ ॥ सर्वतोऽस्मत्प्रतापाग्ने-र्वैरिवंशान् दिधक्षतः । प्रभञ्जनायते वत्स !, तवैव भुजविक्रमः ॥ ३७ ॥ मा गाम्त्वतः कनिर्देहि, नेत्रानन्दं चिराय मे । इति जल्पति भूपाले, कुन्ती साश्रुरवोचत ॥ ३८ ॥

पितुर्गिरमिमां वत्स !, नान्यथाकर्तुमर्हसि । प्रायश्चित्तं गुरूणां हि, वचांसि निखिलैनसाम् ॥ ३९ ॥ मामुदश्रुमुखीमेवं, त्यक्तुमुत्सहसे कथम् ? । हा ! मम त्वां विना वत्स !, वत्सरीयति वासरः ॥ ४० ॥ दाधिकैरथ सार्पिष्कैः, पायसैरपि पोषितम् । कथं रतिं वने वत्स !, वन्याहारैर्वपुस्तव ? ॥ ४१ ॥ रुद्धस्पर्शः पुरा छत्रै-र्भानुः सेर्ष्य इवाधुना । तापसत्वाभिसारेण, पथि त्वां व्यथयिष्यति ॥ ४२ ॥ नवानुरागकल्लोलां, स्नुषामिन्दुमुखीमिमाम् । पर्यश्रुलोचनां वत्स ! विहातुं कथमीहसे ? ॥ ४३ ॥

१ अकथयत । २ दमनयोग्यो वत्सतरः । ३ वायुरिवाचरति । ४ 'देहि' प्रतिद्वय० ।

जनन्यामिति वादिन्यां, बन्धुज्येष्ठो युधिष्ठिरः । स्फुरदस्तोकशोकोर्मि-पीतप्रीतिरभाषत ॥ ४४ ॥ त्वद्वियोगासहौ वीर[1] !, पितरौ मावमानय । नातिक्रान्तगुरूणां हि, क्रिया काऽपि फलेग्रहिः ॥४५॥ समयोऽपि मुनेरद्य, त्वया कोऽयमभिद्यत ? । अत्याहिते हि साधूना-मतिभूमिर्न दूषिता ॥ ४६ ॥ भिन्न एवाथवा तस्य, प्रायश्चित्तमपि त्वया । एताः पौरगवीः किं नु, न प्रत्याहरता कृतम् ? ॥ ४७ ॥ मनसैव न मन्येऽह-मन्तरं वपुषाऽपि ते । आत्मन्यन्तःस्थिते भेदः, समयस्य न चात्मनः ॥ ४८ ॥ प्रतिध्वान इवैतां च, वाचमाजातशात्रवीम् । अनुगम्य गिरं दीनां, निजगाद वृकोदरः ॥४९॥ गन्तुकामोऽपि मां भ्रात-रवस्थानाय मानय । हृदयं स्फुटतीवेदं, भवद्विरहकातरम् ॥ ५० ॥ यमावप्यूचतुर्भ्रातः !, कान्ताराय गते त्वयि । नित्यं विविधकेलीभिः, को हि नौ लालयिष्यति ? ॥ ५१ ॥

अथ स्फुटमवष्टभ्य, धैर्यं धीमानवोचत । स्वप्रतिश्रुत[2]निर्वाह-बद्धबुद्धिर्धनंजयः ॥ ५२ ॥ पृथग्जनोचिता हन्त !, केयं कातरताऽद्य वः ? । भवन्मनस एवाय-मन्तेवासी पविर्न तु ॥ ५३ ॥ ममाङ्गीकृतनिर्वाह-व्रतचर्यावकीर्णिनः[3] । युष्मानेवायशः कामं, नन्विदं लज्जयिष्यति ॥ ५४ ॥ तद्बलादनुमन्यध्व-मरण्यगमनाय माम् । सत्याः सन्तु मुनेर्वाचो, ममापि पुरुषव्रतम् ॥ ५५ ॥ इति सस्नेहमापृच्छ्य, बीभत्सौ गन्तुमिच्छति । तमस्तान् व्यानशे सर्वान्, दिक्कुञ्जानिव भास्वति ॥ ५६ ॥ अथानम्य क्रमान्मन्यु[4]-गद्गदाशीर्गिरो गुरून् । प्रीत्याऽऽलिङ्ग्यानुगच्छन्तौ, कनीयांसौ न्यवर्तयत् ॥ ५७ ॥

अमङ्गल्यधिया बाष्प-बिन्दुपातं निरुन्धती । प्रस्थितं पार्थमभ्येत्य, जगाद द्रुपदात्मजा ॥ ५८ ॥ पुंसां मतीः क्वचि-

१ अतिभयजनके कार्ये । २ प्रतिश्रुतं-प्रतिज्ञा । ३ अवकीर्णी-भङ्गकारकः । ४ मन्युः-शोकः ।

प्रतिज्ञाभङ्गेऽर्जुनस्य वने गमनाय प्रार्थनम् ॥

शोपि-न्मतयो नातिशेरते । तदस्युदीर्यसे नाथ !, त्वयाऽऽरब्धं न साध्विदम् ॥ ५९ ॥ यदियं मन्मनःप्रीतिः, प्रस्थिता पुरतस्तव । गणनाभिर्दिनानां तु, धरिष्ये यदि जीवितम् ॥ ६० ॥ पन्थानस्तीर्थशैलानां, शिवाः सन्तु तथापि ते । निष्प्रत्यूहं वितन्वन्तु, सर्वतः कुलदेवताः ॥ ६१ ॥ भ्रमन् कान्तारमेकाकी, मा भूत् (भूः) क्वापि प्रमद्वरः । मलीमसानि चेतांसि, साधुष्वपि हि पाप्मनाम् ॥ ६२ ॥ संचरन् पुरुषान् पश्यन्, प्रतिश्वासं नराधमान् । प्रियाः कीर्तीश्च लक्ष्मीश्च, नूतनाः काश्चिदर्जयेः ॥ ६३ ॥ तथा किमपि मा कार्षी-र्भ्रमन् देशाननेकशः । यथा नाथ वयं स्याम, वैमनस्यवशंवदाः ॥ ६४ ॥ पावितं गुरुतैर्नाना-तीर्थाभिगमजन्मभिः । त्वामुपागतमालिङ्ग्य, मयाऽऽत्मा पावयिष्यते ॥ ६५ ॥ मया ते स्खलितस्वैर-संचारस्य पदे पदे । मा भून् पुण्यक्रियाविघ्न, इत्यागच्छामि नो समम् ॥ ६६ ॥

इति ब्रुवाणां प्रणय-प्रह्वीभूतान्तराशयाम् । आलिङ्ग्य मुहुरालप्य, वचोभिः स्नेहनिर्भरैः ॥ ६७ ॥ अनुव्रजन्तीं दयिता-मास्थाप्य कथंचन । प्रतस्थे पुरतः पार्थः, सतूणधृतकार्मुकः ॥ ६८ ॥ ( युग्मम् ) आ लोचनपथात् पार्थं, पथिकं सा पपौ दृशा । प्रेम्णा सोऽप्यचलन्मन्द-मन्दं वलितकंधरः ॥ ६९ ॥ मन्द्र[1]रवद्विनिर्घोष-शिखण्डिकृतताण्डवान् । माद्यन्मधुव्रतव्रात-झङ्कारमुखरोदरान् ॥७०॥ सान्द्रनैकद्रुमच्छाया-निपीततपनातपान् । पश्यन् परिसरारामान्, स जगाम शनैः शनैः ॥७१॥ ( युग्मम् ) तीरप्ररोहमानन्द-माकन्दप्रायपादपम् । कूजत्कुररहारीत-कपिञ्जलजलद्विकम्[2] ॥ ७२ ॥ तारुण्ये तरणेः क्षोणि-मतीत्य कियतीमपि । पार्थः क्षीरोददायाद[3]-माससाद महासरः ॥७३॥ ( युग्मम् ) तत्राङ्गशौचमाधाय, प्रणिधाय जिनेश्वरम् ।

१ मन्द्र.-गम्भीरध्वनिः । २ द्विकः काकः । ३ क्षीरोदिसदृशम् ।

आहारं सरसैस्तैस्तैः, फलौघैः फाल्गुनो व्यधात् ॥ ७४ ॥ असङ्गभृङ्गसंगीत–मतिमुक्तकमण्डपम् । सपुष्पतल्पमध्यास्य, स मध्यंदिनमत्यगात् ॥ ७५ ॥ इति क्रामन् क्रमाज्जिष्णु–र्बहुकौतूहलां महीम् । विवेश भैरवाभोग–दत्तमोहां महाटवीम् ॥७६॥ केलिहुंकारिणः क्वापि, क्रूरा हरिणवैरिणः । मृगानुपदिकाः कोप–साटोपा द्वीपिनः क्वचित् ॥ ७७ ॥ क्वाप्यन्योन्यरणारम्भ–प्रह्वपोत्राश्च पोत्रिणः । तस्यां किमपि न क्षोभं, कुर्वते स्म किरीटिनः ॥ ७८ ॥ ( युग्मम् )

स्वैरमस्यां च बीभत्सु–रभीर्गच्छन् पुरः पुरः । गिरिं धात्रीशिरोरत्नं, रत्नसानुमुदैक्षत ॥ ७९ ॥ यस्य निर्झरझात्कार–शब्दाद्वैतैकतार्किकी । द्रुमैरभ्रंकषैः केषां, मुदे नाभूदुपत्यका ? ॥ ८० ॥ अध्यास्यन्ते स्म तिग्मांशु–गभस्तीनामसंस्तुताः । यस्य विद्याधरैर्विद्या–सिद्धिक्षेत्राणि कन्दराः ॥ ८१ ॥ किंनरीकेलिसंगीत–निस्तरङ्गा मृगा अपि । यस्मिन्नैक्ष्यन्त मोक्षाय, प्राणायामोल्वणा इव ॥८२॥ द्रुमैः कुसुमितैस्तैस्तै–र्विलोभितविलोचनः । सव्यसाची गिरौ तस्मि–न्नारुरोह कुतूहलात् ॥८३॥ इन्द्रनीलाङ्कितद्वारं, शोणसोपानपद्धतिम् । शातकुम्भमयस्तम्भ–कुम्भसंभारभासुरम् ॥ ८४ ॥ नीरैरनुर्क्षपं चन्द्र–करव्यतिकरोद्भवैः । अदेवमातृकोन्माद्य–दुद्यानजगतीरुहम् ॥ ८५ ॥ तत्रोत्फालप्रभाजाल–निपीताहर्पतिद्युति । चन्द्राश्ममयमद्राक्षी–दर्जुनो जिनमन्दिरम् ॥ ८६ ॥ ( त्रिभिर्विशेषकम् ) क्षालिताङ्गस्तदुद्यान–दीर्घिकाम्भसि रंहसा । मेदुरामोदमादाय, तदीयकमलोत्करम् ॥ ८७ ॥ तस्मिन्नमरनिर्मुक्त–पुष्पप्रकरदन्तुरे । अविक्षत् कौतुकाक्षिप्त–चक्षुः क्षितिपनन्दनः ॥ ८८ ॥ ( युग्मम् )

---

१ पोत्रं–किरिमुखाग्रम् । २ किरयः वराहा इति यावत् । ३ तर्कशास्त्रसबन्धिनी । ४ पर्वतस्यासन्ना भूमिः । ५ सूर्यकिरणानाम् । ६ निस्तरङ्गा–निश्चलाः । ७ शातकुम्भं–सुवर्णम् । ८ अनुरात्रम् ।

तत्र प्रदक्षिणीकृत्य, त्रियुगादिजिनेश्वरम् । बद्धरोमाञ्चमभ्यर्च्य, स तुष्टावेति तुष्टिमान् ॥ ८९ ॥ जय नाभिकुलक्षीर–नीराकर–
निशाकर !। जयाशेषजगद्दुःख-निदाघजलदागम ! ॥९०॥ देव ! संसारकान्तार–पर्यन्तपुरपादपाः । पादास्तव भवक्लान्ति–
विच्छेदाय भवन्तु मे ॥९१॥ इत्यभिष्टुत्य नाभेयं, निकेतं परितोऽपि तत् । विलोक्य कलयामास, बीभत्सुर्नयनोत्सवम् ॥९२॥
गिरिभित्तिकागम–रामणीयकलोलुपम् । चक्षुर्विनोदयन् यावत्, पार्थः प्रस्थान्तरं ययौ ॥ ९३ ॥ तावन्मुहुर्मुहुर्मौलिं,
चलयन्त्या पदाम्बुजैः । अङ्गुलीर्वदने दैन्यात्, प्रक्षिपन्त्या मुहुर्मुहुः ॥ ९४ ॥ मुहुर्मुहुर्वितन्वत्या, प्रीत्या चाटूनि कोटिशः ।
उत्तरीयपटप्रान्त–माक्रषन्त्या मुहुर्मुहुः ॥ ९५ ॥ कयाचिद्योपिता रुद्ध–स्वैरचारं पदे पदे । युवानमेकमैक्षिष्ट, गत्वाऽभाषिष्ट
चादरात् ॥ ९६ ॥ ( त्रिभिर्विशेषकम् ) तव प्रसादनप्रह्वा–मिमामत्यन्तदुःखिताम् । किं नाम भद्र ! कल्याणीं, त्वमेवमवम–
न्यसे ? ॥ ९७ ॥ प्ररूढप्रणयं सन्तो, नान्यमप्यवजानते । किं पुनः प्रेमसर्वस्व–विक्लवामबलां क्वचित् ? ॥ ९८ ॥ एतस्या–
माकृतौ नास्ति, न व्यलीकलवं क्वचित् । कथ्यतां यदि नाकथ्यं, तदस्यां कोपकारणम् ॥ ९९ ॥ पाणिसंपुटमाबध्य, सोऽभ्यधत्त
धनंजयम् । महती खलु वार्तेयं, पुरस्तात् कस्य कथ्यते ? ॥ १०० ॥ परं विश्वैकविश्वास्य–मूर्तेः किं गोप्यमस्ति ते । किं
तु त्वां कर्तुमिच्छामि, न दुःखौघविभागिनम् ॥ १०१ ॥ बीभत्सुरभ्यधाद्भूयः, स्खलितव्यं न हि त्वया । परिज्ञाय कुरून्
शिश–दुःखत्राणकदीक्षितान् ॥ १०२ ॥
ममौष्ठं तदाकर्ण्य, वचः स पुनरब्रवीत् । वैताढ्ये दक्षिणश्रेण्या–मस्ति रत्नपुरं पुरम् ॥ १०३ ॥ वैरिदोर्दण्डकण्डूति–

१ अन्यशिखरम । २ विह्वलां–व्याकुलाम् ।

वैद्यो विद्याधरेश्वरः। ख्यातश्चन्द्रावतंसाख्य–स्तत्र धात्रीधवोऽभवत् ॥ १०४ ॥ पतिव्रतामयं ज्योतिः, सौभाग्यव्रतदेवता । मूर्त्तेव श्रीरभूत् तस्य, प्रिया कनकसुन्दरी ॥१०५॥ वात्सल्यवाहिनीसिन्धु–र्मणिचूडस्तयोः सुतः । आसीत् कन्दलितानन्दा, नन्दना च प्रभावती ॥ १०६ ॥ कुमारः केलिलीलाभिः, सोऽतिर्वाहितशैशवः[1] । पितृभ्यां ग्राहयामास, गुरुभ्यः सकलाः कलाः ॥ १०७ ॥ लावण्यसरसीं[2] पुण्य–तारुण्यवनसानुमान् । चन्द्राननामुपायंस्त, चन्द्रापीडसुतामसौ ॥ १०८ ॥ दत्ता प्रभावती साऽपि, कलाकुलनिकेतनम् । हिरण्यपुरनाथाय, हेमाङ्गदमहीभुजे ॥ १०९ ॥ कुलक्रमागताः सर्वाः, पिता विद्याः परेद्यवि । मणिचूडकुमाराय, विततार तरस्विने ॥११०॥ तस्मिन्नसिद्धविद्येऽपि, साधनक्रमदेदिनि । सद्यो माद्यद्गदा[3]-वेगः, पिता लोकान्तरं ययौ ॥ १११ ॥ कृताभिषेकसंभारः, प्रेक्षमाणः शुभं क्षणम् । न यावत् पदमात्मीयं, सोऽध्यासामास पैतृकम् ॥ ११२ ॥ तावदागत्य दायादः, खेचरानीकिनीवृतः । विद्युद्वेगस्तमाक्रम्य, नगरान्निरवासयत् ॥ ११३ ॥ दायाद-हृतसाम्राज्यं, त्याज्यमेतद्वपुर्मया । इत्यन्तश्चिन्तयन् दुःखा–देकाङ्गः सोऽचलत् ततः ॥ ११४ ॥ तमन्वगाद्विसृष्टाऽपि, प्रसह्य पितृवेश्मनि । चन्द्रानना प्रिया तस्य, कुलस्त्रीणां व्रतं ह्यदः ॥११५॥ सोऽस्मिन् पदाभ्यामभ्येत्य, रत्नसानुगिरौ क्रमात्। संसारमरुकल्पद्रु–मद्राक्षीदृषभध्वजम् ॥ ११६ ॥ पुण्यपाथेयमादाय, नाभिनन्दनदर्शनात् । सांप्रतं सोऽहमिच्छामि, स्वर्लोकपथपान्थताम् ॥ ११७ ॥ इयं तु मे प्रिया चन्द्रा–नना प्रणयकातरा । प्राणत्यागाय गच्छन्तं, मां रुणद्धि पुनः पुनः ॥ ११८ ॥ असौ मन्मृत्युमत्यन्त–मनलंभूष्णुरीक्षितुम् । विहातुमीहते प्राणान्, हन्त प्रथममेव हि ॥ ११९ ॥ दयां मयि

१ निर्गमितबाल्यावस्थः । २ ‘ लावण्यसारणी ( र्णी ) ’ प्रतित्रयपाठः तत्र प्रथमा विभक्तिश्चिन्त्या । ३ गदः–व्याधिः ।

तदाधाय, बन्धो ! संबोध्यतामियम् । येनामूनाशु मुञ्चामि, प्रस्थेऽस्मिन् सार्वकामिके ॥ १२० ॥
अथोऽजगाद गाण्डीवी, भाले ताण्डवयन् भ्रुवौ । कोऽयं मरणनिर्बन्धो, बान्धवे मयि सत्यपि ? ॥ १२१ ॥ अपि देवे-
न्द्रदेशीयं-मार्गणैर्वैरिणं रणे । निहत्य वितराम्येष, पैतृकीं ते पुनः श्रियम् ॥१२२॥ अवैधव्याध्वरे नित्य-दीक्षितेयं मृगेक्षणा ।
चिरं त्वदङ्गसङ्गेन, दत्तानन्दा च नन्दतु ॥ १२३ ॥ बभाण मणिचूडोऽथ, भ्रातरस्यास्तवाकृतेः । असाध्यं नाम नास्त्येव,
स्वर्गराज्यमपि तेऽन्तिके ॥ १२४ ॥ किं तु व्योमाङ्गणस्वैर-संचाराः खेचराः खलु । शक्यन्ते ते पराजेतुं, न विद्यैश्वर्यव-
र्जितैः ॥ १२५ ॥ ततोऽनवद्य ! मे विद्यास्त्वं गृहाण यथाविधि । साधिताशेषविद्यस्य, द्विपन्नीपञ्जयः स ते ॥ १२६ ॥ तासां
सर्वकर्माख्यानां, विद्यानां च त्वमास्पदम् । वाहिनीनां हि सर्वासा-माधारो वारिधिः परम् ॥ १२७ ॥ विलुप्तसत्त्वतत्त्वस्य,
शात्रवैः समराङ्गणे । नाधुना साधने तासां, मम तु क्रमते मतिः ॥ १२८ ॥ सोऽभिधायेति निर्बन्धा-दाक्षिण्यक्षीरनीरधेः ।
अनिच्छतोऽपि बीभत्सो-र्विद्यास्तास्ताः प्रदत्तवान् ॥ १२९ ॥
निशायाथ विधिं विज्ञ-ग्रामणीर्मणिचूडतः । तासां क्रमादुपाक्रंस्त[3], साधनाय धनंजयः ॥१३०॥ स्नानक्रियां वितन्वानः,
शश्वत् कान्तारचारिणि । विधाय विधिवत् सर्वां, पूर्वसेवां महामनाः ॥ १३१ ॥ वशी निविविशे सोऽथ, पश्यन् सिद्धिं कर-
स्थिताम् । तस्यैव भूभृतः क्वापि, कन्दरामन्दिरोदरे ॥ १३२ ॥ ( युग्मम् ) बभूव सर्वकर्माणः[4], स एवोत्तरसाधकः । विद्या-
धरकुमारोऽस्य, दूरावस्थापितप्रियः ॥ १३३ ॥ बद्धपद्मासनो नासा-प्रान्तविश्रान्तलोचनः । पार्थः पाण्मासिकं जाप्य-विधि-

१ 'दैन्द्रदेशीयं' इति प्रतित्रयपाठः साधुः देवेन्द्रसदृशं वैरिणमिति योगः । २ स्वर्गराज्यम् । ३ आरभत । ४ सर्वकर्मसमर्थः ।
११

मारब्धवान् सुधीः ॥ १३४ ॥ तस्मिन् मनागसंपूर्ण–निर्माणे जाप्यकर्मणि । आविर्बभूवुः क्रव्यादा, व्यादाय मुखमुल्बणम्
॥ १३५ ॥ मांसखण्डानि चर्वन्तः, स्वादयन्तोऽसृगासवम्[1] । साट्टहासमटीकन्त[2], साटोपाः केऽपि तत्पुरः ॥१३६॥ कर्तिकाभिः
पुरस्तस्य, दारं दारं शवोदरम् । चित्राभिरन्त्रमालाभिः, केऽपि हारं वितेनिरे ॥ १३७ ॥ केचिदुत्तुङ्गमातङ्ग–रूपाः कोपान्ध-
चेतसः । तत्संमुखमधावन्त, दन्तक्रीडाविधित्सया ॥१३८॥ केऽपि कण्ठीरवीभूय, भूयोभूयस्तलं भुवः । घोरक्ष्वेडारवा रौद्रैः,
पुच्छाघातैरताडयन् ॥ १३९ ॥ विसङ्कटस्फुटाभोगा, भुजङ्गमवपुर्भृतः । भोगैरावेष्टयामासु–राविष्टाः केऽपि तद्वपुः ॥ १४० ॥
कदाऽप्यागत्य केऽप्यूचु–स्त्वदानयनहेतवे । कुरूणामग्रणीर्देवः, स्नेहेन प्रजिघाय नः ॥ १४१ ॥ केचिदभ्यधुरभ्येत्य, त्वदी-
यविरहातुरा । नित्यमश्रूणि मुञ्चन्ती, कुन्ती निर्मम ! ताम्यति ॥ १४२ ॥ ऊचुः केचिदपि स्वप्ने, त्वदालिङ्गनमङ्गलम् । प्राप्य
पश्चादपश्यन्ती, कृष्णा त्वां खिद्यतेतमाम् ॥ १४३ ॥ इत्याद्युपद्रवैस्तैस्तैः, कोटिशः पिशिताशिनाम्[3] । प्रतीपैरप्रतीपैश्च,
चकम्पे न कपिध्वजः ॥ १४४ ॥ विधौ पाण्मासिके तस्मिन्, परिपूर्तिमुपेयुषि । ध्यानासीनस्य तस्यावि–रासीत् काऽपि
सुराङ्गना ॥ १४५ ॥ साऽब्रवीन्नन्वितो दृष्टि–र्विष्टपाश्रय ! दीयताम् । देव्यो विज्ञापयन्त्यष्टौ, त्वां प्रज्ञप्तिपुरःसराः ॥ १४६ ॥
लोकाद्भुतैर्भवत्सत्त्व–चेष्टितैस्तोषिता वयम् । अन्तर्विचिन्त्य तद् ब्रूहि, किं नाम तव कुर्महे ? ॥१४७॥ अथोन्मील्य दृशौ सत्यं,
तदे(द)वेत्यार्जुनोऽभ्यधात् । कुमारमणिचूडोऽयं, भगवत्यनुगृह्यताम् ॥ १४८ ॥ सा विहस्य पुनः प्राह, परोपकृतिकर्मठ ! ।
नन्वेतदेव ते सत्त्वं, देवतातोषहेतवे ॥ १४९ ॥ किं तु क्रमोऽयमस्माक–माराध्यति य एव नः । कामं तस्यैव तुष्यामो,

१ रुधिरमद्यम् । २ अचरन् । ३ मांसाशिनां–राक्षसानाम् ।

नापरस्य कदाचन ॥ १५० ॥ तवास्मिन्नपि चेतश्चे–दुपकारतरङ्गितम् । तदस्य तोपमेष्यामः, सकृदाराधनादपि ॥ १५१ ॥
मतः किरीटिना कामं, भवत्वेवमितीरिते । सा गीर्वाणमृगीचक्षु–रन्तर्धानमुपागमत् ॥१५२॥ वाचं जय जयेत्युच्चै–रुच्चरन्ती
कृतानतिः । क्षणादाविरभूत् तस्य, त्रियंचरचमूः पुरः ॥ १५३ ॥ नेत्रकोणेन कौन्तेय !, सप्रसादमुदीक्ष्यताम् । स्मृतिमात्रा-
दुपस्थेयं, भूयोऽपीति विसृष्टवान् ॥ १५४ ॥ मणिचूडस्तदालोक्य, कलितोत्साहसाहसः । विद्याः साधयितुं जिष्णो–र्निदे-
शादुपाक्रमे ॥ १५५ ॥ स्वल्पैरेव दिनैः पार्थे, स्वयमुत्तरसाधके । विद्यास्तस्याभवन् सर्वा, निर्विघ्नं निर्मवृत्तयः ॥ १५६ ॥
अयोघतिकिङ्किणीकाण–झणत्कारिदिगन्तरम् । मूर्छितार्कच्छविस्वर्ण–पताकाशतभूपितम् ॥ १५७ ॥ विद्युदुद्द्योतसध्रीची–
मरीचीः परितः किरत् । विमानद्वयमाकाशा–न्मणीमयमवातरत् ॥१५८॥ (युग्मम्) ततोऽवतीर्य पर्याय–वर्जमूर्जस्वलद्युतः ।
पार्थं च मणिचूडं च, प्रणेमुर्व्योमचारिणः ॥ १५९ ॥ तदात्वमङ्गमुद्वर्त्य, दिव्यैरुद्वर्तनैस्तयोः । स्नपयांचक्रिरे केचित्,
कवोष्णैर्गन्धवारिभिः ॥१६०॥ गोशीर्पचन्दनक्षोदै–र्विलिप्यानंवलेपिनः । तावुभौ रभसा केचि–द्दिव्यवासांस्यवासयन् ॥१६१॥
कैश्चिद्वारिमराभुग्न–नूतना-
हारकुण्डलकेयूर–किरीटकटकादिभिः । माणिक्यखचितैः केचि–द्भूषणैस्तावभूषयन् ॥ १६२ ॥
पुरः सङ्गीतमातेनु–
र्मोदसोदरम् । तयोरुपरि मायूर–मातपत्रमधार्यत ॥ १६३ ॥ अनेकप्रहतातोद्य–वेणुवीणालयानुगम् ।
स्तयोर्विद्याधराङ्गनाः ॥ १६४ ॥ तयोर्निःसीमसत्त्वश्री–प्रशस्तिविशदाक्षरम् । अकठोरगिरः पेतुः, पुरः खेचरवन्दिनः ॥१६५॥

१ देवाङ्गना । २ विद्याधरसेना । ३ आगन्तव्यम् । ४ वशवर्तिन्यः । ५ अनुक्रमं वर्जयित्वा । ६ तदात्वं–तत्कालम् ।
७ अगर्विताः नम्रा इति यावत् ।

चन्द्राननामथादाय, भेरीभाङ्कारडम्बरैः । हयौघहेषितैर्दन्ति-बृंहितैर्भटगर्जितैः ॥ १६६ ॥ नभो बिभित्सुना सैन्य-संभारेण नभःसदाम् । तावुभौ द्राक् प्रतस्थाते, विजयार्धगिरिं प्रति ॥१६७॥ ( युग्मम् ) प्रभापल्लवितैः क्षुद्र-विमानैः परिवारिते । चक्रतुस्तद्विमाने द्या-मपरार्केन्दुतारकाम् ॥ १६८ ॥ तौ बाहुवीर्याद्वैताढ्यौ, वैताढ्यगिरिमूर्धनि । बलोर्मिदुर्धरौ रत्न-पुरद्वारमुपेयतुः ॥ १६९ ॥ तत्रापत्रासमावासान्, परिगृह्य धनंजयः । क्षणेन प्राहिणोद् दूतं, विद्युद्वेगाय वाग्मिनम् ॥ १७० ॥ स विद्युद्वेगमभ्येत्य, कृतावष्टम्भमभ्यधात् । जल्पति त्वामनल्पौजा, मध्यमः पाण्डवोऽर्जुनः ॥ १७१ ॥ मदीयसुहृदश्चन्द्रा-वतंसतनुजन्मनः । अर्पय श्रियमागत्य, मार्गणा मार्गयन्ति मे ॥ १७२ ॥ नो चेदमी पुरस्तावत्, कलान्तरपदे शिरः । भवदीयं ग्रहीष्यन्ति, ततोऽनु सुहृदः श्रियम् ॥ १७३ ॥ तन्निशम्य वचः स्माह, स क्रोधान्धभविष्णुधीः । भूमिगोचरकीटोऽय-मरे ! को नाम सोऽर्जुनः ? ॥ १७४ ॥ द्रुममेवार्जुनं विद्मः, स चेत् कश्चिदिहागतः । तस्योच्छेदाय जागर्ति, सैष कौक्षेयको मम ॥ १७५ ॥ मद्दोर्वीर्यानलस्याद्य, मणिचूडं दिधक्षतः । भविष्यति ध्रुवं सोऽय-मर्जुनः प्रथमेन्धनम् ॥ १७६ ॥ तदरे ! सत्वरं गत्वा, ब्रूहि त्वं निजमर्जुनम् । अयमायात एवास्मि, रणाय प्रगुणो भव ॥ १७७ ॥

इत्युदीर्य स दोर्वीर्य-गर्वज्वरितमानसः । अनभिज्ञाततैन्यानि, सैन्यानि समवर्मयत् ॥१७८॥ दूतोऽपि वाग्निकारं[3] त-मागत्याऽऽख्यत् किरीटिने । रिपोरनात्मनीनेन[4], तेनाभूत् सोऽपि सस्मितः ॥१७९॥ पार्थोऽपि नातिसंरम्भा-दनीकं समनीनहत् । मृगोच्छेदेऽपि किं कामं, सिंहः संरम्भते क्वचित् ? ॥१८०॥ विद्युद्वेगोऽथ निर्गत्य, नगरात् पृतनाभरैः । क्षणादरौत्सीद्वीभत्सुं,

मणिचूडस्य विद्यासाधनम् । विद्युद्वेगोपरि द्वयोर्गमनम् ॥

१ भयरहितं यथा तथा । २ बाणाः । ३ वाचाऽपमानम् । ४ आत्मनोऽहितेन ।

घनैरिव रविं नभः ॥ १८१ ॥ साक्षेपः प्रतिचिक्षेप, पार्थोंकिस्तान् सुदुःसहैः । आदायेर्पमिवेष्वासं, मार्गणैः किरणैरिव ॥१८२॥ ततः कार्मुकमारोप्य, रोषान् कोपारुणेक्षणः । खेचरः स्वयमारेभे, बीभत्सुमभिवर्षितुम् ॥१८३॥ ववर्ष शरधाराभि-रब्दवत् स यथा यथा । प्रकर्षमगमल्लक्ष्मी-रर्जुनस्य तथा तथा ॥ १८४ ॥ पाण्डवेयस्य दोर्दण्ड-चण्डिमानं विलोकयन् । भीतभीतास्ततः सोऽभू-दितिकर्तव्यविक्लवः ॥ १८५ ॥ काममुत्थातुकामोऽपि, मणिचूडो रणाङ्गणे । जिष्णोः सर्वरिपूज्जिष्णोर्न्न लेभेऽन्तरं क्वचित् ॥ १८६ ॥ वीरव्रतविपर्यास-संपन्नतृणलाघवः । पक्षवातैरिव क्षिप्तः, क्वापि कौन्तेयपत्रिणाम् ॥ १८७ ॥ विगृद्गो रणक्षोणेः, पलायामास रंहसा । संवर्तमारुतावर्ते, कियद्दीपः प्रदीप्यते ॥ १८८ ॥ प्राणत्राणाय संभूय, बीभत्सुमभयंकरम् । आगत्य विगलन्मान-मानेमुस्तत्रभूचराः ॥ १८९ ॥

मणिचूडं पुरस्कृत्य, विजयी विजयोर्जितः । पुरं विवेश पौराणां, मनश्चानन्दमेदुरम् ॥ १९० ॥ प्रविश्य तत्र धात्रीशशास्ति मन्यप्रतिश्रवः । मणिचूडं पदे सद्यः, सोऽभ्यषिञ्चत पैतृके ॥ १९१ ॥ स प्राप्य पुनरात्मीयां, संपदं संमदप्रपाम्[3] । नकाले विक्रममम्भोद-मुक्तराकामृगाङ्कवत् ॥ १९२ ॥ तैस्तैस्तद्भक्तिकल्लोलैः, प्रथमानैः पृथासुतः । बहून्मुहूर्तवत् तत्र, वासरानत्यवाहयत् ॥ १९३ ॥

मणिचूडमथान्येद्यु-र्मन्युंपयश्रुलोचनम् । आपपृच्छेऽप्यनिच्छन्तं, पार्थस्तीर्थदिदृक्षया ॥ १९४ । ततो विमानमारुह्य, जिष्णुर्वर्धिष्णुधर्मधीः । एनःसेनाभिरस्पृष्ट-मष्टापदगिरिं ययौ ॥ १९५ ॥ भगवानादितीर्थेशो, यत्र पत्रलभूरुहि । चिरं

१ आभिनगामम् । २ गानरहितं यथा तथा । ३ हर्षस्य प्रपारूपाम् । ४ राकामृगाङ्कः-पूर्णिमाचन्द्रः । ५ मन्युः-शोकः । ६ पापसमूहैः ।

विश्रान्तिमातेने, निर्वाणनगराध्वगः ॥ १९६ ॥ किंनरीः कान्तकेलीषु, तमस्तोमाभिलाषिणीः । खेदयन्ति सदोद्द्योता, यस्य काञ्चनकन्दराः ॥ १९७ ॥ नाभेयदर्शिनः काम्य–कन्दरोद्यानखेलिनः । स्वर्गिवर्गस्य भाग्यानां, जन्मभूर्भोगभूश्च यः ॥ १९८ ॥ तस्मिन् पवितुमात्मान–मायातैस्तोयदैरिव । आनीलबहलच्छायैः, काननैः परिवेष्टितम् ॥ १९९ ॥ लीलावापीभिरभ्यस्त–क्षीरोदक्षीरकेलिभिः । स्मेरदम्भोजखण्डाभि–र्मण्डितोपान्तभूतलम् ॥२००॥ ददर्श दर्शनोन्मृष्ट[1]–निःशेषजनकल्मषम् । प्रासादमादिनाथस्य, पार्थो भरतकारितम् ॥ २०१ ॥ ( त्रिभिर्विशेषकम् ) सपरीवार एवायं, राजीवबनराजिनि । दीर्घिकावारिणि स्नान–माततान ततः सुधीः ॥ २०२ ॥ हेमाम्भोजततीर्[2]दिव्य–शाखिनां कुसुमानि च । अथावचाययांचक्रे, परिवारनभश्चरैः ॥ २०३ ॥ धीमानवस्त[3] पर्यस्त[4]–दुग्धोदलहरीमदे । स धौतवाससी दिव्ये, निजं मन इवामले ॥ २०४ ॥ सर्वस्वर्गिगणाकीर्णे, सर्वाश्चर्यनिकेतने । सर्वरत्नमये तस्मिन्, स विवेश जिनौकसि ॥ २०५ ॥ यथाविधि सुधीस्तिस्रः, कृतपूर्वी प्रदक्षिणाः । समाहितमनाः सोऽय–मानर्च वृषलाञ्छनम् ॥ २०६ ॥ मृदङ्गपणवादीनि, रचितोच्चण्डताण्डवाः । स्वच्छन्दं वादयामासु–रातोद्यानि नभश्चराः ॥ २०७ ॥ खेचरेषु क्षणान्नीचैः, कलसंगीतशालिषु । अथाभिष्टोतुमारेभे, नाभेयं जिनमर्जुनः[5] ॥ २०८ ॥ देव ! दुःखाग्निनिर्दग्ध–जगत्पीयूषवारिद ! । फलेग्रहि विलोक्य त्वां, नेत्रनिर्माणमद्य मे ॥ २०९ ॥ तद्भाग्यमपि भूयोभि–र्भाग्यैरेवोपलभ्यते । येन त्वं दृश्यसे देव !, शेवधिः शिवसंपदाम् ॥ २१० ॥ स्वामिन् पुरातनैर्भाग्यै–र्बभूव तव दर्शनम् । त्वद्दर्शनभवैर्भावि, यत्तु किं तस्य कथ्यते ? ॥ २११ ॥ कृतस्तुतिरिति प्रह्व–चेताः श्वेताश्ववाहनः ।

१ उन्मृष्टं–ध्वस्तम् । २ ततिः–श्रेणिः । ३ पर्यदधात् । ४ पर्यस्तः–निरस्तः । ५ अर्जुनः ।

विद्युद्वेगं जित्वा मणिचूडस्य राज्याभिषेकं कृत्वा अर्जुनोऽष्टापदं गतः ॥

नमस्यति स्म नाभेय-मवनिन्यस्तमस्तकः ॥ २१२ ॥ प्रत्येकं स्वस्वसंस्थान-मानवर्णादिशालिनः । नमश्चकार तीर्थेशान्,
त्रयोविंशतिमप्यसौ ॥ २१३ ॥
प्रश्यन्नवप्रमीसादः, प्रासादकमनीयताम् । निर्गत्यालोकयञ्श्लाघां, कुर्वन् भरतसंपदः ॥ २१४ ॥ मूर्तं धर्ममिव ज्ञान-
ज्योतिर्विध्वस्ततमोपहम् । चारणं मुनिमेकान्त-लीनमेकं ददर्श सः ॥ २१५ ॥ युग्मम् ॥ सोऽभिवन्द्य तमानन्दा-दुपविश्य
तदन्तिके । भवाम्भोधितरीकल्पा-मश्रौषीद्धर्मदेशनाम् ॥ २१६ ॥ धर्मोऽयं यैः श्रियो रक्षा-कोविदः सौविदः कृतः । चिराय
ते भजन्त्येता-मखण्डितमतीव्रताम् ॥२१७॥ जगद्भयंकरः स्मेर-मुखः संसारकेसरी । धर्मद्रुमाधिरूढानां, यदि न प्रभवत्यसौ
॥ २१८ ॥ सिच्यन्ते धर्मकुल्याभि-र्मुक्तिशर्ममहीरुहः । तासां[3] तटतृणायन्ते, सुरासुरनरश्रियः ॥ २१९ ॥ अयं च निर्ममे धर्म-
स्तया प्राग्जन्मनि त्वया । निःशेषभुवनोर्जस्वी, यथेदानीमजायथाः ॥२२०॥ इदं च जगदाधाय, दोस्तम्भैरकुतोभयम् । भवि-
ष्यसि भवेऽत्रैव, मोक्षलक्ष्मीस्वयंवरः ॥२२१॥ इत्याकर्ण्य गिरं कर्ण-कीर्णपीयूषविप्रुषम् । आनन्दाम्भोधिनिर्मग्न-मन्तरात्मान-
मुद्वहन् ॥ २२२ ॥ मुनिमानम्य तं मौलि-लालिताङ्घ्रिसरोरुहः ( हम् ) । विमानेन ततः पार्थः, प्रतस्थे मरुतां पथा ॥ २२३ ॥
( युग्मम् ) शिवश्रीदत्तसंकेतैः[4], संमेतप्रभृतिष्वसौ । तीर्थेष्ववन्दत ध्वस्त-समस्तवृजिनाञ्जिनान्[5] ॥ २२४ ॥
अतीत्य तीर्थसेवाभिः, सोऽथ द्वादशहायनीम् । प्रत्यचालीच्चिरोत्कण्ठा-विहस्तो हस्तिनापुरम् ॥ २२५ ॥ पृथुकीर्तिः
पृथासूनु-र्गच्छन् गगनवर्त्मना । आक्रन्दमिश्रमश्रौषी-दधस्तात्तुमुलध्वनिम् ॥२२६॥ स वीरः सपदि प्रैषीत्, तदानुपदिकीं

१ मारः-स्मरः । २ अन्तःपुररक्षकः । ३ धर्मकुल्यानाम् । ४ 'सकेत-समेत' इति एकप्रतिपाठः साधुः । ५ वृजिनं-दुःखम् ।

अर्जुनस्य हस्तिनापुरे गमनम्। मार्गे खेचरस्य मीलनम्॥

दशम् । ईक्षांचक्रे च शोकार्त-लोकसंकुलितं वनम् ॥ २२७ ॥ खेचरं केसरं नाम, तस्योदन्तं स वेदितुम् । प्राहिणोत् करुणा-
वेश्म, गत्वाऽभ्येत्य च सोऽभ्यधात् ॥ २२८ ॥

हिरण्यपुरमित्यस्ति, पुरमिन्द्रपुरोपमम् । स्वामिंस्तस्मिन्नरिग्राम[1]-गदो हेमाङ्गदो नृपः ॥ २२९ ॥ प्रेयसी तस्य निःशे-
ष-सतीसीमन्तमौक्तिकम् । देहद्युतिजितस्वर्ण-प्रभासंपत् प्रभावती ॥२३०॥ तामद्य यामिनीशेषे, चन्द्रशालाऽधिशायिनीम्।
कलविङ्कीम्[2]इव श्येनः, कोऽप्यकस्मादपाहरत् ॥ २३१ ॥ आर्यपुत्रार्यपुत्रेति, तदीयकरुणध्वनिः । समं हृदयशोकेन, राजानम-
जजागरत् ॥ २३२ ॥ भ्रुकुटीभीषणः कर्षन्, कृपाणमकृपाशयः । दधावे भूधवश्चौर ! तिष्ठ तिष्ठेति विब्रुवन् ॥२३३॥ अपश्यंश्च
पुरः किंचि-द्धावित्वा कियतीं भुवम् । फालच्युत इव द्वीपी, तस्थौ दोःस्थाम निर्विदन्[3] ॥ २३४ ॥ ततो रिपुमपाकर्तुं, प्रत्याहर्तुं
च वल्लभाम् । तेन संवर्मयांचक्रे, चक्रं शक्रसमश्रिया ॥ २३५ ॥ ततः कुतोऽप्यविज्ञात-दयितादस्युपद्धतिः[4] । किंकर्तव्यविमूढात्मा,
स तस्थौ पृथिवीपतिः ॥ २३६ ॥ स्त्रीजातिस्नेहसंक्रान्त-दुःखेवाथ निशीथिनी । जगाम तां धराधीश-प्रेयसीमनुधाविता ॥२३७॥
तत्याज राजलोकस्य, हृदयेष्विव सर्वतः । संक्रान्तः क्षणदाध्वान्तो, रोदसीकन्दरोदरम् ॥ २३८ ॥ प्रियापहारिणं हन्तु-मुद्य-
तस्य महीपतेः । प्रतिग्रहमिवाधातु-मधावत पतिस्त्विषाम् ॥ २३९ ॥ तस्याः शिथिलधम्मिल्ल-माल्यश्रेणीं निपेतुषीम् ।
करैरदर्शयन् भास्वान्, कृपयेवावनीपतेः ॥ २४० ॥ चचाल पृथिवीपाल-स्तया कुसुमलेखया । दर्शिताध्वा चमूध्वाने-र्मल्लु

१ शत्रुसमूहे व्याधिरूपः । २ चटकाम् । ३ 'निर्विदन्'-निन्दन् इत्येकप्रतिपाठः साधुः । ४ पद्धतिः-मार्गः । ५ स्वीकारं-
साहाय्यमिति यावत् ।

कुक्षिंभरिर्दिशाम् ॥ २४१ ॥ इयतीं भुवमायातः, स पुष्पश्रेणिमाश्रयन् । अभाग्यस्य निधिश्रीवत्, तस्यादृश्याऽत्र साऽप्यभूत् ॥२४२॥ तस्मिन्नस्तोकशोकार्ति-विक्लवे विफलक्रियम् । कान्दिशीकं ततोऽनीकं, भ्राम्यतीदमितस्ततः ॥ २४३ ॥

मुहुःश्रवामुपश्रुत्य, केसरस्येति भारतीम् । कपिकेतुः किमप्यन्त-श्चिन्तयन्निदमब्रवीत् ॥ २४४ ॥ हिरण्यपुरभूपाल-हेमाङ्गदसधर्मिणी । प्रभावती न खल्वेषा, मणिचूडस्य सोदरा ॥ २४५ ॥ हन्त स्वसा ममैवेय-मपरा वाऽस्तु साऽपि मे । कृपालोर्ननु सोदर्या, वार्या व्यसनवारिधेः ॥ २४६ ॥ तद्याहि ब्रूहि राजानं, मा स्म खेदं वृथा कृथाः । अर्जुनः पाण्डवेयोऽयमाहर्ता तव गेहिनीम् ॥ २४७ ॥ जानीहि हत एवाय-मिदानीमहितस्तव । तिग्मद्युतेः परित्रस्त-स्तमःस्तोमः क लीयते ? ॥२४८॥ क्षणं तद्भवताऽत्रैव, स्थेयमव्यवसायिना । इत्युदीर्य पुनर्जिष्णुः, प्रेषयामास केसरम् ॥ २४९ ॥ सोऽपि प्रियाविरोगार्ति-प्रतप्ताय महीभुजे । कथयित्वा यथाऽऽदिष्ट-मुपार्जुनमुपागमत् ॥ २५० ॥ किंवदन्तीं प्रभावत्याः, सर्वां संविग्नं निगया । व्योमाध्वना दधावेऽथ, क्रोधाध्मातः कपिध्वजः ॥ २५१ ॥ धनुर्धरैकधौरेये, विद्याविस्फूर्जितोर्जिते । प्रियोपलम्भं संभाव्य, जिष्णौ नाग्रेऽगमन्नृपः ॥ २५२ ॥

अथ केऽप्यग्रकान्तारे, गत्वा हृदयपीडया । भूवल्लभमभाषन्त, प्रत्यागत्य तुरङ्गिणः ॥ २५३ ॥ दिष्ट्या त्वं वर्धसे देव, ज़गिन्यागम्यनां पुरः । अस्ति प्रभावती देवी, कुर्वाणा कुसुमोच्चयम् ॥ २५४ ॥ संपन्नहृदयाश्वासः, सोऽथ त्वरितमभ्यगात् । मनोभीष्टे हि निर्दिष्टे, को न धावति वस्तुनि ? ॥ २५५ ॥ पुरः प्रभावतीं देवी-मपश्यत् काश्यपीधवः । परं चानन्दसंदोहं,

१ कृशाम । २ ज्ञात्वा । ३ समीपस्थे ।

अर्जुनेन कृता प्रभावती-शुद्धिः ॥

गाहते स्मान्तरात्मना ॥ २५६ ॥ प्रस्तौति[1] प्रणयालापं, यावदभ्येत्य भूपतिः । अकस्माद्दन्दशूकस्ता-मदशत्तावदुत्फणः ॥ २५७ ॥ आर्यपुत्रार्यपुत्राहं, दष्टा दुष्टात्मनाऽहिना । इति प्रलापवाचाला, वाला मूर्च्छालतामगात् ॥ २५८ ॥ ततः क्षितिपतिः क्षोभा-दवधीरितधीरिमा । क्रन्दन् विषागदंकारा-ञ्जवादाह्वास्त विह्वलः ॥ २५९ ॥ यावत् किंचिदुपक्रान्तं, प्रचण्डैराहितुण्डिकैः । तावत् तेषामचैतन्यं, पश्यतामेव साऽभ्यगात् ॥ २६० ॥ क्षणप्रीतस्य राज्ञोऽथ, शोकः शतगुणोऽभवत् । कृतविध्यातदीपस्य, तमो हि बहुलायते ॥ २६१ ॥ ततो विस्रस्तधम्मिल्लः, क्षिप्रक्षौमो लुठद्भुजः । निमीलिताक्षो मूर्च्छालः, क्ष्मापालः क्ष्मातलेऽपतत् ॥ २६२ ॥ अथ द्विगुणशोकस्य, कोकस्येव दिनात्यये । लोकस्य दूरमुत्तस्थु-राक्रन्दध्वनयोऽधिकाः ॥ २६३ ॥ वीजितः परिवारेण, वनान्तकदलीदलैः । कथंचित् कलयामास, चैतन्यमवनीपतिः ॥ २६४ ॥ ततः प्रियतमां प्रीत्या, कुर्वन्नुत्सङ्गसङ्गिनीम् । रोदयन्नटवीसत्त्वान्, विललापेति भूपतिः ॥ २६५ ॥

हन्त ! हेमाङ्गदे धातः !, कुतोऽपि कुपितोऽसि चेत् । ततः प्रथममस्यैव[2], प्राणान् हरसि किं न हि ? ॥ २६६ ॥ प्राणेश्वर्यामिमुष्यां वा, सत्यां हर्तुमनीश्वरः । मन्ये पूर्वं तदेतस्या, जीवितव्यमपाहरः ॥ २६७ ॥ देवि ! बुध्यस्व बुध्यस्व, दीनो जल्पत्ययं जनः । किंकरं न कदाचिन्मां, त्वमवज्ञातपूर्विणी ॥ २६८ ॥ कोपश्चेत् कोऽपि ते किंचि-न्न स्वमागः[3] स्मराम्यहम् । पुरावधीरितश्चास्मि, नापराधशतैरपि ॥ २६९ ॥ किं नाम तदकाण्डेऽपि, न पश्यसि दृशाऽपि माम् । आसतां भवदुद्दाम-प्रेमपल्लविता गिरः ॥ २७० ॥ परं निरनुरोधा[4]ऽसि, मयि त्वं न कदाचन । किं त्वेतत्ते हरत् प्राणान्, दैवमेवापराध्यति ॥ २७१ ॥

१ 'प्रीणाति प्रणयालापैः' इत्येकप्रतिपाठः । २ 'प्रथममस्या मे' प्रत्यन्तरपाठोऽपि साधुः । ३ अपराधम् । ४ अननुकूला ।

ममाप्यमीभिः किं प्राणै-स्त्वद्वियोगमलीमसैः ? । वैरङ्गिको मृगाङ्कोऽपि, कौमुदीरेचितः सताम् ॥ २७२ ॥ भूपालमतिवाचाल-मित्यादिपरिदेविनैः । काममुद्यच्छमानं च, जीवितान्ताय कर्मणे ॥ २७३ ॥ पौरामात्यादयः पाद-पीठाऽऽलुठितमौलयः । मृदुः प्रसादयामासुः, माश्रुनेत्रममृत्यवे ॥ २७४ ॥ ( युग्मम् )

ततो विद्वन्निदं भूमि-विडौजस्त्वं विडम्बनाम् । जानञ्जीवितमप्येत-दापदं च पदे पदे ॥ २७५ ॥ प्रेयसीविप्रयोगार्तः, प्रकाममनमन्य तान् । चितामाम्रयामास, मेदिनीपतिरात्मने ॥ २७६ ॥ युग्मम् ॥ ततः पताकिनीलोकः, समस्तोऽपि पृथक् पृथक् । निर्ममेऽनुमहीपालं, देहत्यागोचिताश्चिताः ॥ २७७ ॥ अर्घमुत्क्षिप्य घर्मांशो-रर्थिभ्योऽर्थं वितीर्य च । प्रदक्षिणयति स्मार्गिन, नित्यंमौनित्यविन्नृपः ॥ २७८ ॥ चितामध्यं ततो लोके, हाकारमुखरानने । प्रियामुत्सङ्गमारोप्य, विशति स्म विशांपतिः ॥ २७९ ॥ अपरोऽपि महीपाल-प्रसादविवशाशयः । अन्तश्चितं चमूलोकः, प्रवेष्टुमुपचक्रमे ॥ २८० ॥ चिताससार्चिपि ज्वाला, पावकस्य नोदगुः । तावत् सह प्रभावत्या, पार्थोऽभ्यागान्नभोऽध्वना ॥ २८१ ॥ विभ्राणं नवसंवर्त-पुष्करावर्त-विभ्रमम् । व्यासान्तरिक्षमद्राक्षी-द्धूमस्तोमं कपिध्वजः ॥ २८२ ॥ शुश्राव दुःश्रवाः सैन्य-लोकाक्रन्दगिरोऽर्जुनः । विश्राणयन्तीरश्रूणि, ग्लानिर्नयगामपि ॥ २८३ ॥ स्वकीयैरिव विध्याय-मानाः शोकाश्रुवारिभिः । धूमायमानाः सोऽपश्यत्, कोटिशो गणिताश्चिताः ॥ २८४ ॥ ममसश्रुजलोत्पीडैः, कश्चिदर्घाञ्जलिं जनः । रवेरुदस्यन्नुत्पश्यः, फाल्गुनेन विलोकितः ॥ २८५ ॥

१ निस्तेजाः-कान्तिरहित इत्यर्थः । २ ज्योत्स्नारहितः । ३ पौरामात्यादीन् । ४ सेनाजनः । ५ चितामंत्रन्वितं वह्निं । ६ चितायाम् । ७ नगराणामपि ग्रामाणाम ।

जानन् जलमिव ज्वालां, चितावह्निं कियानपि । लोकः प्रदक्षिणीकुर्वन्, वीक्षितः सितवाजिना ॥ २८६ ॥ देवि ! तीर्णासि चेत् कृच्छ्रा-दपहारमहोदधिम् । किमिदानीं दशेयं ते ?, विधेरहह वामता ॥ २८७ ॥ स्वर्लोकपथिकीं देवि !, राजापि त्वामनुव्रजन् । आनृण्यमिच्छति प्रीतेः, का कथा मादृशां पुनः ? ॥ २८८ ॥ देवि ! त्वद्विरहे प्राणाः, क्षणं न स्थातुमीशते । ततस्तवैव सार्थेन, प्रार्थयन्ते त्रिविष्टपम् ॥ २८९ ॥ एतावतो जनस्यास्य, प्राणान् हर्तुमनाः समम् । कोऽप्यहिच्छद्मना मन्ये, देवो दैत्योऽथवाऽऽगतः ॥ २९० ॥ निशम्येति परीवार-परिदेवितभारतीम् । कौन्तेयस्याभवत् कामं, द्विधेव हृदयं तदा ॥ २९१ ॥

तदुद्वीक्ष्य क्षणान्मर्म-च्छेदमूर्च्छालमानसा । इत्यचिन्तयदुद्भूत-दुःखभारा प्रभावती ॥ २९२ ॥ हा विधे ! विदधे किं नु, भवतेयं प्रभावती ? । विहिताऽपीयतः किं वा, कृता दुःखस्य भाजनम् ? ॥ २९३ ॥ प्रतारितस्तया दुष्ट-विद्यया तस्य पाप्मनः । कृतज्ञो मत्कृते प्राणान्, प्रियस्तत्याज मे ध्रुवम् ॥ २९४ ॥ तमनु प्रस्थिता नूनं, सर्वेऽप्येतेऽनुजीविनः । शोषिते हि न पाथोधौ, जीवन्ति जलजन्तवः ॥ २९५ ॥ तन्मे प्राणेश्वरः प्राप्तः, किंचिदत्याहितं यदि । मङ्क्षु मोक्ष्यति तन्नूनं, प्रभावत्यपि जीवितम् ॥ २९६ ॥ विकल्पानिति कुर्वन्त्यां, तस्यां पर्यश्रुचक्षुषि । विशदाश्वोऽपि निश्वासान्, विमुञ्चन्नित्यचिन्तयत् ॥ २९७ ॥ ममाफलित एवाय-मुपकारमहीरुहः । हा ! किमुन्मूलयांचक्रे हतेन विधिदन्तिना ? ॥ २९८ ॥ बभूव भूपतेः किंचि-द्यदि तावदमङ्गलम् । तदसावप्यसून्मुञ्चेत्, सत्यो हि दयितानुगाः ॥ २९९ ॥ विपत्तिर्दर्शिता[3]ऽनेन, भगिन्या भगिनीपतेः । तज्जीवितेन किं नाम, फाल्गुनोऽपि करिष्यति ? ॥ ३०० ॥ एवमालोचयन्नुच्चै-रन्तः श्वेतहयो

१ अपहार एव महासमुद्रस्तम् । २ प्राणत्यागरूपमनर्थम् । ३ 'विपत्तिदर्शिनाऽनेन' प्रतित्रयपाठः ।

प्रभावती-विरहे तत्पतेः हेमाङ्गद-स्यावस्था॥

ययौ। तत्कालज्वलितोदर्चि–र्महीपतिचितान्तिकम् ॥ ३०१ ॥ मन्त्रपूतैः प्रभावत्याः, पाणिसंस्पर्शपावितैः। भूमिभर्तु-श्चिताऽम्भोभिः, सिषिचे सव्यसाचिना ॥ ३०२ ॥ राजलोकस्य सर्वस्य, तत्क्षणोत्थितहेतयः। तेन व्योमचरैरन्याः, सेनयांचक्रिरे चिताः ॥ ३०३ ॥ प्रभावत्याश्च जिष्णोश्च, साकं शोकहविर्भुजा। ततः प्रशान्तिं तत्काल–मालम्बे कृशानः ॥ ३०४ ॥ विमुक्तस्फारफेत्कारा, तदोत्सङ्गान्महीपतेः। पलायामास वेगेन, सा प्रपञ्चप्रभावती ॥ ३०५ ॥

ततो विश्वंभराभर्ता, विस्मयस्मेरलोचनः। निर्जगाम चितामध्यात्, प्रेयसीविरहादिव ॥ ३०६ ॥ वियोगातिमनु प्राप्तः, शोक एव परामुताम्। न तु प्रभावती देवी, न चान्यः कोऽपि तामनु ॥३०७॥ प्रमोदाविष्टया, दृष्ट्वा भूयः (पः) संभाव्य वल्लभाम्। पीयूषह्रदनिर्मग्न–मिवात्मानममन्यत ॥ ३०८ ॥ केसरश्च पुरोभूय, भूमिवल्लभमभ्यधात्। अर्जुनः पाण्डुपुत्रोऽय–मानिनाय तव प्रियाम् ॥ ३०९ ॥ ततः स सहसाऽभ्येत्य, बीभत्सुमभिषस्वजे। तदीयाङ्गपरिष्वङ्गैः, स्वमङ्गं पावयन्निव ॥ ३१० ॥ वृत्तान्तेन ततस्तेन, प्रेङ्खोलितमनास्तदा। किमेतदिति बीभत्सु–मन्वयुङ्क्त महीपतिः ॥ ३११ ॥ अथास्मै कथयामास, पार्थादेशेन केसरः। वदेयुर्वदानं हि, सन्तो नात्मीयमात्मना ॥ ३१२ ॥

तदानीं त्वामवस्थाप्य, राजजिष्णोर्निदेशतः। पुनस्त्वरितमेतस्य, पादान्तिकमुपागमम् ॥ ३१३ ॥ विमानरत्नमारूढो, गगनेऽप्यधिकत्वरम्। किरीटी हेमकूटाख्यं, क्षणादद्रीन्द्रमासदत् ॥ ३१४ ॥ तत्रैकच्छत्रसाम्राज्य–सगर्वतिमिरे क्वचित्। गुहालक्षपरिक्षिप्ते, प्रभुर्नः कन्दरेऽविशत् ॥ ३१५ ॥ मर्त्यकीटेन ते देवि !, कृतसर्वाङ्गसङ्गतेः। मां विधाय धवं धातु–र्व्य

१ हेतिः–अग्निशिखा। २ अर्जुनेन। ३ पराक्रमम्।

१८

पाप्मा विलुप्यताम् ॥ ३१६ ॥ देवि ! विद्याधरीपाणि–पल्लवोद्धूतचामरम् । वैडूर्यपुरसाम्राज्य–मुपभोक्तुं प्रसीद मे ॥ ३१७ ॥ सद्यः कन्दलिते विद्या–वैभवेन नवे नवे । प्रासादपर्वतोद्याने, देवि ! क्रीड मया सह ॥ ३१८ ॥ देवि ! हित्वा प्रतीपत्वं, द्वीपशैलाननेकशः । व्योमयानेन वीक्षस्व, मदुत्सङ्गैकसङ्गिनी ॥ ३१९ ॥ इति प्रभावतीं तत्र, मेघनादः प्रसादयन् । ददृशे खेचरो वैरि–केतुना कपिकेतुना ॥ ३२० ॥ ( पञ्चभिः कुलकम् )

आः पाप ! चापलं मुञ्च, जीवितं विजहासि किम् ? । मम पत्युः पुरो हन्त !, पुरुहूतोऽपि कातरः ॥३२१॥ मत्कान्तराज्ये स्वाराज्य–गर्वसर्वंकषे सति । स्तुतेर्विद्याधरादीनां, न पदं राज्यसंपदः ॥ ३२२ ॥ नानाश्चर्यमयद्वीप–शैलालोकनकौतुकम् । चिरायुर्मणिचूडो मे, सोदरः पूरयिष्यति ॥ ३२३ ॥ निद्राणे मत्प्रिये चौर !, मामहार्षीस्त्वमक्षतः । मृगारौ जागरूके हि, का मृगस्य प्रभूष्णुता ? ॥ ३२४ ॥ पारदारिक ! चेत् पाणिं, मदङ्गे लगयिष्यसि । तेनैव पाप्मना मङ्क्षु, भस्मसात्त्वं भविष्यसि ॥३२५॥ सिद्धविद्यः स चेद्विद्या–न्मद्बन्धुप्रियबान्धवः । पार्थः कथां कुतोऽप्येनां, ततस्त्वमसि किं क्वचित् ? ॥३२६॥ विद्याधरं तमित्यादि, विब्रुवाणां प्रभावतीम् । निध्याय मुदमध्यात्मं, स्फारयामास फाल्गुनः ॥ ३२७ ॥ ( सप्तभिः कुलकम् ) कोऽयं हेमाङ्गदो नाम ?, कः सोऽपि कपिकेतनः ? । मणिचूडोऽपि कस्तन्वि !, तन्वाने मयि धन्विताम् ? ॥३२८॥ स्वयं दीर्घाक्षि ! दास्याय, जनोऽयमनुमन्यताम् । पठन् हठकठोरत्वं, पुनः केन निपेत्स्यते ? ॥ ३२९ ॥ इत्यादिभिर्वचोभिस्तं, भीपयन्तं प्रभावतीम् । जगाद जगतां सीद–हरः श्वेतहरिः क्रुधा ॥ ३३० ॥ ( त्रिभिर्विशेषकम् ) दूरतो भव रे विद्या–धरस-

१ पापम् । २ प्रतिकूलताम् । ३ सामर्थ्यम् । ४ 'पुरः' प्रतित्रयपाठः । ५ दुःखहरः ।

केसरेण कथितोऽर्जुनस्य पराक्रमः

॥ ७९ ॥

न्तानपांग्नेन ! । मैनां पतिव्रतां श्वास–पवनैरपवित्रय ॥ ३३१ ॥ पतिव्रतामयं ज्योति–रिमामपहरिष्यतः । वपुस्तव क्षणादेव,
किं नभूत न भस्मसात् ? ॥३३२॥ बन्धुः पतिर्वा यद्यस्या, गणितौ नावलेपतः । त्वयाऽन्तश्चिन्तिताः किं न, फाल्गुनस्यापि
वाहनः ? ॥ ३३३ ॥ सतीचिन्तामणेरस्या–स्तनुसंस्पर्शपाप्मनः । प्रायश्चित्तं विधाता ते, क्षणात् कौक्षेयको मम ॥ ३३४ ॥
तदा प्रमोदकल्लोलै–राकुलीकृतमानसा । इत्यन्तश्चिन्तयामास, फुल्लचक्षुः प्रभावती ॥३३५॥ चेतस्त्वं वर्धसे दिष्ट्या,
मम भ्रातुः प्रियः सुहृत् । कुतोऽप्यत्र वताऽऽयातः, स एवायं धनंजयः ॥ ३३६ ॥ प्रभावोऽस्ति प्रभावत्याः, सत्यं सुकृत-
संपदः । सतीव्रतसरःसेतुः, कपिकेतुर्यदागमत् ॥ ३३७ ॥ सरलैकस्वभावोऽयं, मा स्म मायाविनाऽमुना । खेचरेण रणे
शान्तं, यता नन्वेष फाल्गुनः ॥ ३३८ ॥ सर्वाः संभूय बीभत्सो–र्भवत्यः कुलदेवताः । शरीरमधितिष्ठन्तु, यथा स्याद्विजयी
युधि ॥ ३३९ ॥ पतिव्रताव्रतस्यास्य, कोऽपि मे महिमाऽस्ति चेत् । किरीटिना दुरात्माऽयं, जीयतां तन्नभश्चरः ॥ ३४० ॥
असावमूदृशानल्प–विकल्पाकुलचेतसि । उवाच विजयो वाचं, खेचरापसदं पुनः ॥ ३४१ ॥
गृहाण रे क्षणात् पाणौ, किमप्यायुधमात्मनः । खड्गोऽयं दुष्ट ! ते रुष्ट–स्तदेष न भविष्यसि ॥ ३४२ ॥ ऊचे च
फाल्गुनं वल्गु, स वल्गन् समराङ्गणे । रे ! मनुष्यकृमे ! नश्य, किमु रोदयसि प्रियाम् ? ॥ ३४३ ॥ विद्याधरवधूवर्ग–वैध-
व्यव्रतदीक्षिता । कष्टं कृपाणयष्टिर्मे, पतन्ती त्रपते त्वयि ॥ ३४४ ॥ बालां को नाम मत्पाणे–रेतामाच्छेत्तुमिच्छति ? । को हि
कण्ठीरवाक्रान्तां, मृगीमाक्रष्टुमीश्वरः ? ॥ ३४५ ॥ ममामर्षहुताशेऽस्मि–न्नाहुतीयन्मुधा ततः । कथं मनुष्यलोकस्य, कौतु-

१ पांसनः-अधमः । २ विद्याधराधमम् ।

केसरेण कथितोऽर्जुनस्य पराक्रमः

कान्यपनेष्यसि ? ॥ ३४६ ॥ इत्युदीरयति स्वैरं, तस्मिन् वक्ति स्म पाण्डवः । रे ! न शौण्डीरिमा वाचि, भुजेष्वेवावतिष्ठते ॥ ३४७ ॥ किं तु दुर्दान्तवृत्तीनां, शासनाय भवादृशाम् । उद्यता अपि नो पूर्वं, प्रहरन्ति कुरूद्वहाः ॥ ३४८ ॥ ततः स्थेमानमानीय, मानसं साध्वसाकुलम् । निपातयतु निस्त्रिंशं, नृशंस ! प्रथमं भवान् ॥३४९॥ इत्याक्षेपगिरा सोऽपि, दूरोज्जागरपौरुषः। अपकोशमसिं कृत्वा, प्रजहार कपिध्वजम् ॥ ३५०॥ तेन गाढप्रहारेण, दक्षिणेर्मा धनंजयः । तमूर्जितभुजं दृष्ट्वा, कष्टजय्यममन्यत ॥ ३५१ ॥ ततः कपिध्वजो धौत–धारेण तरवारिणा । बाह्वोः सर्वाभिसारेण, तं हन्तुमुदतिष्ठत ॥३५२॥ निहतः स तथा शत्रुः, स्कन्धकोटौ किरीटिना । यथा पपात मूर्च्छालः, शुष्कतालुर्भुवस्तले ॥३५३॥ चेलान्ततालवृन्तेन, तमुपानीय चेतनाम् । सुधीः सधैर्यप्रागल्भ्य–मभ्यधत्त धनंजयः ॥३५४॥ हंहो ! विद्याधराधीश !, दूरमालम्ब्य दोर्बलम् । पुनः प्रहर निःशङ्कं, मा कलङ्कय पौरुषम् ॥ ३५५॥ इत्यवष्टम्भसंरम्भं, विभाव्य भयभङ्गुरः । विहाय सहसा खड्ग–मानमत् खेचरोऽर्जुनम् ॥३५६॥ नीचैरूचे च तं वीर !, व्यलीकं क्षम्यतामिदम् । भूर्भुवःस्वस्त्रयीलोक–त्राणशौण्डा हि पाण्डवाः ॥ ३५७ ॥ शौण्डीरचूडारत्नेन, परस्त्रीप्रियबन्धुना । सर्वथैव त्वया नाथ !, विजिग्येऽहमनीदृशः ॥ ३५८ ॥ चारणेभ्यो भुजस्तम्भ–स्फूर्तयस्ते मुहुः श्रुताः । खलीकृतोऽसि विश्वेश !, साक्षात्कर्तुं मयाऽद्य ताः ॥३५९॥ परं बद्धरणारम्भ–संरम्भे हरिणद्विषि । न द्विपेन्द्रोऽप्यलं स्थातुं, का कथा हरिणस्य तु ? ॥३६०॥ धर्म-न्याय-सदाचार–परोपकृतयस्तव । सहायास्तत्त्वया वीर !, जगज्जितमहं तु कः ? ॥३६१॥ किं चोपकृतमप्यस्या–मिदं भावि तवाफलम् । यदि पद्माद्वने देव !, संप्रत्येव न धावसि ॥ ३६२ ॥ मुक्ताऽस्ति मार्गकान्तारे,

१ पराक्रमः । २ भयाकुलम् । (३ दक्षिणे ईर्मं व्रणमस्येति ।) ४ अपराधः । ५ 'तथा' 'तमा' इति प्रत्यन्तरपाठौ न सम्यक् ।

मागा मेधाविना मया । विद्या प्रभावतीरूप-धारिणी यत् प्रतारिणी ॥३६३॥ सर्वोऽप्यनुपदी लोक-स्तया हन्त प्रतारितः । निन्दयति क्षणादेव, छद्मना को न वञ्च्यते ? ॥ ३६४ ॥ तदुपादाय दीर्घाक्षी-मेतां गत्वा च सत्वरम् । भ्रातस्त्रायस्व विश्वस्य, जन्तुजातस्य जीवितम् ॥३६५॥ अहं तु गन्तुमिच्छामि, भावज्ञ ! त्वदनुज्ञया । नातः परं तवाप्यस्मि, मुखं दर्शयितुं क्षमः ॥३६६॥ ततो विमृज्य तं प्रीत्या, प्रणिपत्य प्रभावतीम् । यानमारोप्य च स्वैरं, दधावे श्वेतसैन्धवः ॥३६७॥ मत्प्राणपरित्यागा-शङ्कानगलिताशयः । देवस्त्व (व ! त्व) रितमेवाय-मुद्देशमिममागमत् ॥ ३६८ ॥ कपिध्वज-प्रभावत्यो-र्दृष्टनव वैशसम् । भूपाल ! यदभूदुःखं, जानीतस्तदिमौ परम् ॥३६९॥ नश्यति स्म ततो देवी-पाणिपूताम्बुसेकतः । निर्यातायाश्रितायाम्ने, सेयं विद्या प्रतारिणी ॥ ३७० ॥

परममोदसंभार-संभृतपुलकाङ्कुरः । ततो हेमाङ्गदो राजा, व्याजहार कपिध्वजम् ॥ ३७१ ॥ शङ्के परोपकाराय, सृष्टिर्भुवि भवादृशाम् । "निर्माणं हि सहस्रांशो-र्जगदालोकहेतवे" ॥३७२॥ वीरोत्तंस ! त्वया देवी-मिमामाहरताऽधुना । उपनो जन्तुजातस्य, संहारः परिरक्षितः ॥ ३७३ ॥ कोटिशः श्रुतमद्वैतं, त्वद्भुजस्तम्भवैभवम् । साक्षात्कृतमिदानीं तु, दैवादेवमिदं मया ॥ ३७४ ॥ वस्तु नास्त्येव तद्येन, तव स्यात् प्रत्युपक्रिया । जनोऽयमनुमन्तव्यः, किंकरत्वाय केवलम् ॥३७५॥ इति व्याहृत्य भूपेन, प्रश्रयेण गरीयसा । अनुनीय तदा निन्ये, हिरण्यपुरमर्जुनः ॥ ३७६ ॥ उत्सवैकमयं स्मेर-दानन्दमन्दिरगम् । सर्वसंपन्मयं स्वर्ग-सर्वाङ्गीणकलामयम् ॥३७७॥ प्रत्याहर्ता प्रभावत्या, वतायमयमर्जुनः । इति निर्दिश्यमानो-

१ जिनम-हिमाम उत्यर्थः । २ कथयित्वा ।

ऽसौ, लोकैः प्रीत्याऽविशत् पुरम् ॥३७८॥ (युग्मम्) राज्ञा च राजपत्न्या च, राजवेश्मन्यनुद्रुतः। विवेश विक्रम-श्रीभ्यां, मूर्तिमद्भ्यामिवार्जुनः ॥३७९॥ तत्र सिंहासने हैमे, निवेश्य विवशो मुदा। जगाद पार्थिवः पार्थ-मित्थं विनयवामनः ॥ ३८० ॥ प्रीतिक्रीतानिमान् प्राणान्, भुजक्रीतीरिमाः श्रियः। गुणक्रीतमिदं राज्यं, कृतार्थय यथारुचि ॥ ३८१ ॥ पार्थोऽब्रवीदसामान्य-सौजन्यस्वजने त्वयि। स्वर्गाधिपत्यमप्येत-न्ममैव किमिवापरम् ? ॥ ३८२ ॥

प्रौढप्रणयमन्योऽन्य-मित्युल्लापवतोस्तयोः। क्षणेन मणिचूडोऽपि, तत्र व्योमाध्वनाऽऽगमत् ॥ ३८३ ॥ प्रणिपत्य यथौचित्यं, तानशेषान् विशेषवित्। स खेचरपतिः पार्थ-मुवाच रचिताञ्जलिः ॥३८४॥ भगिनीहरणोद्भूतं, जयोदाहरणं तव। उपगीतमुपश्रुत्य, खेचरैरहमागमम् ॥३८५॥ एकैकमवदानं ते, वागीशस्यापि नेशते। गरीयस्यो गिरो वक्तुं, किं पुनर्मादृशामिमाः ? ॥३८६॥ कृते किं तु प्रभावत्याः, प्रत्यानयनकर्मणि। राज्यदानाधमर्णोऽहं, ब्रवीमि किमतः परम् ? ॥ ३८७ ॥ तमूचेऽथ पृथासूनु-रहो ! किमिदमुच्यते ?। आत्मन्येवात्मनः[2] किं स्या-दुत्तमर्णाधमर्णता ? ॥३८८॥ किं च मामुल्लसत्प्रीति-र्भगिनीयं प्रभावती। शश्वत्त्रैलोक्यजैत्राभि-राशीर्भिरभिनन्दतु ॥३८९॥ ततस्तद्भक्तिसंभार-रज्जुसंदानिताशयः[3]। निनाय दिवसान् पाण्डु-पुत्रस्तत्रैव कांश्चन ॥ ३९० ॥

कश्चिदप्यन्यदा पूर्व-संस्तुतो हस्तिनापुरात्। अभ्येत्य रभसोत्फालः, फाल्गुनाय व्यजिज्ञपत् ॥३९१॥ कुमार ! चारचक्रेभ्यो, निशम्य त्वामिहागतम्। स्नेहादाह्वातुमह्वाय, पिता ते प्रजिघाय माम् ॥ ३९२ ॥ वार्द्धकार्हाः क्रियाः कर्तुं,

अर्जुनस्य हेमाङ्गदनगरे गमनम्। तत्र मणिचूडस्यागमनम् ॥

१ पराक्रमः। २ 'आत्मनैवा०' प्रत्यन्तरम्। ३ सदानितः-बद्धः।

ष्यं राज्ये तपःसुतम् । अभिषेक्तुमनाः काम-मुर्वीशस्त्वामपेक्षते ॥ ३९३ ॥ प्रतिभ्रातरपश्यन्ती, कुन्ती त्वद्वदनं पुनः । वहत्यजस्रमस्राम्बु-जम्बालजटिले दृशौ ॥ ३९४ ॥ इत्युपश्रुत्य तद्वाच-माचान्तहृदयो मुदा । पित्रोः स्नेहेन बीभत्सु-र्नितरामौत्सुक्यायत ॥ ३९५ ॥ ततस्तमाह बीभत्सु-राद्यं शत्रुंजये जिनम् । नमस्कृत्याहमायात, एत्र त्वं तु पुरो व्रज ॥ ३९६ ॥ इति संप्रेष्य तं शत्रुं-जयं प्रति धनंजयः । सार्धं भूखेचरेन्द्राभ्यां, चलति स्म विहायसा ॥ ३९७ ॥ तस्मिन् परमया भक्त्या, वन्दित्वाऽऽदिजिनेश्वरम् । द्वारकामगमत् कृष्ण-दर्शनोत्कण्ठितोऽर्जुनः ॥३९८॥ प्रत्युज्जगाम गोविन्द-स्तमायान्तं नभोऽध्वना । नीलकण्ठ इवोत्कण्ठा-तरलो नवनीरदम् ॥ ३९९ ॥ तौ मिथः परिरेभाते, प्रत्यक्प्रागनिलाविव । शरीरकमुन्मृज्य, विश्रतवैकतामिव ॥ ४०० ॥ पीयमानं तरत्तारैः, पौरनारीविलोचनैः । निन्ये हरिर्निजं धाम, सपरीवार-मर्जुनम् ॥ ४०१ ॥ फाल्गुनाय मुराराते-रुपचारं चिकीर्षतः । स्वाराज्यमपि निर्जेतु-माचकाङ्क्ष मनस्तदा ॥ ४०२ ॥ कृष्णोऽस्य स्वागतीचक्रे, सुभद्रां भगिनीं निजाम् । अभीष्टो ह्यतिथिः कामं, गृहसर्वस्वमर्हति ॥ ४०३ ॥ यादवीमङ्गलोद्गीति-नवपीयूषतोयदः । अभून्मुदितगीर्वाण-स्तत्पाणिग्रहणोत्सवः ॥ ४०४ ॥ पाणिमोक्षविधौ जिष्णो-र्यद्यद्भूयोऽप्यदित्सत । अल्पीय इति कंसारि-स्तेन तेनाप्यलज्जत ॥ ४०५ ॥ पित्रोरुत्कण्ठितोऽप्युच्चै-र्जिष्णुः कृष्णानुरोधतः । उत्सवैकमयान् कांश्चित् नवातीयाय वासरान् ॥ ४०६ ॥

कृष्णमन्येद्युरापृच्छ्य, समं पत्न्या सुभद्रया । हस्तिनापुरसोत्कण्ठः, प्रतस्थे कपिकेतनः ॥ ४०७ ॥ ततः स

१ नभालः-पङ्कः सेवालो वा । २ मयूरः ।

खेचरानीक–विमानैस्तिरयन्नभः। चचाल मणिचूडेन, समं हेमाङ्गदेन च ॥ ४०८ ॥ विमानमनुकामीन–मध्यासीनो विलोकयन्। सरः-सरि-न्नगा-राम–पुर-ग्राममयीं महीम् ॥ ४०९ ॥ खेचरेन्द्र-नरेन्द्राभ्यां, श्रिताभ्यामभितोऽन्तिके। दत्तताल मिथस्तास्ताः, कुर्वन् प्रमदसंकथाः ॥ ४१० ॥ पुष्यन्तं चादवीयस्त्वा–त्तापैस्तीव्रैर्विवस्वतः। शुष्यन्तं च दधत्स्वेदं, बंहीयोभिर्नभोऽनिलैः ॥४११॥ वहन् हर्षभरोल्लुण्ठ–मुत्कण्ठतरलं मनः। आसीदत् सीददानन्दं, हस्तिनापुरमर्जुनः ॥ ४१२ ॥ ( चतुर्भिः कलापकम् ) धावन्तः खेचराः काम–महंपूर्विकया ततः। आयान्तं पृथिवीभर्तुः, पृथासूनुमचीकथन् ॥ ४१३ ॥ शोकमानन्दतां निन्ये, मेदिनीशस्य तद्वचः। शुद्धः सिद्धरसः शुल्वं[2], महारजततामिव ॥ ४१४ ॥ हर्षाश्रुबिन्दुसंदोहः, स्थाने शोकाश्रुविप्रुषाम्। पृथायाः पप्रथे कृत्स्नो, ज्योत्स्नेव तमसां पदे ॥ ४१५ ॥ बभूव रभसाच्चेतः, सोदराणां विकस्वरम्। भास्वत्युदीयमाने हि, किमु जीवति नाम्बुजम् ? ॥ ४१६ ॥ आदिश्य पुरि तत्काल–मुत्सवं सपरिच्छदः। तनूजं मनसः पश्चा–द्भूपतिः प्रत्युदव्रजत् ॥४१७॥ मेदिनीपतिमा(रा)गत्य, पुरद्वारवनावनौ। अनेदीयांसमुद्द्योत–संभारं भृशमैक्षत ॥ ४१८ ॥ मार्तण्डमण्डलैः पूगैं[3]–स्तिथैरिव मरुत्पथः। व्याप्यमानो विमानौघै–स्ततः क्ष्मापेन वीक्षितः ॥ ४१९ ॥ क्षणादैक्ष्यन्त सामन्त–मायूरातपवारणैः। सैन्यानि पितुरुद्यान–भ्रमं पुष्णन्ति जिष्णुना ॥४२०॥ महीयोभिर्महःपुञ्जै-र्मुहुर्मञ्जरयद्दिशः। विमानमवनम्यैक–माजिहीत महीतलम् ॥४२१॥ नरेन्द्र-खेचरेन्द्राभ्यां, ताभ्यां तस्मादनुद्रुतः। नितान्तमुदितस्वान्तः, कपिकेतुरवातरत् ॥ ४२२ ॥ पित्रोः क्रमात् क्रमाम्भोज–माकुलालिकुलायितैः। ममार्जावर्जयन्मौलिं, कौन्तेयः

१ इच्छानुसारि। २ ताम्रम्। ३ पूगीफलतुल्यैः।

द्वारकां गतस्यार्जुनस्य सुभद्रया विवाहः। ततो हस्तिनापुरे गमनम् ॥

फुल्ललोचनैः ॥ ४२३ ॥ उत्थाप्य रभसात्ताभ्या-मानन्दाश्रुकणोत्करैः । सिच्यमानतनुः स्वैर-मालिलिङ्गे धनंजयः ॥४२४॥ तीर्थतोयाभिषेकोत्थ-पावित्र्यस्येव काम्यया । ताभ्यां कपिध्वजो मूर्ध्नि, मुहुर्मुहुरचुम्ब्यत ॥ ४२५ ॥ समस्तजाह्नवेयादि-गुरुवर्गं समन्ततः । प्रतिपेदे यथौचित्य-माचारः सव्यसाचिना ॥४२६॥ स ननाम क्रमाज्ज्येष्ठ-बान्धवान् विश्वबान्धवः । श्लिष्यति स्म च मानन्दं, वन्दमानान् कनीयसः ॥ ४२७ ॥

भूपतिप्रमुखं सर्वं, ततः स्वजनमण्डलम् । आरोहयद्विमानं तत्, स्वयमप्यारुरोह सः ॥ ४२८ ॥ झणज्झणिति माणिक्य-किङ्किणीमालभारिणा । मार्जनोर्जस्खलत्स्वर्ण-वैजयन्तीविराजिना ॥ ४२९ ॥ सौरभोदारमन्दार-कुसुमोचूलशालिना । अनत्य-न्तानया नीचै-र्गत्या तेनाथ गच्छता ॥४३०॥ प्रमोदविशदैः पौर-नेत्रैर्नीराजितोऽर्जुनः । अविशद्दिव्यसर्वाङ्ग-शृङ्गारमधुरं पुरम् ॥ ४३१ ॥ ( त्रिभिर्विशेषकम् ) विस्मयस्मेरनेत्राभिः, खेचराणामितस्ततः । विमानानि मृगाक्षीभि-र्निरीक्षांचक्रिरेत-गम् ॥ ४३२ ॥ दध्वान दुन्दुभिर्वाढं, हतो विद्याधरैर्दिवि । तत्संहर्षादिव क्षोणी-पीठे वण्ठैश्च ताडितः ॥ ४३३ ॥ कौतुकी-नामपामात्य, पांसवः संगमोत्सवम् । नालमुत्थातुमश्वीय-खुरक्षुण्णा अपि क्षितेः ॥ ४३४ ॥ राजवर्त्मध्वजा रेजु-र्मरुद्वेल्लित-पल्लवाः । विद्याधरविमानानां, कुर्वन्तो गणनामिव ॥४३५॥ पश्यन्तः परितः पौर-योषितः पोषितश्रियः । हस्तिनापुरमेव द्या-मगन्सत नभश्चराः ॥४३६॥ निध्यायन्तः सरोमाञ्चं, मञ्चान् गगनचारिणः । विमानेषु मनश्चक्रु-रनास्थाशिथिलं मुहुः ॥४३७॥

पार्श्वमेकमनेकासां, पौरसारङ्गचक्षुषाम् । नेत्रपत्रैः पिबन्तीनां, युक्तं यन्नाशितंभवः ॥ ४३८ ॥ इभालोकभिया भ्रष्ट-नीविः

१ अनतित्वरया । २ 'मधुरः' प्रतिद्वयपाठः । ( ३ भृत्यैः । ) ४ तृप्ति ।

स्रस्तोत्तरीयका । काऽप्युच्चैर्दर्शयांचक्रे, खेचरैः सस्मितैर्मिथः ॥ ४३९ ॥ वदनाम्भोजसौरभ्य–भ्रमद्भृङ्गकुलाकुला । नर्तयन्ती करौ काचित्, खेलयामास खेचरान् ॥४४०॥ पार्थालोकनलाम्पट्यात्, पणांस्तांस्तान् प्रतिश्रुतान् । गाढाश्लेषमुखान् पत्या, कान्दिस्मार्यताधिकम् ॥४४१॥ प्रतिस्थानमथ स्यूत–चूतपल्लवतोरणम् । रम्भास्तम्भपरीरम्भ–मीलत्तरणिदीधिति ॥ ४४२ ॥ प्रतिद्वारमलिन्देषु, मुदा गोत्राङ्गनाजनैः । मौक्तिकस्वस्तिकोदात्त–दत्तकुङ्कुमगोमुखम् ॥ ४४३ ॥ कक्षान्तरगवाक्षस्थ–पाञ्चाली-लोचनैर्मुहुः । प्रत्युद्यातः शनैर्भेजे, राजमन्दिरमर्जुनः ॥ ४४४ ॥ ( त्रिभिर्विशेषकम् )

सत्कृत्यवित् पुरस्कृत्य, भूपतिप्रभृतीन् गुरून् । जगन्मानसमारूढो, विमानादवतीर्णवान् ॥ ४४५ ॥ प्रीत्या कुन्त्या कृतं तत्त–दवतारणमङ्गलम् । प्रतिगृह्य प्रतीहारै–र्दूरमुत्सारितप्रजः ॥ ४४६ ॥ सर्वतः खेलदुत्ताल–वन्दिकोलाहलाकुलम् । मध्यमुर्वीन्द्रसौधस्य, विशति स्म धनंजयः ॥ ४४७ ॥ आस्थानीपीठमास्थाय, पाण्डुश्चण्डांशुतेजसा । स्नेहालापैश्चिरं तस्थौ, भक्तिनम्रेण सूनुना ॥४४८॥ तयोरानम्रताभाजोः, सुतस्य प्रियमित्रयोः । आवासौ स निजावास–देशीयावदिशन्मुदा ॥४४९॥

स्वस्थानं मेदिनीभर्तु–रादेशाद्गतयोस्तयोः । प्रणम्य प्रणयप्रह्वः, पार्थः स्वावसथं ययौ ॥४५०॥ आग्रहात् प्रतिजग्राह, तत्र दाक्षिण्यदीक्षितः । पौर-जानपदा-मात्य–सामन्तोपायनान्यसौ ॥ ४५१ ॥ हर्षसोत्कर्षमाभाष्य, विसृज्य निखिलं जनम् । प्रेमपल्लवितः सोऽथ, सैरंध्रीसौधमाविशत् ॥४५२॥ चेतसा प्रथमं पार्थ–मभ्युत्तस्थौ ततो दृशा । देहेन तदनु स्वेद–रोमाञ्च-सचिवेन सा ॥४५३॥ अनीशाऽपि भृशोन्मील–त्साध्वसा प्रतिपत्तये । कामं बहुमता जज्ञे, याज्ञसेनी किरीटिनः ॥४५४॥

१ गोमुखं–लेपः । २ निजावासतुल्यौ । ३ द्रौपदीसौधम् ।

बलादानन्दतोऽनेत्र-प्रवर्तन-निवर्तने । पश्यन्त्यां तं रणस्तस्या-मौत्सुक्य-त्रपयोरभूत् ॥ ४५५ ॥ कृष्णा जिष्णौ चिराद्दृष्टे- मृगयुगि ददौ मुदा । कटाक्षपटलव्याजा-दर्घ्यमिन्दीवरैरिव ॥ ४५६ ॥ क्षेप्तुकाम इवात्यन्त-मन्तर्देहं कपिध्वजः । भुजोप- पीडं प्रक्रीड-त्प्रीतिरालिङ्गति स्म ताम् ॥ ४५७ ॥ तदाश्लेषसुखास्वाद-निमीलितविलोचनः । चिरप्रवसनक्लेश-मपनिन्ये धनंजयः ॥ ४५८ ॥ साऽपि निश्वर्यां मेने, तदा तत्संगमोत्सवे । सुधामयीमिवानन्द-परिस्पन्दमयीमिव ॥४५९॥ अध्या- नामास पल्यङ्कं, तुल्यः कुसुमधन्वना । जिष्णुरध्यामयांचक्रे, तां च प्रतिकृतिं रतेः ॥ ४६० ॥ प्रेमवार्तास्तया सार्धं, तास्ताः कुर्वन् कपिध्वजः । तदमन्यत निःशेष-महोरात्रमपि क्षणम् ॥ ४६१ ॥ हेमाङ्गदश्च भूपालो, मणिचूडश्च खेचरः । चिर मित्रत्वप्रीत्या, पुरे तस्मिन्नतिष्ठताम् ॥ ४६२ ॥

मेदिनीपतिरन्येद्यु-राहूय विजयं रहः । विश्वस्य कुशलोदर्कं, वितर्कं स्वमचीकथत् ॥ ४६३ ॥ वत्स ! वीक्षस्व कर्णान्त- पलितंकरणीं जराम् । इयं प्रवर्तयत्यद्य, धर्मकर्मणि मां बलात् ॥ ४६४ ॥ विषयाः सहवास्तव्याः, श्यामलैरेव कुन्तलैः । मितीभूताः पुनर्धर्मः, सख्यं हि समशीलयोः ॥ ४६५ ॥ जरस्यपि मनः कुर्व-न्नरो भोगाभिलाषुकम् । प्राकृतैरपि हस्येत, किं पुनर्विशदाशयैः ? ॥ ४६६ ॥ धर्मपीयूषकूपस्य, पीतपूर्वी पयः पुमान् । मृत्युं मरुमिवातीत्य, याति मुक्तिपुरीं सुखम् ॥४६७॥ तन्निक्षिप्य क्षमाभारं, मज्ज्येष्ठे युधिष्ठिरे । धर्म्या एव क्रियाः कामं, कर्तुमिच्छति मे मनः ॥ ४६८ ॥ प्रह्वीभूतस्तथा लोको, गुणार्थैर्धर्मजन्मनः । तत्कथाभिर्यथा जज्ञे, नित्यमुज्जागरः पुरे ॥ ४६९ ॥ गुणैरस्येन्दुदायादै-र्मनोवेश्मनिवासिभिः । अर्थे

१ कामदेवेन । २ कुशलपरिणामम् । ३ चन्द्रसदृशैः । ४ मूल्यम् ।

क्रय इव प्रीतिः, प्रकृतीनामदीयत ॥ ४७० ॥ गाङ्गेय–धृतराष्ट्राद्या, ज्यायांसोऽपि तपःसुते । राज्यधुर्योऽयमेवेति, सर्वे मनसि मन्वते ॥ ४७१ ॥ अस्तु राजन्वती भूमि–स्तदेतेन चिरादियम् । सर्वस्याप्यस्य लोकस्य, पूर्यन्तां च मनोरथाः ॥ ४७२ ॥ वत्स ! प्रतीक्षितोऽसि त्व–मेतावन्ति दिनानि तु । मधोरभ्युदयः श्रेयान्, विना न मलयानिलम् ॥ ४७३ ॥

उभाकर्णीदमाकर्ण्य, वचः प्रीत्या महीपतेः । सव्यसाची ततो वाच–मुवाच विनयान्विताम् ॥ ४७४ ॥ इदं तातस्य को नाम, वचो न बहु मन्यते ? । " कोविदः को हि कुर्वीत, मीमांसामागमोक्तिषु ? " ॥ ४७५ ॥ प्रियंकरा च नो कस्य, श्रीसंक्रान्तिस्तपःसुते ? । " श्रयन्तीह सुधारश्मिं, न मुदे कस्य कौमुदी ? " ॥४७६॥ गिरमेतां च तातस्य, यः प्रमाणयिता न हि । मामकास्तस्य मूर्द्धानं, सहिष्यन्ते न सायकाः ॥४७७॥ इत्यात्मजन्मनो वाचा, प्रीतचेताः क्षितीश्वरः । धर्मात्मजाभिषेकाय, तत्कालमुपचक्रमे ॥ ४७८ ॥

कृष्णादीनवनीपालान्, दूतैराह्वाययन्नृपः । दूरात् पुष्पंधयान् पुष्प–सौरभैरिव भूरुहः ॥ ४७९ ॥ निवासाः क्ष्माभुजां रेजुः, परितो हस्तिनापुरम् । सर्वतोऽपि तुषारांशु–मालिनं तारणा (का) इव ॥४८०॥ तूर्यप्रणादमेदस्वि–नारीमङ्गलगीतिभिः । शब्दाद्वैतमयस्तस्मिन्, पुरे प्रावर्ततोत्सवः ॥ ४८१ ॥ व्योमलक्ष्मीविनीर्माय–माणनिर्माजनश्रियः । वैजयन्त्यो जनैस्तस्मिन्, समुच्चिक्षिपिरे पुरे ॥ ४८२ ॥ हर्षाकुलचलच्चेटी–कुचसंघट्टचूर्णितैः । राजवेश्मभुवो हारै–श्चक्रिरे बद्धसैकताः ॥ ४८३ ॥ तोरणानि जनैः स्वस्व–मन्दिरेषु चिकीर्षुभिः । निष्पत्राश्चक्रिरे केलि–काननाम्रवणश्रियः ॥ ४८४ ॥ प्रतिमन्दिरमुत्क्षिप्त–कदलीस्त-

१ विचारणाम् । २ भ्रमरान् । ३ चन्द्रम् ।

म्मकान्तिभिः । नगरं तन्महानील-शिलामयमिवाबभौ ॥ ४८५ ॥ राजते स्म जनैर्दिव्य-नेपथ्याभरणोज्ज्वलैः । तत्पुरं मार्मेगेन गौः स्वर्गतीर्णा महीतलम् ॥ ४८६ ॥ नानाग्रामागतग्राम्य-स्त्रैणपाणिंधमाध्वनि । अपूर्यत पुरे तस्मिन्, पौराणां नेत्रकौतुकम् ॥ ४८७ ॥ मिलन्निखिलभूपाल-तुरङ्गखुरखण्डितम् । अभिषेकजलप्लाव-भियेव द्यां ययौ रजः ॥ ४८८ ॥ गान्धारी-माद्रिकामुग्य-मालोक्यान्तःपुरीगणम् । रचितानेकरूपेव, मन्यते स्म शची जनैः ॥ ४८९ ॥

तपःसुताभिषेकाय, माणिक्यमयमद्भुतम् । विमानं मानवेन्द्रेण, पर्यकल्प्यत शिल्पिभिः ॥ ४९० ॥ तत्र धात्रीपतिर्विप्रैः, कृतनीराजनाविधिम् । वशी निवेशयामास, भद्रपीठे युधिष्ठिरम् ॥ ४९१ ॥ पुरोहितं पुरस्कृत्य, मंत्रसंस्कारपावितैः । पार्थिवस्तीर्थपाथोभि-रभ्यषिञ्चत्तपःसुतम् ॥ ४९२ ॥ सर्वेऽप्युर्वीभृतः स्वर्ण-कलशावर्जितैस्ततः । सहर्षमभ्यषिञ्चन्त, वारिभिर्धर्मनन्दनम् ॥ ४९३ ॥ पतन्तः पयसामोघा-स्तस्य मूर्ध्नि विरेजिरे । प्रावृषेण्यपयोवाह-प्रभवा इव भूभृतः ॥ ४९४ ॥ चित्रं तस्यारिभूमीभृ-दंशदारुहविर्भुजः । अभिषेकजलैर्लक्ष्मी-मगाहत महः परम् ॥ ४९५ ॥ प्रवाहः पयसां धर्म-पुत्रगात्रपवित्रितः । पुष्पपुरि तत्कालं, पपात स्वःसरिज्जले ॥ ४९६ ॥ मूर्तैरिव यशोबीजै-र्दूर्वाङ्कुरकरम्बितैः । अवाकिरंस्तमाचार-लाजै राजीवलोचनाः ॥ ४९७ ॥ गम्भीरमधुरैस्तूर्य-निनदैरुच्छ्रितोच्छ्रितैः । कल्याणशंसिभिः प्रीति-रजागर्यत कस्य न ? ॥ ४९८ ॥ गोत्रधार्मिसंतान-स्तुतिपूतास्तपःसुतः । शुश्राव श्रवणानन्द-स्यन्दिनीर्वन्दिनां गिरः ॥ ४९९ ॥

---

१ मेघा गौः-स्वर्ग इव । ( २ अन्धकारावृते । ) पाणिं धमतीति पाणिंधमः । ३ अकार्यत । ४ 'तत् कामम्' इति पाठान्तरे तत्-गङ्गाजलं, कामं-अतीव इत्यर्थः कर्तव्यः ।

अर्थिभ्यः स ददौ ताव-द्रव्यमव्याहताशयः । यावता जज्ञिरे तेऽपि, शश्वदर्थिजनार्थिनः ॥ ५०० ॥ मुञ्चन् सत्कृत्य धाराल-वैरक्रूरानृपूनपि । स क्षणादकरोत् कारा-विशोधनमधिद्युतिः ॥ ५०१ ॥ अधर्मद्रुमसंतान-च्छेदनादभ्रमावहः । दीयते स्म तदादेशा-दमारिपटहः पुरे ॥ ५०२ ॥ दग्धकर्पूरधूमोत्थ-नवमेघालिमालिषु । स पुरेऽकारयज्जैन-मन्दिरेषु महोत्सवम् ॥ ५०३ ॥ निधीशनिधिसर्वस्व-भ्रमकारीणि भूभुजाम् । मङ्गलोपायनान्यस्य, प्रविशन्ति स्म वेश्मनि ॥ ५०४ ॥

ततस्तमभिषेकान्ते, कक्षान्तरनिवेशिनम् । दिव्यैः प्रसाधिकास्तैस्तै-र्नेपथ्यैरुपतस्थिरे ॥ ५०५ ॥ तास्तस्य भ्रमरश्यामा-न्यद्भिर्निविरीसंताम् । केशानुद्धापयामासु-र्धूमैरगरुजन्मभिः ॥ ५०६ ॥ तस्य मूर्द्धनि धम्मिल्लं, मल्लिकादामगर्भितम् । मुक्तावलयितोपान्तं, रचयन्ति स्म तास्ततः ॥ ५०७ ॥ छादितादित्यमत्यच्छं, शरदभ्रं जिगीषुभिः । चन्दनैश्च तदीयाङ्गं, व्यलिम्पंश्चम्पकद्युति ॥ ५०८ ॥ शरज्ज्योत्स्नासमुच्छेक-च्छेदच्छेकतरद्युती । ताः पर्यधापयन्नेनं, दुकूले हंसलक्ष्मणी ॥ ५०९ ॥ उदयाद्रिशिरश्चुम्बि-चण्डरोचिर्विडम्बनम् । कार्तस्वरकिरीटं च, तदीये मूर्द्धनि न्यधुः ॥ ५१० ॥ तथ्यगीरथदेश्याऽऽस्य-चक्रद्वयमनोरमे । न्यस्यन्ति स्म तथा तस्य, कर्णयो रत्नकुण्डले ॥ ५११ ॥ माणिक्यनिष्कसध्रीची-मामुञ्चन् हारवल्लरीम् । कण्ठे चास्य सितां कीर्तिं, प्रतापकलितामिव ॥ ५१२ ॥

अथोत्थाय ततो वार-स्त्रैणचालितचामरः । मृगाङ्कमण्डलाकार-श्वेतच्छत्रविराजितः ॥ ५१३ ॥ मुदितैर्बन्दिसंदोहै-रुदीरितजयध्वनिः । धावद्दौवारिकव्रात-विहितालोकनिःस्वनः ॥ ५१४ ॥ तत्कालं फाल्गुनादेशा-न्मणिचूडेन निर्मिताम् । सभां

( १ सान्द्रताम् । ) २ निष्कम्-वक्षोभूषणविशेषः ।

रत्नमयीं दिव्या-मध्यतिष्ठद्युधिष्ठिरः ॥ ५१५ ॥ ( त्रिभिर्विशेषकम् । ) नभःस्फटिकाभित्तीनां, यस्यामविदितान्तरः । तमभीत्र करस्पर्शा-दालोकेऽप्यचलज्जनः ॥ ५१६ ॥ ज्वलन्माणिक्यतेजोभि-रलक्षितनतोन्नताः । यस्यामन्तःपतन्तः के, नागमञ्जनहास्यताम् ? ॥ ५१७ ॥ द्युतिसादृश्यदुर्लक्ष्य-जले नीलाश्मकुट्टिमे । दिव्या यस्यामभून्मत्त-मधुपालिर्मृणालिनी ॥ ५१८ ॥ इन्द्रनीलक्षितिर्यस्या-मर्काश्मपरिवारिता । बभौ ज्योत्स्नाभिरावृत्य, रुद्धेव तिमिरावलिः ॥ ५१९ ॥ नानारत्नान्तरस्तम्भ-कान्तिसंक्रान्तितो बभुः । यस्यां ज्योतीरसस्तम्भाः, सर्वरत्नमया इव ॥ ५२० ॥ आश्रितानेकवर्णाढ्य-वितानप्रतियातना । वितानेव भाति स्म, यस्यां भूरप्यधस्तनी ॥ ५२१ ॥ रत्नस्तम्भेषु विश्रान्त-सर्वाङ्गप्रतिमास्तदा । यस्यां वारविलासिन्यः, पाञ्चालीतुलनां दधुः ॥ ५२२ ॥ नवः स भूपतिस्तस्यां, मणिसिंहासनं महत् । आक्रान्तवान् सुनासीरः, सुधर्मायामिवाबभौ ॥ ५२३ ॥ प्रणेमे मणिकोटीर-कोटिकुट्टितकुट्टिमैः । स राजाऽभिनवो भूपै-राज्ञाभारानतैरिव ॥ ५२४ ॥

ततः सचिवसामन्त-पौरजानपदादयः । तं रत्ना-श्व-करिप्रायै-रुपतस्थुरुपायनैः ॥ ५२५ ॥ सेवायातैर्दिशामीशै-रिव सामाद्युपायनिभिः । बभौ साक्षाद्विवोपायैः, स चतुर्भिः सहोदरैः ॥ ५२६ ॥ अथ तस्य पयोराशि-रसनायामपि क्षितौ । आज्ञालेखा विनिर्जग्मुः, प्रतापा इव जङ्गमाः ॥ ५२७ ॥ मयि सत्यपि को नाम, जगत्यस्मिन्निनोऽपरः ? । इतीवाश्वखुरोत्थान-पांशुपीतार्कमण्डलः ॥ ५२८ ॥ खेचरा अपि पश्यन्तु, राजपाटीक्रमं मम । इतीव दन्तिदानाम्भः-शमिताशेषभूरजाः ॥ ५२९ ॥ मा स्म दिक्कुञ्जरेन्द्रेभ्यः, कुप्यन्तु मम दन्तिनः । इतीव सैन्यमायूर-च्छत्रच्छन्नदिगन्तरः ॥ ५३० ॥

१ पतिमाना-प्रतिमा-प्रतिकृतिरित्यर्थः । २ साम-दाम-दण्ड-भेदाः एते चत्वार उपायाः । ३ स्वामी ।

नयनाञ्जलिभिः पौर-नारीभिश्चालिताञ्चलम् । पीयमानो मुहुः प्रीत्या, हास्तिनं सोऽत्यहस्तयत् ॥ ५३१ ॥ ( चतुर्भिः कलापकम् ) बन्धुप्रीत्या गुरूणां च, पर्यालोचेन तत्क्षणात् । दुर्योधनं स राजान-मिन्द्रप्रस्थेऽभ्यषिञ्चत ॥ ५३२ ॥ अन्येषामपि बन्धूनां, धृतराष्ट्रात्मजन्मनाम् । पार्थिवः स यथौचित्यं, ददौ देशान् पृथक् पृथक् ॥ ५३३ ॥ उत्सर्पदुत्सवमयं स विभुः समाप्य, राज्याभिषेकमहमिद्धमहःप्ररोहः । सत्कृत्य कैटभरिपुप्रभृतीन्नरेन्द्रान्, रत्नोत्करैर्निजनिजान् प्रजिघाय देशान् ॥५३४॥ इति जितपुरुहूतः स्फीतपुण्योपहूतः, [1]प्रतिनतनृपतिश्रीसेव्यमानाङ्घ्रिपद्मः । ससुरभिगुणमालो मालतीदामकुन्द-स्तवकविशदकीर्तिः पूगमक्षां निनाय ॥ ५३५ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये पार्थतीर्थयात्रा-युधिष्ठिरराज्याभिषेकवर्णनो नाम पञ्चमः सर्गः ॥

# अथ षष्ठः सर्गः ।

अथ पाण्डुर्विमुक्तश्री-रात्मारामैकमानसः । मुक्तावुत्थातुकामोऽपि, तत्रैवास्थात् सुताग्रहात् ॥ १ ॥ धृतराष्ट्रं पुनः [2]स्नु-र्भक्तमानी सुयोधनः । इन्द्रप्रस्थं [3]व्यवस्थावि-न्निनाय सममात्मना ॥ २ ॥ युधिष्ठिरगुणग्राम-कामसंदानिताशयाः ।

१ 'प्रतिनव०' प्रतित्रयपाठः । २ समूहम् । ३ 'व्यवस्थायै' प्रतिद्वय० ।

गाङ्गेय-विदुर-द्रोणा, हास्तिने व्यवतस्थिरे ॥ ३ ॥ पाण्डोस्तपःसुते बाढं, रेजिरे राज्यसंपदः । भृशायन्ते हि तेजांसि, प्रदीपे जातवेदसः ॥ ४ ॥ सौम्ये च दुःप्रधर्षे च, तस्मिन् पल्लविता भृशम् । वनराजीव राज्यश्रीः, शिशिरोष्णे मधाविव ॥५॥ प्रतापदुःसहे तस्मिन्, पुष्णाति स्म तरङ्गितः । कीर्तिकल्लोलिनीर्धर्मो, घर्मर्ताविव नीरधिः ॥६॥ तत्तेजोऽग्निस्तनूर्भूपाः, प्रताप्य विस्मा क्षिपाम् । तास्यशोभिगन्धर्वं, पूरयामास रोदसी ॥ ७ ॥ ध्वान्तध्वंसिनि सत्येव, गलद्वयसि राजनि । भास्वत्युदित्वरे तस्मि-न्ननन्दन्नधिकं प्रजाः ॥ ८ ॥

दिग्जिगीषाकृतोन्मेषं, तस्य ज्ञात्वा मनोऽन्यदा । कनीयांसः समं नत्वा, चत्वारोऽपि बभाषिरे ॥ ९ ॥ किं नाम जगदुद्योत-हेवाकेषु गभस्तिषु । तमःसंभारभेदाय, भानुरुद्गच्छते स्वयम् ? ॥ १० ॥ देव ! दक्षिणवाते-न्दु-वसन्तादिषु सत्स्वपि । मानिनीमानभङ्गाय, कामः किं धावति स्वयम् ? ॥ ११ ॥ पुरःसरेषु किं नाम, तरङ्ग-समिरो र्मिषु । जलाशयः स्वयं पान्थ-खेदच्छेदाय सादरः ? ॥ १२ ॥ सत्सु तत्त्रिजगज्जैत्र-भुजेषु निजबन्धुषु । दिशां जयाय देवेन, न प्रस्थातव्य-मात्मना ॥ १३ ॥ इत्याकर्ण्य वचस्तेषां, जहर्ष जगतीपतिः । निदेश्यैर्हि जयो राज्ञां, कीर्तिमावहते पराम् ॥ १४ ॥ क्रमाम्भोजनतानीति-चतुरश्चतुरोऽपि तान् । अंसयोरामृशन् प्रीत्या, स दिशो जेतुमादिशत् ॥ १५ ॥ राजाज्ञेत्यन्वमन्यन्त, चतुरङ्गां चमूममी । मृगेन्द्रः करिणो हन्ति, किं मृगैः परिवारितः ? ॥ १६ ॥

कुन्ती-माद्र्यादिभिर्गोत्र-वृद्धाभिः कृतमङ्गलाः । तेऽथ प्रतस्थिरे सैन्यै-श्चत्वारोऽपि पृथक् पृथक् ॥१७॥ भीमः प्राचीं दिशं जिष्णु-रपाचीं नकुलः पुनः । प्रतीचीं सहदेवस्तु, किलोदीचीमशिश्रियत् ॥ १८ ॥ चतुर्भिरप्यनीकैस्तै-राक्रान्तां

परितः क्षितिम् । बभार समभारत्वात्, सुखमेव फणीश्वरः ॥१९॥ एभिः प्रसभमारब्धाः, कुर्युः किं नाम भूमिपाः ? । इतीव द्रष्टुमुच्चैर्या-मारोहद्वाहिनीरजः[1] ॥ २० ॥ निःशेषारिवधूनेत्र-सलिलैः कूलमुद्रुजाः[2] । स्रवन्तीर्नौभिरुत्तेरु-स्ते गुल्फद्वयसीरपि ॥ २१ ॥ दिग्निकुञ्जेषु मूर्च्छन्त-स्तेषां निस्वाननिस्वनाः । भूभृतां दारयामासु-र्दरीश्च हृदयानि च ॥ २२ ॥ आत्मीयमपि ते बाह्वो-रूष्माणमसहिष्णवः । केतनालिच्छलान्मन्ये[3], कदलीवनसेविनः ॥ २३ ॥ क्षुण्णा हरिखुरैर्दन्ति-पादपातैर्मतीकृताः[4] । भुवस्तत्कीर्तिबीजानां, वापयोग्या इवाबभुः ॥ २४ ॥

अथ भीमः क्रमात् काम-रूपान् भीमभुजो ययौ । सैन्यदन्तिमदस्पार्द्धि-कालागुरुरसस्रुतीन्[5] ॥२५॥ तदीयां श्रियमादाय, स ततार सुरापगाम् । लम्भयन् कुम्भिनां दानै-र्यमुनासंगमोत्सवम् ॥२६॥ ततोऽङ्गान् भक्तिनम्राङ्गान्, सुह्माञ्जिह्मितविक्रमान् । स्वानमाढ्वङ्गवद्वाङ्गान्[6], स चकार भुजौजसा ॥ २७ ॥ स वितेने रणारम्भ-निष्कलानुत्कलानपि । कलिङ्गानपि निर्मुक्त-राजलिङ्गानसूत्रयत् ॥ २८ ॥ अथारोप्य जयस्तम्भान्, गङ्गासागरसंगमे । उन्मूलयन् स पाञ्चाल-डहालादीन्व्यवर्तत ॥ २९ ॥ अर्जुनोऽप्यर्जुनच्छाय-मर्जयन्मार्गणैर्यशः । नतेष्वक्षुण्णदाक्षिण्यो, दक्षिणामाविशद्दिशम् ॥ ३० ॥ भ्रष्टराष्ट्रान् महाराष्ट्रान्, कर्णाटांश्चाट्टकारिणः । तिलङ्गानङ्गुलिन्यङ्गान्, कुर्वाणः स रणे शरैः ॥ ३१ ॥ केरली-कुरलान् लुम्पन्, वैदर्भीविभ्रमान् हरन् । द्रमिलीकेलिमुल्लुम्प-न्मलयोपत्यकां ययौ ॥ ३२ ॥ (युग्मम् ।) तस्यामालानितैस्तस्य, चन्दनद्रुम-

१ सैन्यधूलिः । २ तटभेदिन्यः । ३ ध्वजश्रेणिमिषात् । ४ समीकृताः 'मनीकृताः' 'मलीकृताः' इति प्रत्यन्तर० ५ स्रुतिः-स्रवः । ६ "स्वानमान्यङ्गवद्वङ्गान्"-"स्वानमान्वङ्गवद्वाङ्गान्" प्रत्यन्तर० ।

युधिष्ठिराज्ञया भीमादीनां दिग्यात्रागमनम् ॥

काननें। नाममाम्यादिव क्रुद्धै-र्नागैर्नागा निरासिरे ॥ ३३ ॥ तत्र तस्य लवङ्गै-ला-लवलीस्वादलालसाः। सल्लकी-पल्लवग्रासे, नैमुख्यमभजन् गजाः ॥ ३४ ॥ पाण्डवः सह मुक्ताभिः, पाण्ड्यानामाहरन् यशः। ताम्रपर्णीयुजि प्राप, दक्षिणाम्भोधिरोधसि ॥ ३५ ॥ तत्रोत्तम्भ्य जयस्तम्भान्, सेतुबन्धैकबन्धुरे। द्वैराज्यं रामकीर्तीनां, चकार निजकीर्तिभिः ॥ ३६ ॥ स्वादं नागरखण्डानां, वनवासस्थलीषु सः। लम्भयन् सैनिकांस्तस्थौ, कुन्तलीलोलुपश्चिरम् ॥ ३७ ॥ कौङ्कणी-कङ्कणान् भञ्ज-न्नालिकेरीद्रुमैः सह। लाटीकटाक्षलुण्टाकः, सोऽथ व्यावर्तत क्रमात् ॥ ३८ ॥

यशः कुसुमसौरभ्यवासितक्षितिमण्डलः। नकुलोऽपि विवेशान्तः, प्राचेतस्या दिशस्तदा ॥ ३९ ॥ प्रापयन्नन्तमत्यन्त-मावन्तीनयनाञ्जनम्। उच्छिन्दन् बहलच्छायाः, सौराष्ट्रीपत्रवल्लरीः ॥ ४० ॥ महार्णव-सरस्वत्योः, प्रियमेलकपावितम्। प्रभासक्षेत्रमक्षोभ्य-चलोर्मिर्नकुलो ययौ ॥ ४१ ॥ ( युग्मम् ) प्रक्षाल्य मलमुद्वीक्ष्य, तत्र चन्द्रप्रभप्रभुम्। जयस्तम्भान् महारम्भो, न्यस्यति स्म स धीरधीः ॥ ४२ ॥ शृण्वन् स द्वारिकालोक-गीतं कंसजितो यशः। पूगैपूगवता कच्छान्, कच्छेनैवाम्बुधेर्ययौ ॥ ४३ ॥ गापयित्वा निजां कीर्ति-विस्फूर्तिं तत्र चारणान्। पारसीकाननीकेन, स चकारात्मकिङ्करान् ॥४४॥ तत्रास्य पिण्ड-खर्जूर-स्वादमेदस्विसंमदैः। चिरमध्यूषिरे कच्छाः, सैनिकैः पश्चिमाम्बुधेः ॥ ४५ ॥ यवनीवदनाम्भोज-विकाशतुहिनोत्करः। शाकीसंभोगशृङ्गार-समुद्रकलशोद्भवः ॥ ४६ ॥ माद्यत्पञ्चनदस्त्रैण-मदामोदमलिम्लुचः। सैन्धवीवर्गवैफल्य-व्यसनी स न्यवर्तत ॥ ४७ ॥

---

१ फुल्लवेशस्थलीषु लुब्धः। २ कृष्णस्य। ३ पूगवृक्षसमूहवता। ४ तीरेण। ५ कलशोद्भवः-अगस्त्यः।

सहदेवोऽपि देवेन्द्र–देश्यशौण्डीरिमक्रमः। व्यगाहत महाबाहुः, कुबेरचरितां दिशम्[1] ॥ ४८ ॥ संदिशन् हारसंहारि–जाङ्गलीनाममङ्गलम्। आस्कन्दति स्म काम्बोजा–नोजस्विभुजविक्रमः ॥ ४९ ॥ उपनीय हयानुच्चै–र्न्यश्वितोच्चैःश्रवःश्रियः। तदुर्वीपतिरात्मान–मवति स्म कुरूद्वहात् ॥ ५० ॥ तस्य नेपालभूपालः, केलिकस्तूरिकामृगान्। उपदीकृत्य पाति स्म, श्रियं पूर्वक्रमार्जिताम् ॥ ५१ ॥ क्षुण्णकुङ्कुमकेदार–पांशुपूरपिशङ्गिताः। कश्मीरेषु हयास्तस्य, बिभ्रति स्मैकवर्णताम् ॥ ५२ ॥ हिमालयमथारुह्य, पार्वतीयान् विजित्य च। निचखान जयस्तम्भां–स्तदुच्छ्रायं विवर्धयन् ॥ ५३ ॥ नानाश्चर्यमयात्तस्मा–दवरुह्य गिरेः शनैः। आदिदेश स हूणीना–मुरःकुट्टनपाटवम् ॥५४॥ पिबन् कीरयशःक्षीरं, खसश्रीरसमाहरन्। नितान्तपुष्टसर्वाङ्गः, स प्रत्याववृते ततः ॥ ५५ ॥

इत्यादाय दिशां लक्ष्मीं, नगरे नागसाह्वये। तपःसूनोः कनीयांस–श्चत्वारोऽप्याययुः समम् ॥ ५६ ॥ दिकुक्षिंभरिभिः सैन्यैः, राजा प्रत्युज्जगाम तान्। प्रवाहानिव सिन्धूना–मूर्मिभिर्मकराकरः ॥५७॥ तेन बन्धुबलौघास्ते, चत्वारोऽप्यालुलोकिरे। पयोधय इवायाताः, सेवितुं तमिव स्वयम् ॥ ५८ ॥ ततो निलीयमानानि, सैन्ये महति भूपतेः। ब्रह्मणीव स्फुलिङ्गौघा–स्तानि सैन्यानि रेजिरे ॥ ५९ ॥ तान्यनीकानि पश्चापि, तत्र प्राप्तानि संगमम्। शरीरिणां शरीरेषु, भूतानीव बभासिरे ॥ ६० ॥ प्रीतिप्रह्वाः प्रणेमुस्ते, कनीयांसस्तपःसुतम्। तानालिङ्ग्य मुदा सोऽपि, ब्रह्मानन्दमिवान्वभूत्[2] ॥ ६१ ॥ मरुत्प्रेङ्खोलितानेक–ध्वजताण्डवमण्डितम्। कस्तूरीमिश्रकाश्मीर–सिक्तघण्टापथक्षिति[3] ॥ ६२ ॥ उज्जृम्भिदुन्दुभिध्वान–प्रतिध्वानि-

१ उत्तराम्। २ ('ब्रह्मास्वादम्' इति ख. ग.) प्रतित्रयपाठः। ३ घण्टापथो–राजमार्गः।

तमन्दिरम्। दीप्यमानमनोराग–नागरोत्सर्पदुत्सवम् ॥ ६३ ॥ विमानलक्ष्मीलुण्टाक–मश्वरोमाञ्चितप्रजम्। स्मेरपौरवधूवर्ग–नेत्रकैरवकाननम् ॥ ६४ ॥ वारसारङ्गनेत्राभिः, प्रीतिचालितचामराः। सिन्धुरेन्द्राधिरूढास्ते, निजं नगरमाविशन् ॥ ६५ ॥ (चतुर्भिः कलापकम्) सिंहासने निवेश्याथ, राजानं मन्दिराजिरे। पादपङ्केरुहोत्सङ्गे, भृङ्गीकृत्य शिरोरुहान् ॥ ६६ ॥ गीर्वाणगिरिदायादाः, पुरस्तस्यानुजन्मभिः। दिगन्तसंपदां कूटा–स्त्यक्तकूटैर्वितेनिरे ॥ ६७ ॥ (युग्मम्) विश्वे विश्वंभराभर्तु–स्ते परीणाहशालिनः। वेदिका इव भान्ति स्म, प्रमोदपृथिवीरुहाम् ॥ ६८ ॥ विशांपत्युर्यशःक्षीर–नीरराशेर्विसारिणः। सर्वैरभ्रंकषैरन्तै–रम्यन्तरगिरीगिनम् ॥ ६९ ॥ अपि पुण्यजनाधीश–मप्यनेकनिधीश्वरम्। राजराजमपि ख्यात–मपीश्वरसुहृत्तया ॥ ७० ॥ भूपः सुपर्वधर्मत्वा–द्विश्वाशाः परिपूरयन्। जिगाय मर्त्यधर्माण–मुत्तराशावलम्बिनम् ॥ ७१ ॥ (युग्मम्)

समुत्पेदे तदाऽन्योऽपि, नृपस्यानन्दकन्दलः। पार्थवध्वाः सुभद्राया–स्तनूजो यदजायत ॥ ७२ ॥ कृतार्थानर्थिनः कृत्वा, स्वापतेयैर्यथेप्सितैः। काश्यपीपतिरस्याख्या–मभिमन्युरिति व्यधात् ॥ ७३ ॥ सिञ्चञ्श्रद्धाजलैर्धर्म–फलाकाङ्क्षी प्रतिक्षणम्। सप्तक्षेत्र्यां वसून्येष, वपति स्म गतस्मयः ॥ ७४ ॥ दृढे जन्मान्तरद्वीप–क्षेमगामिन्यनारतम्। स सहस्रगुणीकर्तुं, धर्मपोते श्रियो न्यधात् ॥ ७५ ॥

अवाप्तजन्मनस्तत्र, तत्र वृद्धिमुपेयुषः। तत्रैव चक्रवर्तित्व–लक्ष्मीदीक्षादिशालिनः ॥ ७६ ॥ नानारत्नैरधःकुर्वन्, गर्वं गीर्वाणवेश्मनाम्। विहारः कारयांचक्रे, तेन शान्तिजिनेशितुः ॥ ७७ ॥ (युग्मम्) ज्वलत्कनकमाणिक्य–मयमालोक्य तं जनः।

१ 'मन्दिर' इति प्रतित्रय०। २ वेश्याभि०। ३ मेरुतुल्याः। ४ विस्तारशालिनः। ५ कुबेरम्। (६ धनैः।)

अभिमन्यु जन्म । शान्ति-जिनचैत्य निर्माणम् ॥

चकार सुरशैलेन्द्र–दिदृक्षाशिथिलं मनः ॥ ७८ ॥ इन्द्रनीलमयद्वार–शाखांशुश्रेणिकैतवात् । सान्द्रच्छायोल्लसत्तीर–वनराजीविराजिनी ॥ ७९ ॥ तत्र स्फटिकसोपान–प्रभाव्याजेन जाह्नवी । रेजे पवितुमात्मान–मागतेव तरङ्गिता ॥ ८० ॥ ( युग्मम् ) शातकुम्भीयकुम्भौघ–प्रतिबिम्बैर्व्यडम्बयत् । नीलाश्मकुट्टिमं तस्मिन्, सहेमकमलां यमीम्[2] ॥ ८१ ॥ ज्योतीरसमयक्षुद्र–जैनवेश्मपरिष्कृतः । मुक्तानद्धः क्षितेः कर्ण–ताटङ्क इव स व्यभात् ॥ ८२ ॥ शश्वदभ्रंलिहे तस्य, स्फाटिकस्य शशी निशि । ज्योतिर्जालजले मज्जन्, सस्मार क्षीरनीरधेः ॥ ८३ ॥ तत्रालोक्य ध्रुवं रूप–शालिनीः शालभञ्जिकाः । अमरैरमरीरूप–शिल्पी काममनिन्द्यत ॥ ८४ ॥ यदि वा नास्ति तत् स्वर्गे, नावनौ न रसातले । यदुपैत्युपमानत्वं, तस्य यच्चोपमेयताम् ॥ ८५ ॥

विश्वाद्भुतश्रियस्तस्य, ध्वजारोपणपर्वणि । दूतैराह्वाययामास, सर्वं राजा स राजकम्[3] ॥ ८६ ॥ प्रहित्य नकुलं प्रौढप्रश्रयप्रवणाशयः । प्रीत्या निमन्त्रयामास, केशवं धरणीधवः ॥ ८७ ॥ बन्धुवात्सल्यसोल्लास–मना दुर्योधनं पुनः । सहदेवेन भूमीन्द्रः, सबान्धवमजूहवत् ॥ ८८ ॥ स्वस्वदेशप्रसूतानि, तस्य चेतःप्रसत्तये । उपायनान्युपादाय, तत्राजग्मुर्महीभुजः ॥ ८९ ॥ पराभूताभ्रमातङ्गैः, पौरस्त्याः पृथिवीभुजः । मदामोदिकपोलैस्तं, करीन्द्रैरुपतस्थिरे ॥ ९० ॥ वज्रवैडूर्यमुक्तादिरत्नजातमधिद्युति । आदाय तमुपासीदन्, दाक्षिणात्याः क्षितिक्षितः ॥ ९१ ॥ दिव्यैः कौशेयवासोभि–र्भूषणैश्च हिरण्मयैः । अपरान्तमहीपाला–स्तमभ्येयुर्भयापहम् ॥ ९२ ॥ स्वस्वदेशोद्भवैस्तैस्तैः, सुरसैन्धवबान्धवैः[4] । उपसेदुस्तमश्रीयै–रौत्तराहा महीभृतः ॥ ९३ ॥ मनुष्यमयमश्वेभ–मयं लक्ष्मीमयं च तत् । बभूव सर्वभूपालैः, संगतैर्नगरं तदा ॥ ९४ ॥

( १ शातकुम्भं स्वर्णम् । ) २ यमुनाम् । ३ राजानः । ४ सैन्धवः–अश्वः ।

अथ लग्नदिने धाम्नि, षोडशस्य जिनेशितुः । विश्वं संगमयांचक्रे, राजचक्रं महीपतिः ॥ ९५ ॥ समं तैः सर्वसामन्तै-र्गमनेन गरीयसा । पार्थिवस्तीर्थवारीणि, पीवरप्रीतिरावहत् ॥ ९६ ॥ रक्षामन्त्रादिसंस्कार-क्रियाकन्दलितद्युतः । तत्कालं ते कलामैन्द्रीं, गन्यामेवाश्रयन्नृपाः ॥ ९७ ॥ कृपाणपाणयः केऽपि, प्रतिष्ठाक्षोभशान्तये । तत्क्षणं दिक्षु सर्वासु, भूनेतारोऽवतस्थिरे ॥ ९८ ॥ वेदिरक्षाकृते केचि-द्दधतो वैणवीं लताम् । कुर्वन्तस्तद्वीयांसं, लोकं तस्थुर्महीभृतः ॥ ९९ ॥ उदस्तकलशाः केचि-ज्जलाहरणहेतवे । इतस्ततः ससंरम्भं, धावन्ति स्म धराधवाः ॥ १०० ॥ स्नानीयानि जलस्यान्त-रौषधानि न्यधुः परे । अनुस्नपुचकैरन्ये, स्नात्रसूक्तानि भूभृतः ॥ १०१ ॥ भूमीभृतश्चतुःषष्टि-र्ध्वजदण्डं हिरण्मयम् । स्नपयांचक्रिरे स्वैरं, वारानष्टादश क्रमात् ॥ १०२ ॥ स्नात्रान्तरेषु व्योमान्तः-सूत्रितामोदितोयदम् । धूपमुच्चिक्षिपुः केऽपि, कर्पूरागुरुसंभवम् ॥ १०३ ॥ तिलकानपरे चक्रुः, सरसैश्चन्दनद्रवैः । पुष्पस्रजं वितन्वन्तः, स्नात्राणामन्तरान्तरा ॥ १०४ ॥ मन्त्रैर्यथोदितैस्तैस्तै-राहूताखिलदैवतम् । नन्द्यावर्तं परे यत्ना-द्रक्षन्ति स्म क्षितीश्वराः ॥ १०५ ॥ दधिरे चामरान् केचि-दपरे दर्पणं दधुः । धारयामासुरन्ये तु, सर्पि-र्दध्यादिभाजनम् ॥ १०६ ॥ इतरे ढौकयामासु-र्द्राक्फलाफलिकादिकम् । गन्ध-सर्वौषधी-वृद्धि-ऋद्ध्यादि दधिरे परे ॥ १०७ ॥ इति भूमीन्द्रसंदोहे, विश्वव्यापारहारिणि । शुभायां लग्नवेलाया-मनुकूलग्रहाश्रयात् ॥१०८॥ श्रीबुद्धिसागराचार्य-स्तत्र श्रीशान्तिवेश्मनि । अचीकरद्ध्वजारोपं, यथाविधि युधिष्ठिरः ॥ १०९ ॥ (युग्मम्) स विरेजे ध्वजः श्वेत-स्तम्भकल्लोललोलितः । रजो निश्वभ्रमासक्तं, तत्कीर्तेर्विनयन्निव ॥ ११० ॥ विस्मयस्मेरराजन्य-वीक्षितं क्षितिवासवः ।

---

१ 'निमुग्रान्तः' प्रतिनग० ।

दाशाहिकोत्सवं चक्रे, संपत्संभारभासुरम् ॥ १११ ॥ ततः प्रवर्धमानेन, श्रद्धाशुद्धेन चेतसा । सङ्घमभ्यर्चयांचक्रे, यथौचित्यं स कृत्यवित् ॥ ११२ ॥ सत्कृत्य वस्तुभिस्तैस्तै–स्तदानीतोपदाधिकैः । अथ भूमीभुजो राजा, प्रैषीद्देशं निजं निजम् ॥ ११३ ॥ समुद्रविजयाह्वाना–दुत्सुकं धर्मनन्दनः । औचितीचञ्चुरभ्यर्च्य, विससर्ज गदाग्रजम् ॥ ११४ ॥ दुर्योधनं पुनर्बन्धु–प्रेमप्रह्लादिमानसः । दिनानि कतिचित्तत्र, धात्रीपतिरधारयत् ॥ ११५ ॥ साकं शकुनिना तत्र, मातुलेन सुयोधनः । पाण्डवस्फातिसेर्ष्योऽपि, गूढाकारोऽवसच्चिरम् ॥ ११६ ॥ लीलाशिलोच्चय-क्रीडा–वापी-केलिवनादिषु । चिक्रीड पाण्डवैः सार्धं, सुमनोभिः स दुर्मनाः ॥ ११७ ॥

विविक्तपरिवारेण, पूर्वमुर्वीभृताश्रिताम् । अपरेद्युः सभां दिव्यां, विवेश धृतराष्ट्रसूः ॥ ११८ ॥ तत्राप इति विज्ञाय, नवस्फटिककुट्टिमे । दुकूलाञ्चलमुत्कर्ष–न्नहस्यत स किङ्करैः ॥ ११९ ॥ स्थलाब्जिनीधिया धाव–न्नादातुमरविन्दिनीम् । स गूढे तज्जले मज्ज–न्नहसे वायुसूनुना ॥ १२० ॥ ततः स्मेरकपोलाक्ष–स्तत्क्षणादनुजीविभिः । तस्यापराणि वासांसि, काश्यपीपतिरार्पयत् ॥ १२१ ॥ तेनाङ्कुरितकोपोऽपि, निगूहन्नाकृतिं निजाम् । अनालोकितकेनैव, स धीमांस्तानि पर्यधात् ॥१२२॥ दूरोन्नतामपि क्वापि, जानन्नुर्वीमनुन्नताम् । स्खलित्वा स पतन्नुच्चै–रुपाहस्यत जिष्णुना ॥ १२३ ॥ अपावृतादपि द्वारा–

१ स्फातिर्वृद्धिः । २ शिलोच्चयः–पर्वतः । ३ "कपोलवालमध्येऽसौ, विरोधद्रुरिवाङ्कवान् । बभौ फलाय कस्मैचि–द्विलक्षस्मितपुष्पितः ॥ २० ॥ धिग्गताऽस्मि समग्रक्ष्मा–पतिक्षयनिमित्तताम् । इत्यन्तःपतिते तत्र, चकम्पे केलिवापिका ॥ २१ ॥" इति श्लोकद्वयमेकस्यां प्रतावधिकं दृश्यते ।

श्रामिगङ्गनमङ्गया । व्यावृत्तं ह्यमतः स्मैनं, दत्ततालं मिथो यमौ ॥ १२४ ॥ इत्याद्यैः पाण्डवेयाना–मुपहासैर्मुहुर्मुहुः । कौरव्याधिपतेरन्त–रुज्जजागार मत्सरः ॥ १२५ ॥

गन्कृत्य प्रणयार्द्रेण, प्रेषितः पाण्डुसूनुना । इन्द्रप्रस्थं प्रतस्थेऽथ, सोऽभिमानी समातुलः ॥ १२६ ॥ स दीनवदनाम्भोजः, शून्यात्मा निश्वसन् मुहुः । यदा किंचिददौ कामं, जल्प्यमानोऽपि नोत्तरम् ॥ १२७॥ तदा सविधमभ्येत्य, मातुलः सौबलो बलात् । जगाद पथि गच्छन्तं, करे धृत्वा सुयोधनम् ॥ १२८॥ किमेतत् ते मुखं धत्ते, भ्रातः शीतरुचो रुचम् ? । इति तत्पन्तमत्यल्पं, गान्धारेयस्तमभ्यधात् ॥ १२९ ॥ जीवञ्जगति किं नाम, वर्तते मम मातुलः ? । एवमत्यन्तमृष्यन्ति, पदगतां यस्य शत्रवः ॥ १३० ॥ सहस्रशो मणिज्योति–र्निर्मिताऽमरकार्मु(मु)का । सुधर्मामप्यधःकृत्य, जृम्भते भुवि सा सभा ॥ १३१ ॥ दिगन्तसंपदः संप्र–त्यहंपूर्विकयाऽखिलाः । धर्मनन्दनमायान्ति, द्वीपवत्य इवार्णवम् ॥ १३२ ॥ आदाय सत्करैर्ग्रीष्म–भास्वानप इव श्रियः । सांप्रतं परितो वर्षन्, हर्षयत्यखिलामिलाम् ॥ १३३ ॥ कुबेरीकृतनिःशेष–वनीपककुलाः श्रियः । तस्य न्यक्कुर्वते गर्वं, गीर्वाणेन्द्रश्रियामपि ॥ १३४ ॥ विहाय हेमकोटीरं, मूर्ध्नि स्रग्दामवासिते । उत्तंसीकुर्वते तस्य, शासनं मेदिनीभृतः ॥१३५॥ ध्वजारोपोत्सवे तात–त्त्वयाऽप्यालोकितं तथा । यथाऽस्य प्रश्रयानम्रै, राजकैः किङ्करायितम् ॥ १३६ ॥ तथाऽस्य सर्वथा जज्ञे, काश्यपी वशवर्तिनी । करैः पतद्भिरस्थाने–ऽप्यमौ नोद्विजते यथा ॥ १३७ ॥ एतदुत्पश्यतः सर्वं,

१ तस्यापि स्फाटिकीं भित्ति–मन्ध्रामनवगच्छतः । गच्छतः स्खलिते मौलौ, ते पुनर्जहसुर्जनाः ॥ २६ ॥" इति श्लोक एकस्यां प्रतावधिको दृश्यते । २ "जीवञ्जग० मातुल !" इति प्रतिद्वयपाठोऽपि साधुः । ( ३ वनीपको याचक. । )

दुर्योधनस्य पाण्डवोपरि द्विष्टस्य शकुनिना सह मन्त्रः॥

प्राप्तनिष्ठं युधिष्ठिरे । कामं ममान्तरात्मानं, दहतीव हुताशनः ॥ १३८ ॥ बलीयः पुण्यमेवैकं, न पुनः पौरुषं क्वचित् ।
पाण्डवा हन्त जीवन्ति, यन्निर्मूलयतोऽपि मे ॥ १३९ ॥ इदानीमप्यहं शत्रूंस्तानुच्छेत्तुमलंतमाम् । सहायमद्भुतं कंचित्, किं तु
पश्यामि नात्मनः ॥ १४० ॥ इमामुद्वीक्षितुं लक्ष्मीं, विपक्षाणामशक्नुवन् । अत्रैवात्मानमुद्बध्य, तन्मरिष्याम्यसंशयम् ॥१४१॥
त्वं पुनर्मे पितुर्गत्वा, सर्वमेतन्निवेदयेः । इत्युक्त्वा विरते तस्मिन्, पुनः शकुनिरब्रवीत् ॥ १४२ ॥
धार्तराष्ट्र ! न खल्वेत–दाभिजात्योचितं वचः । सन्तो हि स्फुटदानन्द–कन्दलाः स्वजनोदये ॥१४३॥ पैत्र्यमेव क्षितेः
खण्डं, पाण्डवैरुपभुज्यते । मनागपि न तन्न्यून–मुपभुङ्क्ते भवानपि ॥ १४४ ॥ भुवनाद्भुतसौभाग्यै–र्भाग्यैरेतावतीं यदि । तल्लक्ष्मी-
रगमत् कोटिं, नामर्षस्तेऽत्र सांप्रतम् ॥ १४५ ॥ भ्रातृभिर्यदि भूभर्तु–स्तस्य संगरभङ्गुराः । किङ्करीचक्रिरे भूपाः, किमानन्दाय
ते न तत् ॥ १४६ ॥ यत्तु व्याकुरुषे ताद्द–क्सहायो नास्ति कोऽपि मे । नानुमोदामहे वाचं, तामेतां ते मनागपि ॥ १४७ ॥
जगतीगीतदोःकीर्ति–प्रबन्धा बान्धवास्तव । पयोधय इवोद्वेलाः, पृथिवीप्लावनक्षमाः ॥ १४८ ॥ तेष्वप्यरातिभूपाल–मौलिला-
लितशासनः । रणे दुःशासनः पाक–शासनेनापि दुःसहः ॥ १४९ ॥ तव प्रत्युपकारैक–लम्पटः सुभटाग्रणीः ॥ सर्वारिहृदयो-
त्कीर्णः, कर्णः प्राणाञ्जिहासति ॥ १५० ॥ अहमेकधुरीणस्ते, समरेषु ससोदरः । तत् सहायैरिमामेतैः स्वच्छन्दं
मेदिनीं जय ॥ १५१ ॥
अथाह कौरवस्तर्हि, विजये पाण्डवान् पुरः । एतैर्जितैर्जितैवेय–मखिलाऽपि वसुंधरा ॥१५२॥ सौबलोऽप्यभ्यधाद्भूयः,

१ कुलीनोचितम् । २ इन्द्रेण ।

मेयं मिथ्या मतिस्तव । न सोऽप्याखण्डलः पाण्डु-पुत्रजैत्रायुधो युधि ॥१५३॥ निहन्ति यत्प्रतापोऽपि, शौण्डीरजडिमज्वरम् ।
कः महेत तमभ्यर्णे, तपःसुतरविं रणे१॥१५४॥ भीमेतिनामसाधर्म्य-शङ्कितैरिव कुञ्जरैः । युद्धे गजासुराकारैः, प्रणेशे पव-
नात्मजात् ॥१५५॥ गम्यते विशिखैर्जिष्णो-र्वैरिवक्षःस्थलक्षितिः । अम्भःसिरास्तु जृम्भन्ते, नेत्रयोस्तन्मृगीदृशाम् ॥१५६॥
॥ कालिन्दीमोदरं कान्त्या, करवालं यमोपमम् । धारयन्तौ करे युद्धे, दुर्नियम्यौ यमावपि ॥ १५७ ॥ विष्वक्सेनादय-
म्नेणां, मुहृदस्तु रणे मुहुः । असृक्पानोत्सवं चक्रु-र्द्वेयेषामपि पत्रिणाम् ॥ १५८ ॥ तदितयजय्यदोर्दण्ड-ताण्डवाः खलु
पाण्डवाः । शस्त्राशस्त्रि विनाऽप्येकः किं तूपायोऽस्ति तज्जये ॥ १५९ ॥

अथोत्फुल्लमुखाम्भोज-मभ्यधत्त सुयोधनः । को नामायं झगित्येव, कथ्यतां कथ्यतामिति ॥ १६० ॥ बभाषे सौबलः
श्रीमन् !, देवता इव देवनाः । परं मयि प्रसीदन्ति, नातिक्रामन्ति मे मनः ॥ १६१ ॥ नित्यं दुरोदरक्रीडा-त्यक्तव्रीडो
युधिष्ठिरः । असौ क्रीडितुमाहूतः, क्षणं न स्थातुमीहते ॥ १६२ ॥ देवितुं च न वेत्त्येव, वीर ! खिद्यस्व मा स्म तत् ।
केनापि छद्मना स्वस्मि-न्नयमाहूयतां पुरे ॥ १६३ ॥ तल्लक्ष्मीमखिलां येन, करमारोहयामि ते । परं सर्वोऽप्यमालोचः, पितुः
स्तस्य निवेद्यताम् ॥ १६४॥ दुर्योधनोऽभ्यधात्ताह-माख्यातुमिदमीश्वरः । सर्वमेतन्महीभर्तु-स्त्वमेव कथयिष्यसि ॥१६५॥

इत्यन्योऽन्यकृतालोच-सूत्रितोपायनिर्णयौ । शकुनिर्धार्तराष्ट्रश्च, ताविन्द्रप्रस्थमीयतुः ॥ १६६ ॥ प्रविश्य सहसा
तत्र, धृतराष्ट्रमहीपतिम् । न्यञ्चत्पञ्चाङ्गमानम्य, तावुपाविशतां पुरः ॥ १६७ ॥ मुखकूलंकपोत्ताल-निःश्वासलहरीमुचम् ।

१ जैत्र-जेतृ आयुधं यस्य सः । २ त्राणानां सिंचानकपक्षिविशेषाणां च । ३ द्यूतक्रीडाः । ४ विचारः ।

दुर्योधनं प्रियं पुत्रं, धरित्रीपतिरब्रवीत् ॥ १६८ ॥ वत्स ! वल्गन्ति निःश्वासा, दीर्घदीर्घाः किमद्य ते ? । प्रस्तुतस्तत्र केनापि, किं तवापि पराभवः ? ॥ १६९ ॥ जातवेदसि को दातुं, झम्पासंपातमीहते ? । आच्छेत्तुमिच्छति स्वैरं, कः फणीन्द्रफणामणिम् ? ॥ १७० ॥ ततः शकुनिरह्वाय, महीपतिमवोचत । राजन् ! सुतं तवेन्द्रोऽपि, पराभवितुमप्रभुः ॥ १७१ ॥ अन्यत्किमपि तद्दुःख–मस्त्यन्तस्तनयस्य ते । येनैष म्लानिमानिन्ये, तरुवत् कोटराग्निना ॥ १७२ ॥ उवाच भूपतिर्वाचं, चिन्ताचान्तमनाः पुनः । चिन्तयन्नपि पश्यामि, न ते दुःखस्य कारणम् ॥ १७३ ॥ विनयाश्रितमूर्धानो, बान्धवाः सुहृदोऽप्यमी । गुरोर्गिरमिवाश्रान्तं, नातिक्रामन्ति ते वचः ॥ १७४ ॥ दूरापास्तकिरीटेषु, गलन्माल्येषु मौलिषु । वत्सेदानीं तवाज्ञेव, भूभृतामवतंसति ॥ १७५ ॥ किं च ते पुरमप्येतत्, कुबेरपुरजित्वरम् । जुगुप्सिताप्सरोरूपा–स्तव शुद्धान्तयोषितः ॥ १७६ ॥ जितदिग्दन्तिसंतान–मिदमस्त्येव हास्तिकम् । अश्वीयमपि देवाश्व-देशीयं जृम्भते तव ॥ १७७ ॥ तव श्रीवेश्मनि स्मेर–प्रभापिञ्जरिताम्बराः । दृश्यन्ते सुरशैलेन्द्र–सपत्ना रत्नराशयः ॥ १७८ ॥ तव सौधं विनिर्धूत–विमानं मानवेश्वर ! । अश्नासि च यथास्वादु, स्वैरं परिदधासि च ॥१७९॥ तदित्यालोचयन् खेद–निदानं ते न वेद्म्यहम् । अन्यत् किमपि चेत् कथ्यं, कथ्यतां वत्स ! तन्मम ॥ १८० ॥

व्याजहाराथ नीहार–स्पृष्टपङ्केरुहाननः । मन्युसंभारसोत्कम्प–वपुरुच्चैः सुयोधनः ॥ १८१ ॥ तात ! यत् सत्यमस्त्येव, श्रीर्ममेयमनुत्तरा । शश्वन्मनसि वास्तव्या, यस्य त्वत्पादपांसवः ॥१८२॥ तृणाय सर्वमप्येतत्, किं तु मन्येऽहमात्मनः । झल-

१ 'स्तन्तु' इत्येकस्यां प्रतौ ।

ज्वलायितां दृष्ट्वा, सपत्नानयसंपदम् ॥ १८३ ॥ नदी मोदयते ताव-द्यावन्नालोक्यतेऽर्णवः । तावदालोककृद्दीपो, यावन्नोदेति भानुमान ॥ १८४ ॥ किंश्रियो यासु नोत्कर्ष-तारतम्यस्य विश्रमः । किंशूरः समरे यस्मै, तिष्ठतेऽन्योऽपि दोर्मदात् ॥१८५॥ निःस्वरूपाऽपि मे संपत्, सर्ववर्णमनोरमा । चण्डैः पाण्डुसुतौन्नत्य-धूमैर्ध्यामलिताऽधुना ॥ १८६ ॥ क्षीयेऽहमसिते पक्षे, यामिनीकामिनीशवत् । विरोधिनस्तु वर्धन्ते, तमस्तोमा इवान्वहम् ॥ १८७ ॥ हेमन्तहिमसंभारे, स्फारीभवति वैरिणि । भाति मेऽर्कोऽपि निर्लज्जो, निस्तेजाः स्वं प्रकाशयन् ॥ १८८ ॥ स्तुमो जलधिमेवैक-मशोषितजलाशयम्[3] । वल्गत्यपि रिपौ ग्रीष्मे, यस्याम्भून्नतिरीदृशी ॥ १८९ ॥ नानारत्नप्रभाजाल-दत्तसंध्याभ्रविभ्रमाम् । संसदं तां तपःसूनो-र्वासवोऽप्यभिलाषुकः ॥ १९० ॥ ध्यायन्ति हृदये नित्यं, विस्मृताशेषदेवताः । परब्रह्मेव भूपाला-स्तस्याज्ञामेव केवलम् ॥ १९१ ॥ नमन्नृपतिकोटीर-मणीनामपि दुर्धराः । सहन्ते न महत्तस्य, पादाम्भोजरजःकणाः ॥ १९२ ॥ हर्म्याङ्गणे नृपास्तस्य, मण्डलीबन्धशालिनः । प्रेक्षाक्षणं प्रतीक्षन्ते, प्रस्तुतान्योऽन्यसंकथाः १९३ ॥ भूपालोपायनायातै-र्गजैस्तन्मन्दिराजिरम् । श्यामलीक्रियते दान-निर्झरिनि नीरदैः ॥१९४॥ तत्तुरङ्गखुरोत्खातैः, पांशुभिस्तलिनाऽवनिः । बभूव भूभृतोऽप्यास-न्नत्युच्चाः शृङ्गसङ्गिभिः ॥ १९५ ॥ तद्वेश्मन्युपदारत्न-कूटकान्तितिरोहितः । लक्ष्यतेऽभ्युदितोऽप्यर्कः, सभाकमलिनीस्मितैः ॥ १९६ ॥ तदेतत्तात ! निःशेषं, पश्यतस्तस्य मन्दिरे । द्विधेव हृदयं मेऽभू-द्विदलत्संधिबन्धनम् ॥ १९७ ॥

---

१ 'शूरसमरे' प्रतिद्वयपाठो न साधुः । २ चन्द्रवत् । ३ 'जलाशये' इत्येकप्रतिपाठोऽपि साधुः । ४ 'दैवते' इत्येकप्रतिपाठोऽपि साधुः । ५ कृशा ।

धृतराष्ट्रेण कृतो दुर्योधनस्योपदेशः ॥

अथाभ्यधत्त संरम्भा-द्धृतराष्ट्रः सुयोधनम् । धिग्वत्स ! मत्सरः कोऽय-मस्थाने ते गरीयसः ? ॥ १९८ ॥ लक्ष्मीरसंस्तुतानाम-प्यानन्दाय महीयसः । किं पुनः प्रेम सर्वस्व-शालिनां कुलजन्मनाम् ? ॥१९९॥ वलक्षमुदये भानोः, पुण्डरीकं विकस्वरम् । मलिनं पश्य संकोच-मन्दमिन्दीवरं पुनः ॥ २०० ॥ ममैवेति तपःसूनोः, किं न चिन्तयसि श्रियः ? । प्रथन्ते मन्मथस्यैव, वसन्तस्य हि संपदः ॥ २०१ ॥ नन्वात्मनीन एवाय-मात्मीयानां खलूदयः । किं नाम्भोधिः स्पृशेल्लक्ष्मी-मुदये मृगलक्ष्मणः ? ॥ २०२ ॥ तदानन्दपदे वत्स !, विषादस्ते न सांप्रतम् । कोऽयं राकानिशीथिन्या-मन्धकारः प्रगल्भते ? ॥ २०३ ॥ इत्यूचिवांसमाह स्म, धराधीशं सुयोधनः । न तथा बाधते तात !, तल्लक्ष्मीर्मामनुत्तरा ॥ २०४ ॥ यथा तस्यां सभायां तैः, पाञ्चालीसचिवैः कृतः । प्रहासो बाधते तं च, मातुलः कथयिष्यति ॥ २०५ ॥ युग्मम् ॥

अथाख्यद्धृतराष्ट्राय, मूलतः सौबलस्तदा । यथा यथा हसन्ति स्म, पाण्डवेयाः सुयोधनम् ॥ २०६ ॥ दुर्योधनोऽभ्यधाद्भूयः, कृष्णया सममाददे । संपदं यदि तेषां तत्, तात ! जीवामि नान्यथा ॥२०७॥ किं गण्यते स जीवन् ? यः, परिक्लिष्टोऽपि जीवति । किमिन्दोरुदयः सोऽपि, यः पयोदैस्तिरोहितः ? ॥२०८॥ खञ्जिताङ्गैर्वने दैवा-द्धतविक्रमतेजसः । वरं मृत्युर्मृगाराते-र्न करिभ्यः पराभवः ॥ २०९ ॥ इति व्याहरति क्रोधात्, तस्मिन्नीर्ष्यामलीमसे । धृतराष्ट्रः पुनर्वाच-मुवाच गरिमोचिताम् ॥ २१० ॥ पाण्डवेयैः सहासाकं, शस्त्राशस्त्रिकथामपि । कुर्वतां खर्वति क्षिप्रं, कीर्तिर्लज्जा तु दीर्घति ॥ २११ ॥ स्ववंश्यैः समरारम्भ-नूतनाम्भोदवारिभिः । करोपि कुरुवंशेऽस्मिन्, किं कलङ्कनवाङ्कुरम् ? ॥ २१२ ॥ वैर्गी-

१ उज्ज्वलम् । २ अतिवृद्धः ।

यानपि भूपालः, पुत्रवात्सल्यपिच्छिलः । नूनं जातस्तनूजानां, यच्छिनत्ति न मत्सरम् ॥ २१३ ॥ इति विश्वेऽपि किं विश्वे, परीवादं ददासि मे । तदेतस्मादपस्मारा-द्विनिवर्तितुमर्हसि ॥ २१४ ॥ ( युग्मम् ) सर्वैरप्यात्मनो मा गाः, सहायैस्त्वमहंयुताम् । नयेयुः पाण्डवेया हि, वीरलक्षानपि क्षयम् ॥ २१५ ॥

इति मानिनि भूमीन्द्रौ, जगाद शकुनिः शनैः । एकमौपयिकं वेद्मि, स्वीकारे पाण्डवश्रियः ॥ २१६ ॥ पतन्ति पत्रिणो यस्मि-न्नाक्षे कस्यापि संगरे । अकीर्तिश्च न विस्फूर्ति-मियर्ति जगति क्वचित् ॥ २१७ ॥ द्यूतक्रीडामहं वेद्मि, न पुनस्त्वत्समः सुतः । तया हरामि तल्लक्ष्मी-मनुजानाति चेद्भवान् ॥२१८॥ धार्तराष्ट्रोऽब्रवीत् तात !, त्वमनुज्ञातुमर्हसि । आश्रितमुखोपाया-मिमां मातुलभारतीम् ॥२१९॥ ऊचे नृपतिराहूय, विदुरं गजसाह्वयात् । तस्यालोचेन निश्रेण्ये, स्थितो यस्मास्मि शासने ॥ २२० ॥ खिन्नः सुयोधनोऽप्याह, त्वं चेदालोचयिष्यसि । न दास्यति मतं तेऽसौ, ततो मृत्युर्मम ध्रुवम् ॥ २२१ ॥ मृते च मयि राजेन्द्र !, विदुरेण सुखी भव । उभावपि समेतौ च, भुञ्जीयाथां महीमिमाम् ॥ २२२ ॥ उन्नमय्य मुखं स्नेहात्, पाणिना शिरसि स्पृशन् । अथ रुष्टमभाषिष्ट, धृतराष्ट्रस्तनूद्भवम् ॥ २२३ ॥ लक्ष्मीस्ते हास्तिकप्राज्या, स्वागत्यस्यापि जित्वरी । धर्मात्मजजन्मनो लक्ष्म्याः, किंचनापि न हीयते ॥ २२४ ॥ अथाद्भुता सभा तादृ-ङ्मम नास्तीति खिद्यसे । मा खिद्यस्व तथा कुर्वे, यथा स्याः पूर्णवाञ्छितः ॥ २२५ ॥

तनूजं सान्त्वयित्वेति, धृतराष्ट्रोऽतिशायिनीम् । सभां निर्मातुमादिक्षत्, तत्क्षणं स्थपतीश्वरान् ॥२२६॥ निर्ममे

१ पुत्रात्मन्येन पिच्छिलः-अम्लकांजीसदृशः मूढ इति यावत्। २ गर्विष्ठताम् । ३ 'तं' प्रतिद्वय० ।

धृतराष्ट्रस्य पुरो विदुरेण कथिता नल-कूबर कथा ॥

तैस्तपःसूनु-सभासब्रह्मचारिणी । शतद्वारा मणिस्तम्भ-सहस्रसुभगा सभा ॥२२७॥ सर्वसंदेहसंदोह-भिदुरं विदुरं ततः । आसैराकारयामास, भूपतिर्हस्तिनापुरात् ॥ २२८ ॥ आगत्य प्रणयप्रह्वः, प्रणम्य चरणाम्बुजम् । क्षितीशितुरुपाविक्षत्, प्राञ्जलिर्विदुरः पुरः ॥ २२९ ॥ सुत-सौबलयोः सर्वं, कैतवाकूतपांसुरम् । ततः क्षोणिपतिस्तस्य, तमालोचमचीकथत् ॥ २३० ॥ अथोचे विदुरस्तीव्र-विषादच्छिदुराशयः । युष्मन्मन्त्रोऽयमन्त्राणि, हहा ! मेऽन्तर्निकृन्तति ॥ २३१ ॥ वचो विद्यानवद्यानां, नान्यथा भवति क्वचित् । कुलारण्यैकदावाग्नि-रुत्थितोऽयं सुयोधनः ॥२३२॥ किं न श्रुतं यथापूर्वं, नल-कूबरयोरपि । अनर्थफल एवाय-मभूद् द्यूतविषद्रुमः ॥ ॥ २३३ ॥

तथा हि कोसलेष्वस्ति, कोशास्तधनदैर्जनैः । अलकाविजयप्रौढ-कौशला कोशला पुरी ॥ २३४ ॥ तस्यामासीद्यशोम्भोभिः, प्लाविताशेषभूतलः । कृतवैरिवधूहार-निषेधो निषधो नृपः ॥ २३५ ॥ तस्याभूत् तनयो वैरि-कुलकालानलो नलः । द्वितीयः खण्डिताराति-डम्बरः कूबरः सुतः ॥ २३६ ॥ वेत्रिणाऽऽवेदितोऽन्येद्यु-रुपगम्य प्रणम्य च । दूतः कश्चिन्महीपालं, मीलिताञ्जलिरब्रवीत् ॥२३७॥ विदर्भेषु भुवः कर्ण-कुण्डलं कुण्डिनं पुरम् । देवास्ति देवदेशीय-स्तस्मिन् भीमरथो नृपः ॥२३८॥ तस्य निःसीमरूपश्री-र्दमयन्तीति विश्रुता । तनयाऽस्ति जगन्नेत्र-कुमुदाऽऽनन्दकौमुदी ॥ २३९ ॥ नेत्रपीयूषवापीं तां, निर्माय नियतं विधिः । स एवाहमुतान्योऽस्मि, विस्मयादित्यचिन्तयत् ॥२४०॥ हित्वा जलाशयान् हंसाः, कैलाससरसीमिव । गुणाः स्वयं श्रयन्ति स्म, संश्रयस्पृहयैव ताम् ॥ २४१ ॥ तनोति नित्यमद्यापि, देवी वाचामधीश्वरी । अक्षावलिच्छ-

१ 'द्यशोम्भोधिप्ला०' प्रतिद्वय० । २ जपमालामिषात् ।

त्वान् तन्वा, गुणौघगणनामिव ॥२४२॥ शश्वन्मनसि कुर्वाणा, केवलं धर्ममार्हतम् । तत्यजे तद्भयेनेव, पापवार्ताभिरप्यसौ ॥ २४३ ॥ अनुरूपो वरः कश्चि-दुहितुर्मे भवत्विति । स्वयंवरमुपाक्रंस्त, तत्कृते भीमभूपतिः ॥ २४४ ॥ सर्वानाह्वातुमुर्वीशा-नन्यान वैदर्भभूपतिः । प्राहिणोदपरान् देव-दूतानाकूतकोविदान् ॥ २४५ ॥ अहं तु देवपादाना-मन्तिके मेदिनीभृता । प्रहितः परमान्येन, म्वस्वरूपे मुमुक्षुणा ॥ २४६ ॥ तन्निजाभ्यां कुमाराभ्यां, सहाभ्येत्य स्वयंवरम् । भूमीन्दो ! भीमभूपाल-मानन्दयितुमर्हसि ॥ २४७ ॥ मेदिनीशोऽथ तद्वाच-मोमिति प्रतिपद्य ताम् । आदिदेश विदर्भेषु, प्रस्थानाय वरूथिनीम् ॥ २४८ ॥ प्रजासंजनितत्रासं, निग्रहीतुमिवान्तकम् । प्रत्यपाचीं दिशं सैन्यैः, प्रतस्थेऽथ प्रजापतिः ॥२४९॥ क्रमात् प्रत्युद्गतः प्रीत्या, विदर्भपृथिवीभुजा । विवेश क्षोणिपद्खण्ड-मण्डनं कुण्डिनं नृपः ॥ २५० ॥ नलं विलोक्य कंदर्प-कल्पद्रुनवकन्द-लम् । दर्भीयति स्म वैदर्भ-जनोऽन्यानवनीभुजः ॥ २५१ ॥ कुण्डिनेशनिदेशेन, नेदीयः केलिकानने । निवासानग्रहीत् प्रीत्या, महीपतिपनाकिनी ॥ २५२ ॥ यथौचित्यधृताकल्पा-स्तेऽथ कल्पद्रुमा इव । मञ्चानुच्चैरलंचक्रुः, क्षोणिशक्राः स्वयं-वरे ॥ २५३ ॥ कोशलापतिरप्येकं, माणिक्यमयमद्भुतम् । कुमाराभ्यां समारोह-न्मञ्चमुच्चूलशालिनम् ॥२५४॥ क्षत्रियाणा-मगाल्लक्ष्मी-र्नक्षत्रागामिता क्षणात् । विश्वभास्वत्युपारूढे, मञ्चपूर्वाचलं नले ॥ २५५ ॥

नवपर्यस्तदूर्य-मौक्तिकप्रायभूषणा । मधुव्रतकुलाकीर्ण-पुष्पास्तीर्णेव माधवी ॥ २५६ ॥ हर्षोत्फुल्लचलचेटी-कृतालोक-मानिल्लनः । लक्ष्मीमूर्तेव वैदर्भी, विवेशान्तःस्वयंवरम् ॥ २५७ ॥ (युग्मम्) इमां रति-शची-लक्ष्मी-पार्वतीरूपजि-

१ 'प्रजासंजनितत्रास' पतित्रयपाठः, तत्र प्रजायाः मञ्जरितः—विकसितः त्रासः यस्मात्तम् इत्यर्थः । २ तृणीयति ।

त्वरीम् । निर्माय महतो जज्ञे, निर्घादस्य पदं विधिः ॥ २५८ ॥ स्मरे-न्द्र-मुरजि-त्कण्ठे-काललीलाजयी न यत् । अनेन निर्ममे कश्चि-दित्यतर्कि जनैस्तदा ॥ ॥ २५९ ॥ ( युग्मम् ) मनोभिः सर्वभूपानां, वितन्वद्भिर्गतागतम् । अन्तराध्वा तदङ्गानां, तदा पाणिंधमोऽभवत् ॥ २६० ॥ शृङ्गाररसपूर्णायां, केदारभुवि शालिवत् । जातः स्तम्बकरिस्तस्या-मभिलापो महीभुजाम् ॥२६१॥ तां वीक्ष्य पुण्यतारुण्यां, नलोऽप्यन्तरचिन्तयत् । कात्यायन्या[1] तपस्वी धि-ग्मृडः[2] कामं विडम्बितः ॥२६२॥

अथ तस्याः स्मरोद्रेक-स्त्रितानेकविभ्रमान् । नामग्राहं महीपालान्, दर्शयामास वेत्रिणी ॥ २६३ ॥ देवि ! तैस्तैर्गुणैः सोऽय-मगाधो मगधाधिपः । वपुर्लावण्यकल्लोलै-र्जितानङ्गोऽयमङ्गराट् ॥ २६४ ॥ एष विद्विषतां लुप्त-सप्ताङ्गो वङ्गभूपतिः । वारितारिकुरङ्गाक्षी-शृङ्गारोऽयं कलिङ्गराट् ॥ २६५ ॥ असौ भग्नरिपुस्त्रैण-कङ्कणः कुङ्कणेश्वरः । शत्रुवित्रासनाट्यैकनटोऽयं लाटनायकः ॥२६६॥ प्रत्यर्थिप्रार्थितप्राण-त्राणोऽयं हूणदैवतम् । असौ जनितविद्वेषि-डिम्बः कम्बोजभूमिभुक् ॥ २६७॥ इत्थमस्थासुमेतेषु, सिन्दुवारेष्विवालिनीम् । दृशमुद्वीक्ष्य वैदर्भ्याः, पुनर्दौवारिकी जगौ ॥२६८॥ देवि ! पश्य पुरः सोऽयं, निषधाया विशेषकः । विवेक-विक्रम-न्याय-निधिर्निषधभूपतिः ॥ २६९ ॥ एतौ च पुरतोऽमुष्य, तनयौ नलकूबरौ । शम्भोरस्थयेवाभूद्, द्विमूर्तिरिव मन्मथः ॥२७०॥ सारिणीवारिवच्चक्षु-स्तस्याः सिञ्चन्नृपद्रुमान् । पपात वृहदावाले, शाखिनीव नले चिरम् ॥ २७१ ॥ उच्चरत्प्रौढरोमाञ्च-मथ सैतदचिन्तयत् । देवः किमागतः कामः, स्वयमेव स्वयंवरम् ? ॥ २७२ ॥ अनेकविरहिस्त्रैण-हत्यापातकिनोऽथवा । कुतस्तस्येदृशी मूर्ति-र्मालतीदलकोमला ? ॥ २७३ ॥ प्रकामकमनी-

[1] दुर्गादेव्या । [2] शिवः ।

येऽस्मि-न्निर्मितेऽम्भोजैर्भूर्भुवम् । अनुरूपगुणग्राम-निर्माणे विक्लवोऽभवत् ॥ २७४ ॥ नमोऽस्तु विधये तस्मि-न्नोपकारो ममागः । कृतार्थयितुकामेन, येन मामयमादधे ॥२७५॥ चिन्तयन्तीदमानन्दा-दमयन्ती सवेपथुः । वरमालां निचिक्षेप, नलस्य गलकन्दले ॥ २७६ ॥

तत्पाणिनखमाणिक्य-मयूखैररुणीकृता । गुम्फितेव बभौ पुष्पैः, सोऽनुरागद्रुमोद्भवैः ॥२७७॥ उल्लङ्घ्य भूभृतः सर्वान्, वैदर्भीसरिता श्रिते । नलाम्भोधौ बभूवुस्ते, श्यामास्तत्सैवलैरिव ॥ २७८ ॥ भीमस्य निषधस्यापि, स्वजनप्रीतिगङ्गया । द्विषद्प्रीतिकालिन्द्या, नम्रयागीयितं मदः ॥ २७९ ॥ कोशलेश्वर-भीमाभ्यां, यथामनसमुच्चकैः । आरेभे नल-वैदर्भ्यो-र्विवाहमहिमोत्सवः ॥ २८० ॥ अतःप्रभृति जन्मान्तं, प्राणा अपि ममैव ते । इतीव दक्षिणं पाणि-माददातामिमौ मिथः ॥ २८१ ॥ मन्ये निलीय निर्गत्य, पाणिपीडनपर्वणि । तयोरगच्छतामैक्यं, मनसी स्वेदकैतवात् ॥ २८२ ॥ प्रदक्षिणीकृते वह्नौ, करमोचनपर्वणि । भीमो नलाय दत्ते स्म, रत्ना-श्वे-भादिकं बहु ॥ २८३ ॥ निषधापतिरादाय, सवधूकमथात्मजम् । भीमेनानुगतो हर्षा-दचलत् कोशलां प्रति ॥ २८४ ॥

कांचिद्भूमवनीं गत्वा, निदेशात् कोशलेशितुः । निवृत्तः कुण्डिनाधीश-स्तनूजामन्वशादिति ॥ २८५ ॥ व्यसनेऽपि भर्त्तारं, पतिवर्त्मानुवर्तिनी । पतिमेव परं प्राहु-र्दैवतं हि मृगीदृशाम् ॥ २८६ ॥ प्रतिगृह्य नमन्मौलि-रनुशिष्टिमिमां पितुः । नलस्य रथमारुह्य, प्रतस्थे भीमनन्दिनी ॥ २८७ ॥ नलः कान्तावपुःस्पर्श-लालसः किल वर्त्मनि । स्यन्दनं सादिनाऽव-

१ ब्रह्मा । २ वरमाला । ३ नृपान्, पक्षे पर्वतान् ।

न्या-मुद्वातिन्यामनाययत् ॥ २८८ ॥ ज्ञातेऽप्यगोदिकप्रश्ने, गद्गदे तद्वचःप्रियः । किं ब्रवीषीति भूयोऽपि, भैमीं वक्ति स्म नैषधिः॥२८९॥ अनुरागो नले भैम्या, दिनान्ते वा ममाधिकः ?। इति ज्ञातुमिवागच्छत्, संध्या सैन्यस्य गच्छतः ॥२९०॥ त्रपावन्दिग्रहात् काम-माकर्षन्ती विदर्भजाम् । आगात्तमी तमःसैन्यैः, सखीव हृदयंगमा ॥ २९१ ॥ नवं नलकरस्पर्श-चुम्बना-लिङ्गनादिकम् । वेत्रीव दर्शयन् भैम्या, जजृम्भे तिमिरोत्करः ॥ २९२ ॥ तथापि पथि नाऽऽवासा-नग्रहीन्निषधापतिः । स्वपुरं प्रति लोकाना-मुत्कण्ठा हि बलीयसी ॥ २९३ ॥

नलेन दमयन्त्या च, व्रजद्भ्यामथ वर्त्मनि । कर्णामृतमिवाश्रावि, रोलम्बतुमुलध्वनिः ॥ २९४ ॥ नलं भैमी बभाषेऽथ, नाथ! नात्र विभाव्यते । रम्या द्रुमावलिः काचित्, तत् किं कोलाहलोऽलिनाम् ? ॥२९५॥ रम्भोरु! तिमिरैः किंचित्, कारणं नावगम्यते । निवेदिते नलेनेति, भैमी भालं स्वमामृशत् ॥ २९६ ॥ तदैवाविरभूत् तस्या-स्तिग्मदीधितिबान्धवः । त्रासयन् सैन्यलोकस्य, लोचने तिलकोऽलिके ॥ २९७ ॥ ततोऽपृच्छन्नलस्तन्वि !, किमेतदिति विस्मितः । साऽप्युवाच मम स्वामि-ञ्जन्मसब्रह्मचार्यसौ ॥ २९८ ॥ तदुद्योतेन मत्तालि-कुलदंशस्नुतासृजम् । तौ मुनिं कंचिदैक्षेतां, दम्पती प्रतिमास्थितम् ॥ २९९ ॥ गण्डकण्डूमपाकर्तुं, केनचिद्वनदन्तिना । घट्टितोऽयं स्फुटं ध्यान-स्थेमवान् स्थाणुशङ्कया ॥ ३०० ॥ तदीयमदसंसक्तै-र्द्विरेफैरप्यनुद्रुतः । समाधेर्नायमभ्रश्यत्, तद्वहत्यस्य कस्तुलाम् ? ॥ ३०१ ॥ इत्यन्तस्तर्कयन्तौ त-माधाय निरुपद्रवम् । उल्लसत्प्रीतिकल्लोल-विक्लवौ तौ प्रणेमतुः ॥ ३०२ ॥ ( त्रिभिर्विशेषकम् ) प्रतिमामुपसंहृत्य, मुहूर्त्तेन महामनाः ।

१ विषमायाम् । २ पर्वतादिसवन्धिप्रश्ने । ३ तस्या वचः प्रियं यस्य । ४ रोलम्बः—भ्रमरः । ५ 'भासयन्' एकप्रति० । ६ असृग्—रुधिरम् ।

जगाद स मुनिर्ज्ञानी, धर्मस्थेमकरीं गिरम् ॥ ३०३ ॥ न धर्मो नूतनः कोऽपि, युवयोरुपदिश्यते । ययोर्भूतं भवद्भावि-जन्म-धर्मकवन्धुरम् ॥ ३०४ ॥ चतुर्विंशतिमुद्दिश्य, दमयन्ती जिनेश्वरान् । तपश्चक्रे ददौ रत्न-तिलकांश्च पुरा भवे ॥ ३०५ ॥ तेनास्याः शाश्वतं भाल-स्थलालङ्करणं नवम् । अस्मिञ्जन्मनि मार्तण्ड-विडम्बी तिलकोऽभवत् ॥ ३०६ ॥ जन्मान्तरे तथा सिक्तः, कुमार ! भवताऽप्यसौ । धर्मद्रुः फलितः शश्व-ज्जज्ञे तैस्तैः फलैर्यथा ॥ ३०७ ॥ अधिगम्याऽर्हतं धर्म-मागामिन्यपि जन्मनि । सर्वकल्याणकल्लोल-पारावारौ भविष्यथः ॥ ३०८ ॥ तामित्यमृतसध्रीचीं, तौ निशम्य मुनेर्गिरम् । प्रतस्थाते रथारूढौ, प्रौढप्रह्लादमेदुरौ ॥ ३०९ ॥

पुरीपरीसराऽऽराम-मुपेयुषि नृपे क्रमात् । नलः प्रमोदसंफुल्लः, प्रेयसीमित्यथोचत ॥ ३१० ॥ देवि ! पश्य निजश्रीभि-र्जयन्तीममरावतीम् । तव श्वशुरसंतान-राजधानीमिमां पुरीम् ॥ ३११ ॥ इतः क्रीडातडागानि, केलिधात्रीधरा इतः । इतो लीलावनश्रेणि-रितः प्रमदर्दीर्घिकाः ॥ ३१२ ॥ इत्यादि तत्तदुन्मील-त्प्रमोदलहरीजुषः । अदर्शयन्नयादर्शो, विदर्भदुहितुर्नलः ॥ ३१३ ॥ ( युग्मम् ) वधूवरं पुरस्कृत्य, प्रारब्धविविधोत्सवम् । विवेश निषधः शक्र-संकाशः कोशलापुरीम् ॥ ३१४ ॥ तस्यामुद्वीक्ष्य वैदर्भी, जिनवेश्मानि भूरिशः । पत्या नलेन मेने स्वं, पुमर्थत्रयशालिनम् ॥ ३१५ ॥ समं नलस्य निर्व्रीडं, क्रीडतः कान्तया तया । दिनैर्यामायितं कामं, क्षणदाभिः क्षणायितम् ॥ ३१६ ॥ क्रीडाद्रिललितैर्जातु, जातु काननकेलिभिः । दोलालीलायितैर्जातु, जातु वारिविगाहनैः ॥ ३१७ ॥ कुसुमावचयैर्जातु, जातु मालाभिगुम्फनैः । उत्तंसरचनैर्जातु, नयतः

---

१ अशृनतुल्याम् । २ क्रीडापर्वताः । ३ 'त्सवाम्' एकप्रति० ।

स्म दिनानि तौ ॥ ३१८ ॥ युग्मम् ॥

अथान्यदा नलं न्यस्य, राज्ये निषधभूपतिः । कूबरं यौवराज्ये च, परिव्रज्यामुपाददे ॥ ३१९ ॥ तस्मिन्राज्ञि प्रजाः सर्वा-स्तरङ्गितघनोदये । अध्यारोहन् परां लक्ष्मीं, तपात्यय इवापगाः ॥ ३२० ॥ चूर्णीकृत्य प्रतापाग्नौ, रिपुस्त्रीहारवल्लरीम् । स कामं धवलीचक्रे, यशःप्रासादमात्मनः ॥ ३२१ ॥ प्रतापमिव कल्पाग्नि-संपन्नमसहिष्णवः । ममज्जुर्द्विषदुर्वीश-श्रियस्त-स्यासिवारिणि ॥ ३२२ ॥ स सैन्यैः साधयामास, भरतार्धमधिद्युतिः । करैरुष्णांशुमालीव, गगनार्धमशेषतः ॥ ३२३ ॥ भर-तार्धाधिराजस्य, राजानस्तस्य तेनिरे । संभूय भूरिसंभार-मभिषेकं हरेरिव ॥ ३२४ ॥

कूबरः क्रूरचेतास्तु, तस्य राज्याभिलाषुकः । रन्ध्राण्यन्वेषयामास, मृगारेरिव जम्बुकः ॥ ३२५ ॥ नलस्तु सह तेनैव, बान्धवप्रीतिबन्धुरः । नित्यं दुरोदरक्रीडां, तनोति विशदाशयः ॥ ३२६ ॥ अन्येद्युस्तु गम-चर-बन्ध-मोक्षसुधीरपि । कूबरं देवनैर्दैवा-ज्जेतुं नालं नलोऽभवत् ॥ ३२७ ॥ नलस्य काङ्क्षितो नाक्षः, पतति स्म कथंचन । मारयामास तच्छारीन्, भूयो-भूयस्तु कूबरः ॥ ३२८ ॥ नगर-ग्राम-खेटादि, हारयन्नभवन्नलः । गलल्लक्ष्मीः क्रमात् पक्षे, शशीव विशदेतरे ॥ ३२९ ॥ विषसाद जनः सर्वः, कूबरस्तु मुदं ययौ । " दुःखी ध्वान्ते हि लोकोऽय-मुलूकः पुनरुन्मदः " ॥ ३३० ॥

आकर्ण्य लोकहाकार-कोलाहलमुदित्वरम् । अभ्यधान्नलमभ्येत्य, सभयं भीमनन्दिनी ॥ ३३१ ॥ स्वामिन् ! कोऽयं विप-र्यासः, संप्रत्यभिनवस्तव ? । विनोदमात्रमेवैत-द्दुरोदरमुदीरितम् ॥ ३३२ ॥ त्वादृशा अपि चेदस्मिन्, मज्जेयुर्व्यसनार्णवे ।

---

१ (गमचरावक्षद्यूतप्रभेदौ,) गमे च चरे च बन्धे च मोक्षे च निपुण । २ कृष्णे ।

तत्सारथिना कः स्या-न्मज्जतां मन्दमेघसाम् ? ॥ ३३३ ॥ प्रतिपक्ष इवाक्षोऽयं, तवाद्य प्रातिलोमिकः । इत्यत्यपि गते तस्मा-
दपाकुरु दुरोदरम् ॥ ३३४ ॥ अभिषिञ्च स्वयं राज्ये, भ्रातरं कूबरं वरम् । प्रसह्य हृतराज्यस्तु, वाढमुत्तामयिष्यसे ॥ ३३५ ॥
गिरमित्यादिकामुच्चै-रुच्यमानां नलस्तया । न विन्दति स्म गम्भीरं-वेदीव निशितां शृणिम् ॥ ३३६ ॥ अथाप्तपुरुषैर्भैमी-
निदेशाज्जगदे नलः । त्वयैव पृथिवी किं नु, हार्यते कृच्छ्रतोऽर्जिता ? ॥ ३३७ ॥ किं न द्यूतं परित्यज्य, जीवयस्यनुजी-
विनः ? । शुष्के हि सरसि ग्रीष्मे, कियन्नन्दन्ति दर्दुराः ? ॥ ३३८ ॥ इत्येषामप्यनादृत्य, वचश्चिक्रीड नैषधिः । " विपर्येति
भृशं पुंसां, बुद्धिः क्रुद्धे हि वेधसि " ॥ ३३९ ॥
नलस्ततोऽवरोधेन, समं भैमीमहारयत् । तारकाभिः सह प्रातः, कौमुदीमिव चन्द्रमाः ॥ ३४० ॥ हारयामास भूपालः,
शरीराभरणान्यपि । वसन्तस्य व्ययारम्भे, कुसुमानीव चम्पकः ॥ ३४१ ॥ जगर्ज जगतीनाथ-श्रीलाभे कूबरोऽधिकम् ।
दुर्नराः गरिमामोघाः, प्राप्तौ ग्रम्भोदसंपदः ॥ ३४२ ॥ राज्यभ्रंशे भुवो भर्तुः, प्रजाश्चक्रन्दुरुच्चकैः । कुलायभूरुहो भङ्गे,
पत्रिणामिव पत्रगः ॥ ३४३ ॥
कूबरो नलमित्यूचे, मदीयां मुञ्च मेदिनीम् । पिता दत्ते स्म ते राज्यं, ममेदानीं तु देवनः ॥ ३४४ ॥ गर्वं कमपि मा
कार्षी-र्न दूरे दोर्भृतां श्रियः । इत्युक्त्वाऽम्बरखण्डैक-मात्रश्रीरचलन्नलः ॥ ३४५ ॥ मया जितासि मा यासी-र्मदन्तः-
परमाश्रय । नलानुयायिनीं भैमी-मित्यवोचत कूबरः ॥३४६॥ ततस्तमूचिरे पौराः, किमेतां प्रतिपिध्यसि ? । मृत्युमाप्नोति

शार्दूल्याः, पतीयन् मृगधूर्तकः ॥ ३४७ ॥ मातृवद्दयितां भ्रातु-स्तत्त्वमेतां महासतीम् । प्रणम्य रथमारोप्य, प्रेषय प्रेयसा सह ॥ ३४८ ॥ इत्युक्तस्तैर्नमस्कृत्य, वैदर्भी रथमार्पयत् । अलं तव रथेनापि, नलेनेति न्यषेधि सः ॥ ३४९ ॥ नृपागारात् पुरस्कृत्य, प्रेयसीमतिधीरधीः । नलोऽचलन्मुखाम्भोजात्, पदार्थ इव भारतीम् ॥ ३५० ॥ प्रियानुव्रज्य यातस्य प्रस्थितस्य शनैःशनैः । प्रयाणपटहैर्जात-माक्रन्दैरनुजीविनाम् ॥ ३५१ ॥ लीलाकुरङ्गक-क्रीडा-सारिका-केलिबर्हिणः ! । गृहपारावताः ! सद्म-कीर-वापीसितच्छदाः ! ॥ ३५२ ॥ प्रेयांसमनुगच्छन्ती-मनुजानीत मां मनाक् । वदन्तीति तदा भैमी, कस्यार्द्रं नाकरोन्मनः ? ॥ ३५३ ॥ ( युग्मम् ) पुरे पौरवधूनेत्रैः, प्रारब्धप्रावृषि क्षणात् । तस्याः प्रियानुगामिन्याः, प्रसस्रुः प्रीतिवीरुधः ॥ ३५४ ॥ धिग्विधिं यो नलस्यापि, दशामेतामदर्शयत् । न धिग्वाऽस्य स्वभावोऽयं, चन्द्रमस्यपि दृश्यते ॥ ३५५ ॥ चिकीर्षेयं तवासीच्चेत्, किं विधे ! भरतार्धभुक् । चक्रे नलस्त्वया ? यद्वा, "महाऽऽरोहो महापदे" ॥ ३५६ ॥ यां सतीं शापशङ्कीव, करैः सूरोऽपि नास्पृशत् । सहते सा कथं भैमी, पादचङ्क्रमणक्रमम् ? ॥३५७॥ धिक्कूबरं कुतोऽस्यापि, स्थैर्यमेष्यन्ति संपदः । भ्रातरं भ्रातृजायां च, य एवं निरवासयत् ॥ ३५८ ॥ इति व्रजति वैदर्भी-सहाये नलभूपतौ । अन्तर्नगरमुच्चेरु-र्नागराणां गिरस्तदा ॥ ३५९ ॥ ( पञ्चभिः कुलकम् । )

तदा भैमीक्रमस्पर्श-पूतंमन्येव मेदिनी । धावत्पौरजनोद्भूत-रजोव्याजाद्दिवं ययौ ॥ ३६० ॥ पौरामात्यादिभिर्लोकै-रुपनीतानि कोटिशः । निराकुर्वन्नलो याना-न्यगच्छन्नगराद्बहिः ॥ ३६१ ॥ सह प्रस्थास्नवः कामं, कुलामात्याः क्षमाभृता । तैस्तैर्वाक्यैः समं पौरै-र्न्यवर्त्यन्त कथंचन ॥ ३६२ ॥ दुःखादभ्येत्य वैदर्भ्या, विभाव्य मुखमुज्ज्वलम् । पौर्यः पुनर्ययुर्धाम,

तन्मनीन्यविकम्वराः ॥ ३६३ ॥ भीमात्मजानिभाल्लक्ष्मी–मिवादाय नलोऽचलत् । गतेऽस्मिन् सर्वमप्यामी–न्निर्लक्ष्मीकं कृतोऽन्यथा ? ॥ ३६४ ॥ पुरीपरिसरारामचारिमाद्यैर्विनोदयन् । विदर्भदुहितुश्चक्षु–र्नलोऽगच्छत् पुरः पुरः ॥ ३६५ ॥ भैम्याः पुराऽभवन् प्रीति–गतपत्त्रैर्न तावती । पत्या धृतोत्तरीयायाः, सातपे पथि यावती ॥ ३६६ ॥ पार्थिवस्तां पथि श्रान्तां, यत्र तत्रोपवेशिनीम् । निर्व्याजं वीजयामास, स्वेदिनीं सिचयाञ्चलैः ॥३६७॥ क्वापि श्रमेण विश्रान्तां, संवाह्य चरणौ चिरम् । पार्थिवः प्रार्थयांचक्रे, पुरस्ताद्गमनाय ताम् ॥ ३६८ ॥ तां कचिन्मार्गखेदेन, तरुच्छायानिपादिनीम् । नलोऽब्जिनी-दलानीतं, पयः शीतमपाययत् ॥ ३६९ ॥ क्वचिच्च सत्त्वमालम्ब्य, पादसंवाहनोद्यता । भूपालेन बलाद्भैमी, स्मितपूर्वमवार्यत ॥ ३७० ॥ अतीयतुः फलैस्तैस्तै–स्तौ मध्याह्नं कृताह्निकौ । सेव्यमानौ सरस्तीरे, शिशिरैरूर्मिमारुतैः ॥ ३७१ ॥ अन्यो-न्यनिबिडाऽऽश्लेष–नीतचङ्क्रमणक्रमौ । तौ लतामण्डपे क्वापि, निन्यतुः पथि यामिनीम् ॥ ३७२ ॥

अन्येद्युरुन्मदोत्कालव्यालव्याकुलितोदराम् । एकच्छत्रद्रुमच्छाया–मीयतुस्तौ महाटवीम् ॥ ३७३ ॥ तामवस्थामिमौ प्राप्तौ–मनयोरीक्षितुमक्षमः । विधौ क्रोधादिवाताम्रो, जगामास्तनगान्तरम् ॥ ३७४ ॥ अधावन्नभितो दिग्भ्य–स्ततोऽस्तिगिरवीथयः । वनान्तगहनध्वान्त–बन्धुस्नेहोत्सुका इव ॥ ३७५ ॥ कान्तारसरितं कांचि–दृत्वा धौताऽऽस्य–दोःक्रमौ । ततो भूपश्च भैमी च, यथेच्छं पपतुः पयः ॥ ३७६ ॥ विश्रामाय लतावेश्म–क्रोडे कङ्केल्लिपल्लवैः । नलः शिलातले रम्ये, क्वापि तल्पमकल्पयत् ॥ ३७७ ॥ वृन्तैरपि वपुर्ग्लानि–र्वैदर्भ्या मा स्म भूदिति । उत्तरीयपटप्रान्तं, स व्यधत्तोत्तरच्छदम् ॥ ३७८ ॥

१ निभात–मिषात् । २ चारिमा–सौन्दर्यम् । ३ व्यालः–सर्पः । ४ विस्तृताः ।

समुच्चार्य ततः पञ्च-परमेष्ठिनमस्क्रियाम् । तौ स्म संविशतस्तस्मिन्, मिथः, संसक्तदोर्लतौ ॥ ३७९ ॥

अथाभाग्यभरैर्भैम्याः, क्ष्मापालोऽन्तरचिन्तयत् । गन्तव्याया भुवः क्रान्तो, बिन्दुरस्त्यर्णवः पुरः ॥ ३८० ॥ देवीसखश्च गन्तास्मि, तस्य पारीणतां कुतः ? । पथि स्वच्छन्दचारस्य, प्रत्यूहो हि स्त्रियो महान् ॥ ३८१ ॥ तद्याम्येतां परित्यज्य, वनेऽस्मिन् सुखशायिनीम् । प्रातर्गच्छेदियं वेश्म, पितुर्वा कूबरस्य वा ॥ ३८२ ॥ इत्यालोचयतस्तस्य, निद्राति स्म विदर्भजा । "मार्गसंपातखिन्नानां, निद्रा ह्यभ्यर्णवर्तिनी" ॥३८३॥ ततः शनैः परीरम्भ-मुद्रां[1] निर्भिद्य नैषधिः । क्रष्टुकामो निजं भैमी-भुजसंवलितं भुजम् ॥ ३८४ ॥ गाढविश्रम्भसंरम्भा-दतिस्वच्छन्दशायिनीम् । तामजागरयन्नूचे, नीचकैर्निषधापतिः ॥ ३८५ ॥ (युग्मम्) मुञ्च मुञ्च नलं मुग्धे, चण्डालं कुलपांसनम् । स्पर्शेनाप्यस्य पापस्य, पातकैरुपलिप्यसे ॥ ३८६ ॥ सुप्तामेकाकिनीमेव, वने विश्वस्तमानसाम् । प्रेमामृतस्रवन्तीं य-स्त्वामपि त्यक्तुमिच्छति ॥ ३८७ ॥ कल्पद्रुमभ्रमान्मुग्धे, श्रिताऽसि विषपादपम् । तदवाप्नुहि निःशेषं, फलं तस्यात्मकर्मणः ॥ ३८८ ॥ धिग्धातः ! कुर्वता मूढ !, वैदर्भीनलसंगमम् । हंसीकाकोलयोः कोऽयं, त्वयाऽकारि समागमः ? ॥ ३८९ ॥ यदि वा सर्वदैवासि, त्वमनौचित्ययोगकृत् । अमेध्यदोहदश्[2]चक्रे, केतक्या (क्याः) कथमन्यथा ? ॥३९०॥ इत्याकृष्य भुजं भूयो, मन्दं मन्दं नलोऽवदत् । देवीक्रान्तमिदं वास-श्छेत्तुं बाहो ! प्रसीद मे ॥ ३९१ ॥ यद्वा पूर्वं त्वमेवास्या, व्यापृतोऽसि करग्रहे । जातस्त्वमेव सर्वाङ्ग-सौरभ्यप्रथमातिथिः ॥ ३९२ ॥ तेन मन्येऽहमेतस्यां, दाक्षिण्यं दक्षिणस्य ते । सदा सध्रीचि[3] किं नाम, नलेऽसि त्वमदक्षिणः ? ॥ ३९३ ॥

१ आलिङ्गनमुद्राम् । २ विष्ठायाः दोहदः । ३ सहचारिणि ।

तद्विधायानुरोधं त्व-मसिधेनुमलंकुरु । क्षुरिकायामिति स्वैरं, क्षितीशः पाणिमक्षिपत् ॥ ३९४ ॥ तामूचे च मया कोशः, सम राज्येन तत्यजे । त्वं केयं मदीयायाः, कोशेऽप्यत्यागवासना ? ॥ ३९५ ॥ मम पाणिग्रहे यद्वा, त्वमपि त्यागशङ्किनी । मुद्गासि न हि भैमीव, भवत्यप्यद्विश्रृङ्खला ॥ ३९६ ॥ इत्याकृष्य स्वतेजोभि-स्तमःकल्पान्तशिल्पिभिः । हसन्तीमिव तां चक्रे, पद्मश्लेपिणीं नलः ॥३९७॥ पुनर्जगाद तां देवी-कान्तस्य मम वाससः । छेदाय क्षुरिके! देवि!, प्रसीदायं कृतोऽञ्जलिः ॥३९८॥ यद्वा स्त्रीजातिकारुण्य-विक्लवा न व्यवस्यति(सि) । कारुण्यं किं हि निस्त्रिंश-सुतायास्तव ? कथ्यताम् ॥३९९॥ इति निच्छेद मेदसि-पतदश्रुकणाङ्कितम् । मन्युसंभारनिर्भिन्न-चेताश्चेलाञ्चलं नलः ॥ ४०० ॥ अब्रवीच दृशौ देव्याः, कामं निद्रे ! निमीलयेः । मा स्म भून्मम हिञ्जीरः[2], स्निग्धमस्या विलोकितम् ॥४०१॥ असिम त्यक्तस्त्वया देवि !, न व्यलीकश-तैरपि । निर्व्यलीकामपि त्वां तु, हा ! दुरात्मा त्यजाम्यहम् ॥ ४०२ ॥ मन्ये मे नेदमप्याग-स्त्वत्त्यागस्त्वं गमिष्यति । नातिमिनाति कौमुद्यां, कज्जलस्यापि कालिमा ॥४०३॥ इयमापृच्छ्यसे देवि !, प्रणामोऽयमपश्चिमः । त्वामपि क्षेप्तुमिच्छामि, नात्मीयव्यसनार्णवे ॥ ४०४ ॥ सतीव्रतपवित्रायाः, कोऽपि नोपद्रवस्तव । परं पूजैव ते गेहे, पितुर्वा श्वशुरस्य वा ॥ ४०५ ॥ इत्युक्त्वा तत्पटप्रान्ते, लिखति स्म निजासृजा । अक्षराणि क्षरद्बाष्प-विन्दुक्लिन्नाननो नलः ॥ ४०६ ॥

वामतोऽयं वटेनाध्वा, विदर्भामुपतिष्ठते । दक्षिणेन पुनः स्मेरैः, किंशुकैः कोशलां पुरीम् ॥४०७॥
देवि! तत्र व्रजेर्यत्र, कुत्रापि प्रतिभाति ते । अहं तु खलु न क्वापि, मुखं दर्शयितुं क्षमः ॥४०८॥

१ "मामकत्यागात्र केयं तव" इति प्रतिपक्षपाठः । २ (निगडः) वन्धनशृङ्खलेति यावत् ।

वर्णावलिं लिखित्वेति, चचाल वलिताननः । पश्यन् भैमीं तथा सुप्तां, मन्दं मन्दं रुदन्नलः ॥ ४०९ ॥ पुनर्व्यावृत्य वैदर्भी—मुखमालोक्य निर्भरम् । जगाद दैवदुष्कर्म—विद्धमर्मा महीपतिः ॥ ४१० ॥ हा विधे ! विहितेयं चे-दीदृग्विश्वाति-शायिनी । तत्किमेतावतीं दीना—मवस्थां लम्भिता त्वया ? ॥ ४११ ॥ नान्योऽपि स्वयमारोप्य, छिनत्ति बदरीमपि । फलिताशेषसंकल्पां, किं पुनः कल्पवल्लरीम् ? ॥ ४१२ ॥ यदि वा जड एवासि, मन्येऽम्भोजनिवासतः । तेनेन्दुमपि निर्माय, कदर्थयसि राहुणा ॥४१३॥ मम विज्ञापनां सर्वाः, श्रृण्वन्तु वनदेवताः । दुर्बुद्धिविधिवद्देव्या—मस्यां मा भूत निर्दयाः ॥४१४॥ तथा कुरुत केनापि, यथोपद्रयते न हि । मार्गं च विन्दति प्रात—रसौ स्वजनवेश्मनः ॥ ४१५ ॥ इत्युदीर्य मुहुर्जायां, पश्यन्नावृत्तकन्धरः । गच्छति स्म नलस्ताव—द्यावदागाददृश्यताम् ॥ ४१६ ॥ वन्यसत्त्वोद्भवः शङ्के, स्यादस्याः कोऽप्युपद्रवः । तल्लतावृत एवैतां, रक्षाम्येकाङ्गशायिनीम् ॥ ४१७ ॥ प्रबोधसमये प्रात—र्गमिष्यामि यथारुचि । गच्छत्वेषाऽपि केनापि, मदावेदितयोः पथोः ॥ ४१८ ॥ इत्यालोच्य निवृत्त्याशु, नलस्तस्थौ लतान्तरे । तथाभूतां च तां दृष्ट्वा, पुनरन्तरचिन्तयत् ॥ ४१९ ॥ अहो नलस्य शुद्धान्त—मसूर्यपश्यमीदृशम् । वासवेश्मनि शेते च, कीदृश्युच्चूलशालिनी ॥ ४२० ॥ हा दुरात्मन्नल ! क्षिप्रं, कथं यासि न भस्मसात् । इत्याद्यालोचयत्यस्मिन्, विरराम विभावरी ॥४२१॥ निलीनमिव तत्कालं, नलस्य मनसोऽन्तरे । सर्वतोऽपि दिगन्तेषु, तुच्छत्वमगमत् तमः ॥४२२॥ उदेति न रविर्याव—द्यावज्जागर्ति न प्रिया । साश्रुनेत्रो नलस्ताव—ज्जगाम त्वरितक्रमम् ॥ ४२३ ॥

१ 'नाह्नो' प्रतिद्वय० । २ मूढदैववत् ।

गच्छन्नच्छिन्नसंचार-मथ तस्मिन् वनान्तरे । धूमस्तोमं स वर्द्धिष्णुं, विन्ध्यस्पर्द्धिनमैक्षत ॥४२४॥ भीमास्तदन्तरुत्तस्थु-
र्ज्वालाः कालानलोपमाः । निर्गता स्वर्गभूमिया, गर्भरत्नप्रभा इव ॥ ४२५ ॥ क्षणेन व्यानशे सर्वं, वनं तद्दावपावकः । मानसं
कोशलाभर्तु-रिव शोकहुताशनः ॥ ४२६ ॥ जन्तूनां दह्यमानाना-माक्रन्दानुपकर्णयन् । मानुषीं गिरमश्रौषी-न्नलो गच्छंस्त-
दन्तिकम् ॥ ४२७ ॥ ऐक्ष्वाक ! नलभूपाल !, जगत्यार्तैकबान्धव ! । दावाग्निदह्यमानाङ्गं, महात्मन्रक्ष रक्ष माम् ॥ ४२८ ॥
तया वाचाऽनुसारेण, नलः प्रहितलोचनः । वल्लीवलयमध्यस्थं, ददर्शैकं भुजङ्गमम् ॥ ४२९ ॥ तं सोऽभ्यधाद्भुजङ्गेन्द्र !,
मम नामा-न्वयौ कथम् । जानासि त्वं? कथं चेत्थं, ब्रूषे मनुजभाषया ? ॥४३०॥ आह साहिर्मनुष्योऽह-मभूवं पूर्वजन्मनि ।
नरसंस्काराद्भवेऽप्यस्मिन्, मानुषी मे सरस्वती ॥ ४३१ ॥ निर्बाधमवधिज्ञान-मप्यस्ति मम भूपते ! । करस्थमिव पश्यामि,
तेन विश्वं चराचरम् ॥४३२॥ तत्त्रायस्व जगत्त्राण-स्त्व ! धूमध्वजादितः । त्वां प्रत्युपकरिष्यामि, निरपेक्षमपि क्षणात् ॥४३३॥
तेनेत्युक्ते भुजङ्गेन, नलः कारुण्यनीरधिः । अन्तर्लतावितानं स्व-मुत्तरीयमलम्बयत् ॥ ४३४ ॥ स भोगी वपुषा वृक्षं, वल्लीव
तदावेष्टयत् । उदपानादरत्रेव-चकर्षोर्ध्वं च नैषधिः ॥ ४३५ ॥ भूतले तृणकाष्ठादि-रचिते तममुञ्चत । यावदुर्वीपतिस्ताव-
द्दश्यते स करेऽङ्गुली ॥ ४३६ ॥ नलः क्षोणीतले पाणि-माच्छोट्य तमपातयत् । विषादाच्चाब्रवीत् सेयं, तव प्रत्युपकारिता
॥ ४३७ ॥ गजं हन्यान्मृगारिस्तं, य एवोन्मीलयेद्दृशौ । य एव पाययेत् क्षीरं, त्वज्ञात्याऽपि स दश्यते ॥ ४३८ ॥ इत्यादि
निगदन्नेव, तद्विषविप्लवात् । अधिज्यधनुराकारं, कलयामासिवान्नलः ॥ ४३९ ॥ तया कुब्जतयाऽत्यन्तं, राजा वैराग्य-

१ पृथिव्याः । २ रज्जुवत् ।

मीयिवान् । जीवितव्यानपेक्षोऽभू-द्व्रतादानमनाः क्षणात् ॥ ४४० ॥

ततोऽपश्यदहिस्थाने, नलः कन्दलितप्रभम् । तमःपद इवोद्योतं, दिव्यमूर्तिं पुरः सुरम् ॥ ४४१ ॥ जल्पति स्म स भूपालं, कथं वत्स ! विषीदसि ? । हितैकबद्धहेवाक-स्तवास्मि निषधः पिता ॥४४२॥ तदा व्रतमुरीकृत्य, तपस्तप्त्वाऽतिदुस्तरम् । कृतानशनकर्माऽन्ते, ब्रह्मलोके सुरोऽभवम् ॥ ४४३ ॥ परिज्ञायावधिज्ञाना-दिमं ते व्यसनोदयम् । आयातोऽहमिदं सर्वं, मम मायाविजृम्भितम् ॥ ४४४ ॥ तदात्मनीनमेवैत-द्विद्धि वैरूप्यमात्मनः । अनेनानुपलक्ष्यं त्वां, नोपद्रोष्यन्ति शत्रवः ॥ ४४५ ॥ अधुनैव व्रतादान-स्पृहामपि हि मा कृथाः । भोक्तव्यमेव तेऽद्यापि, तावदेवावनीतलम् ॥ ४४६ ॥ यदा वत्स ! परिव्रज्या-समयस्ते भविष्यति । ज्ञापयिष्यामि दैवज्ञ, इवाभ्येत्य स्वयं तव ॥ ४४७ ॥ फलं तु श्रीफलस्येद-मिमां चापि करण्डिकाम् । गृहाण द्वयमप्येतत्, कामं रक्षेः प्रयत्नतः ॥ ४४८ ॥ यदा च रूपमास्थातु-मात्मीयं ते स्पृहा भवेत् । निर्भिद्य श्रीफलं दिव्य-दुकूलानि तदाऽऽकृपेः ॥ ४४९ ॥ अस्याः करण्डिकायाश्च, हाराद्याभरणोत्करम् । क्षणादमीभिरामुक्तै-र्निजं रूपमवाप्स्यसि ॥ ४५० ॥ ( युग्मम् ) इत्युक्त्वा तद्द्वयं देवः, समर्प्य पुनरब्रवीत् । किं भ्राम्यसि वने ? स्थानं, नयामि त्वां यियासितम् ॥ ४५१ ॥

नलोऽप्युवाच मां तात, सुंसुमारपुरे नय । इति जल्पन् स्वमैक्षिष्ट, तस्य द्वारि पुरस्य सः ॥ ४५२ ॥ यावच्चचाल विस्मेर-मानसः पुरसंमुखम् । तावद्बहलमश्रौषी-ज्जनकोलाहलं नलः ॥ ४५३ ॥ पलायध्वं पलायध्वं, सर्वतस्त्वरितं जनाः । क्षणादित्यश्ववाराणां, ध्वनिं शुश्राव नैषधिः ॥४५४॥ किमेतदिति संचिन्त्य, यावत् तस्थौ कचिन्नलः । तावन्निर्मुक्तदृग्मार्गः,

पितृदेव-
कृतो नल-
स्य रूप-
परावर्तः,
सुंसुमार-
पुरे गमनं
च ॥

प्रतिकारैरपि द्रुतम् ॥ ४५५ ॥ तिर्यक्प्रवृत्तदानाम्भः–स्नपितप्रतिमानकः । स्वच्छायायामपि क्रोध–क्रूरः परिणमन्मुहुः ॥ ४५६ ॥ नभस्वन्तमपि स्वैरं, विधुन्वन्नासनस्पृशम् । मुहुर्विहङ्गमस्यापि, धावन् विस्फुरतः पुरः ॥ ४५७ ॥ मठा-ट्टालक-शाला-द्रु–मन्दिरादीनि पातयन् । कल्पान्तमातरिश्वेव, भञ्जन्नुद्यानपादपान् ॥४५८॥ प्राकारगोपुरारूढै–र्वीक्षितश्चकितैर्जनैः । निशिताऽग्रकरैः पश्चा–द्धारिकैः परिवारितः ॥ ४५९ ॥ दत्तझम्पान् द्रुमान्तेभ्यो, हिंसन् हस्तिपकाग्रणीन् । अग्रतः कृष्टवा-लस्त्री–वृन्दैः कौतुकिभिर्नरैः ॥ ४६० ॥ पूत्कारसीकराऽऽसार–क्लृप्तझञ्झासमीरणः । धूननोद्धूतसिन्दूर–पूरपिञ्जरिताम्बरः ॥ ४६१ ॥ सप्तस्रोतःस्रवद्दान–पङ्किलीकृतभूतलः । गतो मातङ्गरूपेण, मर्मवर्तीव मूर्तताम् ॥ ४६२ ॥ दूरतो दधिपर्णेन, राजाऽनुगतपद्धतिः । नलेनोन्मूलितालानः, कोऽप्यदृश्यत कुञ्जरः ॥ ४६३ ॥ ( नवभिः कुलकम् ) तं कस्मिन्नपि नागेन्द्रं, वशीकर्तुमनीश्वरे । ऊर्ध्वीकृत्य भुजं राजा, व्याजहारेति भारतीम् ॥ ४६४ ॥ वारणेन्द्रमिमं व्यालं, यः कोऽपि कुरुते वशे । अवश्यं तस्य वश्यत्वं, लक्ष्मीमेतां नयाम्यहम् ॥ ४६५ ॥

इत्युक्तवति भूपाले, नलः कल्लोलिविक्रमः । अस्पृशन्निव पादाभ्यां, भुवं वेगादधावत ॥ ४६६ ॥ निवर्तस्व निवर्तस्व, कुब्ज ! माऽविश माऽविश । इति लोकैर्निषिद्धोऽपि, नलः सिंह इवाविशत् ॥ ४६७ ॥ नलो नागमभाषिष्ट, लेष्टुना प्रणिहत्य तम् । रे ! रे ! मातङ्ग एवासि, स्त्री-बालादीनुपद्रवन् ॥ ४६८ ॥ तदेतत्सर्वमुत्सृज्य, ममैवानुपदीभव । अयमग्रेऽस्मि ते दान–कृष्णसर्पदुर्ग्रहः ॥ ४६९ ॥ इत्युक्तः सोऽप्यधाविष्ट, क्रोधादन्धंभविष्णुदृक् । साक्षाद्विन्ध्य इवोत्पात–वातैर्धूतो नलं

१ हस्तिपकैः । २ प्रतिमानः–गण्डस्थलाधोभागः । ३ कल्पान्तवायुः । ४ यम इव । ५ मृत्पिण्डेन । ६ अवग्रह.–प्रतिबन्धः ।

नलेन गजो वशीकृतः॥

प्रति ॥ ४७० ॥ धावञ्जातु भ्रमञ्जातु, लेष्टुभिर्जातु ताडयन् । पतञ्जातु लुठञ्जातु, वचोभिर्जातु भर्त्सयन् ॥ ४७१ ॥ जातु पुच्छान्तमालम्ब्य, चक्रवद्भ्रमयन्मुहुः । नलस्तैस्तैः प्रकारैस्तं, खेदयामास दन्तिनम् ॥४७२॥ (युग्मम्) हर्षकोलाहलैर्जातु, जातु हाहारवोत्करैः । जनानां पश्यतामासी–च्छब्दाद्वैतं पुरे तदा ॥४७३॥ खिन्नस्यापि भृशं कोपात्, कुञ्जरस्यानुधावतः । क्षिपति स्म पुरः क्षिप्र–मुत्तरीयपटं नलः ॥ ४७४ ॥ पपात पुरतो रूप–मित्यस्मिन् परिणामिनः । नताग्रवपुषः स्कन्ध–मास्कन्द-द्दन्तिनो नलः ॥ ४७५ ॥ ततः कण्ठवरत्रायां, प्रक्षिप्य चरणौ नलः । आस्फालयन् करैः कुम्भे, कुञ्जरं तमसान्त्वयत् ॥ ४७६ ॥ पश्चादेत्य प्रतीकारै–रादायोल्लालितां शृणिम् । नलो दन्तावलेन्द्रं त–मन्वालानमचालयत् ॥ ४७७ ॥

मायाकुब्जः सुरः कोऽपि, किमेष भुवमागतः ? । यश्चक्रे हस्तिमल्लस्य, प्रतिमल्लमिमं वशे ॥ ४७८ ॥ इत्यन्तर्विस्मितो राजा, स्वयमारुह्य गोपुरम् । रत्नदाम न्यधात् कण्ठे, तस्याधस्तादुपेयुषः ॥ ४७९ ॥ कुब्जावदानमेदस्वि–हर्षबाष्पायितेक्षणाः । बभूवुर्जयशब्दैक–मुखराः सर्वतः प्रजाः ॥ ४८० ॥ श्रमानुत्तानमालाने, गजमाकलयन्नलः । सर्वपौरजनानां तु, प्रमोदमधिमानसम् ॥ ४८१ ॥ ततः सलीलमुत्तीर्य, कुब्जः कक्षावरत्रया । अभ्यर्णे दधिपर्णस्य, वयस्यवदुपाविशत् ॥ ४८२ ॥ अलंकारान् दुकूलानि, तुष्टस्तस्मै ददौ नृपः । स्वान्तिकेऽस्थापयच्चैनं, गौरवेण गरीयसा ॥ ४८३ ॥ अभ्यधात् सविधासीनं, तमन्येद्युर्महीपतिः । कलेयं गजशिक्षायां, कुब्ज ! कौतस्कुती तव ? ॥४८४॥ कश्चासि ? क च वास्तव्यः ?, कुत्र चाभिजनस्तव ? । कला नियतमन्याऽपि, काऽपि संभाव्यते त्वयि ॥ ४८५ ॥ कुब्जेनाभिदधे राज–ञ्जन्मभूर्मम कोशला । सर्वः स्वजनवर्गोऽपि, शश्व-

१ श्रमेण नम्रमुखम् । २ समीपे स्थितम् ।

मयैव नतेने ॥ ४८६ ॥ हुण्डिकः सूपकारोऽस्मि, नलस्य पृथिवीपतेः । स एव हि कलाः सर्वाः, प्रीतिपात्रे मयि न्यधात्
॥ ४८७ ॥ किं न वेत्ति स वा सूर्य-पाकां रसवतीं भुवि । अहं वा तत्पदोपास्ति-प्रसादाद्वेद्मि नापरः ॥ ४८८ ॥ सोऽधुना
कूबरे बन्धौ, क्षोणिं मंक्षु दुरोदरे । हारयित्वा सदारोऽपि, जगाम जनवद्वनम् ॥ ४८९ ॥ विपेदे तत्र स त्वां तु, कलानिलय-
मागमम् । श्रितोऽहमविशेषज्ञं, मायिनं न तु कूबरम् ॥४९०॥ आकर्ण्य दधिपर्णस्तां, नलमृत्युकथामथ । रुरोद प्रेतकृत्यं
न, चकार सपरिच्छदः ॥ ४९१ ॥
ज्ञातुमिन् सूर्यपाकायां, रसवत्यां कुतूहली । हुण्डिकाय नृपः शालि-प्रमुखं सर्वमार्पयत् ॥४९२॥ स स्थालीरातपे न्यस्य,
वियां सौरसतीं स्मरन् । चक्रे रसवतीं दिव्या-मशेषरसपेशलाम् ॥ ४९३ ॥ तया च भोजयामास, राजानं सानुजीविनम् ।
प्रीतश्चास्मै ददौ सोऽपि, वस्त्रालंकरणादिकम् ॥ ४९४ ॥ लक्षमेकं च टङ्कानां, ग्रामपञ्चशतीमपि । सर्वमेतद्विना ग्रामान्,
हुण्डिकोऽप्यग्रहीत्तदा ॥ ४९५ ॥ ततो भूयोऽपि भूपालः, प्रीतिमांस्तमभाषत । कुब्ज ! सर्वं ददे तत्ते, यदन्यदपि वाञ्छसि
॥ ४९६ ॥ इत्युक्तः क्षोणिपालेन, कुब्जः स्मेरेक्षणोऽवदत् । राजन् ! यावद्भुवः खण्डं, भुजादण्डः प्रशास्ति ते ॥४९७॥ द्यूतं
मद्यं मृगव्यं च, तावति प्रतिषिध्यताम् । इत्यस्य वचसा सर्वं, तच्चकार धराधवः ॥ ४९८ ॥ (युग्मम्) तत्रैव परमं राज-
प्रसादमभिजग्मुषः । वसतस्तस्य भूयांसि, हायनान्यतिचक्रमुः ॥ ४९९ ॥
परेद्यवि सरस्तीरे, द्रुमच्छायां निषेदुषः । कुब्जस्याभ्यर्णमभ्येत्य, विप्रः कश्चिदुपाविशत् ॥ ५०० ॥ सोऽथ सर्वाङ्गमा-

१ सूर्यगन्तिर्नाम ।

१८

लोक्य, कुब्जमाकूणितेक्षणः । जगौ श्लोकद्वयीमेतां, नलनिन्दाविशारदाम् ॥ ५०१ ॥

**निर्घृणानामलज्जानां, निःसत्त्वानां दुरात्मनाम् । नलस्यैव धुरीणत्वं, सुतां तत्याज यः प्रियाम् ५०२**

**सुप्तामेकाकिनीं स्निग्धां, विश्वस्तां दयितां सतीम् । गतः किं न वने त्यक्तु-काम एव न भस्मसात्? ५०३**

इत्युपश्रुत्य तद्गीतं, कुब्जः पर्यश्रुलोचनः । तमभ्यधादहो रक्त-कण्ठोऽसि द्विजसत्तम ! ॥ ५०४ ॥ गीतेनानेन ते काम-मुद्यत्करुणवीचिना । ममाप्येताः कृताः पश्य, चक्षुषोरश्रुविप्रुषः ॥ ५०५ ॥ ततः कथय कोऽसि त्वं ?, कुतश्चागम्यतेऽधुना ? । दुर्धियश्च नलस्याय-मुदन्तः क्व त्वया श्रुतः ? ॥५०६॥ सोऽप्याख्यत् कुशलाख्योऽस्मि, कुण्डिनाच्चाहमागमम् । तत्रा-श्रौषमिमां सर्वां, नलभूमीपतेः कथाम् ॥५०७॥ कुब्जोऽभ्यधात्ततो विप्र-द्विकाशविशदे दृशौ । श्रुता ब्रह्मन् ! पुराणीयं, भैमी-त्यागावधिः कथा ॥ ५०८ ॥ ततः परं यदातेने, भीमभूर्विरहातुरा । तत्स्वरूपं समस्तं मे, निवेदयितुमर्हसि ॥ ५०९ ॥

जगादाथ द्विजो भैमीं, परित्यज्य गते नले । निशि प्रभातप्रायायां, स्वप्नमेवं ददर्श सा ॥ ५१० ॥ यदहं पत्रलं बद्ध-मञ्जरीकं सपट्पदम् । फलितं चूतमारूढा, तत्फलान्यादमिच्छया ॥५११॥ तं चाभ्येत्य करी कश्चि-दकस्मादुदमूलयत् । अहं च तत्परिभ्रष्टा, पतिताऽस्मि भुवस्तले ॥ ५१२ ॥ ततो जागरिता प्रात-र्दृष्ट्वा प्रियमन्तिके । दिक्षु चक्षुर्निचिक्षेप, भीमभूर्भयविक्लवा ॥ ५१३ ॥ अचिन्तयच्च मे दैव-मद्यापि प्रातिलोमिकम् । व्यालाकीर्णे वनान्तेऽस्मिन्, मां प्रियोऽपि यदत्यजत् ॥ ५१४ ॥ यद्वा सलिलमानेतु-मास्यक्षालनहेतवे । प्रयातः सरसि क्वापि, प्राणेशो मे भविष्यति ॥ ५१५ ॥ रन्तुं

दधिपर्णसमीपे तस्थुषो नलस्य द्विजेन कथितो दमयन्तीवृत्तान्तः।

विद्याधरी काचित्, काऽपि वा वनदेवता । सुभगं तमपाहार्षीत्, सोऽन्यथा न जहाति माम् ॥ ५१६ ॥ नर्मणा वा किम-
न्येन, व्रतत्यन्तरितः क्वचित् । तत्तमुत्थाय पश्यामि, क्व गन्ता स ममाग्रतः ? ॥ ५१७ ॥ इत्युत्थाय प्रतिक्षोणी-रुहमुद्वी-
क्षणादपि । निजं कान्तमपश्यन्ती, रुदत्युच्चैर्जगाद सा ॥ ५१८ ॥ एह्येहि त्वरितं नाथ !, याति मे हृदयं द्विधा । चिरं न
खलु नर्मापि, शर्मदं भवति क्वचित् ॥ ५१९ ॥ इत्याद्यैर्वचनैः कान्ते, दृग्गोचरमनीयुषि[2] । विदर्भदुहितेत्यन्तः, स्वमस्यार्थे
व्यचारयत् ॥५२०॥ यश्चूतो मत्प्रियः सोऽयं, राज्यं पुष्पफलादिकम् । तद्भोगश्च फलास्वादः, षट्पदाश्च परिच्छदः ॥५२१॥
मूलादुन्मूलनं यच्च, चूतस्य वनदन्तिना । मदीयप्रेयसो राज्या-द्भ्रंशनं कूबरेण तत् ॥ ५२२ ॥ यच्चाहं पतिता चूतात्, प्रियेण
विरहः स मे । तत्स्वप्नेनामुना नूनं, वल्लभो दुर्लभोऽधुना ॥ ५२३ ॥ इत्यालोच्य ययौ मूर्च्छां, दुःखसंभारनिर्भरा । उच्चैश्च
प्राप्तचैतन्या, रुरोद व्यलपच्च सा ॥ ५२४ ॥ हा ! नाथ ! किं तवाभूवं, हताऽहं भारहेतवे ? । स्थूले अपि निजे शृङ्गे, भाराय
वृषभस्य किम् ? ॥ ५२५ ॥ न दृष्टः क्वाप्ययं पन्थाः, सात्त्विकानां विवेकिनाम् । यदीदृशि वने पाणि-गृहीती त्यज्यते प्रिया
॥ ५२६ ॥ नैष ते यदि वा दोषो, मत्कर्मैवापराध्यति । भवेन्मतिविपर्यास-स्त्वादृशामपि किं क्वचित् ? ॥ ५२७ ॥ जल्पं
जल्पमितिप्रायं, तारं पूत्कुर्वती मुहुः । अरोदयद्वने भैमी, श्वापदान् पादपानपि ॥ ५२८ ॥ पटप्रान्ते चिरात् कान्य-प्यक्ष-
राणि निरीक्ष्य सा । वाचयामास सानन्दं, दध्यौ चान्तःस्मिताशया ॥ ५२९ ॥ दिष्ट्याऽद्याप्यस्मि तच्चेतः-केतकीकानना-
लिनी । ददौ मे गमनाऽऽदेशं, यत्स्वयं लिखिताक्षरैः ॥ ५३० ॥ तन्न्यग्रोधाध्वनाऽनेन, पितुर्वेश्म व्रजाम्यहम् । नारीणां

१ हास्येन । २ अप्राप्ते सति ।

पतिशून्यानां, पितैव हृदयार्तिहृत् ॥ ५३१ ॥ पतिं विना तु तद्गेहे, वसन्त्या निस्तनूरुहः । साध्व्या अपि कुरङ्गाक्ष्याः, पराभूतिः पदे पदे ॥ ५३२ ॥

इत्यालोच्य पितुर्गेहं, प्रत्यचालीन्नलप्रिया । कांदिशीका दृशौ दिक्षु, प्रक्षिपन्ती मुहुर्मुहुः ॥ ५३३ ॥ दर्भसूचिव्यथोद्भूत-शोणितारुणितक्रमा । पाटितोभयजङ्घा च, क्षुद्रकैर्बदरीवणैः ॥ ५३४ ॥ मलीमसांशुका स्वेद-मेदुरा रेणुरूषिता । । विकीर्णकुन्तला वक्त्र-मभितस्तरलेक्षणा ॥५३५॥ प्रेयोविरहपीडाभि-र्निगीर्णनिखिलव्यथा । दरिद्रस्त्रीव सा मार्गे, त्वरितं त्वरितं ययौ ॥ ५३६ ॥ ( त्रिभिर्विशेषकम् ) जाङ्गुलीमिव[3] भोगीन्द्राः, सिंहीमिव वनद्विपाः । वह्निज्वालामिव व्याघ्रा-स्तां सतीं वीक्ष्य दुद्रुवुः ॥ ५३७ ॥ यान्ती चाचिन्तयद्यावत्, सार्थः कश्चिद्भवेद्यदि । तेन साकमरण्यस्य, पारमस्य व्रजाम्यहम् ॥ ५३८ ॥ तावत्पुरः पैराभोग-भासुरं लोकसंकुलम् । संकटं शकटव्रातैः, सार्थं कंचिदुदैक्षत ॥ ५३९ ॥ ( युग्मम् ) तमासाद्याभवद्भैमी, यावत् स्वस्थमना मनाक् । तावत् स रुरुधे हक्का-मुखरैर्दस्युभिः क्षणात् ॥५४०॥ सा तानूर्ध्वभुजाऽवादी-दरे रे! यात तस्कराः! । आरम्भोऽस्मिन् मया त्राते, सार्थेऽनर्थफलो हि वः ॥५४१॥ तामवज्ञाय भूतात्ता-मिव वातकिनीमिव । यदा लुण्टयितुं सार्थ-स्तैर्बलादुपचक्रमे ॥ ५४२ ॥ ध्वस्तद्विषदहंकारान्, हुंकारान् साऽमुचत्तदा । सिंहीरवैरिवामीभि-स्ते कुरङ्गा इवानशन् ॥ ५४३ ॥ ततो नः पात्यसौ नूनं, काऽप्यस्मत्कुलदेवता । इति सार्थपतिर्भक्त्या, तां ससार्थजनोऽनमत् ॥५४४॥ पृच्छति स्म च

१ ' निवसन्त्यास्तनूरुहः ' प्रतिद्वय० । २ निगीर्णा-अन्तर्भाविता निखिला व्यथा यया सा । ३ जाङ्गुली विषविद्या । ४ ' पुराभोग० ' प्रतित्रय० ।

कल्याणि !, काऽसि त्वं महिमैकभूः ? । अस्मिन्नेकाकिनी किं वा, वने भ्राम्यसि निर्जने ? ॥ ५४५ ॥ ततोऽस्मै बान्ध-
वागेव, भाषत्या दैन्यशून्यया । भीमभूरानलद्यूता-न्निजामकथयत् कथाम् ॥ ५४६ ॥ रक्षणान्नलपत्नीत्व-ज्ञानाच्चैष
विशेषतः । प्रीतिमन्तर्वहन् भैमीं, निन्ये पटकुटीं निजाम् ॥५४७॥ स्नान-भुक्त्यादिना तत्र, हृतश्रान्तिमधारयत् । स तैस्तै-
रुपचारैस्ता-माराध्यद्देवतामिव ॥ ५४८ ॥
अथ प्रवृत्ते प्रावृ-ड्गर्जामुरजनिस्वनैः । जनेभ्यः शिखिनां नृत्तं, दर्शयन्ती वने वने ॥ ५४९ ॥ ततो मुशलधाराभिः,
पुष्करावर्तकोपमाः । विगमरहितं मेघा-स्त्रिरात्रं ववृषुस्तराम् ॥ ५५० ॥ तदा शकटसंचार-भङ्गमङ्गरितोर्जितः । चिक्रीड
विपिने पङ्कः, क्षोभयन् पथिकव्रजान् ॥ ५५१ ॥ चिरावस्थानमाशङ्क्य, सार्थस्य नलवल्लभा । केनाप्यविदिता वृष्टि-पर्यन्ते
निर्ययौ ततः ॥ ५५२ ॥ यान्ती च पुरतो रौद्र-मञ्जनाचलसोदरम् । फेत्कारनिर्यदास्योल्का-निरस्तसतडिद्धनम् ॥५५३॥
नरास्थिभूषणं दंष्ट्रा-करालं कर्त्रिकाकरम् । साक्षादिव यमं भैमी, कंचिदैक्षिष्ट राक्षसम् ॥ ५५४ ॥ ( युग्मम् ) भाषते स्म
स तां भीति-कल्लोलतरलेक्षणाम् । क यासि ? भक्षयिष्यामि, त्वामेष क्षुधितश्चिरात् ॥५५५॥ ततः सौष्ठवमालम्ब्य, जगाद
नलगेहिनी । निशम्य मद्गिरं कुर्या-स्तुभ्यं यदिह रोचते ॥ ५५६ ॥ न नाम परमार्हत्याः, किंचिन्मृत्युभयं मम । "मृत्योर्हि
संभृतानेक-सुकृतो नाभिशङ्कते" ॥५५७॥ किं तु मामनिशं पूत-मानसां परमेष्ठिभिः । पराङ्गनां स्पृशन्नेव, भद्र ! यास्यसि
भस्मसात् ॥ ५५८ ॥ राक्षसस्तामवष्टम्भ-मयीमाकर्ण्य तद्गिरम् । ऊचे कल्याणि ! तुष्टोऽस्मि, सत्त्वेनैव तवामुना ॥ ५५९ ॥

१ 'स्नाना०' प्रतिद्वय० । २ 'माराध्यन् देव०' प्रतित्रय० । ३ उल्का-तेजोविशेषः ।

ब्रूहि तत्किमिदानीं ते, मनोऽभीष्टं करोम्यहम् । निशम्येति वचस्तस्य, कुण्डिनेशसुताऽवदत् ॥५६०॥ यदि तुष्टोऽसि मे सत्यं, राक्षस ! व्यन्तरेश्वर ! । तदाचक्ष्व कदा भावी, पत्या मम समागमः ? ॥५६१॥ विलोक्यावधिना सद्य-स्तामवोचन्निशाचरः । अतिक्रम्य परित्याग-दिनाद्द्वादशहायनीम् ॥ ५६२ ॥ पितृधाम्नि स्थितायास्ते, भविता पतिसंगमः । तदादिशसि चेत्त्वां, तत्र वेगान्नयाम्यहम् ॥ ५६३ ॥ ( युग्मम् ) अथोचे भीमभूर्भर्तृ-समागमनिवेदनात् । किं नाम नोपचक्रे मे, त्वया दाक्षिण्यसिन्धुना ? ॥ ५६४ ॥ किं त्वन्यपुरुषैः सार्कं, क्वचिन्नैव व्रजाम्यहम् । तद्गच्छ स्वस्ति ते भूया-द्धर्मगृह्यो भवेश्चिरम् ॥५६५॥ ततः प्रेङ्खत्प्रभाजाल-मालोलमणिकुण्डलम् । दर्शयित्वा निजं रूपं, तस्यै रात्रिंचरोऽगमत् ॥ ५६६ ॥

अथ द्वादशवर्षान्ते, विज्ञाय पतिसंगमम् । भैमी सतीव्रतोत्तंसा-नग्रहीदित्यभिग्रहान् ॥ ५६७ ॥ रक्तवासांसि ताम्बूलं, कुसुमाभरणानि च । विकृतीश्च ग्रहीष्येऽह-मर्वाग्न प्रियदर्शनात् ॥ ५६८ ॥ सा चलन्ती पुरो नाना-फलितद्रुमशालिनीम् । चेतःस्वास्थ्यकरीं प्राप, कंदरां कस्यचिद्गिरेः ॥५६९॥ तत्राम्भोदागमं नेतु-मवस्थानं चकार सा । प्रतिमां मृन्मयीं शान्ते-स्तत्कोणे च न्यवीविशत् ॥ ५७० ॥ स्वयंगलितपुष्पैस्ता-मर्चयन्त्यनुवासरम् । धर्मध्यानामृताम्भोधि-स्नानसानन्दमानसा ॥ ५७१ ॥ चतुर्थादि तपः शश्व-द्वितन्वाना निरत्ययम् । कुर्वाणा पारणां वृक्ष-फलैः स्वरसपातिभिः ॥ ५७२ ॥ एकाकिन्यपि निर्भीका, स्मरन्ती चाघमर्षणम्[1] । परमेष्ठिनमस्कार-मन्त्रं सा कालमत्यगात् ॥ ५७३ ॥ ( त्रिभिर्विशेषकम् )

सोऽथ सार्थपतिः सार्थे, तामपश्यन्नितस्ततः । मा स्म भूत् क्वचिदक्षेम-मित्यानुपदिकोऽभवत् ॥ ५७४ ॥ कंदरां तां

१ पापनाशनम् ।

क्रमादेत्य, भैमीं कुशलशालिनीम् । अर्चयन्तीं जिनस्यार्चां, स निध्याय दधौ मुदम् ॥ ५७५ ॥ नत्वा चोपाविशत् पार्श्वे, भीमजाऽपि समाप्य ताम् । देवार्चां स्वागतप्रश्न-पूर्वकं तमवार्तयत् ॥५७६॥ सोऽथ पप्रच्छ तां कस्य, देवस्यार्चेयमर्च्यते ? । साऽपि शान्तिजिनेशस्य, षोडशस्येत्यचीकथत् ॥५७७॥ आकर्ण्यैतां तयोर्वाच-मन्योन्यालापशालिनीम् । आसन्नाश्रमवास्तव्या-स्तत्रागान्ति स्म तापसाः ॥ ५७८ ॥ सार्थेशाय ततो भैमी, तेषु संनिधिवर्तिषु । विशुद्धमार्हतं धर्म-महिंसाद्यमुपादिशत् ॥ ५७९ ॥ सोऽप्युन्मीलन्मनोभाव-त्रुट्यत्कर्मततिस्ततः । भैमीमेव गुरूकृत्य, तं धर्मं प्रत्यपद्यत ॥५८०॥ ऊचे चाहं पुरा नाम्ना, वसन्तोऽस्म्यधुना पुनः । मत्यीकृतस्त्वया धर्म-तिलकस्यास्य सौरभैः ॥५८१॥ तत्रान्तरे च धाराभिः, सगोत्राभिः शरोत्करैः । वर्षितुं कलितोत्कर्ष-मारेभे स्तनयित्नुभिः ॥५८२॥ ताभिरम्भोदधाराभि-राहतास्ते तपस्विनः । वञ्चयामः पयः कैन-दित्यभूवन् भयाकुलाः ॥५८३॥ ततो मा भैष्ट मा भैष्ट, तापसा ! इति वादिनी । कुण्डिनेशात्मजा कुण्डं, यष्ट्या तान् परितोऽकरोत् ॥५८४॥ उच्चैरूचे च यद्यस्मि, सती यद्यस्मि चार्हती । ऋजुस्वान्ता च यद्यस्मि, मास्मिन् वर्षतु तद्घनः ॥५८५॥ तदर्थमभवत्तेऽथ, तापसा इत्यचिन्तयन् । काचिद्देवीयमन्यस्याः, शक्ति-रूपे न हीदृशी ॥५८६॥ वृष्टेरुपरमे धर्मं, निन्दन्तः स्वं दुरोज्झितम् । विस्मितास्ते तदाख्यातं, धर्मं सम्यक् प्रपेदिरे ॥ ५८७ ॥ पुरमुद्दामरश्रीकं, तत्र सार्थपतिर्न्यधात् । चैत्यं च शान्तिनाथस्य, काम्याकारमकारयत् ॥५८८॥ यतः पञ्च शतान्यस्मिन्, प्रत्यबुध्यन्त तापसाः । तेन ख्यातिमगाद्धात्र्यां, तत्तापसपुराख्यया ॥ ५८९ ॥ नैगमप्रमुखाः सर्वे, पुरुपार्थनिकेतने । तत्राभ्येत्य वसन्ति स्म, स्वैरमुच्चावचाः प्रजाः ॥५९०॥

१ लक्षा । २ मेघैः । ३ 'सर्वपु०' प्रतिद्वय० ।

स च सार्थपतिस्ते च, तापसाः सा च भीमसूः । प्रजास्ताश्चावसंस्तस्मि-न्नर्हद्धर्मपराश्चिरम् ॥ ५९१ ॥

अन्यदा जितमार्तण्ड-मण्डलद्युतिरैक्ष्यत । मध्यरात्रे शिरस्यद्रे-रुद्द्योतो नलकान्तया ॥ ५९२ ॥ उत्पतन्तः पतन्तश्च, तयाऽथ विहगा इव । विस्मयस्मेरमैक्ष्यन्त, सुरा-सुर-नभश्चराः ॥ ५९३ ॥ तत्संपातभवैः कोला-हलैर्जागरिताः क्षणात् । तानुत्पश्यद्दशः पौरा, अप्यपश्यन् सविस्मयाः ॥ ५९४ ॥ ततः सार्थपतिर्भैमी, ते च सर्वे तपस्विनः । पौरा अप्यखिलाः शैल-शिरस्यारुरुहुः क्षणात् ॥ ५९५ ॥ सिंहकेसरिणः साधो-र्नवकेवलसंपदः । कुर्वतो महिमानं ते, ददृशुः सुर-खेचरान् ॥५९६॥ ततः कन्दलितानन्दा, नत्वा केवलिनं पुरः । भैमी च सार्थवाहश्च, पौराश्च समुपाविशन् ॥ ५९७ ॥ तदानीं श्रीयशोभद्र-सूरयो गुरवो मुदा । तं केवलिनमानम्य, न्यविक्षन्त तदन्तिके ॥ ५९८ ॥ यथौचित्यमथासीने, जने सुर-नरादिके । कर्ममर्माविधं धर्म-देशनां केवली व्यधात् ॥ ५९९ ॥ संसारेऽस्मिन्न नित्यानि, जीवितं यौवनं श्रियः । सक्तैरेष्वेव हा मूढै-र्मानुषं जन्म हार्यते ॥ ६०० ॥ अस्य मानुष्यकल्पद्रोः, फलं मुक्तिसुखं परम् । उत्तिष्ठध्वं जनास्तस्मै, विमुच्य मृगतृष्णिकाम् ॥ ६०१ ॥ देशनान्ते पुनः स्माह, केवली संशयच्छिदे । तेषां तपस्विनां तस्य, सार्थेशस्य च धीमतः ॥ ६०२ ॥ यदाख्यदमयन्तीयं, धर्मतत्त्वमनुत्तरम् । तत्तथैव न कर्तव्यः, संशयोऽस्मिन्मनागपि ॥ ६०३ ॥ इयं हि धार्मिकी सत्य-पूतवाक् परमार्हती । सती सर्वजनीना च, जातु जल्पति नान्यथा ॥ ६०४ ॥ दस्युनाशादिरम्भोद-वृष्टिस्तम्भादिकोऽपि च । कस्को नाम प्रभावोऽस्याः, प्रत्यक्षोऽभून्न वः पुरा ॥ ६०५ ॥ अस्मिन्नपि वने व्याघ्र-भिल्ल-भल्लूकसंकुले । प्रभावपरिपीताप-न्निर्वि-

१ सर्वलोकहितकारिणी ।

शङ्का प्रगल्भगौ ॥ ६०६ ॥ इत्येतया मुनेस्तस्य, गिरा संवेगभाग्भृशम् । प्रीतो ययाचे विमल-मतिः कुलपतिर्व्रतम् ॥ ६०७॥ मुनिरूचे यशोभद्र-सूरिरेष महामतिः । दीक्षां दास्यति ते भद्र !, गुरुर्यस्मान्ममाप्यसौ ॥६०८॥ ततः कुलपतिर्भूयो, बभाषे स्मेरविस्मयः । गृहीते स्म कथं नाम, प्रव्रज्यां भगवन् ! भवान् ? ॥ ६०९ ॥

अथाभवत् केवली राजा, कोशलायां नलोऽभवत् । यदीया दमयन्तीयं दयिता पतिदेवता ॥६१०॥ कनीयान् कूबरो नाम, भ्रातुरस्तस्य विश्रुतः । शास्तीदानीं तदीयं यो, राज्यमुज्ज्ञागरोर्जितः ॥ ६११ ॥ तस्याहं तनयः सिंह-केसरी सांप्रतं नाहम् । राज्ञः केसरिणः शृङ्गा-पुरीशस्य यशस्विनः ॥ ६१२ ॥ पाणौकृत्य सुतां बन्धु-मतीं गच्छन् पुरीं निजाम् । रम्यामुपेत्य काननस्य, गिरेरध्यासिषि क्रमात् ॥ ६१३ ॥ ( युग्मम् ) भाग्यैरत्र यशोभद्र-सूरीनेतानवन्दिषि । चक्रुश्च देशनामेते, संसारानित्यतामयीम् ॥६१४॥ तदन्ते मे कियत् स्वामि-न्नायुरित्युदिता मया । ज्ञात्वा पञ्च दिनानीति, ज्ञानिनो मां बभाषिरे ॥ ६१५ ॥ ततो मृत्युभयादीन-मुखं संभ्रान्तलोचनम् । मां विलोक्याबदन्नेते, विश्ववात्सल्यवार्धयः ॥ ६१६ ॥ मा भैषीर्वत्स मा भैषी-र्व्रतमादत्स्व संप्रति । जन्म-मृत्युभयं हन्ति, कृतमेकाहमप्यदः ॥ ६१७ ॥ तदैवैतद्गिरा लक्ष्मीं, प्रियां बन्धुमतीमपि । हित्वाऽमीषां पदाम्भोज-मूलेऽहं जगृहे व्रतम् ॥ ६१८ ॥ एतदादेशतः शैल-शृङ्गमारूढवानिदम् । निहत्य घातिकर्माणि, केवलालोकमासदम् ॥ ६१९ ॥ इत्युक्त्वा मुत्रयन् योग-निरोधं स मुनीश्वरः । निरंशीकृत्य कर्माणि, जगाम परमं पदम् ॥ ६२० ॥ तत्कायस्याग्निसंस्कारं, पुण्यक्षेत्रे व्यधुः सुराः । व्रतं कुलपतिः पार्श्वे, यशोभद्रस्य चाग्रहीत् ॥ ६२१ ॥

२. पर्यन्त्यामध्या भूमिम् ।

वैदर्भीं याचमानां च, व्रतं स गुरुरब्रवीत् । त्वं भोगान् भोक्ष्यसेऽद्यापि, तद्दीक्षा ते न युज्यते ॥ ६२२ ॥

प्राग्भवे हि नलो राजा, मम्मणोऽभून्महीपतिः । त्वं तु वीरमती नाम, तस्याभूर्दयिता किल ॥ ६२३ ॥ युवाभ्यां जातु गच्छद्भ्यां, क्रीडया मृगयावने । सार्थेन सार्धमागच्छन्, संमुखं मुनिरैक्ष्यत ॥६२४॥ कोपादशकुनं सोऽय–मिति स्वैः पत्तिभिस्तदा । तं संग्राह्य निवृत्त्याशु, युवामागमतं गृहम् ॥ ६२५ ॥ कथंचिदपि विस्मृत्य, कोपमाकार्य तं मुनिम् । क्व गन्तासि? कुतश्चागा? इत्यवार्तयतं युवाम् ॥ ६२६ ॥ ततस्तद्गिरमाकर्ण्य, शमामृततरङ्गिताम् । सान्द्रानन्दं तमभ्यर्च्य, मुनिं व्यसृजतं युवाम् ॥ ६२७ ॥ युवाभ्यां यत्तदा रुद्धः, साधुर्द्वादशनाडिकाः । तेनायं विरहो जज्ञे, युवयोर्द्वादशाब्दिकः ॥ ६२८ ॥ वर्षस्य द्वादशस्यान्ते, तेन पत्या समेयुषी । पुनस्त्वं तादृशानेव, भोगान् वैदर्भि! भोक्ष्यसे ॥ ६२९ ॥ गतायामथ यामिन्यां, यशोभद्रगुरुर्गिरेः । उत्तीर्यालंकरोति स्म, तत्तापसपुरं पुरम् ॥६३०॥ शान्तेश्चैत्यं प्रतिष्ठाय, स तस्मिन् देशनाम्बुधिः । सम्यक्त्वारोपणं चक्रे, पौरलोकस्य कोटिशः ॥ ६३१ ॥ विदर्भजन्मनस्तत्र, निवसन्त्या गुहागृहे । अतीयाय जिनोपास्ति–परायाः सप्तहायनी ॥ ६३२ ॥

अन्यदा कश्चिदभ्येत्य, तद्गुहाद्वारमध्वगः । सुधामुचमिमां वाच–मवोचन्नलवल्लभाम् ॥ ६३३ ॥ वैदर्भि त्वत्पतिर्नाति–दूरे देशे मयेक्षितः । उत्सुकोऽहं तु गन्तास्मि, सार्थो मे न प्रतीक्षते ॥ ६३४ ॥ इत्युदीर्य प्रयाति स्म, स पान्थस्त्वरितक्रमम् । साऽपि तच्छब्दमाकर्ण्य, गुहातो निरगाज्जवात् ॥६३५॥ भद्र! भद्र! त्वया सोऽयं, क्व दृष्ट? इति भाषिणी । पान्थं तमनुधावन्ती, भीमभूर्विपिनेऽपतत् ॥ ६३६ ॥ गच्छन्त्याश्च पुरस्तस्या, निःस्वाया इव शेवधिः । पान्थः सोऽगाद-

दर्शनं, ननो व्यावर्तते स्म सा ॥ ६३७ ॥ कंदरायाः पुनर्मार्ग-मज्ञात्वा गहने वने । भीमभूरुभयभ्रष्टा, दुःखक्लिष्टेत्य-चिन्तयत ॥ ६३८ ॥ अहो ! किमपि मे दैव-मपकारि पदे पदे । येनाभवदिदानीं मे, न पान्थो न च कंदरा ॥ ६३९ ॥ किं करोमि क्व गच्छामि, घोरेऽस्मिन् पतिता वने ? । भावी मृत्युरपि श्रेया-नार्तध्यानस्पृशोऽत्र मे ॥६४०॥ इत्याकुलमना-स्तस्मि-न्नश्रुपूराऽनिलेक्षणा । ययौ तस्थावुपाविक्ष-न्नलुठज्जलपच्च सा ॥६४१॥ भ्राम्यन्तीं च वने काचि-त्तामपश्यन्निशा-चरी । सा स्म सा भक्षयिष्यामि, भनन्तीमित्युवाच च ॥६४२॥ तां वीक्ष्य भयसंभ्रान्ता, बभाषे भीमनन्दिनी । नलादन्यं पुमांसं चेन्, स्पृशत्यपि न मे मनः ॥६४३॥ ममार्हन्नेव देवश्चे-द्गुरवश्चेत् सुसाधवः । रतिश्चेज्जैनतत्त्वे च, हताशा भव राक्षसि ! ॥ ६४४ ॥ ( युग्मम् ) इति तस्या गिरा मन्त्र-वाचेव च्युतविक्रमा । ययौ नक्तंचरी नत्वा, "सत्यो हि दुरतिक्रमाः" ॥६४५॥ ततो दग्धजलभ्रान्ति-मूर्मिमत्सिकताचिताम् । कचिद्गिरिनदीं कांचि-दुर्दन्यन्ती जगाम सा ॥ ६४६ ॥ तामनम्भसमालोक्य, सा जगाद तृषार्दिता । मनो मे यदि सम्यक्त्व-सौरभ्यसुरभीकृतम् ॥ ६४७ ॥ तदेतस्यां पयः प्रादु-रस्तु द्रागमृतोपमम् । इत्युक्त्वा पार्ष्णिना स्वैरं, महीतलमताडयत् ॥६४८॥ ( युग्मम् ) साऽभूत् कूलंकषाऽन्वर्थ-नामाऽम्भोभिस्तदुत्थितैः । स्नात्वा पीत्वा पयस्तस्यां, भैमी निन्ये परिश्रमम् ॥ ६४९ ॥ पुरो यान्ती च सा खिन्ना, न्यग्रोधस्य तले क्वचित् । निविष्टा पथिकैः कैश्चित्, सार्थाऽऽयातैरभाष्यत ॥ ६५० ॥ भद्रे ! काऽसि ? किमत्रासि, वटस्याधो निषेदुषी ? । ईदृग्द्वैतरूपा त्वं, काचिन्नु देवता ? ॥ ६५१ ॥ अथाह भीमभूर्नाहं, देवता किं तु मानुषी । वणिक्पुत्री समं पत्या, यान्त्यभूवं पितुर्गृहे ॥६५२॥

१ त्वदकमिच्छन्ती । २ नदी ।

सुप्तामेकाकिनीमत्र, मां संत्यज्य पतिर्ययौ । बान्धवा ! गमयध्वं मां, तत्तापसपुराध्वना ॥ ६५३ ॥ तेऽप्यूचुर्यत्र सूर्योऽस्तमेत्यध्वाऽस्य पुरस्य सः । तं तु दर्शयितुं नाल-मिदानीमुत्सुका वयम् ॥ ६५४ ॥ आगताः स्म इहाम्भोऽर्थे, सार्थादायासि तत्र चेत् । क्वापि वसतिस्थाने, नयामस्त्वां सुखेन तत् ॥ ६५५ ॥ साऽथ तैः सह सार्थेऽगा-द्धनदेवस्य तेऽपि ताम् । कथामाख्याय तत्प्रोक्तां, सार्थनेतुरदर्शयन् ॥६५६॥ सार्थेशोऽपि ममासि त्वं, सुता नेष्यामि तत् सुखम् । त्वां स्थाने वसतीत्युक्त्वा, स्नानादिभिरनन्दयत् ॥ ६५७ ॥

तामारोप्याद्भुते याने, सार्थेशोऽथाचलत् प्रगे । नीत्वाऽचलपुरद्वारि, क्रमाच्चैनां मुमोच सः ॥ ६५८ ॥ तत्राध्वचङ्क्रमक्लान्ता, वाप्यां कस्यांचिदप्यसौ । प्रविश्य जलपानादि, विधाय बहिरागमत् ॥६५९॥ आकाशपतितेवासौ, पावयन्ती दृशा पुरम् । किंकर्तव्यजडा वापी-द्वारवेद्यामुपाविशत् ॥ ६६० ॥ ऋतुपर्णो जनाकर्ण्य-कीर्तिस्तत्र नृपस्तदा । चन्द्रोपमयशाश्चन्द्र-यशाश्चास्य प्रियाऽभवत् ॥ ६६१ ॥ तस्याश्चेट्यस्तदा वाप्यां, नीरमाहर्तुमागताः । तामपश्यन्नगचेतो-हारिरूपां सविस्मयम् ॥ ६६२ ॥ वाप्यन्तर्वलितग्रीवं, ताः पश्यन्त्योऽथ तां मुहुः । शनैःशनैर्विशन्ति स्म, निरीयुश्च शनैःशनैः ॥६६३॥ गत्वा कौतुकिताश्चन्द्र-यशसे तां न्यवेदयन् । आनेतुं साऽपि तां प्रीत्या, भूयोऽपि प्रजिघाय ताः ॥६६४॥ एत्य तास्तत्र तामूचु-र्देवी चन्द्रयशाः शुभे ! । त्वामाह्वयति भूयस्या, पुत्रीप्रीत्या नृपप्रिया ॥ ६६५ ॥ एत्य तत्प्रेमपीयूषै-स्तापं निर्वापयाऽऽत्मनः । त्वं स्थिताऽत्र पुनः शून्य-चेताः [1]स्थलमवाप्स्यसि ॥ ६६६ ॥ इत्यासां वचनैर्भैमी, प्रह्वीभूतमना मनाक् ।

१ निर्जलप्रदेशम् ।

प्रेमगोद्गारिस्ताभि-स्ताभिः परिवृताऽचलत् ॥६६७॥ मम चन्द्रयशा मातुः, पुष्पदन्त्याः सहोदरा। इति ज्ञातेयमज्ञासी-न्न जातु नलवल्लभा ॥ ६६८ ॥ जामेयी दमयन्ती मे-ऽस्तीत्यजानान्नृपप्रिया। तदानीं बाल्यदृष्टत्वात्, तां नोपालक्षयत् पुनः ॥ ६६९ ॥ साऽस्वैन्याऽऽलिङ्गदायान्तीं, पुत्रीप्रेम्णा तथापि ताम्। तत्त्वेनाविदितेऽप्यर्थे, प्रमाणं हि मनः गताम् ॥६७०॥ प्रक्षिप्तशिरसं मातृ-स्नेहेनाङ्किसरोरुहे। उत्थाप्य माऽवदद्भैमीं, प्रीतिकल्लोललोलिता ॥६७१॥ वत्से ! त्वमसि मे पुत्र्या-श्चन्द्रवत्याः प्रियस्वसा। उभे अपि युवां लक्ष्मीं, तत्कृतार्थयतं मम ॥ ६७२ ॥ परमात्मस्वरूपं मे, कथयेत्युदिता-ऽनया। सार्थपुंसां यदाख्यातं, तदेवाख्यन्नलप्रिया ॥ ६७३ ॥ दीनानाथकृते चन्द्र-यशोदेव्याः पुराद्बहिः। वर्तते गुरुनोद्वारं, सत्रागारमवारितम् ॥६७४॥ भैम्यूचे तां ततः सत्रे, दानं दास्येऽहमन्वहम्। यदि नाम पतिं वीक्षे, जात्वस्मिन् भोजनार्थिनम् ॥६७५॥ ओमित्युक्ते तया भैमी, सत्रे दानं ददौ स्वयम्। तेन तोषं विशेषेण, कलयामासुरर्थिनः ॥ ६७६ ॥

साऽपश्यत् कंचिदन्येद्युः, सत्रस्था वध्रमग्रतः। चौरमारक्षकैर्नीय-मानमाहतडिण्डिमम् ॥ ६७७ ॥ स तां वीक्ष्यावददीनं, रक्ष मां देवि ! रक्ष माम्। सा कृतं किमनेनेति, पप्रच्छारक्षकांस्ततः ॥ ६७८ ॥ तेऽप्यूचुरमुना चन्द्र-वत्या रत्नकरण्डिका। जह्रे तेनैष बध्यत्वा-न्नीयते वधभूमिकाम् ॥ ६७९ ॥ ततः साऽवोचदारक्षा-नेनं मुञ्चत मुञ्चत। सर्वत्रोत्तरमेतस्य, कर्तास्मि किमतः परम् ? ॥६८०॥ इत्युक्तेऽपि तया यावत्, ते न मुञ्चन्ति तस्करम्। तावत् साऽऽच्छोटयद्बन्धां-स्तस्याम्भश्चुलुकैस्त्रिभिः ॥६८१॥ ते त्रटित्यत्रुटंस्तस्य, तन्मतीत्वप्रभावतः। नागराणां ततो जज्ञे, हर्षकोलाहलो महान् ॥६८२॥ तमुपश्रुत्य संभ्रान्त-स्तत्र

१ प्रेमोद्गारि मुखं यासां ताभिः। २ प्रक्षिप्तं शिरो यया ताम्।

राजाऽप्युपागमत् । तद्वीक्ष्य कौतुकं भैमीं, हृष्टोऽप्येवमुवाच सः ॥ ६८३ ॥ धर्मः क्षोणीभृतां शिष्ट-पालनं दुष्टनिग्रहः । मात्स्यो न्यायोऽन्यथा वत्से !, भवेद्भुवनघस्मरः ॥६८४॥ लोकेभ्यः करमादाता, चौरेभ्यस्तानरक्षिता । तदीयैर्लिप्यते राजा, पातकैरिति हि स्मृतिः ॥ ६८५ ॥ तन्मोचयसि चेदेनं, भविष्यत्यव्यवस्थितिः । इत्युक्ता भूभुजा भैमी, दयालुरिदमब्रवीत् ॥ ६८६ ॥ तात ! दस्युर्विपद्येत, यदि दृष्टोऽप्यसौ मया । तदर्हद्धर्मवेदिन्याः, केयं मम कृपालुता ? ॥ ६८७ ॥ तदाग्रहमिति ज्ञात्वा, राजा दस्युममोचयत् । माननीया महासत्यो, हन्त भूमीभुजामपि ॥ ६८८ ॥ स दस्युस्तत्पदाम्भोज-मानम्येति तदाऽवदत् । देवि ! माताऽसि मे नव्य-जन्मदानादतःपरम् ॥ ६८९ ॥ इत्युक्त्वा स जगाम स्वं, स्थानमानन्दमेदुरः । अभ्येत्य चानमन्नित्यं, मातेत्यस्याः क्रमाम्बुजम् ॥ ६९० ॥

पृष्टोऽन्यदा स वैदर्भ्या, स्वं स्वरूपमचीकथत् । वसन्तः सार्थवाहोऽस्ति, यस्तापसपुरप्रभुः ॥ ६९१ ॥ तस्याहं पिङ्गलो नाम, दासस्तत्सदनेऽन्यदा । खात्रं दत्वाऽपहृत्याथ, रत्नजातं पलायितः ॥६९२॥ मार्गेऽन्यैर्लुण्टितश्चौरैः, "क्षेमं दुष्टात्मनां कुतः ? ।" अत्रायातः क्रमेणाहं, राजसेवामशिश्रयम् ॥६९३॥ परेद्यवि नृपावासे, संचरन्ननिवारितः । वीक्ष्य शून्यामपाहार्षं, तां माणिक्यकरण्डिकाम् ॥ ६९४ ॥ वेगात् प्रक्षिप्य कक्षायां, तां सर्वाङ्गावगुण्ठनः । राज्ञा निर्यन्नलक्ष्येऽहं, दक्षा हीङ्गितवेदिनः ॥६९५॥ समर्प्यारक्षकाग्रण्यः सोऽथ मां वध्यमादिशत् । तत्पुंभिर्नीयमानं च, हन्तुं स्वामिन्यमोचयः ॥६९६॥ तद्देवि ! त्वत्प्रसादस्य, क्वापि नानृण्यमस्ति मे । कादम्बिन्याः कथं नाम, जीवलोकोऽनृणी भवेत् ? ॥ ६९७ ॥

१ एको महामत्स्योऽन्यं लघुमत्स्यं खादति, तं चान्यः, तं चान्य इति न्यायः ।

अपर न यदा देवि !, त्वं तापसपुराद्गता । सार्थवाहस्तदा दुःखा-द्भुक्तिमप्यत्यजत् सुधीः ॥ ६९८ ॥ बोधितः श्रीयशोभद्र-गुरुणाऽन्यैर्जनैश्च सः । सप्ताहाद्बुभुजे सार्थ-वाहो निर्वाहिसंगरः ॥ ६९९ ॥ उपायनमुपादाय, रत्नस्वर्णाद्यनेकशः । नृपं कृपरमद्राक्षीत्, कोशलामेत्य सोऽन्यदा ॥ ७०० ॥ तया चोपदया तुष्ट-स्तं तापसपुरेश्वरम् । राजानमकरोद्भूप-छत्रचामरलाञ्छितम् ॥ ७०१ ॥ नाम्ना चैनं वसन्तश्री-शेखरं स विनिर्ममे । प्राहिणोच्च पुरे प्रीत्या, भम्भया ताड्यमानया ॥ ७०२ ॥ प्रविश्योत्सवसोत्साहः, शास्तीदानीं पुरं स तत् । साऽपि त्वन्महिमप्रौढिः, स्वामिन्येवं श्रियोऽस्य यत् ॥ ७०३ ॥ ऊचेऽथ भीमभूर्वत्स !, पाप्मनोऽस्य छिदाकरीम् । दीक्षामादत्स्व सोऽप्यङ्गी-चक्रे तद्वचनं मुदा ॥ ७०४ ॥ गुरुः सत्कृत्य पानान्नै-र्मुनिद्वितयमन्यदा । भैमी वक्ति स्म यद्यस्ति, पिङ्गलस्यास्य योग्यता ॥ ७०५ ॥ तदस्मै व्रतदानेन, भगवन्तौ प्रसीदतम् । मुनी अप्यूचतुर्दीक्षा-योग्य एवैष पिङ्गलः ॥ ७०६ ॥ प्रार्थितावथ तेनापि, चैत्ये नीत्वा तदैव तम् । प्रव्राज्य तौ मुनी सार्ध-मेतेनान्यत्र जग्मतुः ॥ ७०७ ॥

हरिमित्रोऽन्यदा विप्रः, कुण्डिनात् पूर्वसंस्तुतः । एत्य भूमिपतिं दृष्ट्वा, ययौ चन्द्रयशोऽन्तिके ॥७०८॥ बद्धाञ्जलिर्निविष्टं तं-मग्रे भूपप्रियाऽभ्यधात् । विदर्भभूभुजः क्षेमं, पुष्पदन्त्याश्च, मे स्वसुः ? ॥ ७०९ ॥ दम्पत्योरनयोर्देवि !, क्षेमलक्ष्मीः सनातनी । नलस्य दमयन्त्याश्च, सा तु चिन्त्याऽस्ति सांप्रतम् ॥ ७१० ॥ संभ्रान्तया किमात्थेति, तयोक्तः सोऽब्रवीत् पुनः । जातु शुश्राव नः स्वामी, लोकाख्यातामिमां कथाम् ॥७११॥ यथा नलो महीमक्षैः, कूबरेण स्वबन्धुना । हारितो निरगाद्भैमीं, पुरस्कृत्य पुरान्निजात् ॥ ७१२ ॥ तामरण्ये परित्यज्य, सोऽगमत् तदनन्तरम् । वार्ताऽपि न तयोर्विश्वे,

काऽपि कुत्रापि वर्तते ॥७१३॥ तदुपश्रुत्य नः स्वामी, स्वामिनी पुष्पदन्त्यपि । वज्राहताविवोन्मील-दुःखभारौ मुमूर्च्छतुः ॥ ७१४ ॥ मूर्च्छान्ते विलपन्तौ च, समन्वेष्टुमितस्ततः । जामातरं तनूजां च, प्राहैष्टां तौ तदैव माम् ॥ ७१५ ॥ अत्यरण्यं प्रतिग्रामं, प्रतिपत्तनमप्यहम् । भ्राम्यन् क्रमान्महीमेता-मिहेदानीमुपागमम् ॥ ७१६ ॥ न तयोः पुनरश्रौषं, वार्तामात्रमपि क्वचित् । तत्क्लेशफलमेवैत-द्बभूव भ्रमणं मम ॥ ७१७ ॥ श्रुत्वेति गिरमाक्रन्द-मुच्चैश्चन्द्रयशा व्यधात् । नलस्य कुर्वती निन्दां, तां तां भैम्याः स्तुतिं पुनः ॥ ७१८ ॥ क्रन्दद्भिरनु तां लोकैः, शोकाद्वैतं तदाऽखिले । जातं राजकुले नेतु-रनुगा ह्यनुजीविनः ॥ ७१९ ॥ ततः स विप्रः क्षुत्क्षाम-कुक्षिः क्षितिपमन्दिरात् । निर्गत्य भोजनाकाङ्क्षी, दानशालां जगाम ताम् ॥ ७२० ॥ तत्र सोऽधिकृतां प्रेक्ष्य, भैमीमुत्फुल्ललोचनः । प्रधाव्य रभसा तस्याः, पादपङ्केरुहेऽपतत् ॥ ७२१ ॥ ऊचे च दिष्ट्या दृष्टाऽसि, भ्राम्यता भुवनं मया । अद्य स्वस्त्यस्तु सर्वेषां, भवज्जीवितजीविनाम्[1] ॥७२२॥ अथैत्य स जवाच्चन्द्र-यशोदेवीमवर्धयत् । तच्छोकाश्रुपदेऽभूवन्, क्षणात् प्रीत्यश्रुविप्रुषः ॥ ७२३ ॥ सत्रागारमुपेत्याथ, सा मुदाऽऽलिङ्ग्य भीमजाम् । साश्रुरूचे बलिस्तुभ्यं, क्रियेऽस्यां चावतारणम् ॥ ७२४ ॥ हा हा धिग्मामियत्कालं, न मयाऽप्युपलक्षिता । जगद्विलक्षणाऽपि त्व-मेतैर्लोकंपृणैर्गुणैः ॥ ७२५ ॥ वञ्चिताऽस्मि कथं वत्से !, त्वया कृत्वा स्वगोपनम् ? । मातृस्वसापि मातैव, तत्पुरः का खलु त्रपा ? ॥ ७२६ ॥ किं त्यक्ताऽसि नलेन त्वं ?, नलस्त्यक्तस्त्वयाऽथवा ? । यदि वा न पतिं जातु, त्यजसि त्वं पतिव्रता ॥ ७२७ ॥ विडम्बितसहस्रांशु-र्ललाटतिलकः क्व ते ? । सेति मार्ष्टि स्म तद्भालं, सनिष्ठीवेन पाणिना ॥ ७२८ ॥

१ भवत्या जीवितेन जीविनाम्. ( भवतीशब्दस्य पुस्त्वमत्र चिन्त्यम् ।

प्रादुगाम ततस्तस्याः, स भालतिलकः क्षणात् । यस्यान्तेर्वामितामन्य-तेजांसि दधतेऽन्वहम् ॥ ७२९ ॥ तां धृत्वाऽथ करे
नीत्वा, वेश्मन्युर्वीशवल्लभा । स्वयमस्नापयद्गन्ध-वारिभिर्देवतामिव ॥ ७३० ॥ परिधाप्य दुकूले च, ज्योत्स्नासब्रह्मचारिणी ।
नैर्म्लः प्रमोपचारैस्तां, राज्ञी काममनन्दयत् ॥ ७३१ ॥ तां चालम्ब्य करे गत्वा, राज्ञोऽभ्यर्णमुपाविशत् । सोऽप्यपृच्छत् ततो
भैमीं, गज्यभ्रंशादिकां कथाम् ॥७३२॥ साऽप्युदश्रुश्चकुचे तस्मै, साश्रुरास्यदधोमुखी । नल-कूबरयोः सर्वां, तां कथामा-
दृगोद्गत ॥ ७३३ ॥ राज्ञाऽप्युन्मार्जयन्नश्रु, तस्याः प्रावारवाससा । ऊचे खिद्यस्व मा वत्से !, बली को नाम कर्मणाम् ?
॥ ७३४ ॥ तमोभिस्तिरयन् विश्वं, तदा चास्तं रविर्ययौ । चकास्ति स्म प्रकाशस्तु, मध्येसंसत्तथैव सः ॥ ७३५ ॥ रात्रौ
किमयमुद्योत ? इति विस्मितमानसम् । राज्ञी चन्द्रयशाः स्मेर-वक्त्रा भूपालमभ्यधात् ॥ ७३६ ॥ वैदर्भीतिलकस्यास्य,
देव ! लीलेयमद्भुता । भैमीभालं पितेवाथ, पाणिना पिदधे नृपः ॥ ७३७ ॥ सभान्तरस्फुरद्ध्वान्तः, सूचिभेद्यश्च तत्क्षणात् ।
पुनः पाणिमपाकर्षत्, स विस्मयमना नृपः ॥ ७३८ ॥
तदा कश्चित्सुरोऽभ्येत्य, संगदि द्युतिभासुरः । भूमिलन्मौलिरानम्य, भैमीमित्यवदत् सुरः ॥७३९॥ देवि ! त्वया पुरा
सार्थ-चौरो यः पिङ्गलाभिधः । प्रतिबोध्य सुधाकल्प-वाक्यैश्चाग्राह्यत व्रतम् ॥ ७४० ॥ क्रमेण विहरन् भूमौ, स तापसपुरं
ययौ । तत्र प्रतिमया तस्थौ, श्मशाने निशि जातुचित् ॥ ७४१ ॥ तदा चाभ्यर्णमायाते, चितावह्निभवे दवे । स सात्त्वि-
कोऽभिगेस्तं, व्यधादाराधनां स्वयम् ॥ ७४२ ॥ समाधेरच्युतः सोऽहं, ज्वालासंवलितस्ततः । वपुः संत्यज्य सौधर्मे, सुरोऽभूवं

१ शिग्यताम् । २ ज्वाल्या व्याम ।

महर्द्धिकः ॥ ७४३ ॥ तत् प्रबोध्य तदा चेन्मां, व्रतं नाग्राहयिष्यथाः । गतस्य नरके तन्मे, क्वाभविष्यन्निमाः श्रियः ? ॥ ७४४ ॥ सर्वस्तव प्रसादोऽयं, चिराय विजयस्व तत् । इत्युक्त्वाऽगात् सुरो हेम्नः, सप्त कोटीः प्रवृष्य सः ॥७४५॥ साक्षात्कृत्य महीनाथो-ऽप्यर्हद्धर्मस्य तत्फलम् । प्रत्यपद्यत तं हर्ष-भरव्याप्तान्तराशयः ॥ ७४६ ॥

अथावसरमासाद्य, हरिमित्रोऽभ्यधान्नृपम् । स्थिताऽत्र सुचिरं भैमी, यात्विदानीं पितुर्गृहे ॥ ७४७ ॥ पुष्पदन्ती च सा माता, पिता च स विदर्भराट् । प्रवासश्रवणादस्या-स्तिष्ठतो देव ! दुःखितौ ॥ ७४८ ॥ ततश्चन्द्रयशोदेव्या, मतमादाय तत्क्षणात् । ओमित्युक्त्वा ततो भैमीं, प्राहिणोत् सह सेनया ॥ ७४९ ॥ तामायान्तीं सुतां श्रुत्वा, भीमभूपतिरभ्यगात् । निरीक्ष्य पितरं साऽपि, दूरतो यानमत्यजत् ॥ ७५० ॥ धावित्वा रभसाद्भैमी, पादयोरपतत् पितुः । तयोः प्रीत्यश्रुवर्षेण, पङ्किला तत्र भूरभूत् ॥ ७५१ ॥ मातरं च सहाऽऽयातां, वीक्ष्याश्लिष्यत् प्रमोदिनीम् । तस्याः कण्ठे लगित्वा च, तारतारं रुरोद सा ॥ ७५२ ॥ सुतां भूपः पुरं क्लृप्त-महोत्सवमवीविशत् । मुदा च गुरुदेवार्चां, सप्तरात्रमकारयत् ॥ ७५३ ॥ पृष्टा भूमीभुजा कुब्ज !, जातुचिन्मम पश्यतः । तामेतां भीमभूः सर्वां, निजामकथयत् कथाम् ॥ ७५४ ॥ ऊचे च पृथिवीनाथ-स्तां स वात्सल्यया गिरा । वत्से ! विदधती धर्मं, वसास्मत्सदने सुखम् ॥ ७५५ ॥ करिष्यते तथा कश्चि-दतः परमुपक्रमः । यथा कुतश्चिदभ्येत्य, पतिस्तव मिलिष्यति ॥ ७५६ ॥ ददौ च हरिमित्राय, ग्रामपञ्चशतीं नृपः । तुष्टोऽभ्यधाच्च राज्यार्धं, तुभ्यं दास्ये नलागमे ॥ ७५७ ॥

अन्यदा दधिपर्णस्य, भूपतेः स्नेहवर्त्मना । दूतस्तत्र ययौ धीमान्, सुंसुमारपुरादितः ॥ ७५८ ॥ स जातु वार्ता-

प्रस्तावे-ऽकथयद्भीमभूभुजः । यथाऽस्मत्स्वामिनः पार्श्वे, प्राप्तोऽस्ति नलसूपकृत् ॥ ७५९ ॥ स वेत्ति सूर्यपाकाया, रसवत्या विधिं सुधीः । वक्ति नास्यामुपाध्यायो, बभूव नल एव मे ॥ ७६० ॥ श्रुत्वैतच्छ्लोकतो भैमी, भूपमेत्य व्यजिज्ञपत् । न तां रसवतीं तात !, वेत्ति कश्चिन्नलं विना ॥ ७६१ ॥ तत् प्रेष्य कंचिज्जानीहि, किंरूपः किंकलश्च सः । अवश्यं गोपितात्मैव, नल एव स वल्लभः ॥ ७६२ ॥ मामाहूय ततो दत्त्वा, शिक्षां प्रैषीद्विदर्भराट् । क्रमादत्रैत्य भद्र ! त्वां, पृच्छन् पृच्छन्निहागमम् ॥ ७६३ ॥ एवंरूपं च वीक्ष्य त्वां, विषादादित्यचिन्तयम् । काचे मरकतभ्रान्ति-र्वैदर्भ्याः किमभूदियम् ? ॥७६४॥ नलः क दिविषद्रूपः ?, कुब्जश्चायं क्व सूपकृत् ? । क्व सर्षपः ? क्व मेरुश्च ?, क्व खद्योतः ? क्व चार्यमा ? ॥ ७६५ ॥ तथाऽप्येनं परीक्षिष्ये, विचिन्त्येति पठंस्त्वया । नलाक्षेपमयौ श्लोका-वापृच्छ्येऽहं कथामिमाम् ॥ ७६६ ॥ तदस्तु स्वस्ति ते यामि, व्याघुट्य नगरं निजम् । यथादृष्टं च वैदर्भ्या-स्त्वत्स्वरूपं निवेदये ॥ ७६७ ॥ भैमीस्मरणसंभूतं, कथंचन ततः सुधीः । बाष्पपूरं निरुन्धानः, कुब्जः कुशलमब्रवीत् ॥ ७६८ ॥ पूज्योऽसि कथयन् विप्र !, पुण्यपात्र ! कथामिमाम् । तदागच्छ ममागारं, गृहाण मम सत्कृतिम् ॥ ७६९ ॥ इत्युदीर्य द्विजन्मान-मानीय स गृहे निजे । रसवत्या तया सूर्य-पाकया तमभोजयत् ॥ ७७० ॥ अभूच्च भूपचाल्लब्धं, यद्दुकूलाभरणादिकम् । तत् प्रदायाखिलं कुब्जो-ऽनुमेने गमनाय तम् ॥ ७७१ ॥

गोऽथ विप्रो विदर्भायां, नमस्येत्य विषादवान् । भैमी-भूमीभुजोः कुब्ज-स्वरूपं तदचीकथत् ॥ ७७२ ॥ स्वयं रसवतीं तां च, भुक्तामाख्यात स द्विजः । टङ्कलक्षादि तत्सर्वं, कुब्जदत्तमदर्शयत् ॥ ७७३ ॥ सुंसुमारजनाऽऽख्याताः, करीन्द्रदमनादिकाः । कुब्जस्य ताः कला राज-प्रसादं च न्यवेदयत् ॥ ७७४ ॥ अथाऽऽह भीमभूस्तात !, त्वज्ज्ञामातैव स ध्रुवम् ।

कुब्जत्वमगमत् सैष, नूनं केनापि हेतुना ॥ ७७५ ॥ यतः सा रसवत्येताः, कलाः सेयमुदारता । त्रैलोक्येऽपि न कस्यापि, तव जामातरं विना ॥ ७७६ ॥ तत् कथंचिदिहानीय, वीक्ष्यते स खलु स्वयम् । इङ्गितैर्[1]लक्षयिष्यामि, यद्यस्ति नल एव सः ॥ ७७७ ॥ बभाषे भूपतिर्वत्से, पुनर्गतपतेस्तव । कृत्वा स्वयंवरव्याजं, दधिपर्णो निमन्त्र्यते ॥७७८॥ निशम्यैतत् स कुब्जोऽपि, तेन सार्धं समेष्यति । न खल्वात्मप्रियां यान्ती-मन्यत्र सहते सुधीः ॥ ७७९ ॥ भूपः सोऽभूत्त्वदाकाङ्क्षी, प्राक्तनेऽपि स्वयंवरे । त्वया वृते नले त्वेष, विलक्षोऽभूद्भृशं तदा ॥ ७८० ॥ तदासन्नदिनाऽऽहूतं, तूर्णमागन्तुमक्षमम् । ताम्यन्तं त्वत्कृते काम-मारोप्य जविनं रथम् ॥ ७८१ ॥ तं चेदानेष्यते कुब्जः, स ध्रुवं नल एव तत् । हृदयं हि तुरङ्गाणां, वेत्ति नान्यो विनाऽमुना ॥ ७८२ ॥ युग्मम् ॥ इत्यालोच्य वितीर्या[2]थ, शिक्षामक्षामधीगुणः । भूभुजे दधिपर्णाय, दूतं प्रातिष्ठिपन्नृपः ॥ ७८३ ॥

स तन्नगरमासाद्य, कुब्जे संनिधिवर्तिनि । आचख्यौ दधिपर्णाय, भीमभूपालवाचिकम् ॥ ७८४ ॥ यथा न ज्ञायते तावत्, स क्वचिन्नलभूपतिः । करिष्यति ततो भैमी, देव ! भूयः स्वयंवरम् ॥ ७८५ ॥ चैत्रस्य शुद्धपञ्चम्यां, प्रातः स भविता ध्रुवम् । यथाऽस्मिन्नुपतिष्ठेथाः[3], कुर्वीथास्त्वं तथा नृप ! ॥ ७८६ ॥ इत्याख्याय गते दूते, स कुब्जोऽन्तरचिन्तयत् । महच्चित्रमहो कुर्या-द्वैदर्भ्यप्यपरं वरम् ॥७८७॥ स्यादेवमपि वा जातु, बलीयान् खलु मन्मथः । जीवतो मम वैदर्भी, कः पुनस्तां ग्रहीष्यति ॥ ७८८ ॥ किं नु केनापि गृह्यन्ते, जीवतोऽपि हरेः[4] सटाः ? । तक्षकस्य फणारत्नं, कृष्यते श्वसतोऽपि

१ चेष्टितैः । २ दत्त्वा । ३ आगच्छेः । ४ सिंहस्य ।

रिप् ? ॥ ७८९ ॥ मोऽय तं पृथिवीपालं, निमीलन्मुदमभ्यधात् । जृम्भते भूप! किं नाम, दौर्मनस्यं तवाप्यदः? ॥ ७९० ॥
यस्य सोऽहं मनायोऽस्मि, नर्मकर्मीणतास्पदम् । तस्यापि तत्किमप्यस्ति, नैव यत् करगोचरम् ? ॥ ७९१ ॥ यामाः स्वयंव-
गदाहि, पद् मन्यथापि तद्यदि । मनस्ते भीमजन्मानं, तां मृगीदृशमिच्छति ॥ ७९२ ॥ तदर्पय रथं कंचि–द्दृढं जात्यांश्च
वाजिनः । दर्शयामि यथा प्रात–र्भूपं कुण्डिनमण्डिताम् ॥ ७९३ ॥ युग्मम् ॥ गृहाण स्वेच्छयेत्युक्तः, क्षितीशेन स बुद्धि-
मान् । जग्राह रथमश्वांश्च, सर्वलक्षणलक्षितान् ॥ ७९४ ॥
सज्जीकृत्य रथं युक्त–वाहमाधाय च क्षणात् । इहाऽऽरोहेति तं कुब्जः, क्षोणिपालमभापत ॥ ७९५ ॥ राजा स्थगीधर-
स्तत्र–धारश्चामरधारिणौ । कुब्जश्चेति षडारोह–चरास्तस्मिन् वरूथिनि ॥ ७९६ ॥ ततो बिल्वकरण्डौ यौ, दत्तौ निषधना-
किना । तावादाय रुटौ कुब्जः, प्राजति स्म तुरंगमान् ॥ ७९७ ॥ कुब्जेन प्रेरितान् वीक्ष्य, वाहाननिलरंहसः । दधि-
पर्णनरेन्द्रोऽथ, विस्मयादित्यचिन्तयत् ॥ ७९८ ॥ अहो कश्चित् पुमानेष, मर्त्यानत्येति सर्वतः । अद्यापि रत्नगर्भेयं, वहते
नाम नान्यथा ॥ ७९९ ॥ क्वचिद्वेगानिलोद्धूते, प्रावारे पतिते भुवि । नृपोऽवोचत् पटीं गृह्णे, ध्रियन्तां कुब्ज! वाजिनः
॥ ८०० ॥ कुब्जोऽप्यूचे स्मितास्यस्तं, यत्र ते पतिता पटी । ततः स्थानादतिक्रान्ता, पञ्चविंशतियोजनी ॥ ८०१ ॥ इमे हि
मध्यमा एव, वाहाश्चेत् स्युरुत्तमाः । पञ्चाशद्योजनीं राज–न्नेभिरन्वियतं ततः ॥ ८०२ ॥ वृक्षमक्षाख्यमुद्वीक्ष्य, क्वाप्यथो
फलमांगलम् । कुब्जं राजाऽभ्यधादात्म–कलोत्कर्षं विशेषयन् ॥८०३॥ फलानां भूरुहस्यास्य, संख्यामगणयन्नपि । वेद्म्यहं

१ हर्षरहितम् । २ नर्मकर्मणि समर्थतास्पदम् । ३ प्रहरा । ४ रथे । ५ उत्तरीयवस्त्रे ।

कथयिष्यामि, व्यावृत्तः कुब्ज ! ते क्षणात् ॥ ८०४ ॥ कुब्जोऽब्रवीदिदानीं त्वं, कालक्षेपाद्बिभेषि किम् ?। मा भैपीरधुनैवैतां, राजन्नाख्यातुमर्हसि ॥ ८०५ ॥ अष्टादश सहस्राणी-त्युक्ते भूपतिना ततः। आहत्य मुष्टिना कुब्ज-स्तं फलौघमपातयत् ॥ ८०६ ॥ रथादुत्तीर्य भूपेन, सूत्रिते गणनाविधौ। तावत्येवाभवत् संख्या, न च न्यूना न चाधिका ॥८०७॥ भूभुजे याचते[1] विद्यां, तुरङ्गहृदयात्मिकाम्। दत्वाऽस्मादाददे संख्या-विद्यां कुब्जोऽथ विस्मयात् ॥ ८०८ ॥

अथाऽऽगादुदयप्रस्थे[2], स्यन्दनोऽनूरुसारथेः[3]। विदर्भनगरद्वारि, कुब्जसूतो रथः पुनः ॥८०९॥ तदा झगिति निःशेषैः, सरोरुहवनैः समम्। अवाप दधिपर्णस्य, विकाशं मुखवारिजम् ॥ ८१० ॥ तस्मिन्नेव निशाशेषे, स्वप्नमैक्षिष्ट भीमजा। उत्थाय शयनीयाच्च, प्रीता पितुरचीकथत् ॥ ८११ ॥ अद्य प्रातर्मया स्वप्ने, प्रैक्षि निर्वृतिदेवता। तयेहानीय मे व्योम्नि, दर्शितं कोशलावनम् ॥ ८१२ ॥ रसालं फलपुष्पाढ्य-मारोहं तत्र तद्गिरा। विकचं शतपत्रं च, ममार्प्यत करे तया ॥८१३॥ पुराऽऽरूढो झटित्येव, विहगः कोऽपि भूतले। अकस्मादपतत्तस्मा-च्चूतादध्यासितान्मया ॥ ८१४ ॥ भीमोऽप्यूचे त्वया दृष्टः, पुत्रि ! स्वप्नोऽयमुत्तमः। तथा हि भाग्यसंभारः, प्रत्यक्षस्तव निर्वृतिः ॥ ८१५ ॥ कोशलाप्राभवं[4] तद्यत्, कोशलोद्यानदर्शनम्। माकन्दपादपाऽऽरोहः, साक्षात् ते प्रियसंगमः ॥ ८१६ ॥ माकन्दाद्यस्त्वदाक्रान्ता-द्भ्रंशः कस्यापि पक्षिणः। पातः पातकिनो नूनं, साम्राज्यात् कूबरस्य सः ॥ ८१७ ॥ निशावसाने स्वप्नस्य, दर्शनान्नलसंगमः। अद्य भावी प्रभाते हि, स्वप्नः सद्यःफलेग्रहिः ॥ ८१८ ॥ तदोपेतं पुरद्वारि, दधिपर्णं ससंभ्रमः। अभ्येत्य मङ्गलो नाम, कोऽप्याख्यद्भीमभूभुजे॥

१ याचमानाय। २ उदयाचलशिखरे। ३ सूर्यस्य। ४ कोशलायाः प्रभुत्वम्।

८१९ ॥ भीमोऽभ्येत्य तमायान्तं, प्रीत्याऽऽश्लिष्य वयस्यवत् । सौधार्पणाद्यमाधाय, स्वागतं चेत्यवोचत ॥ ८२० ॥ कुब्जमेतं नृपकृत् सूर्य-पाकां रसवतीमसौ । वेत्तीति श्रूयते तां मे, दर्शयास्ति कुतूहलम् ॥ ८२१ ॥

गिराऽथ दधिपर्णस्य, कुब्जो रसवतीं स ताम् । निष्पाद्याभोजयद्भीम-भूपालं सानुजीविनम् ॥ ८२२ ॥ दधिपर्णोपरोधेन, तत्स्वादं न परीक्षितुम् । आनाय्य भैम्यपि स्थाले, कृत्वा तां बुभुजे स्वयम् ॥ ८२३ ॥ तत्स्वादमुदिता भैमी, जगाद पितरं रहः । कुब्जः खञ्जोऽस्तु वा तात !, नलः सैष न संशयः ॥ ८२४ ॥ मुनिर्ज्ञानी ममाऽऽचख्यौ, पुरा ह्येतद्यथाश्रुति । नलो रसवतीं सूर्य-पाकां जानाति नापरः ॥ ८२५ ॥ परीक्षान्तरमप्यस्ति, स्वसंवेदनसिद्धिकम् । संस्पर्शमात्रतोऽप्यस्य, स्यां सरोमाञ्चकञ्चुका ॥ ८२६ ॥ दधिपर्णमथाहूय, स्वगृहे सपरिच्छदम् । वैदर्भस्त्वं नलोऽसीति, कुब्जं ताति स्म सादरः ॥ ८२७ ॥ कुब्जोऽप्यूचे स्मितं कुर्व-न्वयं वः क इव भ्रमः ? । क नलः स्मरसंकाशः ?, क चाहं दृग्विगाजनम् ॥ ८२८ ॥ भैम्यवोचत्ततस्तात !, मनागपि वपुर्मम । अङ्गुल्या संस्पृशत्वेष, कुर्वे येनास्य निर्णयम् ॥ ८२९ ॥ राज्ञाऽऽदेशात्ततः कुब्ज-स्तस्याः सूक्ष्मनिपातया । वक्षश्चास्पृशदङ्गुल्या, जातं च पुलकाङ्कुरैः ॥ ८३० ॥ आः शठोऽसि परित्यज्यानः, क यास्यसि ममाग्रतः ? । इत्याद्युदीर्य तं भैमी, बलादभ्यन्तरेऽनयत् ॥ ८३१ ॥ भैम्याः प्रेमोचितैस्तैस्तै-र्वाक्यैर्गद्गदभाष्यमनाः । तस्माद्बिल्वात् करण्डाच्च, दुकूलाभरणानि सः ॥ ८३२ पर्यधाच्च समाकृष्य, रूपं चासादयन्निजम् । विरहोपनितप्रेमा, नागाश्लिष्यत् प्रियां नलः ॥ ८३३ ॥ युग्मम् ॥

१ प्रासादस्य अर्पणादिकम् ।

पुनर्द्वारि समायातं, परिरभ्योपवेश्य च । निजे सिंहासने भीम-स्तं कृताञ्जलिरब्रवीत् ॥ ८३४ ॥ एताः श्रिय इमे प्राणा-स्त्वदीया एव भूपते ! । तत्कृत्यमादिशेत्युक्त्वा, भीमो वेत्रित्वमातनोत् ॥ ८३५ ॥ दधिपर्णोऽपि संभ्रान्तः, प्रणम्य नलमभ्यधात् । देव ! प्राचीनमज्ञाना-दपराधं क्षमस्व मे ॥ ८३६ ॥ त्यक्तकुब्जत्ववैरूप्यो, नलः स्वं रूपमास्थितः । निर्मुक्त इव भोगीन्द्र-स्तदानीं दिद्युतेतराम् ॥ ८३७ ॥ सार्थेशो धनदेवोऽथ, सोपायनकरस्तदा । कुतोऽपि भीमभूपालं, द्रष्टुकामः समागमत् ॥८३८॥ प्रा(प्राक्)कृतोपकृतेस्तत्त-द्बन्धुवत्तस्य गौरवम् । कृतज्ञा कारयामास, वैदर्भी भीमभूभुजा ॥ ८३९ ॥ ऋतुपर्णनृपं चन्द्र-यशश्चन्द्रवतीयुतम् । दूतैस्तं च वसन्तश्री-शेखरं भैम्यजूहवत् ॥ ८४० ॥ भीमभूमीभुजा नित्य-मुपचारैर्नवैर्नवैः । ते कृतप्रीतयः सर्वे, निन्युर्मासं मुहूर्तवत् ॥ ८४१ ॥

अन्येद्युः कश्चिदभ्येत्य, भीमसंसदि कान्तिमान् । सुरः पश्यत्सु सर्वेषु, वैदर्भीमित्यवोचत ॥ ८४२ ॥ भैमि ! स्मरसि संबोध्य, यं पुरा तापसेश्वरम् । प्रापयिष्यसि सम्यक्त्वं, प्रव्रज्यां च शुभोदयाम् ॥ ८४३ ॥ सोऽहं तस्वा तपोऽत्युग्रं, सौधर्मे धर्मभाग्मृतः । श्रीकेसरसुरोऽभूवं, विमाने केसराह्वये ॥ ८४४ ॥ यस्त्वयाऽऽकृष्य मिथ्यात्वा-दर्हद्धर्मेऽस्मि रोपितः । तस्यैवैतत्फलं तन्मे, त्वमत्यन्तोपकारिणी ॥ ८४५ ॥ इत्युक्त्वा तपनीयस्य, सप्त कोटीर्विकीर्य सः । कृतज्ञचूडामाणिक्यं, यथागतमगात् सुरः ॥ ८४६ ॥ वसन्त-दधिपर्ण-र्तु-पर्णा, भीमोऽपरेऽप्यथ । अभ्यषिञ्चन्नलं राज्ये, महीयांसो महीभृतः ॥ ८४७ ॥ ते नलादेशमासाद्य, कम्पयन्तोऽथ काश्यपीम् । सर्वाणि स्वस्वदेशेभ्यः, सद्यः सैन्यान्यमेलयन् ॥ ८४८ ॥

१ कञ्चुकरहितः ।

अथ प्रतस्थे दैवज्ञ-दत्तेऽह्नि महितो नृपः । कोशलां प्रति लक्ष्मीं स्वां, ग्रहीष्यन् बलवान्नलः ॥ ८४९ ॥ स क्रमात्ति-ष्ठन् सैन्य-पांशुपूरैरहस्करम् । अभ्यतिष्ठदयोध्यायाः, काननं रतिवल्लभम् ॥ ८५० ॥ बहिरुद्यानमायात-माकर्ण्यातिबलं नलम् । कूबरस्य मनोऽकार्षीत्, संकथां मृत्युना समम् ॥ ८५१ ॥ तं दूतेन नलोऽवादी-द्दीव्यं भूयोऽपि देवनैः । त्वल्लक्ष्म्यः सन्तु मे हन्त, मल्लक्ष्म्यस्तव सन्तु वा ॥ ८५२ ॥ मृत्युभीतिमथापास्य, कूबरः प्रीतिबन्धुरः । भूयो द्यूतमुपाक्रंस्त, लब्धाऽऽ-स्वादो हि तत्र सः ॥८५३॥ क्षणात् कूबरतोऽजैषीत्, काश्यपीं निखिलां नलः । "पुंसां भाग्येऽनुकूले हि, सिध्यन्ति सकलाः क्रियाः" ॥ ८५४ ॥ राज्यं भूयोऽप्यलंचक्रे, नलोऽनलसविक्रमः । नभोऽङ्गणमिव प्रात-र्देवः कमलिनीपतिः ॥८५५॥ जित-श्रीरपि दुष्टोऽपि, स्वबन्धुरिति कूबरः । राज्ञाऽऽर्द्रमनसा चक्रे, पूर्ववद्यौवराज्यभाक् ॥ ८५६ ॥ तत्तदाऽभून्नलः कामं, सतां श्लाघास्पदं परम् । कूबरः स पुनः क्रूर-कर्मा निन्दानिकेतनम् ॥ ८५७ ॥ प्राज्यभाग्ये नले भूयः, स्वराज्यमधितस्थुषि । भद्रोत्सवं ववन्दाते, कोश-लामाजग्मुरन्येद्यु-र्भरतार्धमहीभुजाम् ॥ ८५८ ॥ नलश्च दमयन्ती च, राज्यश्रीभिरलंकृतौ । भद्रोत्सवं ववन्दाते, ... त्यमण्डलीम् ॥ ८५९ ॥ भरतार्धधराधीश-शिरोभिर्धृतशासनः । भूयांस्यब्दसहस्राणि, मेदिनीमभुनग्नलः ॥ ८६० ॥

आगतसमयोऽभ्येत्य, निषधस्वर्गिणा दिवः । पुष्कलाख्ये सुतेऽन्येद्यु-र्न्यस्य राज्यभरं नलः ॥८६१॥ जातसंसार-वैराग्यो, वैदर्भ्या सह कान्तया । जिनसेनाभिधाऽऽचार्य-पादान्ते व्रतमग्रहीत् ॥ ८६२ ॥ युग्मम् ॥ अन्तेऽनशनमाधाय, मृत्युमाप्य समाधिना । नलः सुरः कुबेरोऽभू-ज्जज्ञे भैम्यपि तत्प्रिया ॥ ८६३ ॥

१ मूर्धः । २ आजग्मुः ।

इतीयमम्बिकासूनो !, नलकूबरयोः कथा । मया ते कथिता तत्त्व-मस्याः सम्यग्विचार्यताम् ॥ ८६४ ॥ कूबरेण जिता द्यूत-च्छद्मनेयं वसुंधरा । न नाम स्थास्नुतामागात्, "कियत्क्रूरधियां श्रियः?" ॥८६५॥ प्रत्युताभूत् परा मान-ग्लानिरेतस्य दुर्धियः । "पदादध्यासितात् पात-स्त्रपाकारी हि दोष्मताम्" ॥८६६॥ तदेवं कूबरस्येव, जयोऽप्यस्मिन् दुरोदरे । नाऽऽभाति मे शुभोदर्क-स्त्वदीयतनुजन्मनः ॥ ८६७ ॥ जितामपि महीमेते, पाण्डवा नार्पयन्ति चेत् । तदा को नाम गृह्णीया-दत्यन्तबलवानपि ॥ ८६८ ॥ कर्ता वा कलहं कंचि-चेद्ग्रहीतुमहंकृतः । तत्तैर्घातिष्यते नूनं, सुतस्ते सह बान्धवैः ॥ ८६९ ॥ सत्यवाक् तपसःसूनु-रर्पयेद्वा जितां महीम् । तथापि शाश्वती नास्य, जीवतोर्भीम-पार्थयोः ॥८७०॥ आच्छिन्नश्रीर्बलात्ताभ्यां, स कूबर इवोच्चकैः । यास्यति त्वत्सुतोऽवश्यं, लोकस्यैवास्य हास्यताम् ॥ ८७१ ॥ किं चेन्द्रप्रस्थमप्यस्य, तदा न स्थास्नु मन्यते । तल्लाभमिच्छतो मूल-क्षतिः शङ्केऽस्य भाविनी ॥ ८७२ ॥ न कश्चिन्नलतुल्योऽस्ति, कूबरस्येव यः पुनः । श्रियं तव तनूजस्य, क्रूरस्यापि प्रदास्यति ॥ ८७३ ॥ देशत्यागं तदा कुर्यात्, सैष युद्ध्वा म्रियेत वा । प्रच्युतप्राभवैः[1] स्थातुं, न शक्यं संस्तुते[2] जने ॥ ८७४ ॥ तदेनं कथमप्यस्मा-न्निवर्तय कदाग्रहात् । द्यूतं हि नाऽऽयतिक्षेम-करं कस्यापि दृश्यते ॥ ८७५ ॥ इत्यसौ विदुरस्योक्ति-र्धृतराष्ट्रहृदि क्वचित् । पूर्णेऽम्भोबिन्दुवत् कुम्भे, नावकाशं समासदत् ॥८७६॥ तावदाप्तगिरो[3] धर्म-कृत्यमायतिचिन्तनम् । गृह्णाति देहिनां मोहो, यावन्मनसि न स्थितिम् ॥ ८७७ ॥ उदारदुःखसंभार-विभिन्नहृदयस्ततः । रैचितोपेक्षमुत्थाय[4], स्वस्थानं विदुरो ययौ ॥ ८७८ ॥

१ नष्टप्रभुत्वैः । २ परिचिते ३ 'गिरा' इति प्रत्यन्तरे । ४ कृतोपेक्षं यथा स्यात्तथा ।

नलस्य राज्यप्राप्तिर्दीक्षया स्वर्गमनं च । विदुरो धृतराष्ट्रमुपदिश्य स्वस्थानं गतः ॥

सभाप्रलोकनव्याजा-दथाह्वातुं तपःसुतम् । हास्तिनं नगरं प्रैषी-द्धार्तराष्ट्रो जयद्रथम् ॥ ८७९ ॥ हस्तिनापुरम-
भ्येत्य, स वेगाद्वाग्मिनां वरः । स्नेहदाक्षिण्यभूयिष्ठं, युधिष्ठिरमभाषत ॥८८०॥ देव ! दुर्योधनस्तुभ्यं, मया विज्ञापयत्यदः ।
बान्धवेषु समग्रेषु, त्वमेव मम जीवितम् ॥ ८८१ ॥ तन्ममाभिनवां दिव्यां, संसदं द्रष्टुमर्हसि । मनोज्ञमपि नाभीष्ट-मदृष्टं हि
सुहृदां सताम् ॥ ८८२ ॥ इन्द्रप्रस्थं ततः प्रेष्य-मेयानन्दं त्वदागमे । अद्यास्तु नूतनोत्सर्प-दुत्सवक्षीबतां गतम् ॥ ८८३ ॥
इत्याकर्ण्य तपःसूनु-र्जयद्रथसरस्वतीम् । इन्द्रप्रस्थं ततः प्रीत्या, चचाल सरलाशयः ॥ ८८४ ॥ सह द्रुपदनन्दिन्या,
कनीयांसस्तमन्वयुः । पौरस्त्यमारुतं सार्धं, विद्युतेव पयोमुचः ॥ ८८५ ॥ तरङ्गपवनोद्धूत-मनुस्वर्धुनि गच्छतः । सहगामीव
धर्मोऽस्य, विरेजे कैतकं रजः ॥ ८८६ ॥ तस्यासेदे बलैः संप-न्माद्यदुद्यानमण्डिता । अविज्ञातमनःशल्यै-रिन्द्रप्रस्थोपश-
ल्यभूः ॥८८७॥ तं प्रत्युद्गमत् सैन्यैः, पृष्ठतो धृतराष्ट्रसूः । पूर्वं वामानिलानीत-स्तत्परागस्त्वभाग्यवत् ॥८८८॥ सहानी-
कैरजानारि-र्मनोरथ उपाक्रमान् । प्राविशन्नगरं तस्य, तत्कालकलितोत्सवम् ॥ ८८९ ॥ बहिर्विकीर्णवात्सल्यं, धृतराष्ट्रं
युधिष्ठिरः । सयान्मतोऽपि बालार्द्रं, शमीतरुमिवानमत् ॥८९०॥ तथा दुर्योधनस्तस्य, तास्ताः स्वागतिकीः क्रियाः । करोति
स्म यथा मेने, तस्मिन्नैकान्त्यमेव सः ॥ ८९१ ॥ भिद्यन्ते हि प्रदीयांसः, प्रेमभिः कृतकैरपि । दौरवीयोऽपि नाराचो,
भिनत्ति कदलीद्रुमम् ॥ ८९२ ॥ भीष्म-द्रोणादयो वृद्धाः, स्नेहग्रहिलचेतसः । चिरयत्यात्मजे पाण्डो-रिन्द्रप्रस्थमु-
पाययुः ॥ ८९३ ॥

---

१ प्रयः परिमाणविशेषः, तेन मेय आनन्दो यस्य यस्मिन् वा । २ क्षीबता-मत्तता । ३ अनिमृदवः । ४ काष्ठनिर्मितः ।

दिव्यसभावलोकनाय युधिष्ठिरस्य इन्द्रप्रस्थे गमनं, तत्र द्यूतक्रीडनं च ॥

अथ क्वचन निःसङ्ग–चतुरङ्गदुरोदराम्। क्वचिद्गमं[1]–चरो–दार–शारक्रीडामनोहराम् ॥८९४॥ क्वचित् प्राप्तजयद्यूत–कारवाचालतालिकाम्। क्वचिच्च कलितोत्कर्ष–शलाकाकेलिशालिनीम् ॥८९५॥ प्रतिपट्टं प्रतिस्तम्भं, प्रत्यस्रि प्रतिपुत्रिकम् । अशक्यदर्शनामेक–देशमप्रेक्षणत्वतः ॥ ८९६ ॥ स्वरामणीयकाक्षिप्त–स्वःसदं संसदं निजाम् । दर्शयामास गान्धारी–तनयो धर्मसूनवे ॥ ८९७ ॥ ( चतुर्भिः कलापकम् । ) भ्राम्यन्तौ तौ ततस्तस्यां, वीक्षमाणावितस्ततः । युवां क्रीडिष्यथः किं ने–त्यजल्पे(ल्प्ये)तां महाक्षिकैः ॥ ८९८ ॥ दुर्योधनोऽप्यभाषिष्ट, विष्टपश्रीविशेषक[2] ! । माननीया महान्तोऽमी, दीव्यामो देवनैः क्षणम् ॥ ८९९ ॥ ओमित्युक्तेऽथ धर्मात्म–जन्मना तावुभावपि । क्रीडितुं प्रक्रमेते स्म, देवनैरितरेतरम् ॥ ९०० ॥ तदा सरलचेतोभि–र्भ्रातृभिः परिवारितः । रेजे धर्मात्मजः पारि–जातः कल्पद्रुमैरिव ॥ ९०१ ॥ धार्तराष्ट्रोऽप्यधाद्दुष्टै–रावृतः सौबलादिभिः । कण्टकिद्रुपरीतस्य, विलासं विषशाखिनः ॥ ९०२ ॥ द्वौ द्विकौ द्वौ चतुष्कौ च, दश चेत्यादिवादिनोः । अक्षद्यूतमनुस्यूतं[3], ततः प्रववृते तयोः ॥ ९०३ ॥ क्रीडामात्रकमित्यादौ, पत्रपूगादिकः पणः । ततोऽङ्गुलीयकाद्योऽभू–द्द्यूते वृद्धिमुपेयुषि ॥ ९०४ ॥ यदा यस्य जयस्तस्य, तदानीं पारिपार्श्वकाः । मोदन्ते स्म रविर्यत्र, तत्रैव कमलोत्सवः ॥ ९०५ ॥ ताम्बूलं वासरो रात्रि–र्भुक्तिपानादिकाः क्रियाः । जगाम विस्मृतिं सर्वं, तयो रङ्गेण दीव्यतोः ॥ ९०६ ॥ आसीज्जयस्तयोरन्यतरस्याप्युभयोरपि । जज्ञे पराजयोऽप्येवं, यावद्द्यूतमभूदृजु ॥ ९०७ ॥

गान्धारीकुक्षिसूगृह्यैः, शकुनिप्रमुखैस्ततः । कौटिल्यसद्मभिश्छद्म–द्यूतं तैरुपचक्रमे ॥ ९०८ ॥ अन्धव–न्मत्रविष्टब्ध–

१ गमादयो द्यूतभेदाः । २ युधिष्ठिरस्य संबोधनमिदम् । ‘ विशेषतः ’ इति प्रत्यन्तरे । ३ ग्रथितम् ।

रश्मि-कल्पद्रुमन् । पतितोऽपि ततो नैक्षि, मदायो धर्मसूनुना ॥ ९०९ ॥ गान्धारस्वामिना पूर्वो-पदिष्टात् करकैतवात् ।
अपानयन् पुनर्नेत्र-मेनार्धं द्यूनराड्भूः ॥ ९१० ॥ ममूर्द्धन्यमणीन्यङ्ग-भूषणानि तपःसुतः । मरुत्पथ इव प्रात-र्भानि
नेन्दुग्रहारयन ॥ ९११ ॥ कर्णादीनां ततः प्रीति-वीजैरुच्छ्वसितं मनाक् । कौशिका हि सहस्रांशु-व्यसनस्पृहयालवः ॥९१२॥
किरणदंनदिति भ्रातृ-मण्डली पाण्डुजन्मनः । न विव्यथेऽलिमालेव, द्वित्रपुष्पव्यये वने ॥९१३॥ अहारयन् क्रमात् कोश-
संभृतं वसु धर्मसूः । ग्रीष्मर्तुपिण्डितं चण्ड-धामेव जलदागमे ॥ ९१४ ॥ ततः संतापधर्मर्तु-रावसत् सुहृदां हृदि । विद्विषा-
मुद्भीकेऽन्तु, मनस्याह्लादमल्लिका: ॥ ९१५ ॥ क्रीडारमात् पणीकुर्वन्, रथ्यां साश्वीयहास्तिकाम् । अभ्यर्थीयत संभ्रान्ते-र्गाङ्गे-
यादिस्तपःसुतः ॥ ९१६ ॥ क्रीडामात्राय वां द्यूत-मस्माभिर्वहुमन्यत । संप्रत्युन्मत्तमेतत्तु, नानुमन्यामहेतमाम् ॥ ९१७ ॥
शताधैश्चैर्जिग्यन्ते, व्यसनैस्त्वादृशा अपि । दैवस्तद्गुणधामापि, तमोभिर्न्यक्करिष्यते ॥ ९१८ ॥ व्यसनैः सह वास्तव्याः, किं
नाम स्युर्गुणाः क्वचित् ? । दृष्टं काप्येकपात्रस्थं, पीयूषं च विषं च किम् ? ॥९१९॥ द्यूतदावानलादस्मात्, तन्निवर्तितुमर्हसि ।
ज्वालन्येष ते पश्य, हहा ! गुणमयः पटः ॥ ९२० ॥ इत्येतां न गिरं तेषा-मजातारिरजीगणत् । सतामपि विधौ क्रुद्धे,
निर्गच्छति शेमुषी ॥ ९२१ ॥ द्यूतासक्तमनीशास्त-मीक्षितुं केचिदत्यजन् । त्यजन्ति राजहंसा हि, मेघाऽऽलिमलिनं तमः ॥
९२२ ॥ हारितैश्वर्यश्रीगः, स कर्णादीनमोदयत् । घनास्तग्रहतारेन्दु, व्योमेव तिमिरोत्करान् ॥ ९२३ ॥
अथाकर-पुर-ग्राम-समग्रमवनीतलम् । ग्लहीकुर्वति कौन्तेये, सभ्याः संभ्रान्तमभ्यधुः ॥ ९२४ ॥ न नाम भवति

१ धूकाः । २ गं, पक्षे किरणसमूहम् । ३ रथसमूहम् ।

क्षोणि-पणोऽयमवधिं विना। हन्त दुर्योधनस्यापि, मद्रकारोऽवधिः कृतः ॥ ९२५ ॥ सर्वथा निजसाम्राज्य-निराशान् पाण्डवानमून्। को निवारयिता विश्वे-ऽप्यपणीकुर्वतः पणम् ॥ ९२६ ॥ सूत्रिते त्ववधौ राज्य-प्रत्याशासुस्थिताशयाः। अन्यायं वाग्विपर्यास-लज्जयाऽपि न तन्वते ॥ ९२७ ॥ इत्याकर्ण्य गिरं कर्णः, सदस्यानामुदाहरत्। सीमा भूमिग्रहेऽमुष्मि-न्नस्तु द्वादशवत्सरी ॥ ९२८ ॥ तां कर्णभारतीमोमि-त्युररीकृत्य देवितुम्। पुनः प्रावर्तिषातां तौ, द्यूतकारावुभावपि ॥९२९॥

हारितायां क्षणादक्ष-कैतवेन क्षितावपि। चतुरोऽपि पणीचक्रे, बान्धवान् धर्मनन्दनः ॥ ९३० ॥ तैश्च दासेरवत् कर्म, कर्तव्यं द्यूतहारितैः। अधिमन्दिरमाजन्म, धृतराष्ट्राङ्गजन्मनः ॥ ९३१ ॥ दुःखस्फुटितहृन्मर्म-कीकॅसध्वनिबान्धवः। उदगात् पारिषद्यानां, महान् हाहारवो मुखात् ॥ ९३२ ॥ शरीरमिदमात्मीय-मस्यैव हि पुनः क तत्। यत्र कुत्रचिदित्यन्तः, खेदिनस्तस्य नानुजाः ॥ ९३३ ॥ राधेय-सौबलादीना-मनिन्दन् केऽपि कैतवम्। निनिन्दुर्धार्तराष्ट्रस्य, केऽपि विश्व-स्तघातिताम् ॥९३४॥ निन्दन्ति स्म तपःसूनोः, केचिदत्यार्जवं मुहुः। धृतराष्ट्रं सुतस्नेह-मोहितं केऽप्यनिन्दिषुः ॥९३५॥ (युग्मम्) क इवैतादृशो ज्येष्ठ-बन्धुः स्वाधीनजीवितः। इति वायुसुतादींस्तु, तुष्टाः सर्वेऽपि तुष्टुवुः ॥९३६॥ हारितेषु प्रतीपेन, वेधसाऽवरजेष्वपि। अजातरिपुरात्मानं, चकाराकृपणः पणम् ॥९३७॥ मा मेति परिषद्वाक्यै-राक्रन्दैरनुजीविनाम्। लोकशोकप्रवादैश्च, शब्दाद्वैतं तदाऽभवत् ॥ ९३८ ॥ भृङ्गाग्रवद्भिरेरापः, प्रतिषेधपरा गिरः। भीष्मादीनामवस्थानं, लेभिरे न युधिष्ठिरे ॥ ९३९ ॥ पणाभावात् पृथासूनु-रथाऽऽत्मन्यपि हारिते। आसीत्किंकार्यतामूढ-स्तरुभ्रष्टप्लवङ्गवत् ॥९४०॥

१ (मद्रकारः क्षेमंकर इति शब्दकल्पद्रुमः। २ 'कृतोऽवधिः' इति अन्वयः)। ३ क्रीडितुम्। ४ कीकसम्-अस्थि।

ततस्तं म्लानीभूय, बभाषे सुबलात्मजः । पणस्तवास्ति पाञ्चाली, तयाऽऽत्मानं विमोचय ॥९४१॥ इत्युक्ते तेन वैक-
न्य-गल्यङ्कः सह कीर्तिभिः । द्रौपदीमपि कौन्तेयो, निनाय पणतां तदा ॥ ९४२ ॥ गान्धारीसुतगृह्याणा-मपि केषां-
चिदश्रुभिः । तदाऽविरामनश्रूणि, गुणाः सर्वप्रियंकराः ॥ ९४३ ॥ दुर्जनैकधुरीणाय, तस्मै द्यूतसृजे नमः । येन कामप्यनी-
गन्त, महान्तोऽपीदृशीं दशाम् ॥ ९४४ ॥ द्रौपदीपणमाहात्म्या-द्यदि नाम तपःसुतः । इदानीं जयतीत्यादि, तदाऽन्योन्यं
जगुर्जनाः ॥ ९४५ ॥ क्षणेनाथ भुजाऽऽस्फोट-नादकन्दलितोदयाः । जितं जितमिति स्वैर-मुच्चेरुः शकुनेर्गिरः ॥ ९४६ ॥
स्तम्भिता इव मूर्च्छाला, इव चित्रार्पिता इव । मृता इव ग्रहग्रस्ता, इव सभ्यास्तदाऽभवन् ॥ ९४७ ॥ शत्रवः पाण्डुपुत्राणां,
हृतवन्तो राज्यसंपदम् । तेनुरुद्भूतसत्त्वानां, निःसपत्नां सुखश्रियम् ॥९४८॥ कौरवाः पर्यपूर्यन्त, संमदैः क्षयहेतुभिः । अन्याय-
संभृताऽऽभोगै-र्धिमेनेव दस्यवः ॥ ९४९ ॥

अथ दुर्योधनादेशा-द्यावद्दुःशासनो मुदा । वासांसि पाण्डवेयाना-मपक्रष्टुमचेष्टत ॥ ९५० ॥ तावत्ते स्वयमुत्सृज्य,
नीरराण्यम्बरश्रियः । धृताधोवसनाः पर्ष-द्युपाविक्षन्नवाङ्मुखाः ॥ ९५१ ॥ ( युग्मम् ) अत्रैवाऽऽनीयतां साऽपि, पुंश्चली
पञ्चवल्लभा । इत्यादिशत् कनीयांसं, मन्दमेधाः सुयोधनः ॥ ९५२ ॥ ततो दुःशासनो लुप्त-गरीयःसाधुशासनः ।
स्मेरास्याम्बुजोऽभ्येत्य, पाञ्चालीमित्यभोचत ॥ ९५३ ॥ तेन दुर्मेधसा पत्या, हारिताऽसि दुरोदरे । त्वं जिताऽसि च
पाञ्चालि ! भार्तराष्ट्राग्रजन्मना ॥ ९५४ ॥ ततः स भवतीं प्रीति-प्रह्वमाह्वयति द्रुतम् । न चेदेष्यसि नेष्यामि, तद्बलादपि

१ क्रियाविशेषणमेतत् ।

भामिनि ! ॥९५५॥ पाञ्चालदुहिताऽवोच–न्नन्वद्यास्मि रजस्वला । एकांशुका च तत्संसद्युपागच्छाम्यहं कथम् ? ॥९५६॥ किं च किंचन पृच्छामि, किंस्विदात्मनि हारिते । अहारिते वा तेनास्मि, हारिता जगतीभुजा ? ॥ ९५७ ॥ हारिताऽपि न तेनास्मि, हारिता हारिताऽऽत्मना । स्वकायेऽप्यस्वतन्त्रस्य, का नाम प्रभविष्णुता ? ॥९५८॥ प्रातरुच्चण्डमार्तण्ड–रोचिराचान्तदीधितिः । जानीहि रजनीनाथो, रजन्या अप्यनीश्वरः ॥९५९॥

तामित्युक्तवतीं क्रुध्य–न्नूचे दुर्योधनानुजः । धिग्वाचालाऽसि पाञ्चालि !, पुरो भवसि किं न हि ? ॥९६०॥ धर्मस्थैर्ये[1] त्वमेवासि, सांप्रतं किमधीतिनी ? । जाने तमपि जानासि, बृहस्पतिमकोविदम् ॥ ९६१ ॥ इत्युदीर्य स कस्तूरी–भराङ्कुरितकान्तिषु । चकर्ष विहितामर्षः[2], केशेषु द्रुपदात्मजाम् ॥९६२॥ आः ! पाप ! कुरुभूपाल–गोत्रकिंपाकपादप ! । किं मामेवंविधामेव, नेतासि गुरुसंनिधौ ॥९६३॥ नीरङ्गीस्थगितं यस्याः, कोऽपि नापश्यदाननम् । हा ! सर्वेऽनावृताङ्गीं तां, द्रक्ष्यन्ति गुरवोऽद्य माम् ॥९६४॥ दुरात्मन् ! किं भवत्कर्म, कर्मसाक्ष्यपि[3] नेक्षते ? । यन्न क्षणात्क्षिणोति त्वां, परस्त्रीस्पर्शपांशुलम् ॥ ९६५ ॥ क्रन्दन्तीति गलन्नेत्र–नीरैर्नीरजिता[4]क्षितिः । तेनाकृष्टा जनैर्दृष्टा, सा मृगीव मृगारिणा ॥९६६॥ शतशः शपमानानां, तदा दुःशासनं सताम् । नवसारस्वतोल्लास–लासिनी रसनाऽभवत् ॥९६७॥ तपःसूनोरपि ज्ञान–धर्म–न्याय–शमादिषु । जनः सावज्ञ एवाभूत्, क्लिश्यमानां विलोक्य ताम् ॥९६८॥ नेत्राश्रुसलिलैः कूलं–कषस्रोतस्विनीमयी । नूतना प्रावृडारेभे, लोकैः शोकाकुलैस्तदा ॥ ९६९ ॥ तामेकवसनामश्रु–विक्लवाक्षीं त्रपानताम् । निनाय न्यायशून्याऽऽत्मा, हठाद्दुःशासनः सभाम् ॥

युधिष्ठिरेण द्यूते हारितम्॥

१ 'धर्मशास्त्रे' इति प्रतिद्वय० । २ कृतक्रोधः । ३ सूर्यः । ४ नीरजिता रजोविनाकृता ।

९७०॥ अश्रुमदैन्यमालिन्यां, सा मषीकूर्चिकामिव। तत्र व्यापारयामास, मुखेषु प्रेयसां दृशम् ॥९७१॥ तामालोक्य तथाभूतां, तथाकदर्थिताऽऽशयाः। प्रेक्षामासुः सुताः पाण्डो–र्विविक्षव इव क्षितिम् ॥९७२॥ गृहेऽप्येतदरक्षन्तः, किं द्रष्टव्याऽऽनना जगत् ?। इतीव निदधुर्वक्त्रं, ह्रिया भीष्मादयोंऽशुकैः ॥९७३॥ दृशो द्रुपदनन्दिन्यां, नवरागतरङ्गिताः। कौरवाधिपतेः पेतुः, कामपाशङ्किता इव ॥९७४॥ कृशोदरि ! चिरादासी–दनुरागो मम त्वयि। हन्तायमन्तरायोऽभूत्, पाण्डवैः पाणिपीडनम् ॥९७५॥ इदानीमप्युपागत्य, अटिल्वेनास्यतामितः। इत्यूरुं दर्शयामास, याज्ञसेन्याः सुयोधनः ॥ ९७६ ॥ ( युग्मम् )

अथावोचत पाञ्चाली, कोपकम्प्रतराधरा। कुरुराजान्वयोदन्व–त्कालकूट ! कुलाशने ॥९७७॥ भस्मसात् किं न जातोऽसि, निन्दया ऽऽननया मयि ?। कोटरान्तर्गतोऽप्यग्नि–र्दहत्येव महीरुहम् ॥ ९७८ ॥ ( युग्मम् ) यदि गोत्रगरीयांसः, केऽपि स्युर्मेदिनीभुजः। नकुला अपि केऽपि स्यु–र्यदि मे भुजशालिनः ॥ ९७९ ॥ मर्षयेयुस्तदेतस्य, किमेतदनुजस्य च। जीवितव्यकथाकन्या–मित्यमन्यायवर्तिनोः ॥ ९८० ॥ ( युग्मम् ) किं चान्तःस्वान्तमालोच्य, कथयन्तु सभासदः। हारितस्वात्मना भर्त्रा, मत्वेयं यदि हारिता ॥ ९८१ ॥

अथाभाषत राधेयः, सभ्यान् किमियमङ्गना। विजिते राज्यसर्वस्वे, न तदन्तर्गता जिता ? ॥ ९८२ ॥ अथैकवासमोऽम्बरा, सभेयमन्मतं न नः। बलादानयनं कोऽपि, नेयमप्यव्यवस्थितिः ॥ ९८३ ॥ एक एव पतिर्लोके, योषितामुपगी-

१ प्रोत्फुल्लगिन्त्याः, प्रतिषु ' विवक्षवः ' इति पाठो दृश्यते, स न सम्यक्। २ कुले–वंशे अशनिः–वज्रसमानः, तत्सम्बुद्धौ। ३ ' क्वापि ' प्रत्यन्तरपाठः।

यते । अनेकप्रेयसीयं तु, बन्धक्येव न संशयः ॥ ९८४ ॥ तदेकवसनत्वं वा, वस्त्राराहित्यमप्यथ । पर्षदानयनं वाऽपि, नैत-
स्याः खल्वसांप्रतम् ॥ ९८५ ॥ इति कर्णोक्तिमाकर्ण्य, क्रोधाध्माताशया अपि । दुर्योधनभिया सभ्या-स्तूष्णीमेवालेलम्बिरे[1]
॥ ९८६ ॥ गान्धारेयोऽभ्यधात् क्रोध-स्फुरदोष्ठपुटोऽनुजम् । जितैवेयं मया सभ्यै-रजल्पद्भिर्निवेदिता ॥ ९८७ ॥ तत्
सतीमानिनीमेना-मुन्मोच्याग्रेतनाम्बरम् । परिधाप्य जरद्दण्डी-खण्डं दासीषु निर्दिश ॥ ९८८ ॥ इति दुःशासनो दुष्ट-ज्ये-
ष्ठबान्धवशासनात् । नितम्बादम्बरं पाण्डु-स्नुषायाः स्वैरमाकृषत् ॥ ९८९ ॥ मा मेति दीनजल्पाक्याः, प्रक्षिपन्त्या मुखेऽ-
ङ्गुलीः । रुन्धत्यास्तत्करौ कामं, पश्यन्त्याः पर्षदाननम् ॥ ९९० ॥ दुष्टात्मनांशुके कृष्टे, तेनास्या ददृशुर्जनाः । दैवतेनानु-
भावेन, तादृगेवान्यदंशुकम् ॥ ९९१ ॥ ( युग्मम् ) मनुष्यपांसनः क्षिप्र-माचकर्ष तदप्यसौ । भूयोऽप्याविरभूत्ताद-क्तस्याः
श्रोणितटेऽम्बरम् ॥ ९९२ ॥ इत्थमाकर्षतस्तस्य, बभूव वसनोत्करः । क्लान्तश्चायमपीयाय, दृष्टः स्मेराननैर्जनैः ॥ ९९३ ॥
अथ क्रोधोदयात्ताम्र-चक्षुरूर्द्ध्वजकुन्तलः[2] । रोमाञ्चकवची स्वेद-मेदुराङ्गः सवेपथुः ॥ ९९४ ॥ पाणिना पाणिमुत्पिंषन्,
सर्वतो वीक्ष्य संसदम् । विकाशिनासिकाकोशः, प्रत्यज्ञासीद्वृकोदरः ॥ ९९५ ॥ युग्मम् ॥ येनानीता सभां कृष्णा, बला-
दालम्ब्य कुन्तलैः । गुरूणां पश्यतां चास्याः, श्रोणेराकृष्टमम्बरम् ॥ ९९६ ॥ बाहुदण्डं न चेत्तस्य, मूलादुन्मूलयाम्यहम् । कवो-
ष्णैश्चाभिषिञ्चामि, न वक्षःशोणितैः क्षितिम् ॥ ९९७ ॥ येन च सरकल्लोल-केलिभिर्लोलितात्मना । द्रौपद्या दर्शितः स्वैर-मूरु-
देशो रिरंसुना ॥ ९९८ ॥ तस्योरुं गदया तूर्णं, चूर्णीभावं नये न चेत् । तन्न मे पाण्डुना जन्म, न च क्षत्रव्रतं क्वचित् ॥

१ 'वावलम्बिरे' प्रतिद्वय० । २ 'रुद्धर्षिकुन्तलः' इत्येकप्रतिपाठः साधुः ।

९९९ ॥ इत्युदीरितवन्युचे–र्भीमे संभावितौजसि । सभाक्षोभोऽजनि क्षीर–पाथोधिमथनोपमः ॥ १००० ॥

मध्येसभमथोत्थाय, धृतराष्ट्रमदुष्टधीः । जगाद विदुरः शोक–संभारभिदुराशयः ॥ १००१ ॥ प्रसूतमात्र एवायं, पुराऽऽख्यायि मयाऽपि ते । दुरात्मा कुलकल्पान्त–धूमकेतुः सुयोधनः ॥१००२॥ किमीदृक्क्रियते कर्म, चण्डालानां कुलेऽपि । कैतवेन विजीयन्ते, भ्रातरोऽपि यदात्मनः ? ॥ १००३ ॥ पुरो गुरूणामानीय, केशैरादाय तत्प्रियाम् । तन्नितम्बस्थलादागो, निःशङ्कं यच्च कृष्यते ॥१००४॥ तत् कथं सहतां नाम, भीमः कान्तापराभवम् ? । न प्रियागःसहास्तेऽपि, पक्षिणः किमु दोर्भृतः ? ॥ १००५ ॥ अदुःशासनमद्रोण–मकर्णमसुयोधनम् । अभीष्म-धृतराष्ट्रं च, राष्ट्रं भीमः करिष्यति ॥ १००६ ॥ तत् कथं सर्वसंहार–मिदानीमप्युपेक्षसे ? । घातय क्रूरकर्माण–मेनमेकं सुयोधनम् ॥ १००७ ॥ नैवं चेत्तदमुं पापं, पापादस्मान्निवर्तय । अमी वनाय गच्छन्तु, पाञ्चाल्या सह पाण्डवाः ॥ १००८ ॥ पुनरेत्यावधेरन्ते, भुञ्जन्तां जगतीमिमाम् । न चेत् कुटुम्बसंवर्त–स्तवाद्यायमुपस्थितः ॥१००९॥ इति भ्रातुर्गिरा भीति–प्रथमानाङ्गवेपथुः । बभाषे भृशमाक्रोशन्, धृतराष्ट्रः सुयोधनम् ॥ १०१० ॥ आः ! पापकर्मचाण्डाल !, सदाचारवनद्विप ! । निरपत्रप ! नाद्यापि, दुष्कर्मभ्यो निवर्तसे ? ॥१०११॥ विसृज स्वैरचाराय, बान्धवान् सह जायया । न चेन्मत्करवालोऽयं, शिरस्ते न सहिष्यते ॥१०१२॥

पितुर्गिरमिति श्रुत्वा, मनःकलुषमुच्चकैः । भीष्मादीनां च संभाव्य, भाषते स सुयोधनः ॥ १०१३ ॥ ममाप्येकं तन्महर्षि, गर्गीयांसो ! भवन्वदः । नेतव्यं पाण्डवैः क्वापि, गुप्तैर्वर्षं त्रयोदशम् ॥ १०१४ ॥ निगूढानप्यमूंस्तर्सि–श्रेज्ज्ञानामि

१ कुटुम्बप्रलयः ।

कथंचन । तन्मेदिनीमिमां भुञ्जे, पुनर्द्वादशवत्सरीम् ॥ १०१५ ॥ अमीभिस्तु पुनस्तावद्-विधातव्या वने स्थितिः । इत्युक्तिं
पाण्डवास्तस्य, गुर्वादेशात् प्रपेदिरे ॥ १०१६ ॥ निदेशाद्धृतराष्ट्रस्य, द्रोण-गाङ्गेययोरपि । आर्पयत् पाण्डुपुत्राणां, प्रावा-
रान् कौरवाग्रणीः ॥ १०१७ ॥ गुरूणामनुरोधेन, पाण्डवेयानधोमुखान् । नित्ययौवनया सार्ध-मनुमेने वनाय सः ॥
१०१८ ॥ याज्ञसेनीं पुरस्कृत्य, मूर्तां धृतिमिवात्मनः । पदातयः सुताः पाण्डो-रिन्द्रप्रस्थात् प्रतस्थिरे ॥ १०१९ ॥
जाह्नवेयादयो वृद्धाः, स्नेहसंदोहमोहिताः । मन्यूर्मिमलिनास्यास्ता-नन्वगुः पादचारिणः ॥ १०२० ॥ संततास्रुपयःपूर-
पङ्किलीकृतवर्त्मभिः । ते तथा पथि गच्छन्तो, निरीक्षांचक्रिरे जनैः ॥ १०२१ ॥

हारिताखिलनरेन्द्रसंपदः, पाण्डवाः स्फुरदखण्डतेजसः ।
मातरं च पितरं च वीक्षितुं, हस्तिनापुरमुपागमन् पुनः ॥ १०२२ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते महाकाव्ये पाण्डवचरिते नलोपाख्यानद्यूत-
वर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

---

१ वस्त्राणि । २ मुखः प्रतिद्वय ।

# अथ सप्तमः सर्गः ।

अथ धर्मसुतः सत्य-निर्वाहस्पृहयालुना । मनसा वनवासाय, प्रतस्थे हस्तिनापुरात् ॥ १ ॥ भीमादयः सह भ्रात्रा-
त्रतमंनद्बुद्धयः । स्वस्वशस्त्रादिसामग्री-समग्राश्चेलुरग्रतः ॥ २ ॥ पाण्डुश्च धृतराष्ट्रश्च, भीष्मश्च स्नेहमोहिताः । निर्यद्बाष्प-
जलोत्पीडाः, पाण्डवाननु वव्रजुः ॥ ३ ॥ सत्यवत्यादयः सर्वाः, शोकार्ता ज्येष्ठमातरः । दासीहस्तकृतालम्बा, बभूवुः
पाण्डवानुगाः ॥ ४ ॥ भद्रं तवास्तु क्रीडाद्रे !, क्रीडावापि ! नमोऽस्तु ते । क्रीडावन ! तव क्षेमः, पुनर्वः संगमः कुतः ?
॥ ५ ॥ हंहो ! गर्हिनहो ! हंस !, हले[2] ! हरिणि ! हे शुक ! । कुशलं वोऽस्त्वसौ देवा-द्याति वः परिचारिका ॥ ६ ॥ इत्या-
पृच्छ्य पतत्राण्या, केलिपात्राणि सर्वतः । बद्धा परिकरं कृष्णा, कुन्तीपृष्ठस्थिताऽचलत् ॥ ७ ॥ (त्रिभिर्विशेषकम्) लोकोऽपि
पुरसाम्तव्यो, गुणगृह्यतया परम् । विहाय गृहसर्वस्वं, धर्मनन्दनमन्वगात् ॥ ८ ॥ सर्वैः साकं सशोकैस्तैः, पार्वणेन्दुसमा-
ननः । धर्मात्मजः पुरान्निर्य-न्मूर्तो धर्म इवाबभौ ॥ ९ ॥ विसंकटेऽपि संबद्ध-संकटे पथि गच्छताम् । परस्परस्य लोकानां,
मिथः पप्रथिरे कथाः ॥ १० ॥

निजं नलेन साम्राज्यं, पुरा द्यूते पणीकृतम् । हा ! हा ! युधिष्ठिरेणापि, तदिदानीमनुष्ठितम् ॥ ११ ॥ धिग्धिग्दुर्यो-
धनं येन, महात्मा धर्मनन्दनः । कृत्वा द्यूतमयं छद्म, त्याजितो राज्यसंपदम् ॥ १२ ॥ दुर्योधनस्य न स्थास्नु, राज्यमा-

१ त्राणा-प्रयाणं सेय व्रतम् । २ 'हला' प्रतित्रय० ।

त्तमपि ध्रुवम् । यावद्विजयिनावेतौ, वृकोदर-किरीटिनौ ॥ १३ ॥ किं चान्यत् प्रतिपाश्चालि, यदनेन प्रपञ्चितम् । आंल-प्यालं तदस्माक-मेतस्यैव फलिष्यति ॥ १४ ॥ जनानां सानुरागाणा-मित्थमुत्तस्थिरे गिरः । केषां न पक्षपातः स्या-त्ताद-शेषु महात्मसु ? ॥ १५ ॥

अथान्यमनसं कृष्णां, क्रूरः किर्मीरराक्षसः । अकस्मान्नभसोऽभ्येत्य, भापयामास वर्त्मनि ॥१६॥ मषीकृष्णवपुः पिङ्ग-विकीर्णघनमूर्द्धजः । स मौलिप्रज्वलद्दावो, विन्ध्याचल इवाबभौ ॥१७॥ गवलश्यामलो बिभ्र-दङ्गारसदृशौ दृशौ । जहास प्रलया-काश-मुदिताङ्गारकद्वयम् ॥१८॥ भुजङ्गीतरलां जिह्वां, बिभ्राणं द्रौपदीपुरः । दन्तैः कृतान्तकुन्ताभै-र्भीमं स व्याददौ मुखम् ॥१९॥ ततो भयार्तमत्युच्च-मुच्चरत्प्रतिनिस्वनम् । द्रौपदी रोदसीभेद-कोविदं विदधे ध्वनिम् ॥ २० ॥ तेनाथ ध्वनिनाऽऽकृष्टः, कोपाटोपादुपेत्य तम् । भीमो निर्भर्त्सयांचक्रे, किमिदं पाप ! चापलम् ॥ २१ ॥ दीर्घाध्वपथिकीं श्रान्तां, प्रवासेन विषेदुषीम् । प्रियां भीषयसे मे त्व-मधुना भुङ्क्ष्व तत्फलम् ॥ २२ ॥ इत्याक्षिप्य गदाघातै-स्तं नीत्वाऽन्तं वृकोदरः । योऽस्ति दुर्योधने क्रोध-स्तन्मुष्टिं कृष्टवांस्तदा ॥ २३ ॥ दुर्योधनवधारम्भे, किर्मीरं तस्य वल्लभम् । निहत्यास्थापयद्भीमो, भद्रायोंकारमादिमम् ॥ २४ ॥ इमं किर्मीरवृत्तान्त-मविदन्नेव भूपतिः । आजगाम लतारम्यं, काम्यकं नाम काननम् ॥ २५ ॥ तदा विकर्तनः कर्तु-मात्मानमिव पावनम् । अध्यास्य नभसो मध्य-मास्यं तस्यास्पृशत् करैः ॥ २६ ॥ कुकर्मकर्मठेऽ-त्यन्त-क्रोधादिव सुयोधने । कर्मसाक्षी तदा मङ्क्षु, जज्वाल ज्वलनोपमः ॥२७॥ मातापितृजनः सर्वः, पादचारेण खिद्यते ।

१ उक्त्वाऽलम् । २ अङ्गारकः-भौमग्रहः । ३ खिन्नाम् । ४ सूर्यः । ५ सूर्य । 

तत् पञ्चगव्रमग्रेन, देवास्थीयतामिति ॥ २८ ॥ मुहुर्विज्ञापितो भीम-सेनेन वसुधाधिपः । सर्वेषामपि लोकाना-मप्रयाणं समादिशत् ॥ २९ ॥ ( युग्मम् ) अपाथेयो जनस्तत्र, तपनातपविक्लवः । वाहूपधानः सर्वोऽपि, सुष्वाप प्रतिपादपम् ॥३०॥ तादृशे वनवासेऽपि, तेषामात्मानुगामिनाम् । वृत्तिचिन्ता दुनोति स्म, धर्मनन्दनमानसम् ॥ ३१ ॥ ज्ञात्वा तादृग्मनो राज्ञः, पार्थः सस्मार सत्वरम् ॥ विद्यां मनोहराहार-समाहरणकोविदाम् ॥ ३२ ॥ ततस्तयोपनीतायां, रसवत्यां पृथाज्ञया । तं जनं भोजयामास, प्रमोदाद्द्रुपदात्मजा ॥ ३३ ॥ विनयान्निजवन्धूनां, राज्यसौख्यातिशायिनाम् । सुखेन धर्मसूनुस्तं, गमयामास वासरम् ॥ ३४ ॥

अपरेद्युर्महाबाहुः, पित्रादेशात् स्वदेशतः । पाञ्चालदुहितुर्बन्धु-र्धृष्टद्युम्नः समाययौ ॥ ३५ ॥ प्रणम्य धर्मपुत्रादीनुपतस्थे स सोदराम् । अवादीच कथं दीन-मित्थं धत्से मुखं स्वसः ! ॥३६॥ हस्तिनापुरचारिभ्य-श्चारेभ्यश्छद्मना कृतम् । श्रुत्वा प्रवासमेवं व-स्तातेन प्रहितोऽस्म्यहम् ॥ ३७ ॥ इदानीमपि सोदर्ये !, निजशौर्येण विष्टपम् । अदुर्योधनमाद्रष्टुं, मन्यते तु पतिर्न ते ॥ ३८ ॥ ततः सत्यजडो याव-द्वने द्वादशवत्सरीम् । नीत्वा ते पतिरभ्येति, तावदेहि गृहं पितुः ॥ ३९ ॥ इत्युक्ता प्रत्यभाषिष्ट, पाञ्चालनृपतेः सुता । दुर्योधनवधे विघ्नो, राजैव भीम-पार्थयोः ॥ ४० ॥ पाण्डवानां पदैर्यानि, पावनानि वनान्यपि । मह्यं तान्येव रोचन्ते, कृतं पितृगृहेण मे ॥ ४१ ॥ केवलं सरलान् बालान्, भागिनेयानिजानमून् । पञ्चाप्यादाय पाञ्चालान्, व्रज त्वं विजयी भव ॥ ४२ ॥ एवमुक्तस्तया स्नेहा-द्धर्मसूनोरनुज्ञया । धृष्टद्युम्नः पनद्वाप्य-स्तान् गृहीत्वा गृहं ययौ ॥ ४३ ॥

अन्येद्युरभ्रमूकान्त-कान्तदन्तावलं बलम् । बिभ्रन्नारायणः प्रीत्या, युधिष्ठिरमुपाययौ ॥४४॥ प्रत्युद्गम्य तमायान्तं, प्रणमन्ति स्म पाण्डवाः । ववन्दे द्रुतमभ्येत्य, सोऽपि कुन्तीपदाम्बुजम् ॥ ४५ ॥ कंसध्वंसी सुखासीनो, निविष्टं विष्टरे पुरः । मनःसंक्रान्ततद्दुःखो, धर्मनन्दनमभ्यधात् ॥ ४६ ॥ दुर्योधनकवीन्द्रेण, स्पष्टाभीष्टार्थदंष्टिना । दुरोदरप्रबन्धोऽयं, व्यधायीति श्रुतं मया ॥ ४७ ॥ दुर्योधननरेन्द्रस्य, द्यूतमन्त्रैकसाधने । उभावभूतां शकुनिः, कर्णश्चोत्तरसाधकौ ॥४८॥ अभविष्यन्निकारोऽयं, मयि संनिहिते न ते । रोहिणीरमणं राहु-ग्रसते न बुधान्तिके ॥ ४९ ॥ इमौ तु बिभितस्तुर्भ्यं, भीमौ भीम-धनंजयौ । अन्यथा कुरुतो हेतौ, वसुधामसुयोधनाम् ॥ ५० ॥ इदानीमप्यमुं दृप्तं, रिपुमुच्छिन्दतो ध्रुवम् । तवायं सत्यनिर्वाह-जडिमैव ममार्गला ॥५१॥ यत्तु दुश्चरितं तस्य, पाञ्चाल्याः केशकर्षणम् । तदेतया ममामीभि-र्बाष्पैः पश्य निवेद्यते ॥ ५२ ॥ नूतनो मम कोपाग्निः, पाञ्चालीनयनाम्बुभिः । ज्वलितोऽतीव गान्धारी-दुरपत्यं दिधक्षति ॥ ५३ ॥ ततः सतीतिरस्कार-पाप्मनामधुना फलम् । तं दुष्टं लम्भयिष्यामि, मा स्म प्रत्यूहमावह ॥ ५४ ॥

इत्युक्त्वा विरते विष्णौ, कृष्णाहृदयवल्लभः । मूर्ध्ना प्रणम्य सद्बुद्धि-र्बद्धाञ्जलिरदोऽवदत् ॥ ५५ ॥ कंसान्तक ! त्वयि क्रुद्धे, न हि शक्रोऽपि विक्रमी । मनुष्यकृमयः केऽमी, पुनर्दुर्योधनादयः ? ॥ ५६ ॥ सत्यातिक्रमकौलीनं, मदीयं किं तु लोकतः । समाकर्ण्य त्वमेवात्र, विश्वत्रातस्त्रपिष्यसे ॥५७॥ निषिद्धौ बान्धवावेतौ, मयाऽऽदेशवशंवदौ । त्वं तु व्यावर्त(र्त्य)से-

( १ कोषेषूपलभ्यमानस्याभ्रमुशब्दस्य ह्रस्वत्वादीर्घत्वमत्र चिन्त्यम् । ) अभ्रमुकान्तः—ऐरावणः.

२ 'सिद्धिना' 'वृष्टिना' इति प्रत्यन्तरपाठः । ३ पराभवः । ४ चतुर्थी चिन्त्या । ५ दग्धुमिच्छति ।

युधिष्ठिर-समीपे धृष्टद्युम्न-स्यागमनम् । कृष्णोऽपि पश्चादागतः ॥

ज्रृम्भा-दारम्भागेन प्रसीदसि ॥ ५८ ॥ इत्थं क्रूरौ शमं नीते, विनीतो नीतिकोविदः । धर्मजो बान्धवैः सार्धं, भीष्मस्या-
भ्यर्णमभ्यगात् ॥५९॥ अब्रवीच्च वृद्धतात-गुरुभ्योऽपि गुरुर्भवान् । व्यसनत्रासिनीं शिक्षां, देहि मे पारिपार्श्विकीम् ॥ ६० ॥
अथाभाषत भीष्मोऽपि, कुरुगोत्रशितद्युते ! । विश्वत्रयीसंवननं, तवैवेदृग्गुणार्जनम् ॥ ६१ ॥ मित्रा-मित्रपरीक्षार्थं,
मन्ये व्यसनमाप्यदः । त्वयैवात्तं स्वयं नो चेत्, क भवान् ? क दुरोदरम् ? ॥ ६२ ॥ जगज्जैत्रकलाः पार्श्वे, यस्यैते मन्ति
बान्धवाः । सोऽपि द्यूते विजीयेत, स्यान्न चेद्भवितव्यता ॥ ६३ ॥ एकाकिनैव कान्तार-विहारस्पृहयालुना । नियतं
त्वत्कुमारत्वा, स्वयमेकपदे त्वया ॥ ६४ ॥ भूत्वा समस्तवस्तूनां, संविभागपरः पुरा । इदानीं कथमेकाकी, मोक्ष्यसे वनसंप-
दम् ? ॥ ६५ ॥ तन्मामप्यनुजानीहि, सहागमनहेतवे । चूडाचन्द्रं महेशोऽपि, न जातु त्यजति क्वचित् ॥ ६६ ॥ कुर्वन्नित्या-
ग्रहं भीष्मः, पादावाधाय मूर्धनि । विनयाद्धर्मपुत्रेण, वारितः पुनरब्रवीत् ॥ ६७ ॥ ग्राह्याः प्रतिभुवः पञ्च, चौरास्तु त्रिगु-
णास्ततः । निग्राह्याः क्षोणिपालेन, श्रियःस्थेमानमिच्छता ॥६८॥ दान १ मौचित्यविज्ञानं २, सत्पात्राणां परिग्रहः ३ । सुकृतं ४
गुप्तमन्त्रं ५ च, पञ्च प्रतिभुवः श्रियः ॥६९॥ सदा वशंवदैरेतैः, प्रतिभूभिरभून्नृपः । एतेभ्यस्त्रिगुणान् वत्स !, विद्धि राज्यहरान्
पुनः ॥७०॥ अरिषड्वर्गसंसर्गः ६, प्रकृतौ ७ योग्यकर्मसु ८ । नये ९ धर्मे १० प्रतापे ११ च, विमुखत्वमनारतम् ॥७१॥
अज्ञान १२ मनृतं १३ लज्जा, १४ निखिलव्यसनं १५ तथा । एते राज्यहृतौ वत्स !, स्युः पञ्चदश दस्यवः ॥ ७२ ॥
प्रत्येकमेषां राज्यश्री-हरणे प्रभविष्णुता । पश्यैकेनापि ते द्यूत-व्यसनेन कियत् कृतम् ? ॥ ७३ ॥ उच्छेदाय तदेतेषां, यते-

१ लोकनवशीकरणम् । २ साक्षिणः । ३ कामः १ क्रोधः २ लोभः ३ मोहः ४ मदः ५ मत्सरश्च ६ ।

थास्तात ! सर्वथा। पुनराच्छिद्य तैरात्ता-माददीथाः श्रियं यथा ॥ ७४ ॥ वर्तेथाश्च तथा तात !, मानसेनाप्रमादिना। पूर्णेऽवधौ निवर्तेथाः, काननात् कुशली यथा ॥ ७५ ॥ इत्याभाष्य गृहान् भीष्मे, प्रत्यावृत्ते युधिष्ठिरः। द्रोणाचार्य-कृपाचार्या-वापृच्छत वनेच्छया ॥ ७६ ॥

द्रोणोऽवादीदविद्राण[2]-वात्सल्यो वत्स ! वत्स्यसि। आकल्पममुना सत्य-व्रतेन हृदये सताम् ॥ ७७ ॥ वत्स ! धर्मेण सत्त्वेन, विनयेन नयेन च। अमुना भुवनस्यास्य, भवितासि निदर्शनम् ॥ ७८ ॥ द्रोणो गुरुरमी सर्वे, शिष्याः पाण्डव-कौरवाः। यद्यप्येवं तथाऽप्यस्मि, युष्मासु सविशेषदृक् ॥ ७९ ॥ तत्रापि पुत्रवात्सल्या-दस्त्रे निष्पादितस्तथा। मया पार्थो यथा तैस्तै-र्गुणैर्जयति मामपि ॥ ८० ॥ तदेतस्मिन् समीपस्थे, न ते प्रत्यूहसंभवः। दुस्तरे सन्तु कान्तारे, पन्थानः शिव[3]-तातयः ॥ ८१ ॥ उपोषितानां पीयूष-बन्धुना दर्शनेन ते। अचिरेणैव भूयान्मे, नेत्राणां पारणोत्सवः ॥ ८२ ॥ इत्युदीर्य गते द्रोणे, सकृपे साश्रुलोचने। निर्व्याजं व्याजहारेति, धृतराष्ट्रं युधिष्ठिरः ॥ ८३ ॥

ज्येष्ठतात ! नमस्तुभ्यं, प्रसन्ना देहि नो दृशः। दुर्योधनस्य संदेशं, गतो व्याहर्तुमर्हसि ॥ ८४ ॥ भ्रातः ! कुरुकुलोत्तंस !, तथैताः पालयेः प्रजाः। पूर्वजोपार्जिता कीर्ति-र्नाश्नुते म्लानतां यथा ॥ ८५ ॥ तस्य वैनयिकं पश्यन्, स्वसूनोर्दुर्नयं पुनः। अपत्रपिष्णुस्तूष्णीको, धृतराष्ट्रः पुरं ययौ ॥ ८६ ॥ ज्यायस्यः सत्यवत्याद्याः, प्रसाद्य नतिपूर्वकम्। धर्मजेन वने यातु-मन्वज्ञाप्यन्त मातरः ॥ ८७ ॥ अभिनन्द्य तमाशीर्भि-र्निर्भिन्नहृदया इव। अतुच्छशोकमूर्च्छाला-स्तास्ततः

१ 'तेभ्यस्ता०' प्रत्यन्तर०। २ प्रभूतवात्सल्यः। ३ कल्याणश्रेणयः। ४ चन्द्रेण।

कथमप्यगुः ॥ ८८ ॥ अथ कार्यविदाकार्य, लोकमस्तोकमेकतः । नगराय निवर्तध्व-मिति भूपतिरादिशत् ॥८९॥ लोकोऽप्य-न्यदाकल्प-मस्माकमनुजीविनाम् । पादा नन्दन्ति यत्रैते, तत्रैव नगरं प्रभो ! ॥ ९० ॥ आत्मानुयायिनीं छायां, व्यावर्तयसि चेदिमाम् । तदा वयं महीनाथ !, व्यावर्तेमहि नान्यथा ॥ ९१ ॥

तं तथा वदृनिर्बन्धं, जनं जानन् युधिष्ठिरः । अनुमत्य सहायान्त-मवादीद्विदुरं ततः ॥ ९२ ॥ वितनोपि त्वमेवार्य !, प्रीतिमस्मासु पैतृकीम् । देवस्याजनि पाण्डोस्तु, केवलं जन्मकर्तृता ॥ ९३ ॥ एतावस्मद्वियोगार्ति-कातरौ पितरौ पुरः । गहेव नेतुं मोक्तुं वा, ब्रूहि किं मम सांप्रतम् ? ॥ ९४ ॥ जगाद विदुरो वत्स !, मत्सरी ते सुयोधनः । अतः सर्वकुटुम्बेन, समं गन्तुं न युज्यते ॥ ९५ ॥ तदत्रैव तटस्थेन, स्थेयं देवेन पाण्डुना । देवी स्थास्यति कुन्ती तु, नैव वो विरहासहा ॥ ९६ ॥ एनमादृत्य तन्मन्त्रं, नत्वा पाण्डुं युधिष्ठिरः । सबाष्पं स्थापयामास, विनीतो विदुरान्तिके ॥ ९७ ॥ अवियोगाद्वियो-गाच, तदानीं पुत्रभर्तृभिः । अवाप युगपत् कोटिं, कुन्ती हर्षविषादयोः ॥ ९८ ॥ तवासौ पर्यवस्थाता, न स्थाता स्वन्यव-स्थया । तद्भवेः सावधानस्त्व-मध्वनीनो वनाध्वनि ॥ ९९ ॥ इति धर्मसुतं स्नेहा-दनुशास्य सगद्गदम् । रुदन्तीं विदुरः कुन्ती-मनमन्नम्रमस्तकः ॥ १०० ॥ ( युग्मम् )

अथ साश्रुमुखः पाण्डु-रभाषिष्ट युधिष्ठिरम् । कान्तारेषु कथं वत्स !, सकुटुम्बो भ्रमिष्यसि ? ॥ १०१ ॥ कथं च त्वद्वि-युक्तोऽहं, भविष्यामि हताशयः ? । विना चन्द्रं समुद्रस्य, दशा जायेत कीदृशी ? ॥ १०२ ॥ न शक्नोमि परं वत्स !, वचस्ते

१ न विरुद्धमाचरिष्यति ।

कर्तुमन्यथा । क्षेमवानचिरेणैव, दर्शयेर्मुखमात्मनः ॥ १०३ ॥ किंच रत्नमयीमेतां, स्फुरद्धामोर्मिमूर्मिकाम्[1] । गृहाणार्तिप्रहाणाय, धारयेः पारिपार्श्विकीम् ॥ १०४ ॥ इत्युदीर्य निवेद्यास्याः, सर्वं संभवमादितः । प्रीतश्चिक्षेप पाण्डुस्तां, ज्येष्ठात्मजकराङ्गुलौ ॥ १०५ ॥ कुर्वीथाः पुत्रभाण्डेषु, देवि ! यत्नमिति ब्रुवन् । आपृच्छ्य प्रेयसीं पाण्डु-र्ययौ सविदुरः पुरम् ॥ १०६ ॥ मातस्तातमहोरात्रं, शुश्रूषस्वेति धर्मजः । उदीर्य सादरं माद्रीं, मुमोच पितुरन्तिके ॥ १०७ ॥ वत्सौ ! बान्धवसेवायां, कुर्यातं निश्चितं मनः । इत्यादिश्य यमौ सापि, जगाम सह पाण्डुना ॥ १०८ ॥

अथ प्रतस्थे पुरतः, पौरोपेतः पृथासुतः । केवलं केशवेनासौ, त्याजितः पादचारिताम् ॥ १०९ ॥ कोऽपि रंहस्विनं वाह-मारुरोह मनोहरम् । कोऽप्यात्माभिमतां मत्त-मतङ्गजमतल्लिकाम्[2] ॥ ११० ॥ अन्ये विमानमन्यानि, याप्ययानानि लीलया । प्रासादरुन्दमानन्द-स्यन्दिनं[3] स्यन्दनं परे ॥१११॥ युग्मम् ॥ स एवं वाहनारूढैः, प्रौढश्रीभिः स्वबान्धवैः । साकं नासिक्यनगरं, सहितो हरिणाऽभ्यगात् ॥ ११२ ॥ तत्र निर्मापितां मात्रा, श्रीमच्चन्द्रप्रभप्रभोः । असौ मणिमयीमर्चा-मानर्च विकचाम्बुजैः ॥ ११३ ॥ गोविन्दः पुनरानन्द-बाष्पाविलविलोचनः । चिरं चन्द्रप्रभं देव-मुपासामास भक्तितः ॥ ११४ ॥ स्तोत्रैश्चित्रैरभिष्टुत्य, तौ कुन्ती-देवकीसुतौ । निजं सौधं समभ्यास्य, बुभुजाते जनैः सह ॥ ११५ ॥ जिनप्रभावनारम्भ-निशुम्भितनिजांहसः । ते सर्वे गमयामासु-र्वासराणि कियन्त्यपि ॥ ११६ ॥

उपेत्यान्येद्युरासीनं कृष्णाभ्यर्णे युधिष्ठिरम् । ऊचे पुरोचनो नाम, दुर्योधनपुरोहितः ॥ ११७ ॥ आबद्धपाणि-

युधिष्ठिरः पितरं निवर्त्त्य कृष्णेन सह नासिक्य-नगरे गतः ॥

---

१ स्फुरत्प्रभातरङ्गाम् । २ मुद्रिकाम् । ३ प्रासादसदृशम् ।

गुरुल-स्तव बन्धुः सुयोधनः। इदानीं त्वन्मुखेनेदं, विज्ञापयति सादरम् ॥ ११८ ॥ आर्य ! धुर्यस्त्वमार्याणा-मनार्याणामहं पुनः। त्वमग्रणीर्गुणवतां, निर्गुणानामहं पुनः ॥ ११९ ॥ उत्तंसः सज्जनानां त्वं, दुर्जनानामहं पुनः। धौरेयस्त्वं सुबुद्धीनां, दुर्बुद्धीनामहं पुनः ॥ १२० ॥ शेखरस्त्वं कृतज्ञानां, कृतघ्नानामहं पुनः। त्वमुत्तमानां माणिक्य-मधमानामहं पुनः ॥१२१॥ आदिमस्त्वं महेच्छाना-मल्पेच्छानामहं पुनः। त्वमाद्यः कृतविद्यानां, निर्विद्यानामहं पुनः ॥ १२२ ॥ मया विवेकशून्येन, यन्नापकृतं पुरा। प्राकृतेष्वपि तन्न स्यात्, कुरुवंशे तु का कथा ? ॥१२३॥ तानीदानीं व्यलीकानि, त्वं मम क्षन्तुमर्हसि। स्खलितं यत् कनिष्ठस्य, बन्धोर्ज्येष्ठस्य तन्मुदे ॥ १२४ ॥ भवन्त्युच्चावचा वाचो, याः काश्चन दुरोदरे। तासामनुपदी कः स्या-द्विशेषेण भवादृशः ॥ १२५ ॥ तत् प्रसीद ममभ्येहि, गृहाननुगृहाण माम्। संचरस्व पुनः स्वैरं, हस्तिना हस्तिनापुरे ॥ १२६ ॥ यज्जातं त्वय्यवज्ञाभिः, पुरा कितवकैतवे। स्वक्रमाम्भोजरजसा, रजस्तन्मे प्रमृज्यताम् ॥ १२७ ॥ सदाऽस्तु मालतीपुष्प-मवक्रमातिवेशिमकी। अतः परं तवाज्ञा मे, मौलिपल्यङ्कखेलिनी ॥ १२८ ॥ अथ चेदार्य ! तेऽत्यन्तं, सत्यव्रत-विपर्ययात्। राज्योपभोगैर्लज्जेत, चेतः केतकनिर्मलम् ॥ १२९ ॥ सदाऽमुनाऽध्वना ये हि, साधवः संचरिष्णवः। स्यात्तेषां व्रतनिर्वाहे, जाड्यमुद्रामरं परम् ॥ १३० ॥ ततोऽनुग्रहमाधाय, संनिधाय स्थिरं मनः। स्वस्थेन स्थेयमार्येण, नगरे वार-णावते ॥ १३१ ॥ आर्यस्य सानुजस्यापि, स्वैरं तत्रापि तिष्ठतः। आत्मचेतोऽनुरूपाणा-मुपनेतास्मि संपदाम् ॥ १३२ ॥ इति विज्ञापितं तुभ्य-मधुना तेन बन्धुना। अन्वहं च नियुक्तोऽह-मादेशाग्रेसरस्तव ॥ १३३ ॥ इत्याख्याय स्थिते तस्मि-स्तूर्णीं कृष्णादयो मुदा। अर्थः समर्थ एवाय-मेतस्येत्यनुमेनिरे ॥ १३४ ॥

अनुव्रजन्मनस्तेषां, तदानीं धर्मनन्दनः । वचः प्रमाणमेवेद–मित्युवाच पुरोचनम् ॥ १३५ ॥ स चचाल सुष्कृणोऽपि, पुरोचनपुरोगमः । बन्धुभिः सममारूढ–वारणैर्वारणावतम् ॥ १३६ ॥ तद्वास्तव्यः समस्तोऽपि, जनः प्रीतितरङ्गितः । मङ्गल्योपायनस्तस्य, संमुखीनः समागमत् ॥१३७॥ फुल्लवक्त्रारविन्देन, गोविन्देन समं पुरम् । प्रविवेश विशामीशः, स्वःपतिः स्वःपुरे यथा ॥ १३८ ॥ स तत्र चित्रशालाभि–र्विशालाभिरलंकृतम् । सौधमद्भुतमध्यास्त, मध्यास्तविविधासनम् ॥ १३९ ॥ उपचर्याशतै(नै)स्तैस्तै–रजस्रं धर्मजन्मने । आत्मानं रोचयांचक्रे, चातुर्येण पुरोचनः ॥ १४० ॥ अतिस्तुतिपदं वस्तु, समस्तं हस्तिनापुरात् । तेषां दुर्योधनो नित्य–मुपदीकुरुते तदा ॥ १४१ ॥ तथा पृथ्वीभुजा सर्वः, सममाजग्मिवाञ्जनः । प्रसादितो यथा जातु, न सस्मार निजं गृहम् ॥ १४२ ॥ सवित्री पाण्डुपुत्राणां, दानैकरुचिमानसा । पाणिं व्यापारयामास, दीनोद्धरणकर्मणि ॥ १४३ ॥ प्रियेषु सानुरागेषु, मनीषितविधायिषु । नोदकण्ठत पाञ्चाली, कदाचिन्नृपतिश्रिये ॥ १४४ ॥ इत्थं कुटुम्बसौस्थ्येन, सुयोधनगिराऽपि च । अभूत् तत्रैव वासाय, स्थिरचेता युधिष्ठिरः ॥ १४५ ॥ हस्तिनापुरसाम्राज्य–सपिण्डां पाण्डवश्रियम् । दृष्ट्वा हृष्टो विसृष्टस्तै–र्जगाम द्वारकां हरिः ॥ १४६ ॥ मातुरुत्कण्ठिता सार्धं–मात्मजेनाभिमन्युना । सुभद्रा सह कृष्णेन, प्रहिता पाण्डुसूनुना ॥ १४७ ॥ तानथो सुस्थितंमन्यः, पौरानप्यश्रुवर्षिणः । कथंचिदपि संबोध्य, हास्तिनं प्राहिणोन्नृपः ॥ १४८ ॥

अन्यदा द्रुतमभ्येत्य, विदुरप्रहितो रहः । अन्वितं भीम-पार्थाभ्यां, तं जगाद प्रियंवदः ॥ १४९ ॥ देव ! त्वां विदुरः प्राह, यदिहोपेयुषा मया । धृतराष्ट्रान्तिकस्थेन, रहो दुर्योधनः स्थितः ॥१५०॥ कर्ण–दुःशासनादीनां, मन्त्रेण

निगनत्रपः । पुरोचनं ब्रुवन्नेवं, निगूढं शुश्रुवे स्वयम् ॥ १५१ ॥ ( युग्मम् ) परिच्छदबहुत्वेऽपि, निजत्वेन निरन्तरम् । मत्तं त्वदपरः कश्चित्, पुरोचन ! न रोचते ॥ १५२ ॥ भद्र ! त्वमपि जानासि, पाण्डवान्मम वैरिणः । जीवत्सु तेषु राज्यं मे, गन्धर्वनगरायते ॥ १५३ ॥ वह्न्युद्दीपनैर्द्रव्यैः, शण–सर्जरसादिभिः । आचितं जातुषं सौधं, विदध्या वारणावते ॥ १५४ ॥ गत्वा तुभ्यमनस्थाप्य, विनयात् तत्र कृत्रिमात् । कुर्यास्तं धर्मजं कृष्ण–चतुर्दश्यां कृशानुसात् ॥ १५५ ॥ सा परं न परिज्ञाता, काऽपि कृष्णा चतुर्दशी । ततोऽवधानमाधेयं, प्रतिकृष्णचतुर्दशि ॥ १५६ ॥ इत्याख्यायि मया तुभ्य–मिदं विदुरवाचिकम् । प्रमादितां तदत्रार्थे, पृथिवीनाथ ! मा कृथाः ॥ १५७ ॥

तस्याकर्ण्य गिराकीर्णां, गिरमेतां युधिष्ठिरः । सकोविदैर्बन्धुभिः सार्धं, परीक्षामास तद्गृहम् ॥ १५८ ॥ असौ सत्समयं क्षम, तन्निर्णीय गुणार्णवः । मातृभ्रातृकलत्राणां, प्रत्येकं मन्त्रमग्रहीत् ॥ १५९ ॥ पूर्वं भीमोऽभ्यधादार्य !, विदार्य हृदयं रिपोः । आदिश द्रुतमभ्येमि, किमद्यापि विलम्बसे ? ॥ १६० ॥ अर्जुनोऽप्यब्रवीदार्य !, मम लक्ष्यार्थदर्शितः । पक्षोऽयमुन्नितो भाति, गूढं वा गम्यतेऽग्रतः ॥ १६१ ॥ प्रकाशमेव वा स्वैरं, व्योमयात्रैव सूत्र्यते । तत्र भ्रूक्षेपसापेक्षा, विमानानां यतः श्रियः ॥ १६२ ॥ बन्धुभ्यामुद्धतं धीर–मुदीरितमिदं वचः । निशम्य सम्यगालोच्य, मनसाऽवोचदग्रजः ॥ १६३ ॥ वत्सौ ! गम्भीर्यधुर्याणा–माकल्पं तदजल्पता(त)म् । दुर्योधनवधे किं तु, सत्यं स्यान्मे मलीमसम् ॥१६४॥ गच्छन्तोऽपि पथि च्छन्न-मुच्छ्वासनीकसौष्ठवाः । निर्लज्जेन वयं तेन, लक्ष्येमहि पदे पदे ॥ १६५ ॥ वशीकृतदिगन्तस्य, तस्यानन्तबलौजसः । वयमेका-

१ गोप्यम् । २ नष्टं सैन्यसौष्ठवं येषां ते ।

किनः पान्थाः, स्थाने स्थाने न दुर्ग्रहाः ॥ १६६ ॥ न च विद्याबलेनापि, गन्तुं संप्रति युज्यते । सत्यस्य निकषो ह्येवं, न मे प्रादुर्भवेद्भृशम् ॥ १६७ ॥ श्रूयतां तु ममाकूत-मवधाय मनोऽधुना । अतिगुप्तेङ्गिताकारै-रास्यतेऽत्रैव वेश्मनि ॥ १६८ ॥ यदा स्वामिनिदेशार्थ-मुत्सहेत पुरोचनः । तदाऽस्माभिरितो गेहा-न्निर्गन्तव्यं सुरङ्गया ॥ १६९ ॥ ततश्च दग्धान् विज्ञाय, कोऽप्यन्विष्यति नैव नः । तदेवमेकमस्माकं, श्रेयः स्यादपरं त्विदम् ॥ १७० ॥ पाण्डवेयाः प्रचण्डेन, ज्वालाजटिलमूर्तिना । सुखं मम प्रपञ्चेन, दन्दह्यन्ते स्म वह्निना ॥ १७१ ॥ मुदं मेदस्विनीमेतां, हृदि धत्ते सुयोधनः । गमयामः सुखेनेत्थं, वयं द्वादशवत्सरीम् ॥ १७२ ॥ (युग्मम्) निर्गमोऽस्तु सुरङ्गायाः, प्राच्यां द्वैतवनाध्वना । संप्रत्यालोक्यतां कोऽपि, सुरङ्गाखनकः पुनः ॥ १७३ ॥ इत्युक्ते धर्मपुत्रेण, भूयोऽवादीत्प्रियंवदः । प्रहितो विदुरेणास्ति, खनकः शुनकाभिधः ॥ १७४ ॥ अयं तव पितृव्यस्य, वहिर्मन इव स्थितम् । विश्रम्भस्य परा भूमि-रात्मेव वपुरन्तरे ॥ १७५ ॥ इत्याख्याय समाहूय, नृपाय तमदर्शयत् । ननाम सोऽपि भूपालं, भूतलन्यस्तमस्तकः ॥ १७६ ॥ भद्र ! भद्रां सुरङ्गां नः, स्वैरचारमनोहराम् । कुरुष्वेति पतिर्भूमेः, सप्रसादं समादिशत् ॥ १७७ ॥ पुरबाह्यगृहस्यान्तः, स्थित्वा सोऽपि प्रतिक्षपम्[1] । दिवाऽन्यत् कर्म कुर्वाणः, खनति स्म शनैः शनैः ॥ १७८ ॥ अधस्ताद्भीमतल्पस्य, बिलद्वारं विधाय सः । निजव्यापारपारीणं, स्वं नृपाय न्यवेदयत् ॥ १७९ ॥ अविश्वासाः सविश्वासं, निर्मुदः समुदं तदा । लोकेभ्यो दर्शयामासु-रात्मानं तेऽपि पाण्डवाः ॥ १८० ॥ प्रतिप्रत्यूपमुत्थाय, जात्यमारुह्य वाजिनम् । चतुर्दिशं पथः सर्वान्, विदामास वृकोदरः ॥ १८१ ॥

१ 'क्षिपम्' प्रतित्रयपाठोऽपि साधुः, क्षिपाशब्दोऽपि रात्रिपर्यायोऽस्ति कोषे ।

विदुरसंदेशेन पाण्डवैः सुरङ्गा कारिता ॥

कुन्त्याश्च याजसेन्याश्च, यमयोश्च कनीयसोः। अभ्यासार्थं पृथासूनुः, सुरङ्गान्तरदर्शयत् ॥ १८२ ॥ पश्चापि चन्द्रशालायां,
निषण्णास्ते नभोगतैः। नक्षत्रैः क्षत्रमार्तण्डा, निशि निश्चिकियिरे पथः ॥ १८३ ॥ कुन्ती शुभाय पुत्राणा–माहारैः सुमनोहरैः।
दीनानाथजनं सर्वं, प्रीणयामास सर्वतः ॥ १८४ ॥ अर्चामभ्यर्चयामास, श्रीशान्तेः शान्तकल्मषाम् । परमेष्ठिमयं मन्त्रं,
ध्वस्तपापं जजाप च ॥१८५॥ विश्वस्तं बन्धुभिः सार्धं, दृष्ट्वा हृष्टं युधिष्ठिरम्। पूर्णामेव निजां मेने, रुचिं पापः पुरोचनः ॥१८६॥
अथ कृष्णचतुर्दश्यां, कस्यांचित् पञ्चभिः सुतैः। स्नुषया चैकया सार्कं, वृद्धा काचिदुपाययौ ॥ १८७ ॥ पञ्चपुत्रपवित्रां
न, वृद्धामालोक्य तां पृथा। आत्मतुल्यतया मेने, भगिनीमिव सोदराम् ॥१८८॥ मधुरस्निग्धमाहारं, तां वृद्धामृजुमानसा।
सात्मजां भोजयामास, कुन्ती देवी सगौरवम् ॥ १८९ ॥ आमृशद्भिर्मुहुस्तुन्दं, सुतैः सौहित्यशालिभिः। सार्धं वृद्धाऽध्वना
खिन्ना, तत्रैवाशेत निःसहा ॥ १९० ॥ दुर्निमित्तैस्तमीं भीम–स्तां संभाव्य भयंकरीम्। सकुटुम्बं सुरङ्गायां, युधिष्ठिरमति-
क्षिपत् ॥ १९१ ॥ निर्विलम्बं कुटुम्बेन, मग्नं जग्मुषि बान्धवे। भीमसेनः स्वयं तस्थौ, द्वारि संचारिलोचनः ॥ १९२ ॥
द्वारतो दीपयन्नुच्चै–र्निष्क्रमन्तं पुरोचनः। उन्निद्रमनसा तेन, दुष्टो दृष्टः स्वचक्षुषा ॥ १९३ ॥ धूमैर्धूमध्वजो याव–न्नालिङ्गति
नभोऽङ्गणम्। तस्य क्रोधानलस्ताव–ज्ज्वालाजालममुञ्चत ॥ १९४ ॥ ततः पुरोचनं धृत्वा, तं केशेषु विसंस्थुलम्। आचकर्ष
हठेनासौ, हरिणं हरिणारिवत् ॥ १९५ ॥ तं नीत्वा मुष्टिना मृत्युं, स दम्भोलिसनाभिना। प्रदीप्य जातुषागारं, चकार द्रुतम-
भिगान् ॥ १९६ ॥ सोत्कण्ठमानसो वात–तनयोऽपि सुरङ्गया। एत्य संवलितः पश्चा–ज्झटित्येवाग्रजन्मना ॥ १९७ ॥

१ तृप्तिशालिभि.। २ रात्रिम्। ३ वज्रसदृशेन। ४ 'जन्मनः' प्रतिद्वय०।

अचिरेणैव पुंनागा, नागलोकोपमाद्बिलात्। विनिर्याय प्रयान्ति स्म, पथि ते रथवर्जिताः ॥ १९८ ॥ तेषां प्रदीपनोद्योतः, पृष्ठतस्तीव्रवेगतः। दिष्ट्या पुरोचनो दग्ध, इत्याख्यातुमिवाययौ ॥ १९९ ॥ अस्तं नीत्वा तमःस्तोमं, तेनालोकेन दर्शितः। हस्तदीपोपमेनैषा-मध्वा सौध इव ध्रुवम् ॥२००॥ संपत्पुटकिनीखण्ड-मार्तण्डाः पाण्डवा इमे। त्वमेतान् किं मुधाऽधाक्षी, रे हताश! हुताशन! ॥२०१॥ आपन्नार्तिच्छिदाछेक-दोर्दण्डाः पाण्डवा इमे। एतान् हन्त दहन्नेवं, पुरोचन! किमाचरः? ॥ २०२ ॥ दीनानाथसमुद्धार-पण्डिताः पाण्डवा इमे। एतांस्ते निघ्नतः कीदृक्, सुयोधन! धनार्जनम्? ॥ २०३ ॥ त्रैलोक्यत्राणशौण्डीर-कोदण्डाः पाण्डवा इमे। अमूनेवं तिरस्कुर्वन्, वैधेयोऽसि विधे! ध्रुवम् ॥२०४॥ परिदेवितवाक्यानि[3], लोकानामित्यनेकशः। कर्णावतंसीकुर्वन्तः, पुरतस्ते प्रतस्थिरे ॥२०५॥ ( पञ्चभिः कुलकम् ) भाग्यराशिरिवामीषा-मालोकः स तिरोदधे। बन्धुर्दुर्योधनस्येव, प्रादुरास तमश्चयः ॥ २०६ ॥ युगपद्धान्तमध्वा च, द्वयमेतदुपागतम्। तनोति स्म श्रमाज्ञानं, तत्सवित्री-कलत्रयोः ॥२०७॥ आलोकशब्दमाधत्तः, पुरो भीम-किरीटिनौ। राज्ञः प्रथमपान्थस्य, तथाऽप्यस्खलतां क्रमौ ॥ २०८ ॥ नकुलः सहदेवश्च, पथि श्रान्तावुभावपि। ज्यायसां मा स्म खेदोऽभू-दिति तूष्णीमगच्छताम् ॥ २०९ ॥

पादचारं सदाचार-भूमीरुहभुवोरपि[4]। मातुः पत्त्याश्च निध्यायन्, दध्यौ विश्वंभराधिपः ॥ २१० ॥ यस्यां कथंचिन्नापैति, सुतानामधमर्णता। मयाऽद्य निष्क्रयो मातु-स्तस्याः क्लेशोऽयमर्प्यते ॥ २११ ॥ कष्टं दृष्टं यया नैव, पितुर्भर्तुश्च वेश्मनि। मातेयममितं क्लेशं, मयैवमनुभाव्यते ॥ २१२ ॥ अहो! पाणिगृहीतीयं, पाण्डवानां महौजसाम्। दरिद्रगृहिणीचारं, चरत्येव

१ पुटकिनी-पद्मलता पद्मसमूहो वा। २ मूर्खः। ३ विलापवचनानि। ४ सदाचारवृक्षाणां स्थानयोः।

नावनौ ॥ २१३ ॥ पश्यतां पाण्डुपुत्राणां, कलत्रस्य कुशाङ्कुरैः । अम्भोजभेदं भिद्येते, हहा ! चरणपल्लवौ ॥ २१४ ॥ न
जानाति प्रिया दुःख-मेकस्मिन्नपि भर्तरि । पञ्चस्वपि प्रियेष्वेका, क्लिश्यते द्रुपदात्मजा ॥२१५॥ इत्यस्मिंश्चिन्तयत्येवं(व),
मार्गे दुर्गे तमोभरैः । श्रान्ता कुन्ती च कृष्णा च, निःसहं भुवि पेततुः ॥२१६॥ राज्यभ्रंशं[1] भयं शत्रो, रात्रौ पद्भ्यां पला-
यनम् । धिग्विधिं यो न्यधादेवं, पाण्डवानां विडम्बनम् ॥ २१७ ॥ उष्णालुभिरपच्छत्रैः, शीतालुभिरनंशुकैः । बुभुक्षुभिर-
पाथेयैः, पन्थानो दुरतिक्रमाः ॥ २१८ ॥ शिरीषसुकुमाराङ्ग्यौ, निपतन्त्यौ पदे पदे । दुर्गकान्तारपारीणे, कथमेते भविष्यतः ?
॥ २१९॥ इति खेदपरं दृष्ट्वा, नृपमूचे वृकोदरः । आकुलो मा स्म भूर्देव !, पदातौ प्रगुणे मयि ॥२२०॥( चतुर्भिः कलापकम् )
ततोऽम्बां दक्षिणे स्कन्धे, वामे प्रियतमां पुनः । अध्यारोप्य ययौ भीमो, भञ्जन् मार्गमहीरुहः ॥ २२१ ॥ उभावपि
कनीयांसौ, पश्चाद्दूरान्तरस्थितौ । मार्गखेदोच्छलच्छ्वासौ, मन्दं मन्दमुपेयतुः ॥ २२२ ॥ व्यवस्थाप्य त्रिकस्थाने, तावुभाव-
पि[2] तस्तदा । निन्ये भीमो भुजालम्बा-द्धर्मपुत्रा-र्जुनावपि ॥२२३॥ निशीथमारुतः शीतः, कुमुदामोदमेदुरः । आचचाम
श्रमं तस्य, दयालुरिव दूरतः ॥ २२४ ॥ न निद्रोपद्रवस्तस्य, वैधुर्यं नान्धकारजम् । ललङ्घे पथपाथोधिं, पूर्ववत् पवनात्मजः
॥ २२५ ॥ विलोक्य क्लान्तिमायातौ, धर्मपुत्रा-र्जुनावपि । महेभ इव भीमस्तान्, सर्वान् पृष्ठेऽध्यरोपयत् ॥ २२६ ॥
महाध्वनि निमज्जाना-मगाधे जलधाविव । यानपात्रायितं तेन, स्वबन्धूनां महात्मनाम् ॥ २२७ ॥ आससाद सदारम्भ-
संभृतश्रेयसो भृशम् । भीमस्याध्वतिरोधान-पापेनेव क्षपा क्षयम् ॥२२८॥ कुन्देन्दुसितकौन्तेय-कीर्तिविलासितैरिव । तमो-

१ ‘ राज्यभ्रंशो ’ इति प्रत्यन्तरपाठ. माधुः । २ पृष्ठे ।

भिर्विरलीभूतं, प्रभूतैरपि सर्वतः ॥२२९॥ वृकोदरमुखाम्भोज–विलोकनकुतूहली । कर्मसाक्षी[1] किलारोह–दुदयाचलचूलिकाम् ॥२३०॥ स्वबन्धुभक्तमीक्षध्वं, दूरादेत्य वृकोदरम् । इति स्वां जातिमाह्वातु–मिवाकूजन् विहंगमाः ॥ २३१ ॥ शङ्के पाण्डुकुटुम्बस्य, करालम्बनदित्सया । करान् व्यापारयामास, वासराणामधीश्वरः ॥ २३२ ॥ सुखदुःखे समं तेषा–मारोहति रवौ नभः । मार्गालोकाच्च तापाच्च, शनैः प्रादुर्बभूवतुः ॥ २३३ ॥ ते ललाटंतपे भानौ, खिन्नाङ्गाः पाण्डुसूनवः । वनोद्देशैकदेशस्था, रहः क्वापि विशश्रमुः ॥२३४॥ अथोचे विजयं[2] राजा, वत्स! कष्टे महत्यपि । न स्मर्तव्या त्वया विद्या, प्रसिध्द्येकनिबन्धनम् ॥ २३५ ॥ सन्तः स्रोतस्विनीस्रोतः–श्रितानालोक्य वेतसान् । दैवमेवानुवर्तन्ते, पुनरुन्नतिकाङ्क्षिणः ॥ २३६ ॥ उपनीतानि पार्थेन, कन्दमूलफलान्यथ । भोजयित्वा पतीन् श्वश्रूं, पाञ्चाली बुभुजे स्वयम् ॥ २३७ ॥

अथैवं[3] पथि कष्टेन, पृथायाः सूनवः पुनः । मध्याह्नं गमयामासु–र्मेदुरस्वेदबिन्दवः ॥२३८॥ तृष्णातिशुष्कताल्वना–मुष्णाल्वनामनारतम् । पयो दवीयोऽ[4]प्यानीय, भीमस्तेषामढौकयत् ॥ २३९ ॥ क्रमेण वारुणीशैल–शिरःस्रस्तकरे रवौ । वनमेकमनेकद्रु, प्रापुस्ते निरुपद्रवाः ॥२४०॥ भूरपि त्रासकृद्यत्र, रौद्राकारा द्रुमा अपि । मार्गोऽपि कीकसैर्दुर्गः, क्रूरा दूरं मृगा अपि ॥२४१॥ तत्र प्रविष्टमात्राणां, तेषामस्तं रविर्ययौ । क्रुद्धो विधिरुपाधत्ते, विपदो हि पदे पदे ॥२४२॥ साम्राज्यं पुनरुज्जृम्भि, विभाव्य तमसां तदा । आरोहमवरोहं च, विपदां तेऽपि जज्ञिरे ॥ २४३ ॥ भीषणेऽपि वने तत्र, ध्वान्तेनान्धंभविष्णवः । ते विश्रान्तिजुषस्तस्थु–र्निशाविश्रामकाम्यया ॥ २४४ ॥ कङ्केलिपादपस्याध–स्ते व्यातपरमेष्ठिनः । पल्लवैर्भीमविन्यस्तान्,

१ सूर्यः । २ अर्जुनम् । ३ ‘ तथैव पथिकत्वेन ’ प्रतिद्वय० । ४ अतिदूरस्थम् ।

मम्नागनम्यशेरत ॥ २४५ ॥

आपृच्छ्य बन्धून् वात्सल्या-दुत्सहिष्णुमनास्ततः । जगाम जलमानेतु, मध्यमः पाण्डुनन्दनः ॥ २४६ ॥ गव्यूतिमात्रमध्वान-मतिक्रम्य स विक्रमी । सारसस्वरनिर्णीत-माससाद पुरः सरः ॥ २४७ ॥ उपेयिवानुपादाय, पयःपुटकिनीपुटे । भ्रातॄनथ निद्रमद्राक्षीत्, स्वकुटुम्बं वृकोदरः ॥ २४८ ॥ तत्तथाभूतमालोक्य, शोकेन विवशीकृतः । विललाप विमुच्यापः, स बाष्पाविललोचनः ॥ २४९ ॥ पल्यङ्के यः सतूलीक-मध्युवास नृवासवः । धिग्विधिं सोऽधुनाऽध्यास्ते, स्थपुटं स्रस्तरं भुवि ॥२५०॥ पुरोपतल्पं यस्यासी-न्निःसीमो गीतनिस्वनः । वर्तते सांप्रतं तस्य, भैरवः फैरवो रवः ॥२५१॥ कस्तूरीसंस्तुतैः पूर्वं, यस्याभूचन्दनद्रवैः । अङ्गे तस्याङ्गरागोऽयं, पांशुभिर्मार्गसंभवैः ॥ २५२ ॥ दृष्टौ कष्टेन यस्याङ्घ्री, सेवायातैर्नृपैरपि । नरव्याघ्रस्य जिघ्रन्ति, शृगालास्तस्य सांप्रतम् ॥ २५३ ॥ पूर्वं व्योम्नि विमानेन, यो बभ्राम सविभ्रमम् । रङ्कस्वापं स्वपित्येवं, कान्तारे सोऽयमर्जुनः ॥ २५४ ॥ द्विपद्यशस्तुषारांशु-राहवो यस्य बाहवः । सहते सोदरादेशात्, क्लेशं सोऽपि कपिध्वजः ॥ २५५ ॥ एतौ सदापि नः क्रोड-क्रीडादुर्ललितौ पुरा । हा ! शयाने कनीयांसौ, दरिद्रपथिकाविव ॥ २५६ ॥ पाण्डवानामियं माता, पत्नी पाण्डुमहीपतेः । क्रमचंक्रमणक्रान्ता, शेते कुन्ती हहा ! भुवि ॥ २५७ ॥ कथं सहिष्यते क्लेशं, नासौ सत्त्वानुरूपतः । वयं प्रोद्दामशौण्डीर्य-प्रपञ्चाः पञ्च पाण्डवाः ॥ २५८ ॥ इयं निद्रायते भूमौ, कष्टं द्रुपदनन्दिनी । एतामवस्थामेतस्याः, पश्यन् भीमोऽपि जीवति ॥ २५९ ॥ अरण्यपान्थैरस्माभिः, पश्यत प्रेयसी निजा । असौ कान्तारसं-

१ बन्धुसमीपमागतः । २ निर्मम । ३ वक्रोक्तिरियं प्रतिभाति ।

चार-शिक्षामध्याप्यते हहा! ॥२६०॥

इत्युच्चैर्विलपन् भीमो, भीषणाकारधारिणीम्। एकां युवतिमायान्तीं, पिङ्गलाक्षीमुदैक्षत ॥ २६१ ॥ भीमस्याभ्यर्णमभ्यागा-द्युवतिः सा यथा यथा। रूपं प्रकाशयामास, मनोहारि तथा तथा ॥ २६२ ॥ भीमः समीपमायातां, तामुवाच सुलोचने!। काऽसि? भीष्मं च सौम्यं च, रूपमप्यकृथाः कथम्? ॥२६३॥ बभाषे साऽपि सुश्रोणिः, सुभग! श्रूयतां त्वया। अस्ति दत्तजगड्डिम्बो[1], हिडम्बो नाम राक्षसः ॥२६४॥ इदमस्याख्यया ख्यातं, हिडम्बवनमुत्कटम्। नास्मिन्मनुष्यजातीयः कश्चित् संचरते पथा॥ २६५ ॥ कथंचिद्दैवदुर्योगा-देतस्यां वनसीमनि। नरः शूरोऽपि यद्येति, रक्षसाऽनेन भक्ष्यते ॥ २६६ ॥ अस्य चाहमहंकार-मन्दिरस्य सहोदरा। अनूढाऽस्मि हिडम्बेति, बन्धुगेहनिवासिनी ॥२६७॥ ममाप्यस्ति क्रमाऽऽयाता, विद्या सर्वाऽपि राक्षसी। इदानीं तु स्थितः सौधे, बन्धुर्मामभ्यधादिदम् ॥ २६८॥ अधुना मानुषो गन्धः, क्षुधं मे बोधयन्नयम्। प्रियंभविष्णुर्घ्राणस्य, कुतोऽप्येति सहोदरे! ॥ २६९॥ तन्मानवानवेक्ष्यैतान्, कुतोऽप्यानय सत्वरम्। येनेयं चिररात्राय, शममभ्येति मत्क्षुधा ॥ २७० ॥ तदहं दहनज्वाला-लोले कृत्वा विलोचने। विधित्सुर्बान्धवादेशं, देशमेनमुपागमम् ॥२७१॥ वने मानवसंघात-मेनं निःसहविग्रहम्। निद्रायमाणमद्राक्षं, बुभुक्षोपशमक्षमम् ॥ २७२ ॥ विलोक्य त्वां च कन्दर्प-रूपदर्पापहं पुरः। विस्मृत्य भ्रातुरादेशं, सराऽऽदेशे स्थिताऽस्म्यहम् ॥ २७३ ॥ यज्जातोऽसि महाबाहो!, मम नेत्रसुधाञ्जनम्। असौ रूपपरावर्तः, प्रावर्तत जवात्ततः ॥ २७४ ॥ तदाधेहि प्रसादं मे, पाणिपीडनकर्मणि। सत्योपयाचिताः सन्तु, सकलाः

१ डिम्बः युद्धम्।

कुलदेवताः ॥ २७५ ॥ तस्मान्मा स्म विलम्बस्व, पुरा नन्वेति राक्षसः । त्रपां विहाय मां रात्रि–चरीं सहचरीं कुरु ॥ २७६ ॥ मयि ते सहचारिण्या–ममौ दूरेऽस्तु राक्षसः । नान्येऽपि प्रभविष्यन्ति, प्रबला वनवैरिणः ॥ २७७ ॥

अथाभाषिष्ट भीमस्तां, भद्रे ! प्रेमार्द्रमभ्यधाः । पुण्यप्रागल्भ्यतो लभ्या, त्वादृशारी स्वयंवरा ॥ २७८ ॥ सुगात्रि ! परमत्रार्थे, कारणं मे निशम्यताम् । ममैते बान्धवाः सन्ति, चत्वारोऽपि शयालवः ॥ २७९ ॥ ऋद्धा गुणैरियं वृद्धा, या तु स्वपिति निर्भरम् । जानीहि जननीमेना–मस्माकं स्मेरलोचने ! ॥ २८० ॥ एषा शिरीषमृद्वङ्गी, सुखं सोषुप्यते तु या । पञ्चानामपि साऽस्माकं, प्राणेभ्योऽपि प्रिया प्रिया ॥२८१॥ एकयाऽपि सधर्मिण्या, साधारण्याऽनया वयम् । कृतार्थाः पुरुषार्थेषु, निखिलेष्वपि निर्मिताः ॥ २८२ ॥ अनुमन्यामहे[1] नान्यां, प्रेयसीं श्रेयसीमपि । प्राप्य कल्पलतां स्वल्पाः, कोऽनुरुध्येत वीरुधः ॥ २८३ ॥ उपन्यस्त[2]स्त्वया यस्तु, लोभः साहायकं प्रति । सोऽपि शौण्डीर्यचण्डानां, दोर्दण्डानां त्रपाकरः ॥ २८४ ॥ आत्मनाहात्म्यमापेक्षं, क्षणं वो मा स्म भून्मनः । इत्यस्मासु स्वदोर्वीर्य–निष्ठं ज्येष्ठस्य शासनम् ॥ २८५ ॥ इति सा प्रतिषिद्धाऽपि, मदैन्यं पुनरभ्यधात् । मामात्मशरणां स्वामिन् ! यद्यपीत्थमपाकृथाः ॥ २८६ ॥ यावज्जीवं त्वमेवासि, जीवितेशस्तथापि मे । तद्यदा रोचते नाथ !, कुरु मामात्मसात्तदा ॥ २८७ ॥ किं त्वेतामधुना ताव–द्विद्यामादत्स्व चाक्षुषीम् । यया ते भवितोद्योत–स्तामसीष्वपि रात्रिषु ॥ २८८ ॥ सैवमाख्याय भीमाय, संमदा[3]त्तामदात्तदा । तस्मै पठितमात्रैव, सा प्रकाशमवर्तयत् ॥ २८९ ॥

१ अङ्गीकुर्महे । २ वर्णितः । ३ हर्षात् ।

चार-शिक्षामध्याप्यते हहा ! ॥२६०॥
इत्युच्चैर्विलपन् भीमो, भीषणाकारधारिणीम् । एकां युवतिमायान्तीं, पिङ्गलाक्षीमुदैक्षत ॥ २६१ ॥ भीमस्याभ्यर्णम-
भ्यागा-द्युवतिः सा यथा यथा । रूपं प्रकाशयामास, मनोहारि तथा तथा ॥ २६२ ॥ भीमः समीपमायातां, तामुवाच
सुलोचने!। काऽसि? भीष्मं च सौम्यं च, रूपमप्यकृथाः कथम्? ॥ २६३ ॥ बभाषे साऽपि सुश्रोणिः, सुभग! श्रूयतां त्वया।
अस्ति दत्तजगड्डिम्बो[1], हिडम्बो नाम राक्षसः ॥२६४॥ इदमस्याख्यया ख्यातं, हिडम्बवनमुत्कटम् । नास्मिन्मनुष्यजातीयः
कश्चित् संचरते पथा ॥ २६५ ॥ कथंचिद्दैवदुर्योगा-देतस्यां वनसीमनि । नरः शूरोऽपि यद्येति, रक्षसाऽनेन भक्ष्यते ॥ २६६ ॥
अस्य चाहमहंकार-मन्दिरस्य सहोदरा । अनूढाऽस्मि हिडम्बेति, बन्धुगेहनिवासिनी ॥२६७॥ ममाप्यस्ति क्रमाऽऽयाता,
विद्या सर्वाऽपि राक्षसी । इदानीं तु स्थितः सौधे, बन्धुर्मामभ्यधादिदम् ॥ २६८ ॥ अधुना मानुषो गन्धः, क्षुधं मे बोधयन्न-
यम् । प्रियंभविष्णुर्घ्राणस्य, कुतोऽप्येति सहोदरे! ॥ २६९ ॥ तन्मानवानवेक्ष्यैतान्, कुतोऽप्यानय सत्वरम् । येनेयं चिररात्राय,
शममभ्येति मत्क्षुधा ॥ २७० ॥ तदहं दहनज्वाला-लोले कृत्वा विलोचने । विधित्सुर्बान्धवादेशं, देशमेनमुपागमम् ॥२७१॥
वने मानवसंघात-मेनं निःसहविग्रहम् । निद्रायमाणमद्राक्षं, बुभुक्षोपशमक्षमम् ॥ २७२ ॥ विलोक्य त्वां च कन्दर्प-रूपदर्पा-
पहं पुरः । विस्मृत्य भ्रातुरादेशं, सराऽऽदेशे स्थिताऽस्म्यहम् ॥ २७३ ॥ यज्जातोऽसि महाबाहो !, मम नेत्रसुधाञ्जनम् ।
असौ रूपपरावर्तः, प्रावर्तत जवात्ततः ॥ २७४ ॥ तदाधेहि प्रसादं मे, पाणिपीडनकर्मणि । सत्योपयाचिताः सन्तु, सकलाः

[1] डिम्बः युद्धम् ।

कुलदेवता: ॥ २७५ ॥ तस्मान्मा स्म विलम्बस्व, पुरा नन्वेति राक्षसः । त्रपां विहाय मां रात्रि-चरीं सहचरीं कुरु ॥ २७६ ॥ मयि ते सहचारिण्या-मसौ दूरेऽस्तु राक्षसः । नान्येऽपि प्रभविष्यन्ति, प्रबला वनवैरिणः ॥ २७७ ॥

अथामाषिष्ट भीमस्तां, भद्रे ! प्रेमार्द्रमभ्यधाः । पुण्यप्रागल्भ्यतो लभ्या, त्वादृशारी स्वयंवरा ॥ २७८ ॥ सुगात्रि ! परमत्रार्थे, कारणं मे निशम्यताम् । ममैते बान्धवाः सन्ति, चत्वारोऽपि शयालवः ॥ २७९ ॥ ऋद्धा गुणैरियं वृद्धा, या तु स्वपिति निर्भरम् । जानीहि जननीमेना-मस्माकं सेरलोचने ! ॥ २८० ॥ एषा शिरीषमृद्वङ्गी, सुखं सोपुप्यते तु या । पञ्चानामपि साऽस्माकं, प्राणेभ्योऽपि प्रिया प्रिया ॥२८१॥ एकयाऽपि सधर्मिण्या, साधारण्याऽनया वयम् । कृतार्थाः पुरुषार्थेषु, निखिलेष्वपि निर्मिताः ॥ २८२ ॥ अनुमन्यामहे नान्यां, प्रेयसीं श्रेयसीमपि । प्राप्य कल्पलतां स्वल्पाः, कोऽनुरुध्येत वीरुधः ॥ २८३ ॥ उपन्यस्तस्त्वया यस्तु, लोभः साहायकं प्रति । सोऽपि शौण्डीर्यचण्डानां, दोर्दण्डानां त्रपाकरः ॥ २८४ ॥ बाणगाह्यग्गापेक्षं, क्षणं वो मा स्म भून्मनः । इत्यस्मासु स्वदोर्वीर्य-निष्ठं ज्येष्ठस्य शासनम् ॥ २८५ ॥ इति सा प्रतिपिद्धाऽपि, मदैन्यं पुनरभ्यधात् । मामात्मशरणां स्वामिन् ! यद्यपीत्थमपाकृथाः ॥ २८६ ॥ यावज्जीवं त्वमेवासि, जीवितेशस्तथापि मे । तद्यदा रोचते नाथ !, कुरु मामात्मसात्तदा ॥ २८७ ॥ किं त्वेतामधुना ताव-द्विद्यामादत्स्व चाक्षुषीम् । यया ते भवितोद्योत-स्तामसीष्वपि रात्रिषु ॥ २८८ ॥ सैवमाख्याय भीमाय, संमदात्तामदात्तदा । तस्मै पठितमात्रैव, सा प्रकाशमथूत्रयत् ॥ २८९ ॥

१ अङ्गीकुर्महे । २ दर्शितः । ३ कुर्यात् ।

अत्रान्तरे ददत्रास-मट्टहासेन भीषणः । आजगाम हिडम्बोऽपि, प्रेतनाथं[1] विडम्बयन् ॥ २९० ॥ वेपथु-स्वेद-रोमाश्चै-र्यामिमागम्य कामुकीम् । प्रसभं सोऽभ्यधादेनां, भ्रकुटीविकटाननः ॥ २९१ ॥ आः पापे ! प्रौढकंदर्पा-कुले ! कुलकलङ्किनि ! । बुभुक्षितमुपेक्ष्यैवं, मामभूरिह कामुकी ॥ २९२ ॥ त्वां विधायेन्धनं पूर्वं, जाठरस्याशुशुक्षणेः[2] । ततोऽमूनाहुतीभावं, लम्भयिष्यामि मानवान् ॥ २९३ ॥ एवमाक्षिप्य कोपेन, रक्तचक्षुः स राक्षसः । दूराच्चपेटामुत्पाट्य, दधावे सोदरां प्रति ॥ २९४ ॥ ततस्तमाह माहात्म्य-भूमिर्भीमः ससौष्ठवम् । निरागसं निजां यामि-मरे ! मोघं जिघांससि ॥ २९५ ॥ रक्षोवंशानुरूपं तत्, यद्भगिन्यपि हन्यते । उपेक्षितुं क्षमे साक्षा-न्न स्त्रीहत्यामहं पुनः ॥ २९६ ॥ उत्तिष्ठ निष्ठुरं कर्म, मुञ्चेदं किंचिदायुधम् । करे कुरु कुरुश्रेष्ठा, न हि घ्नन्ति निरायुधम् ॥ २९७ ॥ इति क्रोधादधिक्षिप्त-स्तामत्याक्षीत् स राक्षसः । एकं पादपमुद्यम्य, भीमं च प्रत्यधावत ॥ २९८ ॥ भीमोऽपि गतभीरेकं, विधायाऽऽयुधमङ्घ्रिपम् । जाग्रतु भ्रातरो मेति, तूष्णीको युद्धमादधे ॥ २९९ ॥ चण्डौजसा हिडम्बेन, निर्विलम्बं बलीयसा । प्रहतः प्रसभं भीमः, क्षणाद्वृक्षेण वक्षसि ॥ ३०० ॥ पाण्डवोऽपि हिडम्बाय, ददौ पीडां प्रहारतः । यया तत्प्रथमं निन्ये, सोऽपि मूर्च्छारसज्ञताम् ॥ ३०१ ॥ मूर्च्छाविरामे स क्ष्वेडा-सव्रीडः क्रीडयाऽकरोत् । यया युधिष्ठिरादीना-मभून्निद्रादरिद्रता ॥ ३०२ ॥

कुन्ती पुरस्तादुद्वीक्ष्य, हिडम्बामिदमभ्यधात् । का त्वं पुत्रि ! कथं चात्र ?, तथ्यं मे कथ्यतामदः ॥ ३०३ ॥ साऽप्यस्यै निजमावेद्य, सर्वं वृत्तान्तमादितः । आख्याति स्म तनूजस्ते, युध्यते रक्षसा सह ॥ ३०४ ॥ उच्छलत्सिंहनादेन,

१ यमराजम् । २ अग्नेः ।

रक्षसा प्रहतो हृदि। धाव्यतां देवि! पुत्रस्ते, हहा! पतति मूर्च्छितः ॥ ३०५ ॥ इत्युक्ते धर्मपुत्राद्या, भीमाभ्यर्णमुपाययुः। तं न मूर्च्छालमालोक्य, जननी पर्यदेवत ॥ ३०६ ॥ अस्माकं मार्गपङ्गूनां, वोढा त्वं प्रौढविक्रमः। दुष्टेन रक्षसा वत्स!, गमितः कामिमां दशाम्? ॥ ३०७॥ निरालम्बकुटुम्बस्य, करालम्ब! त्वया विना। दूरात् पानीयमानीय, तृषं नः कोऽपनेष्यति? ॥ ३०८ ॥ कुसुमानि समानीय, वन्यान्येतां तपस्विनीम्। नव्यधम्मिल्लबन्धेन, वधूं कोऽलंकरिष्यति? ॥ ३०९ ॥ तदक्षाय समुत्थाय, देहि प्रतिवचो मम। नयास्मान् पुरतोऽध्वानं, पुरोऽभ्येति रिपोश्चमूः ॥ ३१० ॥ इत्थं विलापवैधुर्य-भूर्गेनतागि मातरि। अञ्जलव्यजनैश्चक्रे, भीमं प्रगुणमर्जुनः ॥ ३११ ॥

अथोत्थाय नियुद्धाय, स्पृहयालुर्वृकोदरः। प्रति प्रत्यर्थिनं धावन्, बभाषे ज्येष्ठबन्धुना ॥ ३१२ ॥ स्थिरो भव तव भ्राता, भुजभ्राजिष्णुरर्जुनः। अस्त्येव वत्स! तच्छत्रौ, दुष्टे कष्टायसे कथम्? ॥ ३१३ ॥ इत्युक्तः सोऽवदद्देव!, मम संप्रति दोर्बलम्। तव दृष्ट्या सुधावृष्ट्या, सिक्तं पल्लवितं पुनः ॥ ३१४ ॥ तवानुजस्य पुरतः, कोऽयं राक्षसपांसनः?। पुरो हि पूष्णः पुष्णन्ति, न चिरं ध्वान्तवीचयः ॥ ३१५ ॥ वीक्षमाणस्य देवस्य, प्रसन्नाक्षस्य राक्षसम्। एनं नयामि पञ्चत्वं, पञ्चानन इव क्षिपम् ॥ ३१६ ॥ अमानुषप्रचारेऽस्मिन्, कानने निरुपद्रवः। प्रसादेन तवेदानी-मस्तु पन्थाः सुसंचरः ॥ ३१७ ॥ तदस्तु फाल्गुनः शत्रोः, करिष्ये फल्गु वल्गितम्। इति व्याहृत्य संहर्तुं, स रिपुं प्रत्यधावत ॥ ३१८ ॥ अथाहवं महाबाहो-र्बाहूबाहवि कुर्वतोः। तयोर्जयश्रीर्दोलेव, करोति स्म गतागतम् ॥ ३१९ ॥ पाण्डवश्च हिडम्बश्च, वलन्तौ क्षोणिरेणुभिः।

१ अशोभन। २ सूर्यस्य।

तमांसि मांसलीभावं, लम्भयामासतुस्तदा ॥ ३२० ॥ दृष्ट्वा हिडम्बदोर्दण्ड-चण्डिमानं युधिष्ठिरः । अभीमं जगद्येति, विदन्नर्जुनमभ्यधात् ॥ ३२१ ॥ त्वर्यतां त्वर्यतां वत्स[1], गच्छ क्षपय राक्षसम् । दोर्दण्डाभ्यां हिडम्बेन, पीड्यतेऽसौ तवाग्रजः ॥ ३२२ ॥ जल्पत्येवं तपःसूनौ, भीमस्तं राक्षसं क्षणात् । ग्रीवायां बाहुपाशेन, पशुमारममारयत् ॥ ३२३ ॥ कुन्ती सुतस्य सानन्द-मुदतारयदञ्चलम् । भ्रातुर्वपुरजातारिः, सरजस्कममार्जयत् ॥ ३२४ ॥ अर्जुनाद्याः कनीयांस-स्तस्य चेलाञ्चलानिलैः । रणखेदभवस्वेद-च्छेदमातेनिरेतराम् ॥ ३२५ ॥ क्षणादेकान्तमासाद्य, भीमं रोमाञ्चशालिनी । स्तनोपपीडमालिङ्ग-दानन्दाद्द्रुपदात्मजा ॥ ३२६ ॥ कंदर्पेण हिडम्बाया-स्तदा बन्धुवियोगजः । शोकः शोकापनोदेन, गुरुणा विरलीकृतः ॥ ३२७ ॥ शुश्रूषा-बहुमानाभ्यां, निबिडाभ्यां हिडम्बया । कुन्ती-द्रुपदनन्दिन्यो-र्मनः परवशीकृतम् ॥३२८॥

अथो निशीथिनीशेषे, पन्थानं ते प्रपेदिरे । प्रमाद्येत् कः सविद्यो हि, महीयसि विरोधिनि? ॥ ३२९ ॥ आश्वासयन् कनीयांसौ, तेषां पृष्ठगमोऽर्जुनः । निजाग्रजन्मनो दत्त-बाहुर्भीमः पुरोगमः ॥ ३३० ॥ पृष्ठे वहन्ती कुन्ती[2] च, कृष्णां च विनयाश्रिता । अम्बरेण हिडम्बा च, तेषां मध्यस्थिताऽचलत् ॥ ३३१ ॥ युग्मम् ॥ अन्यदा तु महाटव्या-मत्युत्कटपिपासया । भीष्मग्रीष्म(ष्मा)तपश्रान्ता, कुन्ती मूर्च्छामुपाययौ ॥३३२॥ बीभत्सुरेकतो वेगा-दन्यतस्तु वृकोदरः । प्रत्याशमतिसंभ्रान्तौ, तोयहेतोरधावताम् ॥ ३३३ ॥ मातरं मूर्च्छितां पश्य-न्नत्वेवाम्भोऽतिदुर्लभम् । निजाभ्यामेव नेत्राभ्या-मानिन्येऽम्बु युधिष्ठिरः ॥ ३३४ ॥ अचिन्तयच्च रे दैव !, सदैव प्रत्यनीकताम् । सर्वंकषां किमस्मासु, निर्वाहयसि केवलम् ? ॥ ३३५ ॥ दृशा पीयू-

१ 'वत्स!' प्रत्यन्तरे । २ 'कुन्तीं' प्रतिद्वय० ।

पर्वाणिण्या, सिञ्चन्ती या प्रतिक्षणम् । हन्ति नः प्रत्यहं तापं, साऽपि प्रापदिमां दशाम् ॥ ३३६ ॥ प्रियापरिभवो राज्य-भ्रंशः
पथपरिश्रमः । नैते तथा व्यथन्ते मां, यथा मातुरियं दशा ॥ ३३७ ॥ इति चिन्तातुरे राज्ञि, काप्यप्राप्य पयस्तदा । आज-
ग्मतुर्निगनन्दौ, वृकोदर-किरीटिनौ ॥ ३३८ ॥ एतावपि महाबाहू, विह्वलावुपरि स्थितौ । कदुष्णैर्नयनाम्भोभि-र्जननीं
पर्यषिञ्चताम् ॥ ३३९ ॥ निराशमनसां तेषां, क्षिपतां दिक्षु चक्षुषी । आनीयोपानयन्नीरं, हिडम्बा बिसिनीदले ॥ ३४० ॥
तेषां नयनपात्रेभ्यो, निर्झरेभ्य इवाधिकम् । बाष्पैस्तथैव निर्यात-मानन्दशिशिरैः परम् ॥ ३४१ ॥ सस्यानामिव शुष्काणां,
शोक-चिन्ता-तपक्रमात् । आपुरापस्तदा तेषां, ताः स्वात्यम्बुविडम्बनाम् ॥ ३४२ ॥ अस्मत्कुटुम्बजीवातु-र्मातुरातुरघातिनी ।
निर्जेति तेषां चेतःसु, हिडम्बा प्रतिबिम्बिता ॥ ३४३ ॥ मातुः संवाहयन् पादौ, स्थाने स्थाने युधिष्ठिरः । पन्थानमति-
चक्राम, प्रत्यहं सह बान्धवैः ॥ ३४४ ॥

एकदा क्वापि पश्यन्ती, कान्ताररमणीयताम् । द्रौपदी द्वीपिनं दृष्ट्वा, कान्दिशीका पलायत ॥ ३४५ ॥ प्रचण्डः पुण्डरीको
ऽपि, पुण्डरीकविलोचनाम् । तामन्वगच्छदौत्सुक्यात्, क्रमः क्रूरात्मनामयम् ॥३४६॥ तदानुपदिके तस्मिन्, सा भयोत्थितवेपथुः ।
नितम्बस्तनभारेण, न शशाक पलायितुम् ॥ ३४७ ॥ दंष्ट्राकरालमुत्फाल-मालोक्य तमुपागतम् । साऽवतस्थे समालम्ब्य,
धैर्यमूर्ध्वंदमा पुरः ॥ ३४८ ॥ अत्रापि धर्मपुत्रो मे, त्रातेत्यालोच्य तत्पुरः । लीलालतिकया रेखां, सा विधायेदमभ्यधात्
॥ ३४९ ॥ यदि मे प्राणनाथेन, सत्यरेखा न लङ्घिता । तदा त्वमप्यमूं रेखां, मा स्म शार्दूल ! लङ्घय ॥ ३५० ॥ तयेत्युक्ते

१ व्याघ्रम् । २ व्याघ्रः ।

स तेष्वेव, पदेषु सपदि स्थितः। अहो! महानुभावानां, प्रभावो दुरतिक्रमः ॥ ३५१ ॥ मुक्ता विधुंतुदेनेव, द्वीपिना तेन पाप्मना। सितदीधितिलेखेव, सा भृशं शुशुभे तदा ॥ ३५२ ॥ त्रिभिर्विशेषकम्। प्रियोपस्थायिनं मार्ग-मविदन्ती मनागपि। यूथच्युतकुरङ्गीव, शून्यं बभ्राम सा वने ॥ ३५३ ॥ निःशूकं[1] दन्दशूकेन, सा व्रजन्ती यदृच्छया। दुष्टेन दष्टुमारब्धा, तमप्येव-मवोचत ॥ ३५४ ॥ कायेन मनसा वाचा, चेत् पञ्चापि न वञ्चिताः। मया कदापि प्रेयांसः, सर्प! सर्प[2] तदान्यतः ॥ ३५५॥ इत्याक्षिप्तस्तया मङ्क्षु, ययौ सोऽपि भुजंगमः। वाचस्पतेरपि सती-महिमा न हि गोचरः ॥ ३५६ ॥ यदुष्णकिरणः कृष्णां, सतीं पादैरुपास्पृशत्। तन्मन्ये सद्य एवायं, मज्जति स्म तदाम्बुधौ ॥ ३५७ ॥

अथाचक्राम दिक्चक्र-मुच्छृङ्खलतमं तमः। सर्वातिशायी शोकश्च, पाञ्चालदुहितुर्मनः ॥ ३५८॥ प्रेयोभिर्विप्रयुक्तायाः, कथं यास्यति यामिनी। एषा ममेति सा चिन्ता-क्रान्ता यावदजायत ॥ ३५९ ॥ हिडम्बां पुरतस्ताव-दालोकत कृताञ्ज-लिम्। व्यानशे च प्रमोदेन, सुधासेकसनाभिना ॥ ३६० ॥ फुल्लत्कपोलफलका, बभाषे सा हिडम्बया। आर्ये! त्वद्विरहात् प्रापुः, पाण्डवाः शोकताण्डवम् ॥ ३६१ ॥ यदान्विष्य वनान्तस्त्वां, ते कुत्रापि न लेभिरे। ततो धूलीविलिप्ताङ्गा, वसुधां परिरेभिरे ॥ ३६२ ॥ तेषां संप्रति बाष्पाम्बु-धाराधोरणिभिः पुरः। जातानि जानुदघ्नानि, पल्वलानि भुवस्तले ॥ ३६३ ॥ श्वापदैरापदं रात्रौ, द्रौपदी नेष्यते ध्रुवम्। तां विना जीवितेनापि, पर्याप्तमधुनाऽमुना ॥ ३६४ ॥ इति निश्चित्य ते सन्ति, प्राणत्यागविधित्सवः। जीविते निःस्पृहा जज्ञे, पृथाऽपि तनयाऽनुगा ॥३६५॥ (युग्मम्) इत्थमत्याहितं[3] तेषां, विलोक्याकुल-

१ निःशूकं निर्दयम्। २ गच्छ। ३ अनर्थम्।

मानगा। कान्तारार्णवमालोक्य, तवाभ्यर्णमुपागमम् ॥ ३६६ ॥ इति वृत्तान्तमावेद्य, समुत्प्लुत्य विहायसा। सा द्रौपदीमृणादाय, पाण्डवानामुपानयत् ॥ ३६७ ॥ स्रोतस्विनीररण्यानी-स्ते वृहंश्च शिलोच्चयान्। हेलयैव हिडम्बायाः, साहाय्येन ललङ्घिरे ॥ ३६८ ॥

अगाधमर्णमन्याभ्यां, हिडम्बायाः पदे पदे। निवेश्य कुन्ती-कृष्णाभ्या-मभ्यधीयत सा रहः ॥ ३६९ ॥ भद्रे! तवोपकारगणा-मियत्तैव न विद्यते। आवां त्वस्यामवस्थायां, किं ते प्रत्युपकुर्वहे? ॥ ३७० ॥ तथाऽपि ब्रूहि कल्याणि!, किञ्चिदीप्सितमात्मनः। काचिदानृण्यकरणा-द्यथा स्यात् प्रीतिरावयोः ॥ ३७१ ॥ अथोवाच हिडम्बाऽपि, कुन्तीं प्रति कृताञ्जलिः। विश्वोपकारिणि! क्वाहं?, क्व च त्वं पाण्डवप्रसूः? ॥ ३७२ ॥ किं तवोपकरिष्यन्ति, राक्षस्यो देवि! मादृशः?। उपकुर्वन्ति किं नाम, दरिद्रश्चक्रवर्तिनः? ॥ ३७३ ॥ उपकुर्वन्ति सन्तस्तु, पूर्वानुपकृता अपि। केनाप्युपकृता किं नु, लोकं प्रीणाति चन्द्रिका? ॥ ३७४ ॥ विज्ञापयामि तदपि, स्वं किंचन मनीषितम्। पुत्रस्ते दृष्टमात्रोऽपि, मया वव्रे वृकोदरः ॥ ३७५ ॥ तत् प्रसीद तथाऽऽधेहि, यथा स्यादेष मे वरः। एवं संबन्धमाधाय, स्वस्य मां कुरु किंकरीम् ॥ ३७६ ॥ इत्याख्याते तया कुन्ती, स्नुषाया मुखमैक्षत। साऽपि विज्ञा कृतज्ञा च, जगाद मुदितानना ॥ ३७७ ॥ प्राणैरपि प्रियं कर्तु-मेताभ्याः शृणयाम्यहम्। तुच्छानां भर्तृभोगानां, संविभागे तु का कथा? ॥ ३७८ ॥ ततः स्वयं समुत्थाय, ताभ्यामभ्येत्य नान्तिके। अनिच्छन्नपि भीमस्तां, प्रसह्य परिणायितः ॥ ३७९ ॥ सर्वर्तुरमणीयानि, कृत्वोद्यानानि विद्यया। कृत्रिमं

१ पर्गंनात्। २ पूर्वमनुपकृताः। ३ बलात्।

भीमहिडिम्बयोः पाणिग्रहणम् । एकचक्रानगरीवने पाण्डवानां गमनम्, साधुदेशनाश्रवणं च ॥

सौधमाधाय, रेमे भीमेन सा समम् ॥३८०॥ सैकतेषु स्रवन्तीनां, शैलानां शिखरेषु च । नीत्वा यदृच्छया भीमं, रमयामास सा सुखम् ॥ ३८१ ॥ स्वाधीनपतिका प्राप्य, कामानतिमनोरमान् । क्रमादापन्नसत्त्वाऽसौ, जज्ञे पुण्यजनेश्वरी ॥३८२॥

अथ क्रमादतिक्रम्य, पन्थानं पाण्डुसूनवः । नगर्यामेकचक्रायां, काननान्तःकृतस्थितिम् ॥ ३८३ ॥ सुवर्णकमलासीनं, दिशन्तं धर्ममुत्तमम् । वपुष्मदिव चारित्रं, ज्ञानिनं ददृशुर्मुनिम् ॥ ३८४ ॥ ( युग्मम् ) मुनेर्दर्शनमात्रेण, सुधा[3]स्नपनबन्धुना । तेषां श्रद्धाजुषामध्व–श्रमः सर्वो व्यलीयत ॥३८५॥ तेऽन्तर्मलमपाकर्तु–मुत्तालमनसस्तदा । मुनिपादारविन्दस्य, वन्दनार्थमुपाययुः ॥ ३८६ ॥ भवभ्रान्तिपरिक्लान्त–जन्तुविश्रान्तिपादप ! । परोपकारनिर्व्याज !, मुनिराज ! नमोऽस्तु ते ॥ ३८७ ॥ इत्यानन्दपतद्बाष्प–मभिष्टुत्य युधिष्ठिरः । सभान्तः संकुचज्जानुः, सानुजः समुपाविशत् ॥३८८॥ दरिद्रपान्थवेशेषु, दिविषन्मूर्तिधारिषु । तदानीं तेषु सभ्यानां, निपेतुर्युगपद्दृशः ॥ ३८९ ॥

अथाऽऽपदार्पगोत्तारे, द्रोणीमिव दृशं क्षिपन् । तानाश्रित्य विशेषेण, मुनिराधत्त देशनाम् ॥३९०॥ एक एव पुमर्थेषु, धर्मश्चूडामणीयते । दया च सर्वसत्त्वेषु, तस्यापि तिलकायते ॥ ३९१ ॥ प्रावृट्पाथोदवीथी च, करुणा चाप्यकृत्रिमा । वनराजीं च राज्यं च, नवतां नयतः पुनः ॥३९२॥ दया प्राणिषु सर्वेषां, गदानामगदः परः । अनर्घ्यमायुर्दैर्घ्यस्य, कारणं करुणां विदुः ॥ ३९३ ॥ शुक्तिरुन्नतिमुक्तानां, मुक्तिसंगमदूतिका । दया नियतमेकाऽपि, सर्वकल्याणकारणम् ॥ ३९४ ॥ इत्याकर्ण्य हिडम्बाऽथ, राक्षसान्वयदुर्लभम् । निर्मन्तुत्रसजन्तूनां, प्रतिषेधं वधे व्यधात् ॥ ३९५ ॥ देशनाऽन्ते स्वयं कुन्ती, संशया-

१ नदीनाम् । २ राक्षसी । ३ अमृतस्नानसदृशेन । ४ आपगा–नदी ।

पगमश्रमम् । मुनिं पर्यनुयुङ्क्ते स्म, विनयाद्विहिताञ्जलिः ॥ ३९६ ॥ पराभवसहस्राणां, पदमापदमीदृशीम् । किमेते निस्तरिष्यन्ति, कदापि मम सूनवः ? ॥३९७॥ त्रिलोकीं हस्तविन्यस्त-कुवलीफललीलया । पश्यन्मुनिरिमां वाचं, व्याजहार मनोहराम् ॥ ३९८ ॥ त्रिभुवन महाभागे !, भवितारः सुतास्तव । क्रमेणानुपमानाया, भुक्तेर्मुक्तेश्च भाजनम् ॥ ३९९ ॥ पुनरेव निजं राज्यं, कैश्चिदासाद्य वासरैः । ज्येष्ठोऽयं दुष्टसंहर्ता, कर्ता धर्मप्रभावनाम् ॥ ४०० ॥ क्रमात् कर्माणि निर्मूल्य, संयमाराधनादमी । पञ्चापि विश्वत्रातारो, यातारः पञ्चमीं गतिम् ॥ ४०१ ॥ इमां निशम्य ते वाचं, वाचंयमशिरोमणेः । पीयूषसेकसोदर्या-मासेदुः परमां मुदम् ॥ ४०२ ॥

तत्र ज्ञानसुधाम्भोधा-वन्यत्र प्रस्थिते मुनौ । धर्मानुरागिणीं ज्यायान्, हिडम्बां पाण्डवोऽभ्यधात् ॥४०३॥ निष्कारणोपकारिण्याः, शुभे ! साहाय्यकात्तव । अटवीतटिनीप्रायः, पन्था दुर्गोऽपि लङ्घितः ॥ ४०४ ॥ वयं नगर्यामेतस्यां, स्थास्यामः कतिचिद्दिनान् । तद्गच्छ भद्रे ! स्वभ्रातुः, सनाथां कुरु संपदम् ॥ ४०५ ॥ गर्भाभिधाने मद्भ्रातु-र्निधाने यत्नमातनु । पात्रे न्यासीकृता संप-दधिकां वृद्धिमश्नुते ॥ ४०६ ॥ स्मृता तु समये वत्से !, समुपस्थातुमर्हसि । मनोऽभ्युपेतनिर्वाहि, मानसं महात्मनाम् ॥४०७॥ अथाङ्गीकृत्य तत्तस्थौ, हिडम्बा वनमेत्य सा । वीतरागसपर्यासु, पर्याकुलकराम्बुजा ॥४०८॥

मुद्रामादाय विप्राणां, तदाकारमनोहराम् । एकचक्रामुपाजग्मु-र्नगरीं पाण्डुनन्दनाः ॥ ४०९ ॥ अदृश्यन्त विशन्तस्ते, पुर्यामार्येण वर्त्मनि । द्विजेन जनतादत्त-शर्मणा देवशर्मणा ॥४१०॥ उपलभ्योपसंग्राह्यान्[3], गुणगृह्यः स तान् कृती । गत-

१ पृच्छति स्म । २ कुवलीफलं बदरीफलम् । ३ वन्दनयोग्यान् ।

च्छद्मा निजं सद्म, नीत्वा काममपूजयत् ॥ ४११ ॥ अभणच्च गुणश्रेष्ठं, ज्येष्ठं पाण्डवमादरात् । भो ! भूमिदेव ! दैवेन, योजितः किंचिदर्थ्यसे ॥ ४१२ ॥ इदं मे वेश्म तामेतां, पत्नीं सौजन्यशालिनीम् । इमं पुत्रमिमां पुत्रीं, जानीयाः सर्वमात्मनः ॥ ४१३ ॥ वसन् गेहे सुखेनात्र, पवित्रय पुरीमिमाम् । सरत्ना रत्नगर्भेति, जनो जानातु संप्रति ॥ ४१४ ॥ तथेति प्रार्थनां गुर्वीं, प्रतिश्रुत्य युधिष्ठिरः । चक्रे कुटुम्बसंमत्या, निवासं तस्य वेश्मनि ॥ ४१५ ॥ विप्राचारभृतो बाह्ये, स्वान्ते तु परमार्हताः । ते धर्मकर्मठास्तत्र, वासरानत्यवाहयन् ॥ ४१६ ॥ श्वश्रूशुश्रूषणप्रीत–चेताः पाञ्चालनन्दिनी । पुत्रीप्रीतिपरा तस्यां, कुन्ती चानर्चतुर्जिनम् ॥ ४१७ ॥ कुटुम्बस्यानुकूल्येन, प्रातिकूल्यं विधेस्तदा । न किंचित्ते विदांचक्रु–रेकचक्रानिवासिनः ॥ ४१८ ॥ सावित्री नाम तस्यास्ति, कलत्रं देवशर्मणः । तया वैनयिकात् कुन्त्या, मनः परवशीकृतम् ॥ ४१९ ॥ कुन्ती कृष्णासधर्माणं, स्नुषां तामप्यजीगणत् । पौत्रावेव च तत्पुत्रौ, गङ्गा–दामोदराभिधौ ॥ ४२० ॥ सा तेन सहवासेन, विस्मृतात्मनिकेतना । अनेकान् गमयामास, मासानेकाहलीलया ॥ ४२१ ॥

अन्यदा पवमानस्य, तनये गृहवर्तिनि । अपरेष्वेकचक्रान्तः, स्वैरसंचारशालिषु ॥ ४२२ ॥ देवशर्मकुटुम्बस्य, कटुमाक्रन्दमुच्चकैः । आकर्ण्य कुन्ती कुन्तेन, भिन्नेव हृदयेऽभवत् ॥ ४२३ ॥ युग्मम् ॥ गत्वाऽथ देवशर्माणं, सा जगाद सगद्गदम् । तव वत्स ! कुतोऽमूल–मेतद्दुःखं सुदुःसहम् ? ॥ ४२४ ॥ अथासौ कथयामास, कथां कुन्त्याः सुदुःश्रवाम् । अस्यां पुरि पुरारिष्ट–मतिकष्टमजायत ॥ ४२५ ॥ पुरोपरि शिला गुर्वी, दर्शिताऽकाण्डविड्वरा । समालोकयत कल्पान्त–

१ पृथ्वी । २ पुत्री च पुत्रश्चेत्येकशेषे पुत्रौ ।

युधिष्ठिरादेशेन हिडम्बा गर्भवती स्वस्थानं गता । पाण्डवानामेकचक्रायां निवासो ब्राह्मणगृहे ॥

गृष्करावतमोदरा ॥ ४२६ ॥ युगान्तज्वलनोपज्ञ–धूमस्तोमोपमस्तदा । घोरान्धकारो विधुरं, पुरीजनमजीजनत् ॥ ४२७ ॥
गण्डुयन् भूरुहां खण्डान, ववौ चण्डः समीरणः । कनीयान् बान्धवो यस्य, किल कल्पान्तमारुतः ॥ ४२८ ॥ अदृष्टपर-
चक्रार्ति-मेकचक्रां पुरीं तदा । भयस्याभिज्ञतां निन्यु–स्तान्यरिष्टानि सर्वतः ॥ ४२९ ॥ अबलाभिश्च बालैश्च, प्राणान्तिक-
भयार्दितैः । भर्तॄणां च पितॄणां च, चक्रे कण्ठग्रहस्तदा ॥ ४३० ॥ प्रत्येकं कुलदेवीना–मीयुर्जानुस्थिताः पुरः । उपयाचित-
लक्षाणि. पुरीवृद्धपुरंध्रयः ॥ ४३१ ॥ नैमित्तिका निमित्तानि, ग्रहान् मौहूर्तिकाः पुनः । शकुनं शकुनज्ञाश्च, सर्वेऽप्यालोकयंस्तदा
॥ ४३२ ॥ नृपश्च पौरमुख्याश्च, बद्धाञ्जलिपुटाः समम् । धूपमुत्क्षिप्य निक्षिप्य, दृशमूर्ध्वमथाभ्यधुः ॥ ४३३ ॥ यक्षो वा यदि वा
रक्षो, योऽस्मि क्रुद्धः पुरीं प्रति । अस्मास्वाज्ञाविधेयेषु, सांप्रतं स प्रसीदतु ॥ ४३४ ॥ अथाकस्मान्मषीकालः, कालरात्रिस-
होदरः । पिङ्गाग्नि–चिकुरः क्रूरः, कश्चित्तैर्ददृशे दिवि ॥ ४३५ ॥ भीतास्ते कम्पमानाङ्गा–स्तमूचुः प्रश्रयाश्रिताः । कोऽसि ?
ब्रूहि महाभाग !, देवो वा दानवोऽथवा ॥ ४३६ ॥ असौ संहारसंरम्भः, समारेभे कुतस्त्वया ? । तव नेतुं विना मन्तु–मन्तं
वन्तुम सांप्रतम् ॥ ४३७ ॥ क्लिश्यन्ते हि महात्मानः, परोपकृतिकाम्यया । तरणेः कारणं किं नु ?, यद्भ्राम्यति नभोऽङ्गणे
॥ ४३८ ॥ दधत्यार्तं गुरुीकर्तुं, कुलीनास्तापमात्मना । सुदुःसहं सहन्ते हि, तरवस्तपनातपम् ॥ ४३९ ॥ ततस्त्वमपि
निःशङ्ग, शल्यमुद्धर्तुमर्हसि । एतत्कर्तुमकर्तव्यं, किं पुनस्तव युज्यते ? ॥ ४४० ॥ एवमुच्चैस्तरामुक्तः, सोऽभ्यधत्त नभःस्थितः ।
भोः ! निशाचराधीशं, मां जानीत बकाभिधम् ॥ ४४१ ॥ रत्नशैलाभिधे शैले, पुरीसविधवर्तिनि । दुःसाधा साधयां-

१ व्याघुत्य । २ गेऽकृत ।

चक्रे, मया विद्याऽद्य राक्षसी ॥ ४४२ ॥ ततः स्वविद्यामाहात्म्य–विलोकनकुतूहली । पुरीसंहारमधुना, विधित्सुरयमस्म्यहम् ॥ ४४३ ॥ अरे ! वराकाः सपदि, स्मरताभीष्टदेवताम् । शिलासंचूर्णितास्तूर्ण–मिदानीं न भविष्यथ ॥ ४४४ ॥ तेऽथ तेनैवमाक्षिप्ताः, पुनरेवं बभाषिरे । विद्या विद्याधराधीश !, किं न कुर्यादसंशयम् ? ॥ ४४५ ॥ नैतावतैत्र कार्येण, पुरीं संहर्तुमर्हसि । को नाम कीलिकाहेतोः, प्रासादोच्छेदमिच्छति ? ॥ ४४६ ॥ इदं विद्यापरीक्षायै, पुरीसंहरणं वृथा । भस्मने भस्मसात्कुर्यात्, को हि चन्दनकाननम् ? ॥४४७॥ तदेनमेनसामेकं, संक्रमं प्रक्रमं[1] त्यज । किं च त्रिलोकीत्राणाय, विद्या व्यापार्यतामियम् ॥ ४४८ ॥ सोपरोधमिति प्रोक्तः, सोऽभ्यधान्निष्कृपः पुनः । मांसैकलुब्धमनसो, दैन्यगृह्या[2] न राक्षसाः ॥ ४४९ ॥ अस्ति युष्माकमेकस्तु, पणः प्राणप्रियंकरः । मम दत्तोपहारं चे–देकं मानवमन्वहम् ॥ ४५० ॥ मदीयपुरनेदीयः[3]–कान्तारे भैरवाभिधे । मत्प्रसादार्थिभिः प्रांशुः, प्रासादश्च विधाप्यताम् ॥ ४५१ ॥ जातु नैवं कृतेऽवश्यं, भविता वः पराभवः । सदैव दैवतेभ्योऽपि, परचक्रात्तु का कथा ? ॥ ४५२ ॥ इदं वोऽस्तु पुरीं त्रातु–मेकमौपयिकं परम् । तदरे ! रोचते यद्व–स्तदाचरत संप्रति ॥ ४५३ ॥ इति व्याहृत्य विरते, दुर्नयाऽऽसेवके बके । अनिष्टामपि तां पौरा–स्तद्गिरं प्रतिशुश्रुवुः ॥ ४५४ ॥

अथेन्द्रजालिकेनेव, राक्षसेन्द्रेण तत्क्षणात् । अपासार्यत सर्वोऽपि, शिलादिर्दिवि डम्बरः ॥ ४५५ ॥ ततः कुमारिकाकृष्ट–नामपत्रनियोगतः । पर्यस्थाप्यत पर्यायः, पौरैः पुरनिवासिनाम् ॥ ४५६ ॥ बकमूर्तिसनाथश्च, प्रासादो निरमाप्यत । बलिनश्च विधातुश्च, नियोगः केन लङ्घ्यते ? ॥ ४५७ ॥ एकस्ततः प्रभृत्यम्ब ! पुमांस्तस्योपदीयते । असौ द्रोणप्रमाणश्च, शाल्योदन-

१ आरम्भम् । २ दैन्येन ग्रहीतुं शक्याः । ३ नेदीयः–समीपम् ।

मयी बलिः ॥ ४५८ ॥ तदेनं बलिमादाय, मातर्नृपनिदेशतः । पर्यायेणोपगतः सोऽहं, यास्यामि विपिनेऽधुना ॥ ४५९ ॥ तन्निराशं निरालम्ब, कुटुम्बं मम रोदिति । आश्रयद्रुमनाशे हि, दीनाः क्रोशन्ति पक्षिणः ॥ ४६० ॥ किं चान्यत् संकटं यन्मे, तन्मातः ! शृणु संप्रति । यदेषा ब्राह्मणी वक्ति, मामिदानीं पुनःपुनः ॥ ४६१ ॥ किं कार्यममुना नाथ !, त्वां विना जीवितेन मे । मापत्याऽपि भृशं लप्स्ये, त्वद्वने हि पराभवम् ॥ ४६२ ॥ ततोऽहमुपहाराय, तस्य यास्यामि रक्षसः । कल्पायुस्त्वं पुनर्भूया, भुञ्जानो भूयसीं श्रियम् ॥ ४६३ ॥ त्वत्प्राणत्राणकारिण्याः, कुलेऽस्तु कलशो मम । भर्तुर्विपदमाच्छेत्तु–मतिच्छेकाः कुलस्त्रियः ॥ ४६४ ॥ भुक्तं मृष्टं सुखं स्पृष्टं, दृष्टं मुखमपत्ययोः । त्वत्तः किं किं मया नाप्तं ? नास्ति मृत्योर्भयं मम ॥ ४६५ ॥ व्रजन्तं केवला नेयं, मां रुणद्धि सधर्मिणी । अमावप्यात्मजेदानीं, सुदती वदतीति नौ ॥ ४६६ ॥ मा मातर्मा स्म वा तात, गच्छतं स्वर्गो मुदे । आहारमुपहारं च, कर्तुं तस्योद्यताऽस्म्यहम् ॥ ४६७ ॥ बालो यद् युवयोरेव, जीवतोरेव जीवति । माताऽपि तात-शुश्रूषां, करोत्वाकल्पजीविनी ॥ ४६८ ॥ यदि मां नानुमंस्येथे, युवां नास्मि तथाप्यहम् । युवयोर्गेहवास्तव्या, परार्था हि पतिरराः ॥ ४६९ ॥ इति कुन्ति ! कुटुम्बं मां, नानुजानाति मृत्यवे । अनुमन्येऽहमप्येतत्, कथं रक्षोमुखे पतत् ? ॥४७०॥ आदेशस्तु नरेशस्य, सर्वथा दुरतिक्रमः । तत्किंकर्तव्यतामूढः, पतितोऽस्म्यत्र वैशसे ॥ ४७१ ॥

इति विप्रे वदत्येव, काशकम्बां विलोलयन् । वेगादागत्य बालस्ता–नवोचत् पञ्चहायनः ॥ ४७२ ॥ मा रोदीस्तात ! मा स्माम्ब ! रोर्दर्मा स्म रुदः स्वसः । अनया कम्बया गत्वा, तं हनिष्यामि राक्षसम् ॥ ४७३ ॥ मुहुर्मुहुर्ब्रुवन्नेवं, चालयंस्तां

१ पर्यायेण–अनुक्रमेण उपगतः–प्राप्त. । २ स्वादिष्टम् । ३ विप्रे ।

लतां शिशुः । बाष्पप्लुते दृशौ तेषां, प्रममार्ज पुनः पुनः ॥ ४७४ ॥ तेषामेकैकशो नेत्रे, स ममार्ज यथा यथा । अम्भस्तथा तथा ताभ्यां, निर्झराभ्यामिवाभ्यगात् ॥ ४७५ ॥

अथ कुन्ती वलोदात्तां, तां बालस्य सरस्वतीम् । रक्षोवधैकपिशुना–मुपश्रुति[1]ममन्यत ॥ ४७६ ॥ द्विजन्मानमवादीच्च, दयालुहृदयाऽधिकम् । हतमेवेति तं वत्स !, लक्षये राक्षसाधमम् ॥ ४७७ ॥ वध्यवेषममुं मुञ्च, किं च सिञ्चन् कुटुम्बकम् । वात्सल्यामृतकुल्याभि–श्छायां नय पुरातनीम् ॥ ४७८ ॥ शौण्डीर्योपचिताः पञ्च, ममामी सन्ति सूनवः । तेषामेकतमो गत्वा, तं हनिष्यति हेलया ॥ ४७९ ॥ इति कुन्तीवचः श्रुत्वा, हसन्नाह द्विजोत्तमः । न जानासि जगज्जैत्रं, त्वमम्ब ! बकविक्रमम् ॥ ४८० ॥ तस्मिञ्शौण्डीर्यशौण्डानां[2], दोर्दण्डबलडम्बरम् । अन्तर्मज्जति मार्तण्डे, तेजस्तेजस्विनामिव ॥ ४८१ ॥ अहमेव वरं मात–र्यतः कीनाशदासताम् । न तु विश्वजनीनात्मा[3], तनयस्तव कश्चन ॥ ४८२ ॥

इति द्विजन्मनो वाचं, व्याख्यातबकविक्रमाम् । आकर्ण्य मातुरभ्यर्ण–वर्ती भीमस्तमभ्यधात् ॥ ४८३ ॥ त्वया पुत्रवतींमन्या, माता नः सर्ववत्सला । पश्यन्त्यपायमायात–मन्तः संतप्यतेतराम् ॥ ४८४ ॥ जननीयं कृतज्ञानां, त्वं च विश्वोपकारिणाम् । धौरेयतामयासिष्ट–मिति पश्यति मे मतिः ॥४८५॥ भवन्तमन्तकप्राया–द्योऽभिरक्षति राक्षसात् । तमेव सुतमात्मीय–मम्बा मनसि मन्यते ॥ ४८६ ॥ तदहं विहितोत्साहो, मातुराधातुमीप्सितम् । त्वं तिष्ठ निष्ठुरं दुष्ट–मुपस्थातास्मि राक्षसम् ॥४८७॥

देवशर्मा ततः प्राह, मैवं वद महामते ! । न क्षमे श्रोतुमप्येता–मब्रह्मण्यां गिरं तव ॥ ४८८ ॥ उररीकृत्य ते मृत्युं,

१ शकुनम् । २ पराक्रमदक्षाणाम् । ३ विश्वजनहित आत्मा यस्य सः ।

नात्मानं त्रातुमुत्सहे । इन्द्रनीलोपमर्देन, कः काचं परिरक्षति ? ॥ ४८९ ॥ मादृशस्य द्विजस्यार्थे, नररत्नं भवादृशम् । राक्षसायोपनेतव्य-मिति कोऽन्योऽपि मन्यते ? ॥ ४९० ॥ त्वादृक्षो विरलः कोऽपि, परोलक्षास्तु मादृशाः । स्वल्पः कल्पतरुर्लोके, भृङ्गाङ्गोऽन्ये हि भूरुहः ॥ ४९१ ॥ म्रियन्ते पञ्चपाण्येव, मानुषाणि मृते मयि । अस्या मूर्तेर्विपत्तौ तु, सर्वा सीदति मेदिनी ॥ ४९२ ॥ एतौ तव भुजौ वीक्ष्य, स्वयं त्रस्यन्ति शत्रवः । अक्षामस्थामधामाऽयं, न पुनर्बकराक्षसः ॥ ४९३ ॥ बक एव बको यद्वा, तव दोःपाशयोः पुरः । केवलं केवलिप्रोक्ता, गिरः संशयकारणम् ॥ ४९४ ॥ यतोऽमुष्यां पुरा पुर्यां, केवली मुनिराट्ट्नः । उदियाय पुरः शैल-चूलायामिव भास्करः ॥ ४९५ ॥ सर्वे वन्दारवः पौरा-स्तदभ्यर्णमुपाययुः । सोऽपि कारुणिकस्तेभ्यः, परं धर्ममुपादिशत् ॥ ४९६ ॥ तेनोपदेशपीयूष-पानेन प्रसरन्मुदः । समये विश्वमार्तण्डं, मुनीन्द्रं तेऽन्वयुञ्जत ॥ ४९७ ॥ प्रभो ! प्रसीद सीदन्ति, पौराः सर्वे निवेद्यताम् । विरंस्यति जनस्यास्य, राक्षसोपद्रवः कदा ? ॥ ४९८ ॥ मुनिनाथोऽप्यथाऽऽचख्यौ, भो ! भद्राः पाण्डुसूनवः । जिता द्यूते यदैष्यन्ति, वनवासक्रमादिह ॥ ४९९ ॥ असौ तदानीं भविता, नगरी निरुपद्रवा । सदाऽप्यगोचरो वाचां, महिमा हि महात्मनाम् ॥ ५०० ॥ इत्याख्याय स लोकाय, जगाम मुनिपुङ्गवः । तादृशां हि मही सर्वा, प्रियीकर्तुमुपक्रमः ॥ ५०१ ॥

तेन चन्द्रातपेनेव, मुनिन्दोर्वचनेन ते । बभूवुः प्रीतिकल्लोलै-र्नागराः सागरा इव ॥ ५०२ ॥ वर्णा अपि सुधाकीर्णाः, पाण्डवाः पाण्डवा इति । एतदाख्या भविष्यन्ति, पुमांसः कीदृशाः पुनः ? ॥ ५०३ ॥ इत्युक्तैः कुलदेवीभ्यः, पाण्डवागम-

१ चन्दनशीलाः । २ अपृच्छन् । ३ ' प्रिया ' ' प्रिया ' इति प्रत्यन्तर० । ४ अक्षराणि ।

नैपिभिः । उपयाचितलक्षाणि, पौरैः प्रत्येकमीषिरे ॥ ५०४ ॥ ( युग्मम् ) हस्तिनापुरमार्गेण, नानोपायनपाणयः । प्रत्युद्ययुश्च ते नित्यं, पाण्डवेयान् प्रति प्रगे ॥५०५॥ जनानां जानतामेता-नद्यश्वीनसमागमान् । एकदा पथिकः कश्चि-दाययौ तेन वर्त्मना ॥ ५०६ ॥ स तैरप्रच्छि भोः पान्थ !, कथयास्मिन् पथि क्वचित् । उदन्तः पाण्डवेयानां, कश्चित् क्वचित्त्वया श्रुतः ? ॥ ५०७ ॥ शशंस सोऽपि भोः पौराः !, पथि चंक्रमणक्रमात् । आगतोऽस्मि श्रियो वास-वारिजे वारणावते ॥ ५०८ ॥ जनेभ्यस्तन्निवासिभ्यः, सबाष्पेभ्यः पदे पदे । इति कर्णविषं तस्मि-न्नश्रौपमतिदारुणम् ॥ ५०९ ॥ दुर्योधनस्य वचसा, वसन्तो जातुपे गृहे । इह चण्डाः सुताः पाण्डो-र्दाहं प्रापुः प्रदीपनात् ॥५१०॥ इहानुजीविभिस्तेषां, विरचय्योचिताश्चिताः । प्राणास्तेनैव सार्थेन, प्रहिताः प्रभुवत्सलैः ॥ ५११ ॥ वीक्ष्य भस्मस्थलीः स्थूलाः, कीर्तीस्तेषां निशम्य च । ममापि निरमाप्यन्त, बाष्पैः कूलंकषा दृशः ॥५१२॥ अथावेद्य कथामेतां, स पान्थः प्रस्थितः पुरः। आक्रन्दश्चैकचक्रायां, चक्रेऽतितुमुला दिशः ॥ ५१३ ॥ न मातुर्न पितुर्नैव, स्वामिनो मृत्युवार्तया । अभवत्तादृशः शोकः, पौराणां यादृशस्तदा ॥ ५१४ ॥ निःप्रत्याशैर्निरानन्दै-स्ततः प्रभृति नागरैः । पूर्यते यातुधानस्य[1], विशेषेण मनीषितम् ॥ ५१५ ॥ तदिदानीं द्रुतं यामि, प्रणम्य कुलदेवताम् । सर्वेषामेव युष्माकं, जज्ञेऽनुज्ञाञ्जलिर्मम ॥ ५१६ ॥ इति व्याहृत्य धैर्येण, संवर्मितमनास्ततः । सकुटुम्बोऽप्यगाद्विप्रः, प्रणन्तुं कुलदेवताम् ॥५१७॥

अथाभ्यधात् पृथा भीमं, वत्स ! त्वयि तनूरुहे । एकस्यापि द्विजस्यास्य, नाभूवमभयप्रदा ॥ ५१८ ॥ धन्यास्ते सति

१ राक्षसस्य ।

सामर्थ्ये, धरायां वार्धिसीमनि । ये सर्वप्राणिरक्षार्थं, ददत्यभयडिण्डिमम् ॥ ५१९ ॥ ये तूपकारकस्यापि, विपन्नद्यां निपेतुषः । निमिर्ढं नोद्धरयन्ते, तेषामजननिर्वरम् ॥ ५२० ॥ महाऽऽपदमपाकर्तु-मेतामस्योपकारिणः । अहं न चेदलंभूष्णु-स्तन्मां धिक् धिक् च मे गुतान् ॥ ५२१ ॥ तद्गच्छ बलिमादाय, निवासं तस्य रक्षसः । विदधीथास्तथा तत्र, सत्यः स्यात् केवली यथा ॥ ५२२ ॥ एतमादेशमासाद्य, मातुः पादौ प्रणम्य च । सच्छायपादपं प्राप, चकोद्यानं वृकोदरः ॥५२३॥ पश्यन् स्मेर-मुखस्तस्य, वनस्य कमनीयताम् । पुरतः पुरुषं कंचि-दृष्ट्वाऽभाषिष्ट पाण्डवः ॥ ५२४ ॥ शंस मे भद्र ! कस्यायं, प्रासादः प्रांशुरग्रतः ? । कश्च त्वं ? कुत्र वा तिष्ठे-द्रक्षोभक्ष्यः पुमानिह ? ॥५२५॥ सोऽवोचत् कारितः पौरैः, प्रासादः सैष राक्षसः । स्थाने चास्मिन् बलिः शेष-राक्षसेभ्यो निवीयते ॥ ५२६ ॥ अहं तु पौरनिर्दिष्टः, प्रासादपरिचारकः, । पर्यायोपगतोऽध्यास्ते, वध्यो वध्यशिलामिमाम् ॥ ५२७ ॥ महात्मन् ! कौतुकात् किं तु, किंचित् पर्यनुयुज्यसे । त्वादृग्लोकत्रयीजैत्र-भुजः कोऽप्यत्र नागमो ॥ ५२८ ॥ नाप्यस्ति वध्यवेषस्ते, न च ते दीनमाननम् । लम्बते निम्बमाला च, न तवाधिशिरोधरम् ॥ ५२९ ॥ इति प्रश्नपरे तस्मि-न्नकस्मादेव दुःश्रवः । पुरो याहि पुरो याही-त्येवं कोलाहलोऽभवत् ॥ ५३० ॥ तं श्रुत्वा स पुनः प्राह, नन्वागतेति राक्षसः । ततो व्यवहितो भूत्वा, देव ! स्थास्यामि संप्रति ॥ ५३१ ॥ इत्युक्त्वाऽन्तर्हिते तस्मिन्, दूरादायाति राक्षसे । पल्यङ्किकामिव शिलां, लीलयाऽध्यास्त पाण्डवः ॥ ५३२ ॥

अथोगैनः समं प्रेत-पिशाचैः स निशाचरः । सुखोत्तानशयं क्रूरः, प्रेक्षांचक्रे वृकोदरम् ॥५३३॥ अचिन्तयच्च कोऽप्यद्य,

१ पतितस्य ।

पीवरोरुर्महोदरः । आगात् पुमान्न यो माति, विपुलेऽपि शिलातले ॥ ५३४ ॥ असौ बुभुक्षाक्षामस्य, भूत्वा कुक्षिंभरिर्मम । पीनः परिच्छदस्यापि, भविष्यत्युदरंभरिः ॥ ५३५ ॥ इति प्रमुदितस्वान्तो, दन्तान् सोऽत्यन्तदारुणः । देहे व्यापारयामास, मांसले पाण्डुजन्मनः ॥ ५३६ ॥ भीमस्य वज्रकायस्य, काये व्यापारिता अपि । अवापुः कुण्ठतां तस्य, दन्ताः कुन्ता इवाश्मनि ॥ ५३७ ॥ भीमवक्षःस्थले स्थूलं-भावुकक्षुत्क्रमोदयः । खननोपक्रमं चक्रे, नखकुद्दालकैर्बकः ॥ ५३८ ॥ त्रटत्कारकरास्तस्य, नखरास्ते खरा अपि । मृणालकदलीभङ्गं, भज्यन्ते स्म समन्ततः ॥ ५३९ ॥ विस्मितश्च विलक्षश्च, लज्जितः सज्जितश्च सः । रक्षोनिवहमाह्वास्त, समस्तं स्वस्य संनिधौ ॥ ५४० ॥ ऊचे च नरमेकैकं, स्वादयन्नहमन्वहम् । अस्मिन् भूभृति भूयांस-मनेहसमलङ्घ्यम् ॥ ५४१ ॥ परं न कोऽप्यभूदीदृ-ग्पुरुषः परुषच्छविः । न च स्थिरो न च स्थूल-वपुर्नाप्यकुतोभयः ॥ ५४२ ॥ तदेनं स्वे नगे नीत्वा, तीक्ष्णेन तरवारिणा । उत्कृत्योत्कृत्य कर्तास्मि, सर्वेषामाशितंभवम् ॥ ५४३ ॥ तदवश्यमुदस्यध्व-मेनं मानुपमादरात् । इत्युक्तास्ते तथा चक्रु-रुदामबलशालिनः ॥ ५४४ ॥ भीमभारभराक्रान्ता, मुखेनोद्वान्तशोणिताः । नक्तंचराः पिशाचास्ते निपेतुर्धरणीतले ॥ ५४५ ॥ अथ संभूय भूयोभि-स्तैः समं बकराक्षसः । भीमं कथंचिदुत्पाट्य, निनाय निजभूधरम् ॥ ५४६ ॥

इतः साकं कुटुम्बेन, विलापविकलात्मना । प्रणम्य सर्वदेवेभ्यो, देवशर्मा गृहे गतः ॥ ५४७ ॥ दूरादधिगृहद्वार-मदृष्ट्वा शकटं बलेः । स द्विजो द्विजवाचालं, जङ्घालः काननं ययौ ॥ ५४८ ॥ ( युग्मम् ) तत्रालोक्य गदां पाद-संमर्दं च शिलान्तिके।

१ कालम् । २ भोजनम् । ३ पक्षिभिर्वाचालम् । ४ धावकः ।

स प्रत्यागत्य समागत्य-मूर्च्छः पप्रच्छ देवेलम् ॥ ५४९ ॥ ब्रूहि बन्धो ! प्रबन्धोऽय-मधुना कीदृशोऽभवत् ? । वनमायातपूर्वी च, लक्ष्यते सत्तमो गतः ॥ ५५० ॥ शशंस सोऽपि भो विप्र !, कोऽपि पीनवपुः पुमान् । अध्यशेत शिलामेत्य, तूलिकामिव लीलया ॥ ५५१ ॥ वेगादागत्य तमितो, द्वितीयमिव पर्वतम् । निरीक्ष्य रक्षसां नेता, निनाय निजभूधरम् ॥ ५५२ ॥ एतावत्यन्तरे क्रूरे-रुत्कृत्योत्कृत्य खण्डशः । ध्रुवं कवलयांचक्रे, स रक्षोभिर्बुभुक्षितैः ॥ ५५३ ॥ त्वां वध्यवेषमुद्वीक्ष्य, ध्रुवं संभावयाम्यहम् । कश्चित्तत्र पर्याये, सुकृती त्यक्तवानसून् ॥ ५५४ ॥ तच्छ्रुत्वाऽतीव चक्रन्द, वज्राहत इव द्विजः । हा परोपकृतिप्रौढ !, निर्व्यूढाद्भुतसाहस ! ॥ ५५५ ॥ ममाधमर्ण्यमाधाय, गत्वा राक्षसपांसनम् । विश्वरक्षाक्षमैर्भ्रातः !, प्राणैर-प्रीणयः कथम् ? ॥ ५५६ ॥ न त्वया विदधे साधु, प्राणैर्मामपि रक्षता । यतस्तृणमणिस्थाने, हन्त चिन्तामणिर्गतः ॥ ५५७ ॥ स विप्रो विलपन्नेवं, निजं संप्रेष्य मानुषम् । पृथायाः कथयामास, कथां दत्तव्यथामिमाम् ॥ ५५८ ॥ पृथाऽपि सह पाञ्चाल्या, पङ्किलं मार्गमश्रुभिः । कुर्वती वनमभ्यागात्, सार्धं धर्मसुतादिभिः ॥ ५५९ ॥ काम्येऽपि कानने तस्मि-न्नस्पृशन्तो रतिं क्वचित् । संगताः केसरस्याध-स्ते सर्वे देवशर्मणा ॥ ५६० ॥

अथ शोकेन पक्ष्मान्त-वान्ताश्रुकणधोरणिः । युधिष्ठिरमभाषिष्ट, द्विजः स्वानुशयाऽऽशयः ॥५६१॥ इदं विश्वजनीनेन, मत्प्राणत्राणकाङ्क्षिणा । हा हा हा दुःश्रमं(वं)तेन, त्वद्भ्रात्रा कर्म निर्ममे ॥५६२॥ प्रणन्तुं कुलदेवीभ्यो, यद्गतोऽस्मि दुनोति तत् । तदन्तरे महात्माऽसौ, गत्वा रक्षोमुखेऽपतत् ॥ ५६३ ॥ अथोवाच तपःसूनुः, सूनृतैकनिकेतनम् । मा विषीद महाभाग !,

१ देवपूजाक्रम । २ स्थाने । ३ सुन्दरे । ४ मिलिताः । ५ सत्यैकगृहम् ।

पर्याप्तं परिदेवितैः[1] ॥ ५६४ ॥ न जातु यातुधानेन, मद्बन्धुः परिभूयते । तमस्काण्डेन चण्डांशुः, किं कदाऽपि विलुप्यते ? ॥ ५६५ ॥ भीमस्य भुजपाशेन, लीलयाऽपि निपीडितः । कृतान्तस्यान्तिकं गन्ता, बको बक इव ध्रुवम् ॥ ५६६ ॥ इति तस्मिन् वदत्येव, मुक्तत्कारमम्बरात् । पपात मुण्डमुच्चण्ड–गण्डशैलोपमं पुरः ॥ ५६७ ॥ चकम्पे काश्यपी शैलाः, पेतुर्यस्मिन्निपेतुषि । । तत्किमेतदिति क्षोभा–त्ते प्रैक्षन्त मुहुर्मुहुः ॥ ५६८ ॥ भीमस्य प्रथितैस्तेऽथ, चिह्नैर्निश्चिक्यिरे शिरः । तदैव मुक्तकण्ठं च, सर्वे परिदिदेविरे ॥ ५६९ ॥

चक्रन्द नन्दनः पाण्डो–र्ज्यायानुज्झितधीरिमा । हा ! वत्स ! विश्वसाधार !, हा ! हिडम्बविडम्बन ! ॥ ५७० ॥ अवधीस्त्वं नरव्याघ्र !, पुरा राक्षसकुञ्जरान् । किमिदानीं बकेनापि, लम्भितोऽसि दशामिमाम् ? ॥५७१ ॥ बकं हत्वा ध्रुवं पार्थो, विधाता वैरयातनाम् । त्वयाऽधुना विमुक्तास्तु, भवितास्मः कथं वयम् ? ॥५७२॥ सुखं निद्रायमाणाना–मतिश्रान्तिजुषां पथि । को नाम यामिकोऽस्माकं, भविष्यति विना त्वया ? ॥ ५७३ ॥ प्रचण्डतरसाऽस्माक–मगाधेऽध्वमहाम्बुधौ । उपात्तोदात्त[2]काष्ठेन, वत्स ! पोतायितं त्वया ॥ ५७४ ॥ मामिदानीं त्वया सौम्य[3]–त्यक्तं विधुमिवाधुना । बाढं बाधिष्यते क्रूरः, सुयोधनविधुंतुदः ॥ ५७५ ॥ अथवा तव सार्थेन, यास्यतो मम निश्चितम् । विरोधे सावधानोऽपि, किं विधाता सुयोधनः ? ॥ ५७६ ॥ इत्थं विलापविकलो, यावदालोकते पुरः । तावद्धर्मात्मजः कुन्तीं, जातमूर्च्छामुदैक्षत ॥ ५७७ ॥

---

१ शोकैः । २ 'त्तोद्योत०' 'त्तोद्यत०' प्रत्यन्तर० । ३ (सौम्यो बुधः,) तेन त्यक्तो रहितस्तम् । (४ 'ग्रहपञ्चकसयोगं, दृष्ट्वा न ग्रहणं वदेत् । यदि न स्याद्बुधस्तत्र, तं दृष्ट्वा ग्रहणं वदेत् ॥' एतदनुगामिनीयं कल्पना ।)

ननूर्जर्म्तन्ततः कुन्ती, वीजिता प्राप्य चेतनाम्। पर्यदेवत हा! वत्स!, सत्त्वोदार! वृकोदर! ॥ ५७८ ॥ मुनिभिर्व-वकायस्त्वं, कथितस्तत् कथं वकः। मृणालकन्दलीछेद-मिदं चिच्छेद ते शिरः ? ॥ ५७९ ॥ तवैतस्योत्तमाङ्गस्य, क्रियेऽह-मवतारणम्। पुरा येन गिरिग्रावा, भस्मचूरमचूर्यत ॥ ५८० ॥ प्रकाशः प्राग्ययोरासी-त्तामसीष्वपि रात्रिषु। नेत्राभ्यामधुना ताभ्यां, कथं मामपि नेक्षसे ? ॥ ५८१ ॥ तेषु तेष्ववदातेषु, मुहुराघ्रायि यो मया। सोऽयं सन्मूर्द्धजो मूर्द्धा, कथं लुठति भूतले ? ॥ ५८२ ॥

इत्थं विसंस्थुलं कुन्त्यां, विलपन्त्यां मुहुर्मुहुः। तमुपादाय मूर्द्धानं, द्रौपदी विदधे हृदि ॥५८३॥ न्यलपत्तुमुलं साऽपि, पादपान्तरिता ततः। हा! नाथ! मथिताराते!, क्व गतोऽसि विहाय माम् ॥ ५८४ ॥ मया प्राणेश! ये केशा, विकीर्णाः करकर्द्दनैः। धूलिधूसरितास्तेऽमी, विलुठन्ति भुवस्तले ॥ ५८५ ॥ विद्रुमाभः पुरा योऽभूत्, सुधास्वादुस्तवाधरः। धिग्विधिं सोऽधुना धत्ते, प्रम्लानेन्दीवरश्रियम् ॥ ५८६ ॥ अध्यशेत ममोत्सङ्गे, यः शयालुरनेकधा। अयं स एव मौलिस्ते, गाहते ही महीतलम् ॥ ५८७ ॥ जानीयास्त्वमिदानीं मा-मात्मान्तिकमुपेयुषीम्। एवं विलप्य पाञ्चाली, चितामारचयत्तदा ॥ ५८८ ॥ राज्यभ्रंशं प्रवासं च, विना भीमेन दुःसहम्। विभाव्य धर्मपुत्राद्ये-र्मरणायोपचक्रमे ॥ ५८९ ॥ अहमेवाभवं हेतु-रेत-स्मिन्नसमञ्जसे। इति निश्चित्य संनद्धं, भृत्यवे देवशर्मणा ॥ ५९० ॥

अथाश्रूयत तैः गर्व-ग्रस्तम्भोदरंभरिः। गुहागह्वरवर्धिष्णु-र्मुहुः किलकिलारवः ॥ ५९१ ॥ श्रुत्वा तं चिन्तयामास,

१ गुरुतः। २ अयोग्ये।

सक्षोभं धर्मनन्दनः । भीमं हत्वाऽयमभ्येति, हन्तुमस्मान्निशाचरः ॥ ५९२ ॥ शीर्षच्छेद्यो ह्यसौ दिष्ट्या, स्वयमेत्यस्मदन्ति-
कम् । वैरं निर्यात्य भीमस्य, करिष्यामः स्वमीप्सितम् ॥ ५९३ ॥ विचिन्त्येत्यवदत् पार्थ, वत्सागच्छति राक्षसः । अस्य
जीवितमादाय, भीममुज्जीवय द्रुतम् ॥ ५९४ ॥ इत्यादिष्टः सकोपेन, किरीटी ज्येष्ठबन्धुना । अधिज्यं धनुरादाय, तस्थौ
रक्षोदिशं प्रति ॥ ५९५ ॥ कुन्ती तु चिन्तयामास, पार्थः कर्षति संप्रति । राक्षसापसदस्यास्यो–दरादाशु वृकोदरम्
॥ ५९६ ॥ अस्मिन् कृतान्तपादान्त–परिचारिणि वैरिणि । [2]अन्वेष्यामि सुखेनैव, भीममत्यन्तवत्सलम् ॥ ५९७ ॥
॥ ५९८ ॥ यत्र [3]निर्नाम
चक्रे मनसि कृष्णाऽपि, भयात् कृष्णमुखी ततः । हा ! हताऽस्मि पतीनेतान्, हन्तुमेति क्षपाचरः
निर्मथं, भीमस्यौजो महौजसः । तत्र पार्थस्य शौण्डीर्यं, किं नु नाम करिष्यति ? ॥ ५९९ ॥ दुष्टस्य यस्य निर्व्यूढ–श्चण्डांशा-
वपि चण्डिमा । ग्रसते स सुधारश्मिं, राहुरत्र किमद्भुतम् ॥ ६०० ॥ तन्मे भर्तृवधं वेधा, दुर्मेधा दर्शयिष्यति । न च वीक्षि-
तुमेतं च, क्षमेते मम लोचने ॥ ६०१ ॥ इत्यालोच्य चिताभ्यर्णे, निमील्य नयने निजे । तथैव भृशमस्वस्था, तस्थौ द्रुपद-
नन्दिनी ॥ ६०२ ॥ देवशर्माऽपि सावित्रीं, स्वकलत्रमभाषत । उत्पातस्याहमेतस्य, संजातोऽस्मि निबन्धनम् ॥ ६०३ ॥
निहतो बन्धुरेतेषां, दृशोरविषये मम । रक्षसा हन्यमानांस्तु, द्रष्टुं शक्ष्याम्यमून् कथम् ? ॥६०४॥ तच्चेदुद्बन्धनं कुर्यां, विशेयं
वा महीं यदि । विदीर्येयं स्वयं चेद्वा, स्यात्तदैव मम प्रियम् ॥ ६०५ ॥ इति जल्पत एवास्य, कुर्वन् किलकिलारवान् ।
बभूव भीमः सर्वेषां, तेषां लोचनगोचरः ॥ ६०६ ॥

१ वालयित्वा । २ अनुगमिष्यामि । ३ नामरहितम् ।

अथ व्यापारितस्फार-फालमालोक्य तं तदा । तेषां रोमोद्गमव्याजात्, सर्वाङ्गमुदितं मुदा ॥ ६०७ ॥ अथ स्फूर्जदवष्टम्भमभाणीद् युधिष्ठिरः । बन्धुर्भीमो मदीयः किं, राक्षसैः परिभूयते ? ॥ ६०८ ॥ भवितारस्तरां पञ्चा-प्यजय्या जगतोऽप्यमी । इयं नो भारती दिव्या, जन्मोत्था हि किमन्यथा ? ॥ ६०९ ॥ गतिं भवन्तो गन्तारः, क्रमात् पञ्चापि पञ्चमीम् । इत्याख्यापि मुनीन्द्रैर्य-त्तदसत्यं भवेत्किमु ? ॥ ६१० ॥ एवमस्मिन् वदत्येव, वेगादेत्य वृकोदरः । कुन्तीं च ज्येष्ठबन्धुं च, नमस्यामास सादरम् ॥ ६११ ॥ दूरात् प्रणमतो बन्धून्, समालिङ्ग्य कनीयसः । स्मितोत्फुल्लमुखो भीमः, पप्रच्छ क्षोभकारणम् ॥ ६१२ ॥ अथ पार्थः समाचख्यौ, यथावृत्तं तदातनम् । दिक्षु भीमोऽथ चिक्षेप, चक्षुः कृष्णादिदृक्षया ॥ ६१३ ॥

दृष्ट्वा कृष्णां तथाभूतां, चितानिकटवर्तिनीम् । स गत्वा पिदधे तस्याः, पाणिभ्यां क्रीडया दृशौ ॥ ६१४ ॥ भयेन वेपमानाङ्गी, कृष्णाऽथ गिरमाददे । रात्रिंचर ! दुराचार !, रे ! पाप ! परतो भव ॥ ६१५ ॥ आर्यपुत्रस्य भीमस्य, वक्त्राब्जाभिधानतः । अद्रष्टव्यमुखोऽसीति, मया नेत्रे निमीलिते ॥ ६१६ ॥ मम प्रियवधे हस्तौ, यौ तव व्यापृतौ पुरा । उग्रदण्डोचितौ दुष्ट !, तावेतौ दूरतः कुरु ॥ ६१७ ॥ हतैवाहं पुरा हन्त !, जीवितेशवधाच्छया । रे ! दुरात्मन्निदानीं तु, कृतं मृतमारणम् ॥ ६१८ ॥ कान्तमन्वेतुकामाऽह-मारोहामि स्वयं चिताम् । निजाङ्गस्पर्शतः पाप !, मा मा मां मलिनीकुरु ॥ ६१९ ॥ नाद्याप्यसौ भयं यत्रो-मुञ्चतीति विचिन्तयन् । अपसार्य निजौ पाणी, भीमस्तामिदमभ्यधात् ॥ ६२० ॥ प्रिये ! द्रौपदि ! मा भैषी विलोकय निराकुला । पुरस्ते न त्वयं रक्षो, रक्षोघाती तु ते प्रियः ॥ ६२१ ॥ पङ्कजोत्फुल्लनयना, नयनानन्दमुदीक्षण । सा प्रेयांसमुदाराङ्गं, नोत्तमाङ्गं तु तत्पुरः ॥ ६२२ ॥ दिष्ट्या मे जीवितव्येशः, कुशलीति मुदं पराम् । किं नु

मायाविनो माया, राक्षसस्येति संभ्रमम् ॥ ६२३ ॥ क्व नु तेनोत्तमाङ्गेन, प्रयातमिति विस्मयम् । मया रक्षोभयात् प्रोक्त-मसंबद्धमिति त्रपाम् ॥ ६२४ ॥ इत्थं वहन्ती संकीर्णान्, भावान् प्रियतमेन सा । तथाऽऽश्लेपि यथा तन्वो-र्भेदवादो न्यवर्तत ॥ ६२५ ॥ ( त्रिभिर्विशेषकम् । ) स्तनोपपीडमाश्लिष्टा, प्रेयसा सा रसान् परान् । मुक्त्वा जितसुधासेक-मेकमानन्दमन्वभूत् ॥ ६२६ ॥ प्रियाप्रेम्णाऽतिरेकेण, तेनासंप्राप्तपूर्विणा । अनेशदाशु भीमस्य, सर्वोऽपि समरश्रमः ॥ ६२७ ॥

अनवद्यैर्महावाद्यैः, शङ्खाद्यैर्मेदुरीकृतः। तस्याथ दुन्दुभिध्वानः, कर्णजाहमगाहत ॥६२८॥ ज्ञातप्रबन्धमायान्त-मेकचक्रानरेश्वरम् । सोऽपश्यदन्वितं पौरै-र्नानामङ्गल्यपाणिभिः ॥ ६२९ ॥ पार्थदत्तासनासीन-तपःसूनुपदान्तिके । वेगादागत्य विनयी, निषसाद वृकोदरः ॥ ६३० ॥ अकृत्रिमत्रपारङ्ग-न्नीरङ्गी सुभगाकृतिः । श्वश्रूपार्श्वे समेयाय, द्रुतं द्रुपदनन्दिनी ॥६३१॥ चक्रवर्त्येकचक्रायाः, समेत्याथ युधिष्ठिरम् । वर्धयामास माङ्गल्यै-रङ्गे रोमाङ्कुरं वहन् ॥ ६३२ ॥ अहंप्रथमिकापूर्वं, सर्वेऽपि नगरीजनाः । ज्यायसः पाण्डवेयस्य, मङ्गलानि वितेनिरे ॥ ६३३ ॥ अस्मत्कुटुम्बजीवातो !, जीव त्वं जीवितेन नः । इत्याशास्य पुरीवृद्धा, भ्रमयामासुरञ्चलम् ॥ ६३४ ॥ विहिताद्भुतशृङ्गाराः, शृङ्गारास्त्रस्य सायकाः । तत्र नृत्यं स्त्रियः काश्चि-द्व्यधुः कुलवधूचितम् ॥ ६३५ ॥ हल्लीसकप्रबन्धेन, वीररत्नप्रसूरिति । अमन्दानन्दसंदोहाः, कुन्तीं काश्चिज्जगुर्मुहुः ॥ ६३६ ॥ नूतनोल्लकल्लोलै-र्निःसीमं भीमविक्रमम् । काश्चिद्बकवधाधान-मनोहरमुदाहरन् ॥६३७॥ इत्थं मनसि काये वा, न पौराणां ममुर्मुदः । प्रीत्यै शुभोदयोऽन्योऽपि, किं पुनर्जीवितागमः ? ॥ ६३८ ॥

१ कामदेवस्य ।

बद्धाञ्जलिस्थोवाच, भूपतिस्तपसः सुतम् । एकचक्राप्रजाप्राण–सत्रिन् ! कल्याणमस्तु ते ॥६३९॥ यतः प्रभृति कल्याणि
–न्नुपागा नगरीमिमाम् । ततः प्रभृति पौराणा–मभूदभ्युदयो महान् ॥६४०॥ इदानीं तु समानीते, बके कीनाशदासताम् ।
संजातोऽभ्यशरण्यानां, प्रजानामभयप्रदः ॥ ६४१ ॥ अतः परं प्रजाः सन्तु, पुत्रेभ्यः स्पृहयालवः । लभन्तां कुलदेव्यश्च, पुत्रा-
र्थमुपयाचितम् ॥६४२॥ जनन्योऽनुपमस्नेहाः, पालयन्तु तनूरुहान् । चिराय वरिवस्यन्तु, सवित्रीः स्वाः सुता अपि ॥६४३॥
एतच्च कथ्यतां सौम्य !, कतमस्ते स बान्धवः ?। इन्द्रेण पाकवच्चक्रे, बको येन यमातिथिः ? ॥ ६४४ ॥ ततो धर्मात्मज-
स्तन्मे, कथयामास लीलया । बन्धुः सैष कनीयान्मे, संहर्ता सकलापदाम् ॥ ६४५ ॥ तदुपश्रुत्य सर्वेषा–मेकचक्रानिवासि-
नाम् । मुग्धाः स्निग्धाः सुधासान्द्रा, विकसत्पक्ष्मसंपुटाः ॥ ६४६ ॥ निमेषविमुखाः क्रोडी–कृतानन्दाश्रुबिन्दवः । जीवित-
प्रदे भीमे, निपेतुर्युगपद्दृशः ॥६४७॥ ( युग्मम् ) अथ पप्रच्छ निःशोको, लोको बकनिषूदनम् । कथ्यतां प्रथयांचक्रे,
कथं बकबधस्त्वया ॥६४८॥ इमामुदाहरिष्यामि, कथां कथमिवात्मनः ?। इति तूष्णीं स्थिते भीमे, जने चावहितेऽधिकम्
॥६४९॥ अवतीर्य नभःक्रोडात्, पुरतः पाण्डुजन्मनाम् । उभौ युवा च वृद्धश्च, पुरुषावेत्य तस्थतुः ॥ ६५० ॥ ( युग्मम् )
नयोस्तत्र वर्षीयान्, विस्मितं धर्मनन्दनम् । बकराक्षसराजस्य, दुर्बुद्धिः सचिवोऽस्म्यहम् ॥ ६५१ ॥ अयं महाबलो
नाम, शाम धाम्नां तदात्मजः । निजान्वयपुरीं लङ्कां, समयेऽस्मिन् गतोऽभवत् ॥६५२॥ व्यावृत्तस्त्वधुनाऽपृच्छत्, केनेत्थं मे
पिता हतः ?। मयाऽऽख्यायि महाकायः, कोऽप्यद्यागात् पुमान् बलिः ॥६५३॥ जज्ञेतमां तमालोक्य, स्वामिनो नो मनोरथैः।

१ यमराजदासत्वम्–मरणमित्यर्थः । २ पूजयन्तु । ३ मातॄः । ४ पुत्राः ।

यथा चिरात् कुटुम्बस्य, भवत्वद्याशितंभवः ॥ ६५४ ॥ स्वाम्यादेशात्ततः शैले, समानीतं कथंचन । वीक्षमाणैरमुं रात्रि–चरैश्चि-
त्रीयितं चिरात् ॥६५५॥ सूर्यहासमसिं कृष्ट्वा, प्रजिहीर्षुः प्रहर्षतः। तेनाथ भूतलोत्थाय–मभ्यधीयत नः प्रभुः ॥६५६॥ रे रे !
निस्त्रप! निस्त्रिंश !, दुराचार! निशाचर!। निर्मन्तुजन्तुविध्वंस–पापप्राग्भारपङ्किल!॥६५७॥ भवस्येष कथाशेष–स्त्वमिदानीम-
संशयम् । परं प्रहर रे ! पूर्वं, हन्तुं प्राग्नास्मि शिक्षितः ॥ ६५८ ॥ इत्थमुत्तेजितस्तेजः–शालिनामग्रतःसरः । नक्तंचरमहेन्द्रस्तं,
हतवांस्तरवारिणा ॥ ६५९ ॥ तत्राथ वज्रजैत्राङ्गे, प्रयुक्तमधिपेन नः । क्षणेन मण्डलाग्रं[3] त–ज्जगाम शतखण्डताम् ॥ ६६० ॥
सोऽधावन्मुष्टिना हन्तुं, नक्तंचरपतिं ततः । पर्वतोच्चतरः क्रूर–श्चाणूरमिव केशवः ॥ ६६१ ॥ मुष्टिना ताडितस्तेन, धृतदम्भो-
लिकेलिना । पपात भुवि नः स्वामी, सपक्ष इव भूधरः ॥ ६६२ ॥ ततः कुमार ! ते ताते, जाते मूर्च्छाविसंस्थुले । रक्षोभि-
र्विरलैर्जातं, हतं सैन्यमनायकम् ॥ ६६३ ॥ तथाऽप्येतस्य कूटेन, कुटुम्बं संहराम्यहम् । विमृश्येति प्राहिणवं, सुमायं नाम
राक्षसम् ॥ ६६४ ॥ शिक्षां मम समादाय, गते तस्मिन् स्वसिद्धये । मूर्च्छां शीतोपचारेण, स्वामिनः प्रापयं क्षयम् ॥ ६६५ ॥
घट्टितस्य तथा तेन, करीषाग्नेरिवाधिकम्। धगद्धगिति जज्वाल, तेजस्तेजस्विनः प्रभोः ॥६६६॥ अथ स्वबाहुपाशेन, मोटयित्वा
शिरोधराम् । तमधो न्यस्य नः स्वामी, समारोहदुरःस्थलम् ॥ ६६७ ॥ लब्धविक्रमपाकेन, बकेनाक्रम्य वक्षसि । निरुच्छ्वासां
दशां नीतः, प्रमीत इव सोऽभवत् ॥६६८॥ प्रावर्तत ततो मङ्क्षु, रक्षःकिलकिलारवः । पुनरासादितोल्लासैः, पुष्पितं मे मनोरथैः
॥ ६६९ ॥ तत्र कृत्रिममुण्डे च, सुमायेन प्रपञ्चिते । अत्र नः स्वामिनश्चैवं, विस्फूर्जति पराक्रमे ॥ ६७० ॥ कुलं लङ्कापते-

१ भोजनेन तृप्तिः । २ असिना । ३ असिः । ४ कपटेन । ५ मृतः ।

मैत्र-मित्युन्नेकरसे मयि । तृणं त्रिलोकीमप्येतां, मन्यमाने च नः प्रभौ ॥ ६७१ ॥ तेन छद्मप्रमीतेन, परिवर्तनलाघवम् । नगके ददृशे येनौ-त्तराधर्यविपर्ययः ॥ ६७२ ॥ ( त्रिभिर्विशेषकम् ) वक्रवक्षःस्थलारूढः, स प्रौढभुजविक्रमः । मुष्टिमुद्गर-मुद्यम्य, नीतिमानिदमभ्यधात् ॥ ६७३ ॥ स्वयं दोष्मन् ! पदे विद्धः, कण्टकेनापि दूयसे । प्राणानपि परेषां तु, नित्यं हरसि लीलया ॥ ६७४ ॥ अमारिं कारयांचक्रे, लङ्कोशः परमार्हतः । कुलं तस्य किमेतेन, कलङ्कयसि कर्मणा ? ॥ ६७५ ॥ इदानीमपि दुष्कर्म, दूरान्मुञ्चसि चेदिदम् । तद्भवत्वभयं तुभ्यं, नष्टं नाद्यापि किंचन ॥ ६७६ ॥ तस्य तेनातिसाम्नाऽपि, प्रभुरभ्यधिकं क्रुधा । जाज्वलयते स्म तप्ताज्य-मिव चन्दनबिन्दुना ॥ ६७७ ॥ अभ्यधाच्च किमाचार्य, इव वाचाल ! जल्पसि ? । एना वाचो न मे किंचि-च्चरन्ति श्रवणान्तिके ॥ ६७८ ॥ क्षुधार्तः कल्यवर्तं त्वां, विधाय विधिनाऽधुना । सर्वासामपि दास्यामि, नन्दानामुत्तरं ततः ॥ ६७९ ॥ इत्युदीर्य स्वधैर्येण, प्रतिष्ठासुर्भृशं प्रभुः । पूर्वकायेन नितरा-मुत्पपात पपात च ॥ ६८० ॥ आक्रान्तस्यापि तेनोर्व्याः, स्वामिनश्चेष्टया तया । रक्षोलोकस्य शोकेऽपि, हास्यमास्ये समुद्ययौ ॥ ६८१ ॥ सोऽभ्यधान्नः प्रभुं भूय-स्तदरे ! स्मर दैवतम् । महामांसाशिनां क्वापि, न हि कल्याणसंपदः ॥ ६८२ ॥ इति व्याहृत्य तेनाथ, नाथोऽस्माकमनाथवत् । मूर्धानं मुष्टिना भित्त्वा, प्राप्यतकोऽपि पञ्चताम् ॥ ६८३ ॥ विद्याविदितवृत्तान्तः, सुमायश्च तदैव सः । विहङ्गराजवेगेन, व्याघुट्येह समाययौ ॥ ६८४ ॥ श्रुत्वेति विक्रमस्फारः, कुमारोऽसौ महाबलः । निहन्तुं तातहन्तारं, स्वीचक्रे सांयुगीनताम्[3] ॥ ६८५ ॥ शक्तेऽस्मिन्नोन्नितं युद्धं, तद्भवत्याऽभ्यर्च्य पृच्छ्यताम् । कुलविद्येति संबोध्य, रुद्धः संवर्मयन्मया ॥ ६८६ ॥

१ प्रातर्भोजनरूपम् । २ गरुडवेगेन । ३ युद्धमज्जताम् ।

एकतानेन साऽनेन, देवी सम्यगुपासिता । यदादिदेश तदसौ, स्वयमावेदयिष्यति ॥ ६८७ ॥

महाबलस्ततोऽवोच-न्मदुपास्तिवशंवदा । देवी मामादिशद्वत्स !, रुषं त्यज शमं भज ॥ ६८८ ॥ गत्वा सान्त्वय सद्भाव-तत्परः पुरुषानमून् । एते हि निहतानीति-प्रपञ्चाः पञ्च पाण्डवाः ॥ ६८९ ॥ मया पुराऽपि ते तातः, समादिष्टो भृशं यथा । प्रतीपः पाण्डवेयानां, मा स्म भूर्वत्स ! जातुचित् ॥ ६९० ॥ भक्त्यानुकूलिता ह्येते, कामदाः कल्पपादपाः । भवेयुः प्रतिकूलास्तु, विषमा विषपादपाः ॥ ६९१ ॥ महामांसनिषेधं चेत्, त्वत्तातः प्रत्यपत्स्यत । नाहनिष्यत्तदाऽवश्य-मेनं मध्यम-पाण्डवः ॥ ६९२ ॥ तद्गत्वा विनयी भूत्वा, तान् पित्रीयितुमर्हसि । पुत्रीयिष्यन्ति तेऽपि त्वां, सन्तो हि नतवत्सलाः ॥ ६९३ ॥ इति देवीसमादेशा-दस्मि युष्मानुपस्थितः । मामप्यात्मविधेयाना-मन्त्यं संख्यातुमर्हथ ॥ ६९४ ॥

पश्यतामथ पौराणां, व्याजहार वृकोदरः । आर्यपादाः प्रसन्नास्ते, निवर्तस्व वधान्नृणाम् ॥ ६९५ ॥ इत्युक्तस्त्यक्त-वान् सोऽथ, तमधर्म्यं वधक्रमम् । अभ्यपिञ्चत साम्राज्ये, पैतृके तं तपःसुतः ॥ ६९६ ॥ इमे ते विस्फुरत्कीर्ति-ताण्डवाः पाण्डवा इति । ज्ञातवद्भिस्तदा पौरै-र्भूयोऽपि मुमुदेतमाम् ॥ ६९७ ॥ नृपतिश्चैकचक्रायाः, पौराश्च तपसःसुतम् । समं विज्ञापयामासुः, पुर्यां पादोऽवधार्यताम् ॥ ६९८ ॥ विन्यस्तस्वस्तिकां कामं, तोरणप्रवणापणाम् । गन्धाम्बुसिक्तसर्वाध्व-पुष्प-प्रकरदन्तुराम् ॥ ६९९ ॥ सबन्धुर्बन्धुरश्रीका-मेकचक्रां युधिष्ठिरः । महाबलोपनीतेन, विमानेन ततोऽविशत् ॥ ७०० ॥ (युग्मम्) आगन्तूनामभिज्ञाभि-र्भीमः पौरपुरंध्रिभिः । बद्धानुरागमङ्गुल्या, सप्रमोदमदर्शयत ॥ ७०१ ॥ असौ नगरजीवातु-

१ 'निहिता०' प्रतित्रयपाठो न साधुः । २ विधेयः-अधीनः ।

रणौ बकनिषूदनः । जगुरेवं पुरस्तस्य, वन्दिनो विरुदावलीम् ॥ ७०२ ॥ एकचक्रानरेन्द्रेण, विनयाऽऽनम्रमूर्तिना । निजं
सौधमनीयन्त, तदानीं पाण्डुसूनवः ॥ ७०३ ॥ वासराणि व्यतिक्रम्य, पञ्चषाणि युधिष्ठिरः । पितृराज्याय सत्कृत्य,
विससर्ज महाबलम् ॥ ७०४ ॥ परिचरितपदाब्जः[1] स्वैरसातत्यसेवा–रसरसरभमानां नागराणां गणेन । विपुलधृतिरने-
कांस्तत्र मासान् किलैकं, दिवसमिव सबन्धुर्धर्मसूनुर्निनाय ॥ ७०५ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये जतुगृहहिडम्ब–बकवधनिरूपणो नाम
सप्तमः सर्गः ॥

## अष्टमः सर्गः ।

एकदा तु कृशां पश्य–न्नन्तर्मनसमायतिम् । एकान्ते मन्त्रयामास, बन्धुभिर्धर्मनन्दनः ॥ १ ॥ भीमोपज्ञबकध्वंस–
कीर्तिकोलाहलोदयात् । अभूम भूमावेतस्या–मवश्यं विदिता वयम् ॥ २ ॥ इयं च संप्रति ख्यातिः, सर्वथाऽप्यहितैव नः ।
संनिपातज्वरार्तानां, हारहूरेव[2] हारिणी ॥ ३ ॥ जीवतो जातु जानीया–दस्मान् दुर्योधनो यदि । राज्यश्रीदुर्मदः किंचि–दो-
पायेन ध्रुवं तदा ॥ ४ ॥ तदुपक्रम्यते गन्तु–मितो नकमलक्षितैः । यः पाड्गुण्यप्रयोगेषु, कालज्ञः स हि सर्ववित् ॥ ५ ॥

---

१ सेवितचरणकमलः । २ हारहूरा–द्राक्षाविशेषः ।

ओमिति प्रतिपेदानैः, समेतस्तैर्युधिष्ठिरः। सहैव कुन्ती–कृष्णाभ्यां, रजन्यामचलत्ततः ॥ ६ ॥ अरण्यपथपान्थानां, तेषामेको वृकोदरः। विभावर्यामवष्टम्भ–यष्टिरासीत् पदे पदे ॥ ७ ॥ स्कन्धं ममाधिरोहेति, प्रार्थनायां बकद्विषः। बभौ मुखेऽङ्गुलिक्षेपः, पुरो मातुः पुनः पुनः ॥ ८ ॥ वत्सला शुशुभे कुन्ती, प्रार्थनां तामकुर्वती। अर्थी पुनः पुनर्दैन्याद्, भीमस्तु शुशुभेतमाम् ॥ ९ ॥ नाध्यारोहदधिस्कन्धं, पुत्रक्लमभयात् पृथा। मातुस्तु पादचारेण, भीमस्याभूद्भृशं क्लमः ॥ १० ॥ तेषां भीमोऽभवद्दीपो, निशि मार्गप्रकाशकः। विद्याऽनवद्या तस्यापि, चाक्षुषी करदीपिका ॥ ११ ॥ स्कन्धारोहार्थनाभङ्ग–जागरूकरुषि प्रिये। कृष्णा चचाल पश्यन्ती, वलितग्रीवमग्रतः ॥ १२ ॥ अतिश्रमात् स्वयं भूत्वा, भर्तुः कण्ठावलम्बिनी। पतिप्रणयभङ्गस्य, प्रायश्चित्तं चकार सा ॥ १३ ॥ आलिङ्गनोपदादानात्, सा तूष्णीमेव तस्थुषी। आदेशातिक्रमक्रुद्ध–मनुनीतवती पतिम् ॥ १४ ॥ वक्षोवक्षोजकलशै–र्लसत्प्रेमरसोर्मिभिः। निषिच्य कृष्णया पत्यु–स्तापः सर्वोऽप्यपाकृतः ॥ १५ ॥ तस्या निषेधपारुष्य–मकुर्वाणो वृकोदरः। नितान्तमुदिताकार–श्चकार गरिमोचितम् ॥ १६ ॥ मारुतिर्मातरं स्कन्धे, बलादारोप्य दक्षिणे। प्रियामारोपयद्वामे, क्रमाभिज्ञा हि तादृशाः ॥१७॥ तदा पत्तीयितं क्वापि, क्वापि तेषां सखीयितम्। सूपकारायितं क्वापि, क्वापि तेन रथायितम् ॥ १८ ॥ भीमसाहायकध्वस्त-समस्ताध्वपरिश्रमाः। अहर्दिवं वहन्तस्ते, दीर्घमध्वानमत्यगुः ॥ १९ ॥

क्रमेण रेणुदिग्धाङ्गा–स्ते मलीमसवाससः। ययुर्वैपुल्यनिर्लुप्त–द्वैतं[1] द्वैतवनं वनम् ॥ २० ॥ कुत्रापि कुररी-कोक-कोकिला-कुलमञ्जुलम्। कुत्रापि वृक–शार्दूल–शृगाल–व्यालसंकुलम् ॥ २१ ॥ क्वचिच्चम्पक–पुंनाग–नाग–केसरभासुरम्। क्वचिज्जरत्त-

१ विस्तारेण नाशितः द्वैतभावो येन तत्।

क्रीडद्-बक-कारण्डाढ्याम् ॥ २२ ॥ स्वाध्यायध्वनिवाचाल-तापसाश्रममेकतः । द्विप-द्वीपिवृषकुद्ध-व्याघसंबाधमन्यतः ॥ २३ ॥ ( चतुर्भिः कलापकम् ) विदित्वाऽतिसुलभ्यानि, कन्द-मूल-फलान्यथ । विदधुर्वसतिं तत्र, कानने पाण्डुसूनवः ॥ २४ ॥ ते वन्येनापि वेषेण, वहन्ति स्म श्रियं पराम् । त्यजन्ति मणयस्तेज-स्त्रपुणोपहिता हि किम् ? ॥ २५ ॥ भीमो नव-नीवारैर्वन्यै-रसालैः सुमनोहरैः । लीलयैव समानीतैः, प्रीणयामास बान्धवान् ॥ २६ ॥ दुकूलकोमलैः स्नेहात्, सहदेवो दिवा-निशम् । वल्कलोपायनैर्वन्यै-रुपचक्रे कुटुम्बकम् ॥ २७ ॥ कृत्वा पलाशैः पालाशै-रुटजं विकटाजिरम् । भक्तिं चक्रे कुटु-म्बस्य, नकुलः साकुलोचिताम् ॥ २८ ॥ क्षुद्रोपद्रवकर्तॄणां, निधनाय धनंजयः । कुण्डलीकृतकोदण्ड-स्तस्थौ जाग्रदहर्नि-शम् ॥ २९ ॥ स्मरन्ती जिनपादानां, दीने दुःस्थे दयावती । शान्त्यै सुतानां धर्म्याणि, कुन्ती कर्माणि निर्ममे ॥ ३० ॥ परमेष्ठिस्मृतौ निष्ठां, ग्राहितास्तनयास्तया । अनारतमजायन्त, तन्मयीकृतचेतसः ॥ ३१ ॥ व्यापिप्रिये तथा कृष्णा, सर्वेषु गृहकर्मसु । यथाऽतीव तदा तेषा-मेधिता गृहमेधिता ॥ ३२ ॥ प्रियामेकैकशस्तेऽपि, कुसुमाभरणैर्नवैः । प्रेम्णाऽलंचक्रिरे तत्र, वने सर्वर्तुशालिनि ॥ ३३ ॥ सर्वर्तुसंभवैः पुष्पैः, स्वयं कान्तैरलंकृता । विरेजे द्रौपदी साक्षा-दृतूनामिव देवता ॥ ३४ ॥ पुलिन्दप्राभृतैरुच्चैः कुम्भिकुम्भोत्थमौक्तिकैः । हारं मनोहरं भीमः, प्रेयसीं पर्यधापयत् ॥ ३५ ॥ विनयात्तनयानां च, स्नुषा-याश्चातिसद्गुणान् । सस्मार राजसौख्यानां, नैव कुन्ती कदाचन ॥ ३६ ॥ द्रौपद्या च कलत्रेण, कुन्त्या मात्रा च पाण्डवाः । कृतार्थमानिनः प्रापुः, सुखं राज्यश्रियोऽधिकम् ॥ ३७ ॥ प्रेयोभिस्तैस्तथा श्वश्रूा, मेने सानन्दमानसा । निजाममच्युतां

१ मराल-सारसम् । २ पर्णैः । ३ वृद्धिं गता ।

राज्य-संपदं द्रुपदात्मजा ॥ ३८ ॥ चक्रे धर्मसुतो बन्धु-सेवाहेवाकरञ्जितः । हस्तिनापुरसंवासात्, प्रवासमपि तं वरम् ॥ ३९ ॥ अजस्रसेवावसरं, प्राप्य पूज्ये सहोदरे । चत्वारोऽपि कनीयांसः, कृतार्थं जन्म मेनिरे ॥ ४० ॥

अन्यदाऽन्तस्तरुश्रेणि, दिशत्सु किशलश्रियम्[1] । रवेः करेषु भूपालः, प्रभातास्थानम्[2]अभ्यगात् ॥ ४१ ॥ वेद्यां वेत्रासनस्थस्य, भूपतेः पदपङ्कजम् । अङ्कमारोप्य भीमेऽथ, संवाहयति भक्तितः ॥ ४२ ॥ नृपान्तिकनिषण्णायाः, कुन्त्या वचनवीचिषु । अर्पितश्रोत्रपात्रायां, देव्यां द्रुपदजन्मनि ॥ ४३ ॥ सहदेवे महीभर्तु-रातपत्रविडम्बिनीम् । स्वपटीं विनयाधारे, धारयत्येकतः स्थिते ॥ ४४ ॥ नकुले चालयत्यारा-चामरोपममञ्चलम् । नृपस्येत्यनुजोपास्ति-राजिन्यां राज्यसंपदि ॥४५॥ वेत्रदण्डोपमं पाणौ, कोदण्डं धारयन् दृढम् । आयान्तं कथयामास, पान्थमेकं धनंजयः ॥ ४६ ॥ ( पञ्चभिः कुलकम् ) व्यापार्यम्भोजसोदर्यौ, दृशं दूरे महीपतिः । उवाच रभसाद्वत्स !, किं नासौ स्यात् प्रियंवदः ? ॥४७॥ अथ कृष्णा विहस्याऽऽह, क नामात्र प्रियंवदः ? । सोऽप्यभाग्यः किमसद्वत् ?, किं वाऽस्माभिः करिष्यति ? ॥ ४८ ॥ ततो विलोकयामासु-स्ते सर्वे पुरतो दिशि । क्रमादभ्यर्णमायात-स्तैर्निश्चिक्ये प्रियंवदः ॥ ४९ ॥ प्रत्युद्यायाथ पार्थेन, प्रदत्ताद्भुतगौरवः । भूमिपीठलुठन्मौलिः, स ननाम युधिष्ठिरम् ॥ ५० ॥ निबिडोत्कण्ठमाश्लिष्टो, भुजाभ्यां पृथिवीभुजा । सहदेवार्पिते नीचै-रुपविष्टः स विष्टरे ॥ ५१ ॥ दृशा पीयूषवर्षिण्या, सिञ्चन् भूपस्तमभ्यधात् । कच्चित् कुशलिनो वत्स !, तातपादाब्जरेणवः ? ॥ ५२ ॥ कच्चित् कल्याणवान् कल्प[3]-वात्सल्यभरमेदुरः । विदुरो नित्यमस्मासु, क्षेमनिर्माणदीक्षितः ? ॥ ५३ ॥

( १ किशलशब्दोऽपि पल्लवार्थकः । ) २ प्रातःकालसभाम्, यदि वा कान्तियुक्तसभाम् । ३ कल्पं-प्रभूतम् ।

कच्चिदस्मत्प्रियः सौम्य !, क्षेमवान्नः पितामहः ? । द्रोणः कल्याणवान् कच्चि-द्गुरुः पूज्यतमोत्तमः ? ॥ ५४ ॥ धृतराष्ट्रः
कच्चिदस्मत्पिता नः पुत्रवत्सलः ? । कच्चिदास्माकमातॄणां, ज्यायसीनामनामयम् ? ॥ ५५ ॥ कच्चित् पूर्णाभिलापोऽभू-द्गा-
न्धारी कच्चि-त्पिता नः पुत्रवत्सलः ? । तत्र प्रदीपनादूर्ध्वं, किं च किं च तदाऽभवत् ? ॥ ५६ ॥ कथं च वयमत्रस्था, विदांचक्रमहे
त्वया ? । एतत्सर्वमस्माकं, प्रियंवद ! वदाद्भुतम् ॥ ५७ ॥
अथ प्रियंवदोऽवादी-द्देव दुःस्थेऽपि चेतसि । वर्तन्ते वपुषा तावत्, सर्वे कुशलशालिनः ॥ ५८ ॥ तस्मिन्नभ्रंलिहज्ज्वाले,
ज्वलनेऽवात्रेऽपि । दग्धन्ते पाण्डवा हा धि-गित्येवं पूत्कृतं जनैः ॥ ५९ ॥ लोकः शोकाकुलः कामं, तं कृशानुं कृशेत-
रम् । वेगाद्विध्यापयामास, बाष्पद्विगुणितैर्जलैः ॥ ६० ॥ प्रदीपनेन नानेन, मम किंचन दह्यते । इत्यौदासीन्यसुस्थोऽहं, न
किंचिद्दुःखमस्पृशम् ॥ ६१ ॥ नेत्रयोः पात्रतां तत्र, भटित्रीभूतमूर्तयः । दोष्मन्तो युष्मदाकारा, नागरैर्निन्यिरे नराः ॥ ६२ ॥
असौ धर्मसुतो यस्य, मृतस्यापि मुखाम्बुजम् । दासीकरोति निजया, पार्वणेन्दुमपि श्रिया ॥ ६३ ॥ एष स्थूलवपुर्भीमो,
धनायानयमर्जुनः । वृद्धबन्धुसमीपस्थौ, मुग्धौ सौम्याविमौ यमौ ॥ ६४ ॥ इयं कुन्ती जगन्माता, न माता भुवनत्रये ;
नृपाणाद्रितुषारांशु-शुभ्रा यस्य गुणावली ॥ ६५ ॥ असौ द्राघीयसीं निद्रां, गता द्रुपदनन्दिनी । या श्रेयस्यपि पञ्चाना-
मुत्पत्ते स्म महासती ॥६६॥ इत्थं निश्चित्य निश्चित्य, देव ! युष्मांस्तथा जनैः । रुद्यते स्म यथा सर्वं, रुदितं पादपैरपि ॥६७॥
(चतुर्भिः कलापकम्)॥ युष्मद्गुणानुरागेण, वीक्ष्य तान् क्रन्दतो भृशम् । आसीज्ज्ञातप्रबन्धस्य, विकल्पो मम चेतसि ॥ ६८ ॥

( ? भटित्र-शूल्यपक्वमांसम्, अर्धदग्धमित्यर्थः । )

पाण्डवानां कथितो वृत्तान्तः प्रियंवदेन॥

क्वापि ते पुण्यनामानः, स्वैरं जग्मुः सुरङ्गया । हा ! दग्धाः पाण्डवा एते, मुधैव विलपन्त्यमी ॥ ६९ ॥

ततः कुतूहलाद्गत्वा, ते मया पश्च वीक्षिताः । युष्मदत्यन्तसादृश्या–न्मूढोऽथाहमचिन्तयम् ॥ ७० ॥ धूमस्तोमेन नाद्राक्षुः, सुरङ्गाद्वारमाकुलाः । तेनाग्नेरिन्धनीभूताः, स्वामिनो मम पाण्डवाः ॥ ७१ ॥ यद्वा कान्तारदौरात्म्या–देतत्ते तेनिरे स्वयम् । भवेद्धि तादृशी बुद्धि–र्यादृशी भवितव्यता ॥ ७२ ॥ इति प्रत्यक्षतो जात–युष्मद्व्यापत्ति[1]निश्चयः । तारपूत्कारपर्याप्त–रोदो[2]रन्ध्रमरोदिपम् ॥ ७३ ॥ अस्पृशं समतामन्यैः,शोकेनैवानुजीविभिः । भक्तिनिर्वहणे त्वस्मिं–स्तेभ्योऽहमधमाधमः ॥ ७४ ॥ मन्वानास्तृणवत् प्राणान्, यत्ते त्वामन्वगुस्तदा । दर्शयाम्येष वो वक्त्र–महं तु प्रियजीवितः ॥ ७५ ॥

ततो गजपुरे गत्वा, वार्तया वः शुचा जनम् । एकं दुर्योधनं मुक्त्वा, स्वसधर्माणमादधाम् ॥ ७६ ॥ देवेन पाण्डुना छन्न–मार्येण विदुरेण च । पृष्टोऽहं कथ्यतां भद्र !, भद्रं मे तनुजन्मनाम् ॥ ७७ ॥ अचीकथं यथादृष्ट–मिष्टेतरदहं तयोः । तावप्यशृणुतां पश्चात्, पूर्वं मूर्च्छामगच्छताम् ॥ ७८ ॥ मयोपवीज्य चैतन्यं, लम्भितौ तौ विलेपतुः । हा ! वत्साः ! स्थ कथं दग्धा, दहनेन दुरात्मना ॥ ७९ ॥ कथं शिक्षाऽस्मदीयाऽपि, विस्मृता वः शुभोदया । यद्वा मतिर्विपर्येति[3], वेधसि प्राति-कूलिके ॥ ८० ॥ विदुषा विदुरेणाथ, पिता ते समबोध्यत । शोको निर्वार्यतामार्य !, मनो धैर्याय दीयताम् ॥ ८१ ॥ सर्वे किमधुना पूर्णाः, पिशुनानां मनोरथाः ? । किं वा प्रियंवदो भ्रान्तः, संशयोऽयं ममाशये ? ॥ ८२ ॥ दिनैः कतिपयैरेव, सर्वमाविर्भविष्यति । आपदः संपदो वाऽपि, न स्युश्छन्ना महात्मनाम् ॥ ८३ ॥ विदुरस्यानया वाचा, स्वल्पीचक्रे शुचं

१ व्यापत्तिः–मरणम् । २ रोदसी–द्यावापृथिव्यौ । ३ विपरीता भवति ।

नदिः । बभार भूगर्मीं देव-स्तामन्तर्मनसं पुनः ॥८४॥ मातरः सत्यवत्याद्या, व्यपद्यन्त शुचाऽनया । न हि दावानलज्वालां,
गच्छन्ते मालतीलताः ॥८५॥ विदुराश्वासनावाक्यै-र्महापद्वार्तया च वः । देवः पाण्डुरियत्काल-मासीज्जीवन्मृतोपमः ॥८६॥
कीर्तिर्यैकवचोद्भूता, स्वर्धुनीवाधुना तव । पावयन्ती भुवं देव !, हस्तिनापुरमभ्यगात् ॥ ८७ ॥ सख्यं मय्याः सुधा-
गाथ, मिनाऽपि युगपत्तदा । अलम्भयदमित्राणां, मित्राणां च मुखानि सा ॥८८॥ तदानीं युष्मदीयैस्तैः, श्रुतैरपि यशोजलैः ।
दूरस्थं निबिडं पाण्डुः, शोकपङ्कमपाकरोत् ॥ ८९ ॥ स पाण्डुना परित्यक्तः, सर्वः सुखविपर्ययः । साभिमान इवोर्वीशं,
दुर्योधनमशिश्रियत् ॥ ९० ॥ न प्रियाङ्के न पल्यङ्के, न वने भवने च न । न स्थले न जले क्वापि, रतिमालम्बते स्म सः
॥ ९१ ॥ अथाभ्येत्य तथाऽनर्थं, शकुनिस्तमभाषत । धराधव ! तव व्याधि-राधिर्वा कोऽयमुत्कटः ? ॥ ९२ ॥ येन दावा-
नलज्वाला-दग्धस्थाणूपमं वपुः । वहसे सहमाऽस्माकं, ब्रूहि दंदह्यते मनः ॥ ९३ ॥ अथाभ्यधत्त गान्धारी-तनयो दुर्न-
येकभूः । मनसः सहायोऽसि, त्वं मातुल ! ममातुलः ॥ ९४ ॥ पश्य मां विफलारम्भं, कृत्वा जीवन्ति पाण्डवाः । विरो-
धिनि विधौ पुंसां, वृथैव स्युर्मनोरथाः ॥ ९५ ॥ विषं पीयूषगण्डूषः, पश्य तेषामजायत । जातुषागारदाहोऽपि, पयोवाहजल-
प्लुतः ॥ ९६ ॥ हिडम्ब-बक-किर्मीर-वधाडम्बरडिण्डिमैः । भूर्भुवःस्वस्त्रयीरङ्गे, तेषां कीर्तिः प्रनृत्यति ॥ ९७ ॥ आजन्म
विद्विषो मे ते, जीवन्तीत्यपि दुःसहम् । किं पुनर्जनितानन्दा, नन्दन्ति प्रतिपत्तनम् ॥ ९८ ॥ धुर्यो मर्मा‍विधामेष, व्याधिर्मा
बाधतेऽधिकम् । तदेनमगदंकारः, संप्रत्यप्रतिमो भव ॥ ९९ ॥

१ भगिरथ्न । २ गङ्गा ।

इत्युदीर्णमनःखेद–माकलय्य सुयोधनम् । सदा दुर्नयदुर्गन्धो, गान्धारीबान्धवोऽभ्यधात् ॥ १०० ॥ त्वयि देवेन्द्र-
शौण्डीर्या–वमन्तरि निहन्तरि । यमगेहाङ्गणारब्ध–ताण्डवान् विद्धि पाण्डवान् ॥ १०१ ॥ पाण्डवाः क ? भवान् भूमी–
मण्डलाखण्डलः क च[1] । कः साम्यं बहु मन्येत, खद्योतद्युतिमालिनोः ? ॥१०२॥ यदूर्जितभुजेनेदं, त्वया साम्राज्यमर्जितम् ।
शतांशेनापि तन्नासी–द्युधिष्ठिरमहीपतेः ॥ १०३ ॥ सावलेपास्तपःसूनो–राज्ञां ये नानुमेनिरे । तेऽपि भूपतयो जाता–स्त-
वादेशवशंवदाः ॥ १०४॥ सन्त्येते हस्तिमल्लस्य, प्रतिमल्ला इव द्विपाः । एते च देवदेवाश्व–वान्धवाः सैन्धवाः पुरः ॥ १०५ ॥
साम्परायिकसंचार–कृतार्थरथिनो रथाः । पत्तयश्चाप्युपानीत–वैरित्रातविपत्तयः ॥ १०६ ॥ चमूरमूदृशी विश्वे, त्वदृते कस्य
दृश्यते ? । तमोपहा रवेरेव, केवलं किरणावलिः ॥ १०७॥ श्रीरियं ते कृतार्थीस्यात्, पश्येयुर्यदि पाण्डवाः । दृष्टा मित्रै-
रमित्रैश्च, संपत्संपन्निगद्यते ॥ १०८ ॥ गोकुलालोकनव्याजा–द्व्रज द्वैतवनं वनम् । ततस्तत्र दशां शोच्या–मुपेतान् पश्य
पाण्डवान् ॥ १०९ ॥ राजा राज्यच्युतान् भोगी, भोगैः काममपाकृतान् । ससैन्यो निष्परीवारा–नकृशोऽतिकृशाङ्गकान्
॥ ११० ॥ यदा वीक्षिष्यसे तांस्ते, तदा मोदिष्यते मनः । अन्याश्रित्रातपापाये, स्युर्धान्यस्य मुखे श्रियः ॥ १११ ॥ तेऽपि
त्वामद्भुतश्रीकं, दृष्ट्वा म्लास्यन्ति निश्चितम् । व्यथन्ते पार्वणे चन्द्रे, दृष्टे दन्ता हि दन्तिनाम् ॥ ११२ ॥ यद्वीक्ष्यते विपक्षाणां,
मानिभिः श्रीर्विपद्गतैः । स एव मृत्युरेतेषां, मृत्युस्तु ननु जीवितम् ॥ ११३ ॥ अथ सत्यव्रतं बन्धो–रनपेक्ष्य शुभैस्तव । साम-
र्थावायुधं धत्तः, करे भीमार्जुनौ यदि ॥ ११४ ॥ ततो जानीहि संजातं, भूमण्डलमपाण्डवम् । महार्णवमिवानीकं, तव को

१ 'मुखश्रियः' प्रतिद्वय० ।

ऽहि स्वलिष्यति ? ॥ ११५ ॥ तदिमं शकुनेर्मन्त्रं, कर्ण-दुःशासनावपि । ज्ञमन्यावनुमेनाते, दुष्टात्मानो ह्यमी त्रयः
॥ ११६ ॥ ततोऽस्माच्छकुनेर्मन्त्रा-दुष्टाशयतया तया । युष्मदन्तिकमागन्ता, कदाचन सुयोधनः ॥ ११७ ॥
एवं विभाव्य मनसा, सावधानतया भृशम् । युष्माभिः स्थेयमित्येत-दुक्तं विदुरवाचिकम् ॥ ११८ ॥ विदुरेणेदमा-
ख्याय, यदाऽहं प्रहितः पुरा । इदं मया तदा पृष्टं, कुत्र ते सन्ति पाण्डवाः ? ॥ ११९ ॥ विदुरेण समादिष्टं, पूर्वेऽह्नि नृप-
संसदि । आयातैरेकचक्रात-श्चरैरावेदितं ह्यदः ॥ १२० ॥ एकचक्रास्थितैर्देव !, शुश्रुवेऽस्माभिरीदृशम् । पुरस्य निखिल-
स्यास्य, दत्ताः प्राणाः पृथात्मजैः ॥ १२१ ॥ चिरं नन्दन्तु भूयोऽपि, राज्यं कुर्वन्तु पाण्डवाः । सूर्याचन्द्रमसौ याव-
ज्जीवितं नाऽस्माकमीतिभिः ॥ १२२ ॥ धन्या कुन्त्येव यत्कुक्षि-सरसीसरसीरुहैः । एभिः कृपाजपारामै-रामोदितमिदं जगत्
॥ १२३ ॥ पुरीप्राणहरः सोऽयं, पापपङ्कबको बकः । अपरेणान्तरेणामून्, किं प्रसह्य निगृह्यते ? ॥ १२४ ॥ प्रतिपन्थी
यथाऽस्माक-ममीभिर्लम्भितः क्षयम् । तथैषामस्मदाशीर्भि-र्विपक्षः क्षीयतां क्षणात् ॥ १२५ ॥ अहो ! अमीषां माहात्म्यं,
यत्रैषु पत्तने । ईतिर्न तत्र नानीति-र्न व्याधिर्न च विप्लवः ॥ १२६ ॥ न मारिर्न च दुर्भिक्षं, न च भीः परचक्रजा ।
केवलं सुखसंपद्भि-र्मोदन्ते सप्रजाः प्रजाः ॥ १२७ ॥ ( युग्मम् ) चरेयुर्यदि कान्तारे, प्रच्छन्ना अपि ते क्वचित् । तत्रापि
पादपाः सन्यं, नित्यपुष्पफलद्रुमः ॥ १२८ ॥ अन्योन्यं कलहायन्ते, न शाश्वतिकवैरिणः । दधते रससौन्दर्य-मन्यद्वन्यफला-
न्यपि ॥ १२९ ॥ अथ पृष्टो जनोऽस्माभिः, क्व ते संप्रति पाण्डवाः ? । तेनाप्याख्यायि ते भद्र !, ययुर्द्वैतवनेऽधुना ॥ १३० ॥

१ पण्डितमानिनौ । २ दुर्योधनसभायाम ।

अथागमाम तैश्चिह्नै-र्यत्र ते सन्ति पाण्डवाः । पुलिन्दवृन्दमध्यस्थां-स्तांश्चापश्याम निश्चलाः ॥ १३१ ॥ सहकारतरोर्मूले, वन्यमासनमुत्तमम् । प्रातस्तदा विमुक्ताधि-व्याधिस्तस्थौ युधिष्ठिरः ॥ १३२ ॥ न केवलं विनीतास्त-मुपासांचक्रिरेऽनुजाः । दूरं मुक्तान्यकर्तव्या, आरण्याः पशवोऽपि च ॥ १३३ ॥ पाण्डवेयसभाबन्धो-रुटजद्वारवर्तिनः । परावर्तत न च्छाया, तस्य माकन्दभूरुहः ॥ १३४ ॥ तेषामद्भुतलक्षाणि, स्वयं साक्षात्कृतान्यपि । अपि जिह्वासहस्रेण, को वर्णयितुमीश्वरः ? ॥ १३५ ॥

श्रुत्वेति पाण्डवोदन्तं, तदा जज्ञे सुयोधनः । मषीभिः स्नपितः किं नु ?, नीलिभिः किं नु रञ्जितः ? ॥ १३६ ॥ स विषण्णस्तदास्थानं, विससर्ज चरैः सह । पुंसामुदित्वरे दुःखे, न किंचिदपि रोचते ॥ १३७ ॥ ततस्त्वमपि चारोक्तै-स्तत्र तैस्तैः प्रियंवद ! । लक्षणैर्लक्षयेर्मङ्क्षु, पाण्डवानां निवेशनम् ॥ १३८ ॥ आदिश्य विदुरेणैवं, प्रहितोऽहं हिताय वः । एकचक्रां पुरीं पश्यन् , क्रमेणात्र समागमम् ॥ १३९ ॥ नकुलं दन्दशूकेन, हरिणं हरिणारिणा । सह क्रीडन्तमालोक्य, विज्ञासिषमिहास्मि[3] वः ॥ १४० ॥

इत्युक्तवन्तमत्यन्त-प्रीतस्तं पवनात्मजः । पप्रच्छ वर्तते राष्ट्रे, धार्तराष्ट्रः कथं कथम् ? ॥ १४१ ॥ स किं शास्त्यधुना धात्री-मनयेन नयेन वा ? । स्नेहात्तमनुरुध्यन्ते, भीष्म-द्रोणादयोऽपि किम् ? ॥ १४२ ॥ इति पृष्टो यथादृष्टं, समाचष्ट प्रियंवदः । कुरुष्वीतिरनीतिश्च[4], नैति राज्ञि सुयोधने ॥ १४३ ॥ पितरीवातिवात्सल्यात्, प्रजाऽभ्युदयतत्परे । संपद्भिः कुरवस्तस्मिन्, प्रशासति चकासति ॥ १४४ ॥ पुरुषार्थाः किलैकत्र, निवासस्पृहयालवः । नवे तत्र धरि-

१ अगच्छाम । २ ' स्तत्र ते यत्र पाण्डवाः इति प्रतित्रय० । ३ 'अस्मि' इत्यव्ययमहमर्थे । ४ 'कुरूनीतिरनी०' प्रतिद्वय० ।

श्रीशे, न बाधन्ते परस्परम् ॥१४५॥ स प्रजामृतकुल्याभिः, सेचंसेचमनारतम् । अनपायमुपायद्रु–नादत्ते फलमुत्तमम् ॥१४६॥ आकर्णितभवन्मृत्यु–निराशीभूतमानसाः । भीष्माद्याश्चक्रिरे तेन, सर्वथाऽऽत्मवशंवदाः ॥ १४७ ॥ संप्रत्यावर्जितास्तेन, दानेन विनयेन च । प्राणैरपि समीहन्ते, ते विधातुं तदीप्सितम् ॥ १४८॥ आत्मानं मन्यते क्षोणि–पट्खण्डाखण्डलोपमम् । स यद्यपि तथाप्यन्त–र्भवत्तो वहते भियम् ॥१४९॥ अर्जुनात्तरुनाम्नोऽपि, स स्मृतार्जुनविक्रमः । भीतो मुञ्चति निःश्वासान्, कम्पते च मुहुर्मुहुः ॥ १५० वने वृकोदरं क्वापि, दृष्ट्वा स्मृत्वा वृकोदरम् । मृगव्यव्यापृतोऽप्याशु, स खिद्यति भयातुरः ॥ १५१ ॥ स्वप्ने भीमार्जुनौ वीक्ष्य, द्रुतं जागरितो भयात् । स क्षोभं लम्भयत्येव, भृशं भानुमतीमपि ॥ १५२ ॥

उत्याकर्ण्य नृपःसूनुः, प्रत्युवाच प्रियंवदम् । मद्गिरा भद्र ! विज्ञाप्यौ, तौ तात–विदुरौ त्वया ॥ १५३ ॥ निखिलं युष्मदादिष्टं, प्रहृष्टाः प्रतिशुश्रुमः । नमस्यामश्च भक्त्या वः, क्षोणीमिलितमौलयः ॥ १५४ ॥ स्नेहादापदमस्मासु, नैवाशङ्कितुमर्हथ । युष्मदाशीर्भिरस्माकं, रिपुर्न प्रभविष्यति ॥ १५५ ॥ कृकलासः कृतोल्लास–मारूढः शिखरं वृतेः । व्युत्पश्यन् गतिरस्कार, भास्करस्य करोति किम् ? ॥ १५६ ॥ इति धर्मसुतः प्रीतः, समर्प्य प्रतिवाचिकम् । सत्कृत्य वन्यसत्कारै–र्विससर्ज प्रियंवदम् ॥ १५७ ॥

भाषितं तद् भ्रातृराष्ट्रस्य, श्रुत्वा श्रवणदुःसहम् । विहाय स्त्रैणमर्यादां, जगाद द्रुपदात्मजा ॥ १५८ ॥ छद्मना मेदिनीं जित्वा, कृत्वा मे केशकर्षणम् । दत्त्वा कान्तारवासं च, रिपुर्नाद्यापि तृप्यति ॥ १५९ ॥ एवं वनेचरानस्मान्, येनागत्य जिघांसति । निर्मर्यादा गकृत्येषु, मत्सरच्छुरिताशयाः ॥ १६० ॥ देवि ! वन्ध्येव कुन्ति ! त्वं, नाऽऽसीरप्रसवा

किमु ? । पुत्रिणीनां त्रपाकारि, कथं क्लीबप्रसूरभूः[1] ? ॥१६१ ॥ अहो ! सुबाहवः पाण्डोः, सूनवोऽभिनवौजसः । पुरतः पश्यतां येषां, प्रिया केशेषु कृष्यते ॥ १६२ ॥ आर्यपुत्र ! तपःसूनुः, सत्यमेव त्वमुच्यसे । रिपोः परिभवेऽप्येवं, क्षमा ते कथमन्यथा ? ॥ १६३ ॥ निकारं[2] कुरुवंशोऽपि, संसहेत यदीदृशम् । तर्हि सा नाम निर्नाम, निर्ममज्ज मनस्विता ॥१६४॥

यदि नाम वनक्लेशो, लेशतोऽप्यस्ति नात्मनः । किं दुनोति न ते चेतो, बन्धुदत्तापदप्यसौ[3] ? ॥ १६५॥ सूक्ष्मक्षौमोचिता येऽमी, बन्धवस्तव भूधव ! । वल्कलानि वसानांस्तान्, किमु पश्यन्न लज्जसे ? ॥१६६॥ भ्रातरः सिन्धुरारोह–केलिदुर्ललिता हि ये । चरन्तः पादचारेण, त्वां व्यथन्ते न ते किमु ? ॥ १६७ ॥ वनेऽस्मिन् क्लिश्यते स्नेह–मोहिता वो हिताय या । देवी साऽपि न किं कुन्ती, तवोद्बोधयति क्रुधम् ? ॥१६८॥ निश्चिन्तोऽसि किमेवं त्व–मसावभ्येति ते रिपुः । उत्तिष्ठस्व ततः स्वामि–न्निधेहि दृशमायुधे ॥१६९॥ प्रतिज्ञाभङ्गभीतोऽथ, न त्वमुत्सहसे स्वयम् । इहायातमरिं हन्तुं, भीम–पार्थौ तदादिश ॥१७०॥

अथैनां द्रौपदीवाच–मिष्टामनुवदंस्तदा । भीमोऽभ्यधत्त देवास्ति, तवाज्ञैव ममार्गला ॥ १७१ ॥ तवादेशं वहन्मूर्ध्नि, पुराऽहं नाहनं रिपुम् । तं जिघांसुमिहाऽऽयातं, न सहिष्येऽधुना पुनः ॥ १७२ ॥ देव ! प्रसादितोऽसि त्व–मागतश्चेत्स दुर्मतिः । तदा मम गुरुर्न त्वं, न विधेयोऽप्यहं[4] तव ॥ १७३ ॥ हस्तिनापुरसाम्राज्य–गर्वपर्वतमस्तकात् । लीलयैव पराजित्य, पातयिष्यामि विद्विपम् ॥ १७४ ॥ अथास्या भीमभारत्या–स्तदा वाचः किरीटिनः । विवृण्वत्यस्तमेवार्थं, भाष्यलीलायितं दधुः ॥ १७५ ॥

१ क्रियाविशेषणमेतत् प्रसूधातो. । २ तिरस्कारम् । ३ 'दत्तापदो' 'दत्तपदो' इति प्रत्यन्तरपाठः । ४ अधीनः ।

एतास्तेषां गिरः श्रुत्वा, शान्तमूचे युधिष्ठिरः । अभ्यधीयत युष्माभिः, क्षत्रवंशोचितं वचः ॥ १७६ ॥ परं ममानुरो-
धेन, द्वागनानि कियन्त्यपि । बहुधाऽपि विराध्यन्तं, विपक्षं क्षन्तुमर्हथ ॥ १७७ ॥ वनवासावधौ पूर्णे, तीर्णे सत्यव्रते मया ।
को युष्मानभ्यमित्रीणान्, स्वलिष्यत्यर्णवानिव? ॥ १७८ ॥ तदा भीमाग्रणे भीमा-दुःशासनसमन्वितः । लब्धा दुर्यो-
शनः कृष्णा-केशाकर्षणनिष्क्रियम् ॥ १७९ ॥ तदिदानीमितो गत्वा, सेव्यन्तां स्वैःसनाभयः । उल्लसल्लवलीगन्धा,
गन्धमादनभूमयः ॥ १८० ॥ निजश्रीगर्वितोऽराति-र्न दृश्येत तथा सति । वनवासकृशास्तेन, दृश्येमहि वयं न च ॥
१८१ ॥ अन्वमन्यन्त भीमाद्या-स्तामाज्ञामग्रजन्मनः । अप्युल्लुण्ठधियां पुंसां, गुर्वादेशो नवाङ्कुशः ॥ १८२ ॥

मातृ-भ्रातृ-प्रियोपेतः, प्रतस्थेऽथ महीपतिः । उदात्तः सह यूथेन, यूथाधिप इव द्विपः ॥ १८३ ॥ वैरिविस्यन् स
तीर्थानि, नमस्यंश्चारणान् मुनीन् । नाना चित्राणि पश्यंश्च, ययौ पूर्वोत्तरां दिशम् ॥ १८४ ॥ क्रमाद्भुवमतिक्रम्य, तटिनी-
शैलसंकटाम् । भूधरं न ययौ सार्धं, बन्धुभिर्गन्धमादनम् ॥ १८५ ॥ नक्तमिन्दूपलोद्भान्तै-र्वारिभिर्यत्र पूरिताः । प्रावृषेण्यां
तरङ्गिण्यः, शश्वदश्नुवते श्रियम् ॥ १८६ ॥ प्रियैरुपासितोपान्ता, यस्मिन्नादेशवर्तिभिः । विलासान् दधते तांस्ता-नीप्सिता-
नप्सरोगणाः ॥ १८७ ॥ तस्मिन् स्वादुफलश्लाघ्ये, भूरिनिर्झरशालिनि । सबन्धुर्वसतिप्रीतिं, पाण्डवेया निराधयः ॥१८८॥
सर्वर्तुकमनीयानां, वनानां रामणीयकम् । तेषां निस्मृतिमानिन्ये, तत्र शत्रुपराभवम् ॥ १८९ ॥ कुन्ती क्रियासु धर्म्यासु,
तत्र व्यापृतमानसा । हस्तिनापुरराज्यस्य, न सस्मार मनागपि ॥ १९० ॥

१ सर्वगुणाः । २ सेवमानः । ३ 'भूधरः' प्रतिद्वय० ।

विदित्वाऽथ समीपस्थ–मिन्द्रकीलं नगोत्तमम् । सव्यसाची महीभर्तुर्दर्शयामास विस्मितः ॥ १९१ ॥ देव! यन्नित-
रामिन्द्रः, क्रीडत्यत्र शचीसखः । इन्द्रकील इति ख्यातिं, ततः प्रापदसौ गिरिः ॥ १९२ ॥ खेचरैर्व्योमगैरेव, खिन्नैश्छाया
महीरुहाम् । अत्राधोगामितिग्मांशौ, सेव्यन्ते सान्द्रशीतलाः ॥ १९३ ॥ वीक्ष्य स्वप्रतिमामन्य–स्त्रीशङ्काकुपिताः प्रिये । सुरीः
प्रसादयत्यब्ज–वायुर्यत्राम्बुकेलिषु ॥ १९४ ॥ असाधु–साधुपुत्राभ्यां, पितेवासौ दिवानिशम् । सूर्यकान्ते–न्दुकान्ताभ्यां, तापं
शैत्यं च लभ्यते ॥ १९५ ॥ मध्येमणितटीक्रोडं, परिभ्राम्यन्नभोमणिः । नित्यं कन्दलयत्यस्मिन्, किंनरीणां मणिभ्रमम्
॥ १९६ ॥ तदस्मिन् युष्मदादेशा–दुपेत्य गुरुगह्वरे । आराधितचरीर्विद्याः, पुनरावर्तयाम्यहम् ॥ १९७ ॥ इत्यापृच्छ्य नृपं
कुन्तीं, प्रणम्य विनयानतः । याज्ञसेनीं च संभाष्य, ययौ तस्मिन् धनंजयः ॥ १९८ ॥ गच्छतोऽस्य तपःसूनु–रङ्गुली-
यकमङ्गुलौ । तातख्यापितमाहात्म्यं, बलादेव न्यवेशयत् ॥ १९९ ॥

जिष्णुर्मणिमयं तस्मि–न्नर्हत्प्रासादमुत्तमम् । अद्राक्षीत्तर्कयन्नन्यं, भूधरोपरि भूधरम् ॥ २०० ॥ शशाङ्कोपलसोपानां,
विकचोत्पलशालिनीम् । उत्कल्लोलजलां वापीं, सोऽपश्यत्तस्य वामतः ॥ २०१ ॥ तस्यां स्नात्वा गृहीत्वा च, विकचाम्भो-
जसंचयम् । अर्चामानर्च तस्यान्त–र्गत्वाऽऽद्यस्य जिनेशितुः ॥ २०२ ॥ स्तुत्वा स्तोत्रैर्जिनं जिष्णुः, कृतवानष्टमं तपः ।
तपो हि विहितं तीर्थे, भवेदिष्टार्थसिद्धये ॥ २०३ ॥ जिनवेश्मान्तिकेऽध्यास्य, पावनीमवनीं क्वचित् । स परावर्तयामास,
विद्योपनिषदं निजाम् ॥ २०४ ॥ प्रादुर्बभूवुर्भूयोऽपि, पुरतस्तस्य देवताः । किं कुर्म इत्यजल्पंश्च, को न भक्तेर्वशंवदः ?

१ सूर्यः । २ आराधितप्रायाः ।

॥ २०५ ॥ स्मृताभिः संनिधातव्यं, भवतीभिर्द्रुतं मम । आदृतो वः स्मरिष्यामि, मन्थने परिपन्थिनाम् ॥ २०६ ॥ इति विज्ञाप्य सत्कृत्य, गता विद्याधिदेवताः । उपकारोत्सुकाः कामं, विससर्ज धनंजयः ॥ २०७ ॥ ( युग्मम् )

गतासु तासु पार्थोऽपि, शैललक्ष्मीदिदृक्षया । नन्दनोद्यानसध्रीचि, विजहार वने वने ॥ २०८ ॥ बाणभिन्नवपुः कश्चिच्छैलेभसंनिभः । निःशूकः शूकरस्तेन, दृष्टः संमुखमापतन् ॥ २०९ ॥ क्रुधाऽसौ ध्रुवमभ्येति, नृशंसो मज्जिघांसया । एवं विमृश्य सोऽधिज्यं, धनुष्मान् धनुरादधे ॥ २१० ॥ पार्थेन पोत्रिणः प्राण-मार्गणोऽक्षेपि मार्गणः । दत्त्वा प्राणांस्तिरश्चापि, तेन सोऽथ कृतार्थितः ॥ २११ ॥ आगतः शूकराभ्यर्णे, बाणग्रहणहेतवे । आयान्तं रौद्रमद्राक्षीत्, किरातं कंचिदर्जुनः ॥ २१२ ॥ सगुणं धारयन् धन्व, यमभ्रूभङ्गभङ्गुरम् । शरांश्च पंचषान् पाणौ, सोऽप्युपक्रोडमाययौ ॥ २१३ ॥ पार्थोऽथ पश्यनमुष्य, स्वर्णपुङ्खमनोरमम् । आददानो निजं बाणं, बभाषे तेन सौष्ठवात् ॥ २१४ ॥ सौम्य ! वीक्षे तवाचार-माकारव्यभिचारिणम् । कान्यथा पुण्यमूर्तिस्त्वं ?, क च स्तैन्यममूदृशाम् ? ॥२१५॥ वरं तृणमिव प्राणां-स्त्यजन्त्युज्ज्वलबुद्धयः । न पुनर्जातु कर्मैत-दाद्रियन्ते मलीमसम् ॥ २१६ ॥ सदाचारसमीचीना, भिक्षा माधुकरी वरम् । अतिचार्योऽप्यनाचारदृताहृता न तु श्रियः ॥ २१७ ॥ तन्मामकीनमारण्य-पशुशोणितपायिनम् । विपदिग्धशिखं नैनं, विशिखं हर्तुमर्हसि ॥२१८॥ मयाऽसौ क्रूरसत्त्वस्य, तव द्रोहसमीहया । वराहराहुरागच्छन्, ध्रुवेनेव निवारितः ॥ २१९ ॥ ततः स्वच्छन्दमाच्छिन्दन्, बाणस्तन्नमिदं मम । हन्त प्रत्युपकारार्थ-मित्थं प्रक्रमसे किमु ? ॥ २२० ॥ रिपुव्यापादनपण-क्रीतं मित्रं भविष्यसि । इत्याशा

१ शूकरात् । २ गजराजसन्निभतुल्यः । ३ शूकरस्य । ४ 'मार्गणोत्क्षेपि०' प्रतित्रयपाठो न सम्यगाभाति । ५ अतिसुन्दराः ।

मम दूरेऽस्तु, प्रत्यर्थी प्रत्युताभवः ॥ २२१ ॥ अमुना संचरन्ते चे-द्वर्त्मना त्वादृशा अपि । पथिकस्तत् पथि न्याय्ये, को नाम भविता ? वद ॥ २२२ ॥ अथासि त्वममुं दिव्यं, पृषत्कमभिलाषुकः । त्वन्मैत्रीसुखसाकाङ्क्षं, तत्किं प्रार्थयसे न माम् ? ॥ २२३ ॥ अर्थिनां प्रार्थनाभङ्गं, विधातुं नास्मि शिक्षितः । पुण्यप्रागल्भ्यलभ्यो हि, त्वादृशः प्रणयी जनः ॥ २२४ ॥ यस्ते मुक्तापरापेक्ष-मिषोरेष हठग्रहः । न ते स मामनिर्जित्य, निर्वाहमवगाहते ॥ २२५ ॥

इति व्याहृत्य विरतं, तं बीभत्सुरभाषत । उदीरितमिदं सर्व-मसत्यं सत्यवत्त्वया ॥ २२६ ॥ स्वबाणग्रहणे केय-मुपालम्भपरम्परा ? । लुम्पन्ति हन्त मर्यादां, दुर्जनाः सुजनेष्वपि ॥ २२७ ॥ दुर्जनः कालकूटश्च, ज्ञातमेतौ सहोदरौ । अग्रजन्माऽनुजन्मा वा, न विद्मः कतरोऽनयोः ॥ २२८ ॥ मां चौरंकारमाक्रोशन्, क्रूरचेता मुहुर्मुहुः । भवितासि कथं मित्र-ममित्रः प्रकटोऽसि यः ॥ २२९ ॥ का नाम पामरेणास्तु, संगतिर्मतिशालिनः ? । तमस्काण्डेन चण्डांशोः, सौहार्दं हन्त कीदृशम् ? ॥ २३० ॥ कलयामि न कालुष्यं, दुर्वाक्यैरिभकैस्तव । किमारवैः शृगालाना-मिभारिः क्षुभ्यति क्वचित् ॥ २३१ ॥ एनमह्नाय गृह्णामि, पश्यतस्ते निजं शरम् । अस्ति दोर्दण्डयोः शक्ति-र्यस्यासौ मां निषेधतु ॥ २३२ ॥ न नरेन्द्रो न देवेन्द्रः, खेचरेन्द्रोऽपि नो पुरः । त्वय्यप्यधिज्यतां बिभ्र-त्रपते हन्त मे धनुः ॥ २३३ ॥

अथाऽऽह शबरस्वामी, सौम्य! मिथ्या प्रगल्भसे । फणिनः किं फणाटोपः, कुर्यात् खगपतेः पुरः ? ॥२३४॥ तत्तिष्ठ सौष्ठ-

अर्जुनकृतः शूकरवधः । तद्विषयः शबरार्जुनयोः संवादः ॥

१ शरम् । २ अन्यापेक्षारहितं यथा स्यात्तथा । ३ 'स्वयंग्रहः' प्रत्यन्तर० । ४ इति ज्ञातं मया इत्यर्थः कर्तव्यः, अन्यथा 'ज्ञातावेतौ' इति पाठः स्यात् । ५ सिंहः । ६ गरुडस्य ।

॥ २३५ ॥ वलिगतं फाल्गुनोऽप्यस्य, पश्यन्
वमिदं, मा त्याक्षीर्मयि योद्धरि । इति जल्पन्ननल्पौजाः, संदधे शबरः शरम् ॥ २३६ ॥ अखर्वमौर्वीटंकारः, साहंकारस्तयोस्ततः । विडम्बित-
बाणान्ने शनैः । रोपमारोपयांचक्रे, किरिशोणितशोणितम् ॥ २३७॥ निषादि-मादिभीमेन, निःसीमेन समेयुषा । तदा गजाश्ववृन्देन, पुलिन्दः पर्यवारयत
कृमाननैः, प्रावर्तत रणो महान् ॥२३८॥ यावत् प्रतिभटं बाणान्, मुञ्चता सव्यसाचिना । तस्य क्षणादनीकस्य, दिदिशे कान्दिशीकता ॥ २३९ ॥ पार्थ-
॥२३८॥ यावत् प्रतिभटं बाणान्, मुञ्चता सव्यसाचिना । तस्य क्षणादनीकस्य, दिदिशे कान्दिशीकता ॥ २४० ॥ तदानीं द्रष्टुकामानां,
मानाहताः सैन्या, व्यावर्तन्ते स्म ते यदा । तदाऽसौ दर्शयामास, युद्धकौशलमात्मनः ॥ २४१॥ वारंवारमजायन्त, तेनार्धपथखण्डिताः । पत्रिणः
विमानव्योमगामिनाम् । व्योमाभोगनडागोऽभूत्, संकुलः कमलैरिव ॥२४१॥ वारंवारमजायन्त, तेनार्धपथखण्डिताः । पत्रिणः
शैलवाहस्य, निःस्वस्येव मनोरथाः ॥ २४२ ॥ अस्मार्पीदस्त्रमाग्नेय-मर्जुनः स्फूर्जदूर्जितम् । दावानलमयो येन, सर्वतोऽजनि
पर्वतः ॥२४३॥ अस्मार्षीत् किरातोऽपि, वारुणं तन्निवारणम् । प्रावृषेव जलासारै-र्येनाद्रिर्निरवाप्यत ॥ २४४ ॥ शस्त्रैरस्त्रैश्च
दुर्गं-मवधार्य नमर्जुनः । धनुर्विहाय बाहुभ्यां, योद्धुं क्रुद्धः प्रचक्रमे ॥ २४५ ॥ विमुच्य चापमुत्तालः, पुलिन्दोऽपि कला-
निधिः । नियुद्धमुद्धतारम्भ-मारेभे कपिकेतुना ॥ २४६ ॥ मदोत्कटभुजास्फोट-रवसंस्तवपीवरैः । अत्रुटन्नद्रिकूटानि,
नगोत्थ रणदर्दुरैः ॥ २४७ ॥ दन्तघातानिव तदा, ददतौ तलहस्तकान् । कुञ्जराविव रेजाते, तौ किरात-किरीटिनौ
॥ २४८ ॥ पूर्वकायोन्नतैर्मल्ल-युद्धमत्युद्धतं तयोः । आसनोत्थायमालोकि, गणैर्दिविपदां दिवि ॥ २४९ ॥ अथावसरमासाद्य,
तमुपादाय पादयोः । मूर्धानं परितः पार्थो, भ्रमयामास लीलया ॥ २५० ॥ शिलायां यावदेकस्या-मास्फालयति फाल्गुनः ।

१ शरम । २ अर्जुनस्य । ३ बाहुयुद्धम् । ४ सन्तवः-परिचयः । ५ रणभेदैः ।

तमेव तावदद्राक्षी-द्दिव्याकारधरं पुरः ॥ २५१ ॥ इन्द्रजालमिदं किंस्वि-दिति विस्मितमानसम् । किरीटिनमभाषिष्ट, सोऽतिहृष्टः कृताञ्जलिः ॥२५२॥ तव शौर्यपरीक्षार्थं, मया मायेयमाहिता । वरं वृणीष्व तुष्टोऽह-ममुना विक्रमेण ते ॥२५३॥ प्रसाध्य विद्याः प्रज्ञप्ति-प्रमुखाः प्राप्तवैभवम् । अवैहि मां विशालाक्ष-तनयं चन्द्रशेखरम् ॥ २५४ ॥ सापदः सुहृदः कार्ये, त्वदन्तिकमुपागमम् । तप्तस्य विष्टपस्यार्थे, क्षीरोदमिव वारिदः ॥ २५५ ॥ आस्तां वरस्तावदयं, समये प्रार्थयिष्यते । कार्यं ब्रूहीति पार्थेन, स पृष्टः पुनरभ्यधात् ॥ २५६ ॥

इतोऽस्ति पुरमभ्यर्णे, वैताढ्यगिरिमण्डनम् । अवनीवनितारत्न-नूपुरं रथनूपुरम् ॥ २५७ ॥ तत्र शत्रुमृगाक्षीणां, क्षपिताखिलमण्डनः । नमेरभवदाम्नाये, नाम्ना विद्युत्प्रभो नृपः ॥ २५८ ॥ तस्याभूतां सुतौ तीव्र-तेजसौ विपुलौजसौ । इन्द्राभिधस्तयोराद्यो, विद्युन्माली तथाऽपरः ॥ २५९ ॥ संस्थाप्येन्द्रं निजे राज्ये, स्वाराज्यसुहृदि[1] स्वयम् । कनिष्ठं यौवराज्ये च, प्रव्रज्यामाददे नृपः ॥ २६० ॥ चिरंतनानां[3] यतीनां च, भूपतीनां च वर्त्मना । मुनीन्द्रश्च नरेन्द्रश्च, प्रपेदाते परं पदम् ॥ २६१ ॥ इन्द्रो न नाम नाम्नैव, संपदाऽपि बभूव सः । सर्वे तत्रेन्द्रपर्यायाः, प्रायुज्यन्त जनैस्ततः ॥ २६२ ॥ इन्द्रेण सर्वथा त्यक्तां, युवराट् यौवनोद्धतः । कृपयेव समादत्त, सादरं दुर्विनीतताम् ॥ २६३ ॥ गृहाण दारान् पौराणां, सर्वस्वानि मुषाण च । पुषाण च महापीडां, स पुरीमित्युपाद्रवत् ॥ २६४ ॥ ततः पौरैरुपालब्धः, संततैर्नीतिवत्सलः । कृत्वैकान्ते कनीयांसं, क्षोणीपतिरशिक्षयत् ॥ २६५ ॥ समजायत वैराय, तस्मिञ्शिक्षाऽपि दुर्मदे । विषाय किं न पीयूष-मपि

१ वशे । २ स्वर्गसदृशे । ३ पुरातनानाम् ।

किराता-र्जुनयो-र्युद्धम् । किरातेन दिव्याकारेण कथित इन्द्रराज-वृत्तान्तः ॥

निजवंगनभश्चन्द्र-मिन्द्रमुच्छेत्तुमि-
स्यान् पक्षगेऽर्पितम् ? ॥ २६६ ॥ अथ मुक्त्वा पुरीं कोपा-दुरात्मा तस्थिवान् बहिः । राक्षसाः सुहृदस्तस्य, सुवर्णपुरवासिनः ॥ २६८ ॥ भूयांसस्ते
क्रान्ति ॥ २६७ ॥ निवातकवचा नाम, खरदूषणवंशजाः । कीर्त्यन्ते कालकेतवः ॥ २६९ ॥ तालुन्येकपदे विद्धे, समं पाणि-
पल्लीयांगः, कृतान्तादप्यभीरवः । ततो लोकेन सर्वेण, ॥ २७० ॥ नित्यं युतस्तैर्दोःप्रौढै-र्वैताढ्याभ्यर्णवर्तिभिः । समास्कन्द-
तलेन यन् । निपद्यन्ते निगद्यन्ते, तेन ते नलतालवः भीतभीतस्सदैवास्ते, पिहितैः
त्यमस्कन्दे-द्विद्युन्माली स्वमग्रजम् ॥ २७१ ॥ संक्रन्दनस्तदाक्रान्ता-वनलंभूष्णुदोर्बलः । नैमित्तिकशिरोमणिम् ॥ २७३ ॥
पुरगोपुरैः ॥ २७२ ॥ इन्द्रः सोपद्रवं राज्य-माकलय्य कलानिधिः । अन्वयुङ्क्त बुधं नाम, ज्ञानेनालोक्य सोऽप्याह,
अमी दुर्वारदोर्गर्वा, दुर्जया मम वैरिणः । कथंचनापि जीवेरन्, यदि तद्भद्र ! कथ्यताम् ॥ २७४ ॥ त्रैलोक्येऽपि विलोक्य-
देशार्मी तव मवत्र । विजीयन्तेऽर्जुनेनैव, नैव चान्येन केनचित् ॥ २७५ ॥ नास्त्येव तत्समो धन्वी, सोऽधुना । प्रार्थ्यतां
नाम् । यनागाम्गपद्याव-दमित्रं स्युः पतत्रिणः ॥ २७६ ॥ विद्याः प्रसादयन्नद्रा-विन्द्रकीलेऽस्ति मामभ्यर्णस्थितं स्नेहा-द्व्याह-
प्रार्थनाशूर-स्वद्गना प्रणयोज्ज्वलम् ॥ २७७ ॥ इत्याख्यातवतस्तस्य, कृत्वा सत्कारमादरात् । तरूनिव ॥ २७९ ॥
यन् सेनारंभगः ॥ २७८ ॥ सखे ! खेदापनोदाय, यतस्वार्जुनमानय । पुंस्कुञ्जरेण तेनारी-नुन्मूलय इति त्वां मित्र-
किं नार्जुनेन सौजन्य-मस्त्येव तव पैतृकम् । प्राक्पाण्डुना विशालाक्षो, बद्धस्ते मोचितः पिता ॥ २८० इदं च यत्तवोदीप्त-मङ्गुलीय-
कार्थं, पार्थ ! सोऽहमुपस्थितः । तदेहि देहि भूयोऽपि, राज्यमिन्द्रस्य पैतृकम् ॥ २८१ ॥

१ भटीभि । २ इन्द्रः । ३ अगृह्णत । ४ शराः ।

कमङ्गुलौ। विशालाक्षस्य पाण्डोश्च, तत्प्रीतेः प्रतिभूर्मिथः ॥ २८२ ॥ ततः पाण्डुमहाराज-कृतामुपकृतिं पराम्। सहस्रशो विशालाक्षः, कथयामास संसदि ॥ २८३ ॥ सन्ति मे व्रणसंरोह-विहायोगमनादयः। अङ्गुल्याभरणस्यास्य, प्रभावानुभवा मुहुः ॥ २८४ ॥ तदस्य स्नपनाम्भोभिः, कुरु दिव्यौषधैरिव। निजाङ्गे गुणमाणिक्य-रोहण[1]! व्रणरोहणम् ॥२८५॥ इत्युक्त्वा विरते तस्मि-न्नसयः कपिकेतनः। ज्येष्ठबन्धुमिवाश्लिष्य, खेचरेन्द्रमवोचत ॥ २८६ ॥ ( युग्मम् )

आज्ञा युधिष्ठिरस्येव, तवापि ज्येष्ठबान्धव! । परोपकारसुरभि-मौलिमाल्यायतां मम ॥ २८७ ॥ एतच्च वेद्मि यत् पूर्वं, प्रस्थितस्य वनं प्रति। अर्पयित्वेदमार्यस्य, पाण्डुस्तातः समादिशत् ॥ २८८ ॥ अङ्गुलीयमिदं वत्स! विशालाक्षेण मेऽर्पितम्। महाप्रभावमेतद्धि, सदा दध्याः स्वसंनिधौ ॥ २८९ ॥ अत्र चागच्छतः क्षिप्त-मार्येणापि ममाङ्गुलौ। कनीयसि गरीयस्यो, ज्यायसां प्रेमसंपदः ॥ २९० ॥ विशालाक्षस्य पाण्डोश्च, द्वयोरपि तयोस्ततः। निष्प्रत्यूहमयं स्नेहः, संतानमनु[2]वर्तताम् ॥ २९१ ॥ इत्युक्त्वा विरतं भूत्वा, स्यन्दने सारथिः स्वयम्। रूढव्रणगणं पार्थ-मनैषीच्चन्द्रशेखरः ॥ २९२ ॥

अनुद्घातं सुखेनाशु, रथेन मरुतां पथि। स गच्छन् दर्शयामास, वैताढ्यं सव्यसाचिनः ॥ २९३ ॥ स एष भरतक्षोणेः, सीमन्तः पुरतो गिरिः। मुदा विद्याधरीवृन्दै-स्त्वद्यशो यत्र गीयते ॥२९४॥ पञ्चाशद्योजनी पिण्ड-स्तदर्धं च समुच्छ्रितः। त्वद्यशोराशिविशदः, सैष राजति राजतः[3] ॥२९५॥ गतायां दशयोजन्या-मूर्ध्वं श्रेण्यावुभे शुभे। अभितः शैलमासाते, दशयोजनविस्तृते ॥ २९६ ॥ इमां च दक्षिणश्रेणिं, वेगतो वयमागताः। रथो रथाङ्गबाहुभ्यां, परुयाश्लिष्यति काश्यपीम् ॥

१ गुणरत्नानां रोहणाचल!। २ पुत्रपौत्रादिपरंपराम्। ३ रजतमयः रूप्यमयः इत्यर्थः।

२९७ ॥ अयं पन्थाः पृथासूनो !, प्रयाति रथनूपुरम् । अस्ति वास्तोष्पतिर्यत्र, त्वद्दर्शनसमुत्सुकः ॥ २९८ ॥ अयं वामः पुनः पन्था–स्त्वद्रिपूनुपतिष्ठते । सन्ति येपूद्धता योद्धु–मुद्धतास्तलतालवः ॥ २९९ ॥ अथाऽऽह पार्थः सोत्कण्ठं, प्रतिपन्थिषु मे मनः । मुग्धमेषामनालोक्य, नैवेन्द्रं द्रष्टुमुत्सहे ॥ ३०० ॥ तच्चन्द्रचूड ! यत्रैते, तत्रैनं स्यन्दनं नय । यथा जानामि ते हन्त !, कियन्तः सन्ति शत्रवः ॥३०१॥ ऊचे चन्द्रावतंसोऽथ, तत्र किं गमनेन ते । प्रतिपक्षाः परोलक्षा–स्त्वं तु बाहुपरिच्छदः ॥ ३०२ ॥ यदा प्रत्यर्थिसैन्ये स्युः, समुद्रे सक्तुमुष्टिवत् । अरण्यरुदितप्राया–स्तदा स्युर्नो मनोरथाः ॥ ३०३ ॥ इन्द्रादिष्टमनिष्ठाय, ध्वजिन्यां तत् कपिध्वज ! । शत्रूनुच्छेत्तुमागच्छे–र्मन्त्रस्तावदयं मम ॥ ३०४ ॥ अर्जुनः पुनरप्यूचे, किं चमूमिगमून् प्रति । भिनत्ति कुम्भिनां कुम्भा–निभारिः किं परिग्रहः ? ॥ ३०५ ॥

तेनेत्यस्मदारम्भ–मुदितोऽथ रथं ततः । नुनोद यत्र शौण्डीर्य–केतवः कालकेतवः ॥ ३०६ ॥ दृढं कवचितास्ते च, गृहीतविविधायुधाः । सव्यसाचिनमायान्तं, पश्यन्तो जगदुर्मिथः ॥ ३०७ ॥ रथोऽभ्येति यदैन्द्रोऽयं, चन्द्रशेखरसारथिः । आहूतः पुरुहूतेन, पार्थस्तद्ध्रुवमागतः ॥३०८॥ पञ्चत्वमस्मादस्माकं, मुहुर्मौहूर्तिकैरहो । आदिष्टमिति नो माति, हास्यमास्य प्रसूनाग्रम् ॥ ३०९ ॥ अस्त्रैः शस्त्रैश्च निःशेषै–रशेषेण भुजौजसा । सर्वैश्छद्मप्रयोगैश्च, शत्रुमेतं निशुम्भत ॥ ३१० ॥ इत्यालोच्य प्रहर्तुं ते, प्रावर्तन्त धनंजयम् । बाणैः फणैरिवोत्फालै–र्वैनतेयमिवाहयः ॥ ३११ ॥ तदा तेषामनीकेषु, रसन्ति स्म समन्ततः । रणतूर्याणि कीनाश–प्रवेशपटहा इव ॥ ३१२ ॥ तरणेः किरणश्रेणिं, ते बन्दीचक्रिरे शरैः । तांस्तु च्छित्त्वा विस-

१ इन्द्रः । २ नाशयत । ३ सर्पाः ।

च्छेदं, मोचयामास फाल्गुनः ॥ ३१३ ॥ स्थित्वा स्थले जले व्योम्नि, तेऽयुध्यन्त यथा यथा । तान् रथावस्थितः पार्थः,
प्रतीयेष तथा तथा ॥ ३१४ ॥ किं सारथिमथो रथ्यान्, रथिनं वा महारथम् । वर्णयामः किमेतेषां, मुह्यन्ति स्मेति
खेचराः ॥ ३१५ ॥ कपिकेतुः पुनर्लक्ष्मी–मुपेन्द्रं नेतुमुत्सुकः । रथेन मन्दरेणेव, ममन्थ समरार्णवम् ॥ ३१६ ॥ वयो
मधुरमल्पीयः, परं चारिषु पौरुषम् । पश्यन् पार्थकुमारस्य, मुमुदे चन्द्रशेखरः ॥ ३१७ ॥ चलन्तः पार्थमनसा, सांयुगी-
नपदक्रमाः । वाजिनो रेजुरिन्द्रस्य, जयश्रीस्निग्धबन्धवः ॥ ३१८ ॥ प्रत्येकं विशिखांश्छिन्द–न्नेकोऽपि कपिकेतनः ।
तेऽभूवन् युधि यावन्त–स्तावान् वा ददृशे स तैः ॥ ३१९ ॥

मुक्ता यथा तथा बाणा, नैतत्प्राणापहारिणः । पार्थोऽतस्तान्न चिक्षेप, तांश्चिच्छेद द्विषां पुनः ॥ ३२० ॥ न कृता
दक्षिणेर्माणो, दुष्कर्माणः किरीटिना । ततः सर्वाभिसारेण, जघ्नुस्ते जितकाशिनः ॥ ३२१ ॥ एकत्र पिण्डितान् शत्रून्,
वीक्ष्य प्रहरतो मुहुः । पार्थः किंचिदिवौत्सुक्या–दवोचच्चन्द्रशेखरम् ॥ ३२२ ॥ प्रगल्भबुद्धयो योद्धु–मलंकर्मीणबाहवः ।
शत्रवो दुर्जया ह्येते, तद्रथं वालय क्षणात् ॥ ३२३ ॥ सोऽप्यभाषत कौन्तेय !, तवैतन्नोचितं वचः । ऐन्द्रोऽरिवधनिस्तन्द्रः,
सांयुगीनो रथो ह्ययम् ॥ ३२४ ॥ अभ्यस्तमस्य चक्राभ्यां, भूमेराक्रमणं पुरः । रणकर्मविपश्चिद्भ्यां, पश्चात्तु न कदाचन ॥

१ युद्धनिपुणपदक्रमाः (२. ❋ अत्र 'पार्थोऽपि तान् निचिक्षेप चिच्छेद द्विषतां पुनः।' इति गद्यपाण्डवचरितधृतः पाठो युक्तः प्रतिभाति। ३. दक्षिणे ईर्माणि व्रणानि येषां ते । ४. ×दृढमुष्टयः)

❋ इयं टिप्पणी न सम्यक् प्रतिभाति । × जयशालिनः इत्यर्थः सम्यक् प्रतिभाति ।

३२५ ॥ मन्येऽर्जुणां विधेयानि, भागधेयानि सांप्रतम् । यत्त्वं युद्धधुरीणोऽपि, रणाद्वालयसे रथम् ॥ ३२६ ॥ पार्थोऽप्यादीदृशो नाहं, कातं कश्चिदपि क्षमे । तत्रायमञ्जलिर्बद्धो, रथं वालय वालय ॥ ३२७ ॥ कर्णजाहं न गाहन्ते, मद्वा तेऽमूर्गिरो मम । रणं प्राक्प्रदत्तेन, रथो व्यावर्त्यतां रणात् ॥ ३२८ ॥ इत्युक्तः सोऽथ कृष्णास्यः, स्यन्दनं तं न्यवर्तयत् । ते चानुपतितास्तस्य, जैत्रंमन्या दधाविरे ॥ ३२९ ॥ जयश्रीवल्लभंमन्या, मुखाग्रन्यस्तपाणयः । ते क्ष्वेडां युगपच्चक्रुः, कृतान्ताह्वानसंनिभाम् ॥ ३३० ॥ स्मृत्वा द्रोणार्पितं मन्त्र-मनेकविशिखप्रसूः । बाणः प्राणहरस्तेषां, मुमुचे सव्यसाचिना ॥ ३३१ ॥ एकस्मादप्यनेकस्मान्, स्फुलिङ्गा इव पावकात् । यावद्विद्वेपि निर्जग्मुः, शेक्षत्पुङ्खाः शिलीमुखाः ॥ ३३२ ॥ युगपच्चलितास्ते च, गात्राणि सह पाणिभिः । अरीणां लीलया भित्त्वा, निर्ययुर्जीवितैः सह ॥३३३॥ *शरोशनिहताः पेतु-र्भुवि ते पर्वता इव । पपात पुष्पवर्षं च, पार्थमूर्ध्नि नभोऽङ्गणात् ॥ ३३४ ॥ तदत्यद्भुतमालोक्य, श्रुत्वा च दिवि दुन्दुभिम् । बभार सारथिः फुल्लगण्डस्थलविराननम् ॥ ३३५ ॥ साधु साधु महाबाहो !, धनंजय ! चिरं जय । एते प्रत्यर्थिनः प्रौढा, लीलयैव त्वया जिताः ॥३३६॥ इत्यानन्दपरः पार्थ-मभिनन्दन् पुनःपुनः । आलिलिङ्ग स सर्वाङ्ग-मुन्मीलत्पुलकाङ्कुरः ॥३३७॥ ( युग्मम् )

अथ व्योम्नि विमानेन, हर्षादायान्तमन्तिके । वासवं दर्शयामास, सारथिः पाण्डुसूनवे ॥ ३३८ ॥ दिष्ट्या दृष्टिमितो देहि, नगेन्द्रपरिच्छदः । संग्रामकौतुकादेति, पुरतस्ते पुरंदरः ॥ ३३९ ॥ रथस्थ एव पार्थस्तं, प्रीतः प्रत्युद्ययौ दृशा ।

१ कर्णमूलम् । २ गर्जनाम् । ३ यावन्तो विद्वेषिणस्तावन्तो बाणाः । * अशनिः—वज्रम् । ४ 'शरासनिहिताः' इति क्वचित्पाठः । ५ इन्द्र नृपम ।

कृत्वा विमानमासन्नं, तमिन्द्रोऽप्यध्यरोहयत् ॥३४०॥ पाण्डवं प्राग्दशा पीत्वा, सस्नेहमुपगूह्य च । निवेश्य चासनस्यार्धे, स बद्धाञ्जलिरभ्यधात् ॥३४१॥ तवैतस्योपकारस्य, मा भून्मे प्रत्युपक्रिया । उपकर्तरि दुःस्थे हि, भवेत् प्रत्युपकारिता ॥३४२॥ तवोपश्लोकनावाक्यं, किं ब्रूमः ? किं त्वतः परम् । इदं राज्यममी प्राणा, व्यापार्यन्तां यदृच्छया ॥ ३४३ ॥ नेत्रोत्सवाय पौराणां, त्वमेहि रथनूपुरम् । खेचरीमङ्गलाचारः, संस्तुतोऽस्तु तवाधुना ॥ ३४४ ॥ समानवयसं वीक्ष्य, पाण्डुना तं धनंजयः । भक्तिभारनमन्मूर्धा, सप्रश्रयमवोचत ॥३४५॥ तातेन पाण्डुनै(ने)वाहं, भवद्भिः परवानिह । केवलं यातुधानानां, राजधानीं ममाधुना ॥ ३४६ ॥ प्रसिद्धं खिद्धकूटं च, द्रष्टुमस्ति कुतूहलम् । इति विज्ञाप्य विनयी, पार्थस्तूष्णीकतां दधौ ॥ ३४७ ॥ ( युग्मम् ) हुंकारेण ततः प्रेर्य, विमानं गगनाध्वना । इन्द्रः प्रीतिपरोऽवादी–न्निवातकवचद्रुहम् [1] ॥ ३४८ ॥ अवस्था पर्यवस्थातृ–सार्थेऽधः [2] पार्थ ? वीक्ष्यताम् । त्वया छत्रेषु भग्नेषु, छाया गृध्रैर्विधीयते ॥३४९॥ रेणवश्चन्दनायन्ते, शोणितं कुङ्कमायते । रुष्टेनापि त्वयाऽरीणां, दत्तमङ्गप्रसाधनम् ॥ ३५० ॥ सुखकृत्त्वं प्रतीपोऽपि, यत्ते शत्रून् प्रिया इव । शिवाः श्लिष्यन्ति चुम्बन्ति, दारयन्ति नखैरपि ॥ ३५१ ॥ असौ हहा ! कुसंसर्गा–न्निसर्गसरलाशयः । गतः परासुतां वत्सो, विद्युन्माली दुनोति माम् ॥ ३५२ ॥ भवत्यपेया पीयूष–गर्गरी गरसङ्गिनी । सूत्रं तु पुष्पसंसर्गा–दारोहति शिरः सताम् ॥ ३५३ ॥ इदं हिरण्यहर्म्याकं, सुवर्णपुरमग्रतः । वयं यत्र स्थितैरेतै–र्मुहुर्मुहुरुपद्रुताः ॥ ३५४ ॥ युद्धोपाध्याय ! शत्रूणां, स्त्रियः शोकं त्वयाऽधुना । अध्यापिताः पुरस्तारैः, पूत्कारैर्गुणयन्त्यमूः ॥ ३५५ ॥ काश्चिच्चिकुरसंभारं, त्रोटयन्ति मुहुर्मुहुः ।

१ निवातकवचस्य राक्षसस्य शत्रुम्–अर्जुनमित्यर्थः । २ प्रतिपक्षसमूहे ।

काश्चित्प्रतिक्षणं वक्षः-कुट्टिमं कुट्टयन्ति च ॥ ३५६ ॥ क्षिपन्ति दूरमश्रूणि, हारमुक्ताश्च काश्चन । मन्यन्ते च दुकूलानि, प्रतिकूलानि काश्चन ॥ ३५७ ॥ त्वत्कुरङ्गा ददिपां क्षिप्रं, लग्नाश्छिन्दन्तु कंधराम् । कथं कुचस्थले तासां, लुलुपुः पत्रवल्लरीम् ? ॥ ३५८ ॥ रथं वेगाद्विमानस्य, वैमनस्यविनाशकृत् । अर्हच्चैत्याश्रितं वत्स !, सिद्धकूटमुपागताः ॥ ३५९ ॥

अथोत्तीर्य विमानेभ्यः, सर्वे श्रद्धालुचेतसः । तत्र शाश्वततीर्थेशं, वर्धमानं ववन्दिरे ॥ ३६० ॥ दुष्प्रापं दर्शनं मत्वा, गङ्गाम्बुविमला तस्य, जिनोपासनवासना । पाप-शिशराजिनमर्जुनः । स्नात्वानन्तरमानर्च, तुष्टाव च मुहुर्मुहुः ॥ ३६१ ॥ गङ्गाम्बुविमला तस्य, जिनोपासनवासना । पाप-पङ्कमपाकर्तु-मपुष्णान् प्रगल्भिष्णुताम् ॥ ३६२ ॥ पुनर्विमानमारुह्य, कीर्त्यमानोऽथ वन्दिभिः । उत्क्षिप्तकेतनां पुष्प-प्रकराञ्चि-ततलागम् ॥ ३६३ ॥ उत्तोरणां रणत्तूर्यां, सूर्यप्रतिनिधिद्युतिः । पार्थः खेचरराजस्य, राजधानीमुपाययौ ॥ ३६४ ॥ गृहम् ॥ सानन्दैः खेचरीवृन्दै-र्लाजाक्षेपपुरःसरम् । पीयमानाङ्गलावण्यः, स सौधद्वारमागमत् ॥ ३६५ ॥ प्रसृतोल्लुककल्लोलं, लोचनाञ्चलिभिः किरीटिनः । प्रवेशमङ्गलाचारं, चकारेन्द्रप्रिया स्वयम् ॥३६६॥ स्वयं सिंहासनासीन-स्तं कृत्वोत्सङ्गसङ्गिनम् । वासवः कारयामास, पुरः संगीतमङ्गलम् ॥ ३६७ ॥ स चिरात् खेचरास्त्राणि, किरीटं कवचं तथा । तदा प्रदाय पार्थाय, स्वं कृतार्थममन्यत ॥ ३६८ ॥ अग्रजः सर्वपुत्राणां, मम सूनुरसौ जनैः । ज्ञातव्य इति सर्वत्र, घोषयामास वासवः ॥३६९॥ कंचित् कालमिहैव त्वं, तिष्ठ लक्ष्मीं कृतार्थयन् । पार्थमभ्यर्थयांचक्रे, तदेति त्रिदशेश्वरः ॥ ३७० ॥ ओमित्युक्त्वा कनी-योभि-र्वासवैरिव नन्दनैः । सानन्दोऽत्र पुरे जिष्णु-र्विजहार यदृच्छया ॥ ३७१ ॥

१ क ॰ीक्रान्तजाम् । २ सूर्यसदृशकान्तिः ।

स्मरार्ताः पुरकामिन्यः, कामयन्ते स्म फाल्गुनम्। वशी स्वदारसंतुष्टो, न तु ताः स कदाचन ॥ ३७२ ॥ उपेत्योपेत्य तं प्रेम्णा, वृणते स्म पतिंवराः। स्मरन् बन्धुवनक्लेशं, [1]प्रतीयेष न ताः स तु ॥ ३७३ ॥ चित्राङ्गद-विचित्राङ्ग-चित्रसेनादयः शतम्। आययुः खेचरास्तत्र, फाल्गुनालोकनार्थिनः ॥ ३७४ ॥ इन्दोः [2]सेवर्णानाकर्ण्य, गुणान् प्रेक्ष्य च ते स्वयम्। धनुर्वेदादिशिक्षासु, गुरुं चक्रुः किरीटिनम् ॥ ३७५ ॥ लज्जयामास न द्रोणं, शिक्षादानक्रमेण सः। गुरुवैनयिकोत्कर्षे, न च ते सव्यसाचिनम् ॥ ३७६ ॥ अचिरेणैव पारीणाः, कलानां तेऽथ जज्ञिरे। विद्याब्धिकर्णधारो हि, योगः सद्गुरुशिष्ययोः ॥३७७॥ ददुः सर्वस्वमप्येते, बलाज्जिष्णुर्न्यवारयत्। इत्यभूत् कलहस्तेषां, गुरुणा दक्षिणाकृते ॥३७८॥ निषिद्धाः पाण्डुपुत्रेण, समयापेक्षिणस्ततः। कृतज्ञाः कल्पयामासुः, प्राणांस्ते गुरुदक्षिणाम् ॥ ३७९ ॥ ते च विद्याधराधीशाः, सर्वेच्छा यावदन्वहम्। तस्थुः प्रतस्थिरे चापि, सहैव कपिकेतुना ॥ ३८० ॥ चित्राङ्गदस्तु गन्धर्वो, गीतेन वरिवस्यति। ततोऽस्मिन्नधिकां प्रीतिं, प्रथयामास पाण्डुसूः ॥ ३८१ ॥ इन्द्रवात्सल्यतः पार्थः, शिष्याणां चोपचारतः। भूयांसं गमयामास, कालमेकाहलीलया ॥ ३८२ ॥

कदाचिद्बान्धवोत्कण्ठा-विवशीकृतमानसः। इन्द्रमामन्त्रयामास, गमनाय धनंजयः ॥ ३८३ ॥ रथं दिव्यं विमानं च, चन्द्रचूडं च सारथिम्। इन्द्रः समर्प्य बाष्पाम्बु-प्लुताक्षो विससर्ज तम् ॥ ३८४ ॥ मनोवेगविमानस्थै-श्चित्राङ्गदपुरःसरैः। विद्याधरैरनुगतः, प्रतस्थेऽथ कपिध्वजः ॥ ३८५ ॥ स साश्रुनयनाम्भोजः, पर्यश्रुमनुगामिनम्। आविष्कृतबहुस्नेहं,

[1] ऐच्छत् [2] सद्दशान्।

वल्लादिन्द्रं न्यवर्तयन् ॥ ३८६ ॥ प्रथयन्तौ कथास्तास्ता-श्चित्राङ्गद-किरीटिनौ । एकं विमानमारुह्य, वियन्मार्गेण जग्मतुः ॥ ३८७ ॥ संमेतादिषु शैलेषु, पावनेष्वर्हतां पदैः । सर्वविद्याधरोपेतः, पार्थस्तीर्थान्यवन्दत ॥ ३८८ ॥ चारणश्रमणांश्च, नमस्यन् व्योम्नि संमुखान् । आगाल्लवङ्गलवली-सुगन्धं गन्धमादनम् ॥ ३८९ ॥ पुरोगखेचराख्यातां, वीक्ष्य व्योम्नि सुतश्रियम् । निजाममुवाच रोमाञ्च-द्वारेणैव मुदं पृथा ॥ ३९० ॥ पश्यन्नपि सुधाबन्धु-बन्धुलक्ष्मीं युधिष्ठिरः । सानुजः कल्यामास, तत्कालमनिमेषताम् ॥ ३९१ ॥ तदानीं विकसन्नेत्र-नीरजा द्रुपदात्मजा । इयेष मनसोत्प्लुत्य, पत्युरुत्सङ्गसंगमम् ॥ ३९२ ॥ उत्सुकेषु मुदा तेषु, वेगादागत्य फाल्गुनः । खेचरैः सहितो मातु-रपतत् पादपङ्कजे ॥ ३९३ ॥ मुहुर्मुहुः स्पृशन्त्याऽङ्गं, सुधाशीतेन पाणिना । तयाऽपि स्नपयांचक्रे, प्रमोदाश्रुभिरात्मजः ॥ ३९४ ॥ उभाभ्यामपि पाणिभ्यां, तमुत्थाप्य पृथा पलान् । आजिघ्रन्मुदिता मूर्ध्नि, प्रश्नवक्लिन्नवल्कला ॥ ३९५ ॥ अग्रजावनमत् पार्थ-स्तं चोपेत्यानुजौ यमौ । पार्थेनानन्दिता नेमुः, खेचरास्तपसः सुतम् ॥३९६॥ त्रपासीमान्तमुल्लङ्घ्य, प्लवमानैरितस्ततः । प्रेम प्रकाशयामास, कृष्णा मारः स्वभर्तरि ॥ ३९७ ॥ उपस्थातव्यमाहूतै-र्युष्माभिः समये पुनः । इत्याभाष्य तपःसूनु-र्विससर्ज नभश्चरान् ॥ ३९८ ॥

अथ पप्रच्छ विनयी, बान्धवान् कपिकेतनः । अत्यक्रामदयं कालः, कथं वो विरहे मम ? ॥ ३९९ ॥ तत्तत्तीर्थनमस्याभि-स्त्वत्कथाश्रवणेन च । गमितः समयोऽस्माभि-रित्याख्यद्धर्मनन्दनः ॥ ४०० ॥ स्मरव्यापारनिपुणा, वियोगगुणितं चिरात् । आददे द्रौपदी स्वैरं, करणग्रामजं सुखम् ॥ ४०१ ॥ कालेन भूयसा जातु, तस्याः क्रीडाजुषः प्रियैः । सहस्रपत्र-

१ नीरजं-कमलम् । २ इन्द्रियसमूहजनितम् ।

मुत्सङ्गे, पपात पवनाहृतम् ॥ ४०२ ॥ एकं विदधती तद्धिः, पाणिपङ्केरुहग्रहात् । विलोकते स्म पाञ्चाली, प्रतिपत्रं पुनः पुनः
॥ ४०३ ॥ प्रियावक्त्रं च तच्चापि, वीक्ष्य साक्षादुभे अपि । पाण्डवेयास्तयोराद्यं, निश्चिक्युर्वसतिं श्रियः ॥ ४०४ ॥ द्वयोरपि
तयोरस्ति, यदप्यनपरागता । तथाप्यधिकसौरभ्यं, मेनिरे ते प्रियाननम् ॥ ४०५ ॥ तेनाकृष्टमनाः कृष्णा, दृशा भीमम-
याचत । उपानय समानीय, नलिनानीदृशानि मे ॥ ४०६ ॥ सुमेधास्तदबोधिष्ट, प्रियाऽभीष्टं वृकोदरः । मनोगतं विदन्त्येव,
नित्यं हृदयवासिनः ॥ ४०७ ॥ ज्येष्ठबन्धुमनुज्ञाप्य, प्रस्थितस्याथ मारुतेः । दिदेशानीतराजीव-गन्धो गन्धवहः[2] पथम्
॥ ४०८ ॥ लङ्घयामास सोऽध्वानं, सिन्धुभूधरदुस्तरम् । न पुनः क्वापि तत् प्राप, सरः सरसिजास्पदम् ॥ ४०९ ॥

इतस्तपःसुतादीना-मदीनमनसामपि । भाव्यर्थपिशुनैराशु, दुर्निमित्तैर्विजृम्भितम् ॥४१०॥ ततः समादिशद्बन्धू-नादृतो
धर्मनन्दनः । सत्वरं गम्यते तत्र, यत्रास्ति पवनात्मजः ॥ ४११ ॥ तस्मिन् संनिहितेऽस्माकं, विपदः स्युर्न दुस्तराः ।
महानद्योऽपि सुप्राप-पाराः सत्युडुपे नृणाम् ॥ ४१२ ॥ तस्याप्यत्यौहितं[3] न स्यात्, स्थितेष्वस्मासु संनिधौ । केन वा यूथ-
मध्यस्थः, कलभः परिभूयते ? ॥ ४१३ ॥इत्यादेशान्नरेशस्य, ते सर्वेऽपि प्रतस्थिरे । तेषामुपादिशन्मार्गं, भग्ना भीमेन भूरुहः
॥ ४१४ ॥ गिरिभिर्विषमः पन्था-स्तैर्ललङ्घे कथंचन । एकस्यास्तु महानद्या-स्तीरे खिन्नोऽवदन्नृपः ॥ ४१५ ॥ भीमः स
नास्ति यस्यासौ, महानद्यपि गोष्पदम् । एतामुत्तार्य भीमेन, कोऽस्मान् संगमयिष्यति ? ॥४१६॥ अथाऽऽह पार्थो मे देव !,
विद्याः सन्ति वशंवदाः । तासामन्यतमाऽप्येतत्, करोत्वीप्सितमादिश ॥४१७॥ ततोऽवादीदजातारि-र्महासाहायिकोचिताः ।

अर्जुनस्य भ्रातृसमीपे आगमनम्। भीमस्य कमलानयनाय गमनम् ॥

१ रागसहितत्वम् । २ वायुः । ३ विघ्नः ।

तिग्याः स्वल्पे न कार्येऽस्मिन्, व्यापारयितुमर्हसि ॥ ४१८ ॥ पथि निर्व्यूढसाहाय्या, हिडम्बा तु पुरापि नः। इदानीमपि
नामेव, स्मर्तुमिच्छति मे मनः ॥ ४१९ ॥ इत्युदीर्य स्नुषां सद्यः, सस्मार च युधिष्ठिरः। भीमाभ्यर्णस्थमात्मानं, सकुटुम्बं
ददर्श न ॥ ४२० ॥ हिडम्बां सह बालेन, सोऽपश्यत् प्रणतां पुरः। अवादीच दृशा सिञ्चन्, सुधावीचिवयस्यया ॥४२१॥
कच्चित् कुशलिनी वत्से !, गुर्वादेशकृतत्परे ?। अयं च कोऽयमनघो, लघुर्भीम इवापरः ? ॥ ४२२ ॥ अथ सा कथयामास,
देव ! स्मरसि यत् पुरा। अन्तर्वत्नी विसृष्टाऽह-मेकचक्रावनाच्वया ॥४२३॥ गताया मे पितुर्गेहे, तनयोऽयमजायत। विद्याभिः
पात्रलाभेन, मुदितं यस्य जन्मनि ॥ ४२४ ॥ भुजस्थाम्ना निराम्नायान्, पितुः शत्रून् करिष्यति। असाविति समाख्यायि,
गुह्यमेर्दिविफलदा ॥४२५॥ अयं मे ज्ञातिचक्रेण, चक्रे नाम्ना घटोत्कचः। कलाश्चाध्यापितः काश्चित्, काश्चिदध्येष्यतेऽधुना
॥४२६॥ अथैते तनयस्नेह-लहरीहृतचेतसः। आश्लिष्यन् रभसाद्बालं, तं सर्वे पाण्डुसूनवः ॥ ४२७ ॥ भक्तिरोमाञ्चिता कामं,
प्रणामं कुर्वती गिरी। सा कुन्ती-याज्ञसेनीभ्यां, सस्नेहं समभाष्यत ॥ ४२८ ॥ अथोज्जृम्भन्नवाम्भोजं, हृष्टो दृष्ट्वा सरः पुरः।
स्नुषां स्नानगानार्थ-मनुमेने महीपतिः ॥ ४२९ ॥

आश्चर्यलहरीहेतोः, सेतोरुपरि तस्थिवान्। बन्धूनां दर्शयामास, मारुतिः सरसःश्रियम् ॥ ४३० ॥ दिवि दिव्याब्ज-
सौरभ्य-लुब्धभृङ्गावलिच्छलात्। छत्रं तडागराजस्य, राजते मेघडम्बरम् ॥४३१॥ लोलैरेतानि कल्लोलैः, शतपत्राणि पश्यत।
कृष्णागरुरजिनानीव, समन्ताद्धवते पुरः ॥ ४३२ ॥ इमां भीमगिरं श्रुत्वा, दक्षिणेऽक्षिण स्फुरत्यथ। प्रपेदे द्रौपदी प्रीति-

१ मन्त्रनिरहितान । २ पालेः ।

मप्रीतिं च समं तदा ॥ ४३३ ॥ मातुः पादौ स पुंनागः, पुंनागस्य तरोरधः । स्वोत्सङ्गसङ्गिनौ कुर्व-न्नुपासामास धर्मसूः
॥ ४३४ ॥ वर्द्धिष्णुफलपुष्पर्द्धि-रम्यासु वनराजिषु । शेषास्तु पाण्डवाः स्वैरं, रेमिरे सह कृष्णया ॥ ४३५ ॥ ददुस्तरून्
समारुह्य, प्रियायै कुसुमानि ते । सा तु तेभ्यः प्रतीच्छन्ती[1], मुदमूर्ध्वभुजा ददौ ॥ ४३६ ॥ कुतूहलात् स्वयं कर्तुं, पुष्पावच-
यमिच्छती । सा प्रियैः स्कन्धमारोप्य, चक्रे पूर्णमनोरथा ॥ ४३७ ॥ मनोहारीणि निर्माय, कुसुमाभरणानि ते । परिधाप्य
प्रियां प्रेम्णा, परां मुदमलम्भयन् ॥ ४३८ ॥ केतकीदलदीर्घेण, कटाक्षेण वृकोदरम् । प्रियाऽथ प्रेरयामास, कमलाऽऽहरणाय
सा ॥४३९॥ तरीतुमतिनिष्णात-स्तीरे त्यक्त्वा गदां तदा । स जगाहे तडागं तं, पाथोधिमिव मन्दरः ॥ ४४० ॥ विचक्षणः
क्षणान्मज्ज-न्नुन्मज्जंश्च क्षणादपि । बन्धूनां दर्शयामास, स्वसंतरणकौशलम् ॥ ४४१ ॥ संविष्टो वा निविष्टो वा, क्वचिदूर्ध्वंद-
मोऽथवा । बहुधा बन्धुहर्षाय, जलकेलिमसौ व्यधात् ॥ ४४२ ॥ नलिनानि सनालानि, बहिरुच्चित्य[2] सोऽक्षिपत् । अग्रहीन्नीर-
तीरस्था, द्रौपदी मुदितानना ॥ ४४३ ॥ उच्चित्योच्चित्य पद्मानि, क्षिपन्नेवं वृकोदरः । तरन् यातः सरोमध्यं, ममज्जान्तर्जलं
क्षणात् ॥ ४४४ ॥ जले मग्नोऽन्यदाऽप्येष, चिरेणोन्मज्जतीति ते । औदासीन्यजुषोऽभूवं-स्तदा सर्वेऽपि बान्धवाः ॥ ४४५ ॥
अर्जुनार्जुन ! धावस्व, प्राणेश ! द्रुतमुन्मज्ज, कृतं मज्जनकेलिना । इत्याकुलमनास्तारं, जगाद द्रुपदात्मजा ॥ ४४६ ॥
वेगतो भीममाकृष । कश्चिद्दुष्टाशयो ग्राहः, सूनुं मे नूनमग्रहीत् ॥ ४४७ ॥ इति कुन्तीगिरा पार्थः, समर्थः शत्रुनिग्रहे ।
आसेदिवान् प्रदेशं तं, मग्नः पार्थोऽपि पाथसि[3] । वृकोदरानु-
ददावन्तर्जलं झम्पां, दीपे शलभवद्द्रुतम् ॥ ४४८ ॥ (युग्मम्)

१ गृह्णन्ती । २ त्रोटयित्वा । ३ जले ।

पाण्डवानां नागसरसि मज्जनम्॥

ततः पञ्चनमस्कार-पुरःसरमसौ सरः। निर्विलम्बं प्रणम्याम्बां, प्राविशद्धर्मनन्दनः ॥ ४६५ ॥ दत्तसार्द्रदृशोरेव, सोऽपि मातृ-कलत्रयोः। तडागान्तर्निमग्नानां, चतुर्णां पञ्चमोऽभवत् ॥ ४६६ ॥ चिरादपि ततस्तेषा-मनागमनविक्लवाम्। कुन्तीं वीक्ष्येव संजज्ञे, दिवसोऽपि भृशं कृशः ॥ ४६७ ॥ तदा सरसि निर्मग्नां-स्तानिवालोक्य दुःखितः। चचाल पश्चिमाम्भोधौ, पतिष्यन्निव भास्करः ॥ ४६८ ॥ ग्रहाणां ग्रामणीः सोऽपि, मज्जयित्वा महार्णवे। क्वाप्यनीयत कालेन, कालो हि दुरतिक्रमः ॥ ४६९ ॥ क्रान्तमुत्तिष्ठमानेन, तिमिरेण दिशां मुखम्। कुन्ती-द्रुपदनन्दिन्योः, शोकेनेव विसर्पता ॥ ४७० ॥ संचुकोच विना भानोः, सरस्यम्भोजकाननम्। ऋते च पाण्डवेयेभ्यो, मुखं मातृ-कलत्रयोः ॥ ४७१ ॥ वाचामगोचरं प्राप्य, कष्टमिष्टवियोगतः। मूर्च्छामगच्छतामाशु, ते सहैव दिनश्रिया ॥ ४७२ ॥ मूर्च्छाव्यपगमे कुन्ती, नितान्तं पर्यदेवत। हा! वत्सास्त्रिजगत्प्राण-त्राणसोत्साहबाहवः! ॥ ४७३ ॥ जलान्तःस्वैरसंचार-चातुरीचञ्चवोऽपि किम्। एतामपुनरावृत्ति-दुःस्थां प्राप्ताः स्थ दुर्दशाम्? ॥ ४७४ ॥ युग्मम् ॥ कृष्णाऽपि विललापैवं, क्व ते पञ्चापि मे प्रियाः?। तैर्विनाऽसौ कथं वामा, त्रियामा मम यास्यति? ॥ ४७५ ॥ न म्लायते तदद्यापि, तैर्दत्तं पुष्पदाम मे। ते तु तामीदृशीं प्राप्ता, ह हा दैववशाद्दशाम् ॥ ४७६ ॥ पालिद्रुमालिनीडानां, युगपत् पक्षिणां रवैः। तद्दुःखेनेव संध्यापि, स्निग्धरागा स्म रोदिति ॥४७७॥ अथोवाच स्नुषां कुन्ती, संस्थाप्यात्मानमात्मना। वत्से! मा स्म रुदस्तारं, शोकः स्तोको विधीयताम् ॥ ४७८ ॥ मुखन्यकृतराजीवे!, जीवन्त्येव तव प्रियाः। यतो राज्यं पुनस्तेषा-माख्यातं मुनिपुङ्गवैः ॥ ४७९ ॥ कुतश्चित् केवलं कांचि-दापदं ते प्रपेदिरे। ततस्तस्याः परित्राण-कर्मणे प्रयतावहे ॥ ४८० ॥ विपत्कन्दच्छिदाछेकं, धर्ममेकं विदुर्बुधाः। धर्म्यमावां ततः

कर्म, निर्मायं निर्मिमीवहे ॥४८१॥ भवेदाप्तत्वनिर्वाह–स्तथा सत्यावयोरपि । अभिधाय स्नुषामेवं विरराम पृथा तदा ॥४८२॥

अथावोचत पाञ्चाली, सत्यं मातस्त्वयोदितम् । मदुपज्ञा विपत्तेषा–मित्येतद्बाधतेतमाम् ॥ ४८३ ॥ अनेनानुशयेनात्मा, मुहुर्दन्दह्यते मम । अकार्षं यत्तदाऽलीकं, कमलाहरणाग्रहम् ॥ ४८४ ॥ कुन्ती कृष्णामथोवाच, न ते दोषोऽस्ति कश्चन । अवश्यंभाविनो भावा, निवार्यन्ते न केनचित् ॥ ४८५ ॥ तदानीमेत्य चन्द्रोऽपि, चन्द्रातपपटाञ्चलैः । सौजन्यादिव पर्यश्रु, तदाननममार्जयत् ॥ ४८६ ॥ तयोः शोके निमीलद्भिः, कमलैः सुजनायितम् । सहसा कृतहासैस्तु, कुमुदैर्दुर्जनायितम् ॥ ४८७ ॥ समाहिंसन देवश्चे–द्दुरवश्च सुमाधवः । भन्तु विघ्नं सुतानां मे, ततः सम्यग्दृशः सुराः ॥ ४८८ ॥ उक्त्वेति कुन्ती स्मृत्वा च, पञ्चापि परमेष्ठिनः । प्रलम्बितभुजावल्लिः, कायोत्सर्गमशिश्रयत् ॥ ४८९ ॥ ( युग्मम् ) अवादीद्द्रौपदी हंहो !, सुरकिन्नरखेचराः ! । शेषं विमुच्य व्यापार–मेकं मे श्रूयतां वचः ॥ ४९० ॥ सुधांशुधवलं शीलं, शश्वज्जानीथ चेन्मम । संनिधत्त प्रियाणां मे, फलितापज्जुषां ततः ॥ ४९१ ॥ इति व्याहृत्य साऽप्यन्त–र्मनसं बिभ्रती जिनान् । ग्रावोत्कीर्णेव निष्कम्पा, कायोत्सर्गं व्यवस्थिता ॥ ४९२ ॥ तयोरभीष्टमाधातुं, ध्यायन्त इव देवताम् । पादपा अपि निःस्पन्दाः, प्राणायामं दधुस्तदा ॥ ४९३ ॥ विस्मृत्य पयसः पानं, मुक्त्वा वैरं परस्परम् । अतिष्ठन्मण्डलीभूय, तत्पार्श्वे श्वापदा अपि ॥ ४९४ ॥ तयोः पश्यत माहात्म्य, क्रूरैः रात्रिचरैरपि । संजातं यत्तदा जन्तु–संहारपरिहारिभिः ॥ ४९५ ॥ तयोर्व्यसनसाक्षिण्या, वहन्त्या महतीं शुचम् । वयोविरावैः क्रन्दन्त्या, क्षपयाऽक्षीयत ध्रुवम् ॥ ४९६ ॥ तयोर्दुष्कर्मभिर्नष्टं, तिमिरच्छद्मना तदा । पुण्योद्योतः

१ भाग्यार्थेन मुहुर्दह्यत इत्यर्थः । २ 'दारव्यनिर्वा०' प्रत्यन्तरे० । ३ सान्निध्यं कुरुत । ४ पक्षिशब्दैः ।

कर्म, निर्माय निर्मिमीवहे ॥४८१॥ भवेदसत्त्वनिर्वाह[2]-स्तथा सत्यावयोरपि । अभिधाय स्नुषामेवं विरराम पृथा तदा ॥४८२॥

अथावोचत पाञ्चाली, सत्यं मातस्त्वयोदितम् । मदुपज्ञा विपत्तेषा-मित्येतद्बाधतेतमाम् ॥ ४८३ ॥ अनेनानुशयेनात्मा, पृष्ठेऽन्वगाते मम । अकार्षं यत्तदाऽलीकं, कमलाहरणाग्रहम् ॥ ४८४ ॥ कुन्ती कृष्णामथोवाच, न ते दोषोऽस्ति कश्चन । आदर्शभाविनो भावा, निवार्यन्ते न केनचित् ॥ ४८५ ॥ तदानीमेत्य चन्द्रोऽपि, चन्द्रातपपटाञ्चलैः । सौजन्यादिव पर्यभ्रु, तदाननममाजयत् ॥ ४८६ ॥ तयोः शोके निमीलद्भिः, कमलैः सुजनायितम् । सहसा कृतहासैस्तु, कुमुदैर्दुर्जनायितम् ॥ ४८७ ॥ समाहेन्द्र देवश्चे-द्वरुश्च सुमाधवः । ब्रन्तु विघ्नं सुतानां मे, ततः सम्यग्दृशः सुराः ॥ ४८८ ॥ उक्त्वेति कुन्ती स्मृत्वा च, पञ्चापि परमेष्ठिनः । प्रलम्बितभुजावल्लिः, कायोत्सर्गमसूत्रयत् ॥ ४८९ ॥ ( युग्मम् ) अवादीद्द्रौपदी हंहो !, सुरकिन्नरखेचराः ! । शेषं विमुच्य व्यापार-मेकं मे श्रूयतां वचः ॥ ४९० ॥ सुधांशुधवलं शीलं, यद्यजानीथ चेन्मम । संनिधत्त[3] धिमाणां मे, कल्पितापज्जुषां ततः ॥ ४९१ ॥ इति व्याहृत्य साऽप्यन्त-र्मनसं बिभ्रती जिनान् । ग्रावोत्कीर्णेव निष्कम्पा, कायोत्सर्गं व्यधादिना ॥ ४९२ ॥ तयोरभीष्टमाधातुं, ध्यायन्त इव देवताम् । पादपा अपि निःस्पन्दाः, प्राणायामं दधुस्तदा ॥ ४९३ ॥ विस्मृत्य पयसः पानं, मुक्त्वा वैरं परस्परम् । अतिष्ठन्मण्डलीभूय, तत्पार्श्वे श्वापदा अपि ॥ ४९४ ॥ तयोः पश्यत माहात्म्यं, क्रूरै[1] रात्रिंचरैरपि । संजातं यत्तदा जन्तु-संहारपरिहारिभिः ॥ ४९५ ॥ तयोर्व्यसनमाक्षिण्या, वहन्त्या महतीं शुचम् । वयोगिरैः[4] क्रन्दन्त्या, क्षपयाऽक्षीयत भुवम् ॥ ४९६ ॥ तयोर्दुष्कर्मभिर्नष्टं, तिमिरच्छद्मना तदा । पुण्योद्योतः

१ मांसाशिभिः शूकरैः । २ 'सत्त्वनिर्वा०' प्रत्यन्तर० । ३ सान्निध्यं कुरुत । ४ पक्षिशब्दैः ।

प्रभाव्याजात्, प्रादुरासीच्च सर्वतः ॥ ४९७ ॥ तदानीं तद्वियोगार्ति–म्लानमूर्ती विलोक्य ते। ययौ कापि तुषारांशु–रन्वेष्टु-मिव पाण्डवान् ॥ ४९८ ॥ प्रातर्वातोच्छलद्वीचि–च्छलतो मेन्तुमात्मनः। प्रमार्ष्टुमिव पादेषु, लगति स्म सरस्तयोः ॥४९९॥ मुनीन्द्रैरपि दुःसाध्यां, ध्याननिश्चलतां तयोः। रविर्द्रष्टुमिवारोह–त्तदा पूर्वाद्रिचूलिकाम् ॥ ५०० ॥

अथ व्योम्नि क्रमाज्जाते, याममात्रे त्रयीतनौ। तथैव सावधानेषु, श्वापदेष्वखिलेष्वपि ॥ ५०१ ॥ स्वच्छाम्भसः सरोग-र्भा–ज्ज्योतिः समुदजृम्भत। अनणुः किङ्किणीक्वाणः, शुश्रुवे च श्रुतिप्रियः ॥५०२॥ ततः स्वर्णमयस्तम्भं, नानारत्नाङ्कवेदिकम्। विमानं निरगादेकं, नाकस्येव निदर्शनम् ॥ ५०३ ॥ निर्निमेषाम्बुजव्याजात्, कृत्वा नेत्राणि कोटिशः। नूनं सरोऽप्यनूनश्रि, तदालोकत कौतुकात् ॥ ५०४ ॥ तीरे ततः समुत्तीर्य, निस्तीर्णविपदर्णवाः। पादपङ्केरुहं कुन्त्याः, प्रणमन्ति स्म पाण्डवाः ॥५०५॥ दिव्यमूर्तिधरः कश्चि–न्नरस्तैः सममागतः। स्फीतप्रीतिः पुरोभूय, कुन्तीं प्राञ्जलिरभ्यधात् ॥ ५०६ ॥ दिष्ट्या ते फलितो धर्मः, कुन्ति! पारय पारय। एते लुठन्ति विनयात्, तनयास्तव पादयोः ॥ ५०७ ॥ कायोत्सर्गं विसृज्याथ, प्रमोदभरमेदुरा। पाणिना मृदु पस्पर्श, कुन्ती प्रत्यङ्गमङ्गजान् ॥ ५०८ ॥ द्रौपदीं च करे धृत्वा, सा समा-धिममोचयत्। पायं पायं पयः सर्वैः, प्रतस्थे श्वापदैरपि ॥५०९॥ कुन्ती वहन्ती विजिता–म्भोजकाननमाननम्। गत्वाऽथ केसरस्याधो, न्यसीदत् सपरिच्छदा ॥ ५१० ॥ ततः पप्रच्छ तं देव–मात्मजानां कथां पृथा। सोऽपि सानन्दमुन्मील–च्चमत्कारमचीकथत् ॥ ५११ ॥

१ अपराधम्। २ सूर्ये। ३ स्वर्गस्य।

मर्त्यैः कस्यचित् संप्र-त्युदपद्यत केवलम् । इन्द्रस्तत्रोत्सवं कर्तु-मगच्छदमुनाऽध्वना ॥ ५१२ ॥ वृत्रारेरेनमाकाश-प्रदेशमुपगेयुः । विमानस्य क्षणादासी-दकाण्डे गतिखण्डनम् ॥ ५१३ ॥ विमानं मम को मूर्खो, मुमूर्षुः स्खलयत्यदः १ । अग्रौ भिनतु दम्भोलि-स्तस्य मौलिमनाकुलः ॥ ५१४ ॥ इति जल्पन् क्रुधा वज्रं, वज्रपाणिः करेऽदधत् । मुहुर्व्यापारया-मास, क्रुराः प्रतिदिशं दृशः ॥५१५॥ (युग्मम्) निरुपाधिसमाधिस्थे, प्रेक्ष्य साक्षाद्युवां ततः । मां फुल्लाक्षः सहस्राक्षो, बभाषे-ऽभ्यर्णवर्तिनम् ॥ ५१६ ॥ पुत्र-भर्तृवियोगार्ते, सत्यौ श्वश्रू-स्नुषे इमे । समीहिते स्तस्तदयं, विमानो याति नाग्रतः ॥५१७॥ नगमेगिन्निगे निद्रि, मान्ये सुमनसामपि । मातैका पाण्डवेयाना-मपरा च सधर्मिणी ॥५१८॥ माता कुन्तीति विख्याता, यस्य दोर्दीप्यतेऽधिकम् । विपत्पङ्केऽपि सम्यक्त्व-रत्नमत्यन्तभासुरम् ॥ ५१९ ॥ मानसं तीर्थमेवास्याः, सर्वपापतमोपहम् । यदभ्यागितमर्हद्भि-र्युगपन्निखिलैरपि ॥ ५२० ॥ पत्नी तु द्रौपदी नाम्ना, यां महिम्नाऽतिशायिनीम् । पतिव्रतामयं ज्योति-र्गमनन्ति मनीषिणः ॥५२१॥ तत् पाण्डवान् विपत्पङ्का-दुत्वा सत्वरमुद्धर । एतयोः स्युर्महासत्यो-र्यथा पूर्णा मनोरथाः ॥ ५२२ ॥ इदं हि नागराजस्य, सरः सागरसोदरम् । स चास्य सहते नैव, विमर्दमपरैः कृतम् ॥ ५२३ ॥ द्रौपद्या प्रार्थितो भीमः, कमलानि कुतूहलात् । इहाकष्टुं प्रविष्टश्चा-कृष्टश्चाधो भुजंगमैः ॥ ५२४ ॥ हा ! ममज्ज जले भीम, इत्याकुलतया क्रमात् । ददुर्लम्पां झगित्यत्र, चत्वारो बान्धवा अपि ॥ ५२५ ॥ प्रसह्य समगृह्यन्त, तेऽपि नागैर्दुराशयैः । निन्यिरे नागपा-शैश्च, बद्ध्वा नागपतेः पुरः ॥५२६॥ तद्व्रज ध्वजिनीनाथ !, द्रुतं मोचय पाण्डवान् । सोऽपि पाण्डुसुतानेतान्, विदित्वाऽ-

१ नगाधिमग्नौ । २ नागपतिः ।

नुशयिष्यते ॥ ५२७ ॥

ततोऽहमिममादेश-मुपादाय दिवस्पतेः । प्रीतिप्रह्वीकृतो[1] वेगा-न्नागराजमुपागमम् ॥ ५२८ ॥ तस्यास्थाने दृढं बद्धा-ल्लज्जयाऽधोमुखांस्तदा । कृशाञ्शोकाश्रुपूर्णाक्षा-नद्राक्षं कुन्ति ते सुतान् ॥५२९॥ तदा तेषु सुसत्त्वेषु, गतार्तिषु सुमूर्त्तिषु । निपेतुर्नागराजस्य, भूरिभावस्पृशो दृशः ॥ ५३० ॥ व्यज्ञाप्यत ततः प्रह्वै-स्तैर्द्विजिह्वैरहीश्वरः । एते देव! नराः केचित्, सरोवरविमर्दिनः ॥ ५३१ ॥ अमीभिः सैरिभप्रायै-र्जलं चक्रे रजस्वलम्[2] । लूनानि नलिनीनां च, शिरांसि कमलच्छलात् ॥५३२॥ तैर्विज्ञप्तोऽपि नागेन्द्रः, पाण्डवार्पितलोचनः । तस्थौ तथैव निष्कम्पः, चिन्तयन्नेव किंचन ॥ ५३३ ॥ मयाऽथ वक्तुमारेभे, कृतं भोगीन्द्र! चिन्तया । अमी ते पाण्डवा येषां, ख्यातं नाम जगत्त्रये ॥५३४॥ एषां राभसिको मा स्म, कार्षीत् कंचिदतिक्रमम् । भवानिति सुरेन्द्रेण, प्रहितोऽस्मि त्वदन्तिके ॥ ५३५ ॥ सदा जलचरैर्ग्राहै-रिव तावकपत्तिभिः । छलेन जलकेलिस्था, रुद्धा ह्येते निरायुधाः ॥ ५३६ ॥ अतः परं यदौचित्यं, स्वयमेतेषु वेत्सि तत् । पर्वसंजातयोगं हि, चन्द्रं सत्कुरुते रविः ॥ ५३७ ॥

श्रुत्वेति मामिकां वाचं, प्रीतस्त्वत्तनुजन्मनाम् । नागेन्द्रः स्वयमुत्थाय, नागपाशानपास्थत ॥ ५३८ ॥ निजासनसमानेषु, संनिवेश्यासनेष्वमून् । द्वारं निवारयामास, तेषां त्वत्तनयद्विषाम् ॥ ५३९ ॥ सर्वानेकैकशो ज्ञात्वा, नामतः क्रमतस्ततः । परिष्वज्य महीपालं, पातालप्रभुरभ्यधात् ॥ ५४० ॥ एवं भृत्यापराधान्मे, क्ष्मापाल! क्षन्तुमर्हसि । अवज्ञा

१ प्रीत्या नम्रीकृतः । २ धूलिमयं-मलिनमित्यर्थः ।

पामरोपज्ञा, न क्रोधाय महात्मनाम् ॥५४१॥ सर्वमेषा विषं हन्ति, जङ्गमस्थावरात्मकम् । एवमादिश्य तेनास्मै, मणिमाले-यमर्पिता ॥५४२॥ नयनोपान्तवास्तव्यं, पाञ्चाल्याः कर्णभूषणम् । एतदस्त्विति सोऽस्य स्वं, लीलाकमलमार्पयत् ॥५४३॥ पन्नानामपि भर्तृणा-मिदं क्षेमे भविष्यति । भृशं विकस्वराकार-मक्षेमे त्वविकस्वरम् ॥५४४॥ किं च धर्मात्मज ! श्लाघ्य-स्त्वमेवासि जगत्त्रये । यस्य ते बान्धवावेतौ, ख्यातौ भीम-किरीटिनौ ॥५४५॥ अनयोर्नागनारीभि-र्दोलाकेलिषु गीयते । किर्मीरादिवधप्राय-मत्रापि चरिताद्भुतम् ॥ ५४६ ॥ तत् संप्रति ससोदर्यो, वासराणि कियन्त्यपि । अवनीपाल ! पातालं, पवित्रयितुमर्हसि ॥ ५४७ ॥ अथाभाषत ते सूनु-स्त्वद्गवीयमहीश्वर ! । क्षरत्यस्मासु पीयूषं, क्लेशमेनमनाशयत् ॥ ५४८ ॥ त्वदिदं ...स्तुषा च जननी च वः । तथा कुरुत जीवन्त्यौ, पश्याम्यहमिमे यथा ॥ ५४९ ॥ ततः पन्नगनाथोऽपि, कुर्वन्न सगौरवम् । विससर्ज ससत्कार-मन्वव्राजीच्च ते सुतान् ॥५५०॥ नम्रस्तमनुगच्छन्त-मवोचत तपःसुतः । तडाग-रक्षानागेभ्यः, प्रसीद द्वारसेवया ॥५५१॥ यदानुकूलं कर्तारः, कर्णयुद्धे किरीटिनः । मां पुनः सेवितारस्ते, शङ्खचूडादय-स्तदा ॥५५२॥ इति दत्तोत्तरं धर्म-सूनुः पन्नगपुङ्गवम् । प्रणम्य पादयोः सास्रं, बलादेव न्यवर्तयत् ॥ ५५३ ॥ ( युग्मम् ) तन्कुन्ति ! त्वत्तपःप्रह्व-पुरुहूतनिदेशतः । अमी मया समानीय, सुताः पञ्चापि तेऽर्पिताः ॥ ५५४ ॥ इन्द्रादिष्टमिदं चक्रे, मम भक्तिस्त्वतः परम् । नयामि वो विमानेन, यथेदानीं तथाऽऽदिश ॥ ५५५ ॥ अथाजल्पत् पृथा सौम्य !, त्वन्माहात्म्यं

१ पामरजनैः प्रथमं कृता इत्यर्थः, अत्र "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" (पाणिनि० २-४-२१) इति सूत्रेण समासः, परन्तु नपुंसकेन भाव्यम । २ तडागारक्षना० प्रतिद्वयपाठः ।

किमुच्यते । पुनर्वेगेन तत्रास्मा–न्नय द्वैतवने वने ॥ ५५६ ॥ तथा कृत्वा वचः कुन्त्या–स्तानापृच्छ्य समुत्सुकः । तन्नेत्रैर-नुयातोऽगा–न्नैगमेषी यथागतम् ॥५५७॥ पञ्चवर्षीमतीत्यैव–मन्यान्यवनभूमिषु । पुनर्द्वैतवनोत्सङ्ग–मधितस्थौ युधिष्ठिरः ॥ ५५८ ॥ स्वयं मणिमयं दाम, पर्यधत्त तपःसुतः । आरोपयच्च पाञ्चाल्याः कर्णोत्तंसे तदम्बुजम् ॥ ५५९ ॥ मातुः पत्न्याश्च तैस्तत्र, समाधिस्थैर्यदद्भुतम् । अत्यद्भुतं प्रभावं च, स्मारंस्मारममुद्यत ॥५६०॥ प्रीतिं कदाचिदिन्द्रस्य, नागेन्द्रस्य कदाचन । वर्णयन्तः सुखेन स्म, समयं गमयन्ति ते ॥ ५६१ ॥

कदाचिज्जैनेन्द्रस्तवननवगुम्फव्यतिकरैः,
कदाचिन्मार्गस्थश्रमणचरणोपास्तिविधिना ।
कदाचिन्निर्णीतस्वसमयविचारोपनिषदा[१],
दिनानि स्वान्येते किमपि चरितार्थान्यरचयन् ॥ ५६२ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरित्रे महाकाव्ये किरातार्जुनीय–तलतालवध–कमला-हरणवर्णनो नामाष्टमः सर्गः ॥ ८ ॥

---

१ उपनिषद्–ब्रह्मविद्या ।

शास्त्रविशारद–जैनाचार्य–श्रीमद्–विजयधर्मसूरिभ्यो नमः ॥

मलधारि–श्रीदेवप्रभसूरिविरचितम्–

# श्रीपाण्डवचरित्र-महाकाव्यम् ।

[ द्वितीयो विभागः । नवमसर्गाद् अष्टादशसर्गपर्यन्तः । ]

ग्रन्थोऽयं हरिभाइतनयेन शास्त्रि–जेठालालशर्मणा संशोधितः ।

स च पादलिप्तपुरस्थ 'मेसर्स ए एम, एन्ड कम्पनी' इत्यनेन प्रकाशितः ।

वीर संवत् २४६२ विक्रम संवत् १९९२ क्राइस्ट १९३६

मूल्यम् रू. ४–०–० Price 4 Rupees

भावनगरे महोदय–मुद्रणालये शाह गुलाबचन्द लल्लुभाई प्रबन्धेन मुद्रितम् ।

# । प्रस्तावना ।

विदांकुर्वन्तु काव्यरसिका धर्मज्ञाः सज्जनाः ।

इह किल चातुर्गतिकदुःखवारिभृतं ससाराब्धिं तितीर्षुभिर्भव्यैः श्रीतीर्थकृन्निर्मितसद्धर्मतरण्ड एवाश्रयणीयः तच्चालयितारश्च सद्गुरुनाविकाः सेवनीयाः, यतस्ते द्रव्यानुयोग–चरणकरणानुयोग–गणितानुयोग–कथानुयोगतरण्डकाष्ठैः( पादुकाभिः ) दुःखवारीणि निरस्य पारं प्रापयितारः सन्ति। तेष्विमे श्रीनरचंद्रसूरिगुरवो देवप्रभसूरयः कथानुयोगद्वारा भव्योपकारिण इदं महाकाव्यं गुरुवराणां श्रीदेवानन्दसूरीणामादेशात् षष्ठाङ्गोपनिषद्ज्ञाताधर्मकथा–त्रिषष्टिशलाकापुरुषचरित्राद्यवलोक्याष्टादशसर्गात्मकमष्टसहस्रश्लोकमितं पाण्डवचरित्रनामकं सं. १२७० संवत्सरे रचितवन्तः । एतच्च श्रीयशोभद्रसूरि–नरचंन्द्रसूरिभ्यां संशोधितम् ।

पूज्यैश्चामीभि. श्रीदेवप्रभसूरिभिर्धर्मसारशास्त्रापरनामकमृगावतीचरित्रं मुरारिकृतानर्घराघवोपरि अनर्घराघवकाव्यादर्शं च सार्धसप्तसहस्रश्लोकमितं ग्रथितमिति—

"तत्क्रमिको देवप्रभ–सूरिः किल पाण्डवायनचरित्रम् ।
श्रीधर्मसारशास्त्रं च, निर्ममे सुकविकुलतिलकः" ॥

१ दृश्यतामत्रैवाष्टादशे सर्गे श्लोक २८० ।

गनशेखरकृतन्यायकन्दलिपञ्जिकाया लिखितमस्तीति ( जैन साहित्य इतिहास पृ. ३८९ ) इत्यादि ।

पूज्याश्रेणे कोटिकाख्यगणस्य मध्यमानाम्न्या शाखाया श्रीप्रश्नवाहनकुले श्रीहर्षपुरीयगच्छे श्रीअभयदेवसूरिपट्टपरंपराया समभूवन्निति ग्रन्थस्यास्य प्रशस्तौ स्पष्ट लिखितमस्ति, परंतु गृहस्थाश्रमे तेषा का जन्मभूमिः ? कौ मातापितरौ ? कदा जन्म ? कदा दीक्षाग्रहणम् ? इत्यादिजिज्ञासायामपि किमपि साधनं न मिलितमिति न किमप्यत्र लिख्यते ।

ग्रन्थस्यास्य मुद्रापणे भावपुरस्थसंघसत्कज्ञानभाण्डागारात् पुराण हस्तलिखितं प्रतित्रय मिलितमतस्तद्दातृणा महाशयाना शा. कुंवरजी–आणंदजीतिनामधेयानामत्र महोपकारं मन्ये ।

ग्रन्थस्यास्यातिगभीरशब्दा-र्था-लंकारादेः शुद्धिविषये क्षयोपशमानुसारेण सर्वशक्त्या मया कृतेऽपि प्रयत्नेऽल्पज्ञत्व–दृष्टिदोष-मुद्राराग दोषादिना केनापि कारणेन स्खलनास्थानानि दृष्टवता विद्वद्वर्गेण कृपालुना कृपा कृत्वा संशोधनीयानीति प्रार्थये इति शम् ॥

ली० संशोधकः ॥

पुस्तकप्राप्तिस्थानम्—

**मेसर्स ए. एम, एन्ड कम्पनी.**

पालीताणा–काठियावाड.

# । सर्गविषयाणामनुक्रमणिका ।

# अथ नवमः सर्गः ।

तत्राथ पाण्डुपुत्राणां, सुकृतान्येव चिन्वताम् । उपागादन्यदा भानु-मती दुर्योधनप्रिया ॥ १ ॥ दूरात् पञ्चालसुतया, कृतप्रत्युद्गमक्रिया । साऽतिम्लानमुखी कुन्तीं, धर्मात्मजमथानमत् ॥ २ ॥ भीमादिभिः कृतौचित्या, द्रौपद्या दत्तमासनम् । साऽभ्यास्य धारयामास, राज्ञोऽग्रे चीवराञ्चलम् ॥३॥ अधोमुखी मपीश्याम-वक्त्रा यत्नं दधत्यपि । रुद्धकण्ठी(ण्ठा) तदा वाष्पै-र्वक्तुं नालंबभूव सा ॥ ४ ॥ निष्पर्यायं तु निर्यद्भि-र्मुक्तामणिकणोपमैः । अस्रैस्तं पूरयामास, सा प्रसारितमञ्चलम् ॥५॥ वत्से! जातं किमत्यन्त-मेतदत्याहितं तव । इति धर्मसुतेनोक्ता, मुक्तकण्ठं रुरोद सा ॥ ६ ॥ स्वयमाश्वासिता कुन्त्या, समुत्थाय सवाष्पया । रोदसीपूरमाक्रन्दं, मन्दं चक्रे क्रमेण सा ॥ ७ ॥ प्रमृष्टान्यपि पाञ्चाल्या, वल्कलेनाधिकाधिकम् । तस्याः प्रसस्रुरश्रूणि. नेत्रपुष्करिणीमुखात् ॥ ८ ॥ एष वत्से ! कथंकारं, पृथुलः प्रार्थनाञ्चलः । पुरो ममेति सौत्सुक्यं, पृष्टा ज्येष्ठेन साऽब्रवीत् ॥ ९ ॥

देवातिदीनया केनाप्ययन्त्रितपरित्रया । मयाऽयं भर्तृभिक्षायै, धारितस्त्वत्पुरोऽञ्चलः ॥ १० ॥ दुर्योधनस्य मद्बन्धोः, किं कोऽपि व्यसनोदयः ? । अनुयुक्तेति भूपेन, धैर्यमालम्ब्य साऽभ्यधात् ॥ ११ ॥ देव ! कुर्वन् कृतार्थानि, गोकुलानि विलोकनात् । इहाजगाम यन्धुर्वः, स्वैरं द्वैतवनावनौ ॥ १२ ॥ ततः स दातुमावासान्, कचिदासन्नकानने । आदेशिनः समा-

१ ‘ कण्ठेन्नता ’ प्रतिद्वय० । २ अकृतरक्षणया ।

दिक्षत्, ते व्यावृत्य व्यजिज्ञपन् ॥ १३ ॥ देव! देववनस्पर्द्धि, वनमस्ति मनोरमम् । अस्ति सौधं च तस्यान्त–र्यन्नास्ति द्युसदामपि ॥ १४ ॥ रक्षकेभ्यः परं तत्र, प्रवेशोऽपि न लभ्यते । इति विज्ञापितः क्रुद्धो, युष्मद्बन्धुरथादिशत् ॥ १५ ॥ संनद्धसारशौण्डीरां, चमूमादाय गच्छतः । यो भवेद्वो निषेधाय, स वध्यो भवतामपि ॥ १६ ॥ ततो हठान्निदेश्यैस्तै–र्निगृह्य वनरक्षकान् । प्रगुणीकृतमध्यास्त, तत्सौधं बान्धवः स वः ॥ १७ ॥ चतुर्दिशं तदभ्यर्णे, कर्ण–दुःशासनादयः । दत्त्वाऽऽवासान् सुखं तस्थु–रुपचन्द्रं ग्रहा इव ॥ १८ ॥ भ्राताऽथ वस्तरुश्रेणि–सश्रीके तत्र कानने । चिक्रीड नन्दनोद्याने, पतिर्दिविषदामिव ॥ १९ ॥ लीलाशिलोच्चये जातु, वनान्तर्जातु वोऽनुजः । जातु क्रीडातडागेषु, विजहार यदृच्छया ॥ २० ॥ उच्छृङ्खलश्चमूलोकः, काननं तदमर्दयत् । म्लानिं मत्तं नयत्येव, हास्तिकं[1] नलिनीवनम् ॥ २१ ॥ विमानैर्व्यानशे व्योम, सङ्ख्यातीतैः परेद्यवि । विविधायुधभीमाभिः, संकटैर्भटकोटिभिः ॥ २२ ॥ अन्यायवर्तनी[2]पान्थः, क्व रे सोऽस्ति सुयोधनः ? वनस्यास्य प्रभुः सैष, गवेषयति यत्नतः ॥ २३ ॥ इत्थं वदन्तीं तां वीक्ष्य, विद्याधरवरूथिनीम् । कटकं विकटक्षोभ–ससंरम्भमभूत्तदा ॥२४॥ युग्मम् ॥ अपनीयापणश्रेणिं, भीताः पटकुटीमयीम् । भाण्डानि वणिजो मङ्क्षु, वाहनेषु निचिक्षिपुः ॥२५॥ आदाय तनयान् बाला–नाकुला दुर्गतस्त्रियः । बद्ध्वा परिकरं सज्जी–भवन्ति स्म पलायितुम् ॥ २६ ॥ तनुत्राणं तनुत्राणं, तूणं तूणं धनुर्धनुः । इत्थमास्माकपत्तीना–मुच्चैः शुश्रुविरे गिरः ॥२७॥ राजन्यानां निवासेषु, मदादूर्जितगर्जिताः । अग्राह्यन्तातिकृच्छ्रेण, संनाहं हस्तिनस्तदा ॥ २८ ॥ केचिद्वानायुजाः[3] केचित्, काम्बोजाः केऽपि सैन्धवाः । वाहाः केचिच्च वाह्लीका–श्चक्रिरे

१ हस्तिसमूहः । २ वर्तनी–मार्गः । ३ वानायुः–अरबस्तानदेशः, तत्र जाताः ।

पाण्डवानां पुरो भानुमत्या कथितो वृत्तान्तः स्वभर्तुर्विद्याधरसंकटे पतितस्य ॥

प्रशरान्विताः ॥ २९ ॥ उन्मुखीभूय नः शौर्य-त्रुटत्संनाहसंधयः । विद्याधरचमूमूचु-रग्रानीकभटास्ततः ॥ ३० ॥ अरे ! विद्याधराः ! क्रीडन्, स्वच्छन्दं प्रभुरस्ति नः । अस्मालं केलिभङ्गेन, वयं कण्डूहरा हि वः ॥ ३१ ॥ इत्यालप्य निशाताग्रैः, शरैरभ्यर्चमुखः समम् । भटास्ते प्रथयामासु-रातिथ्यं परिपन्थिनाम् ॥ ३२ ॥ तदन्तिकमगत्वैव, तैस्तदीयैः पतत्रिभिः । व्यापारैरूर्ध्वमुखैः समम् ... ॥ ३३ ॥ शरासारैस्ततस्तेषां, घनानां व्योमचारिणाम् । नामाप्यस्मदनीकस्य, पङ्कजमफलैरेव, ममसमन्मनोरथः ॥ ३३ ॥ शरासारैस्ततस्तेषां, घनानां व्योमचारिणाम् । नामाप्यस्मदनीकस्य, पङ्क-मेवानयत् तदा ॥ ३४ ॥

सोमदत्त-कलिङ्ग-भगदत्त-जयद्रथाः । विशल्य-भूरिश्रवसौ, चित्रसेन-बृहद्बलौ ॥ ३५ ॥ सुशर्मा कृतवर्मा च, राजानोऽन्येऽपि भूरिशः । ततो डुढौकिरे योद्धुं, स्वयं सह नभश्वरैः ॥ ३६ ॥ युग्मम् ॥ आयुधैः शक्ति-नाराच-शल्य-शूल-शरादिभिः । प्रजह्रुः पाणिमुक्तैश्च, यन्त्रमुक्तैश्च ते समम् ॥ ३७ ॥ अथ तेषां विमानास्ते, भिन्ना अपि तदाशुगैः । शरोमाञ्चा इव बभु-र्जयलक्ष्मीकटाक्षिताः ॥ ३८ ॥ नैतन्न्याय्यमहो युद्धं, भूमिस्थगगनस्थयोः । व्योमचारिचमूनाथः, स्वान् भटानित्यनोचत ॥ ३९ ॥ संहृत्याथ विमानानि, सेनया चतुरङ्गया । बभूव सोऽभ्यमित्रीणः, पुरंदर इवावनौ ॥ ४० ॥ संमोहं मोहनास्त्रेण, लम्भयामास नो नृपान् । अबुध्यन्त न तेऽस्त्राणि, पाणिभ्यः पतितान्यपि ॥ ४१ ॥

अभूत् कर्णः समाकर्ण्य, राजन्यानां पराजयम् । दर्पोन्मदिष्णुदोर्दण्डः, सानीकः समरोन्मुखः ॥ ४२ ॥ अथाभ्यधत्त राधेयं, मुदा विद्याधरेश्वरः । अद्य त्वयि कृतोद्योगे, पूर्णं मे कर्ण ! कौतुकम् ॥ ४३ ॥ चण्डगाण्डीवधन्वानं, स्पर्धसे यस्त-

१ मेघपक्षे जलवृष्टिभिः । २ शत्रुसमुखगामी-वीर इत्यर्थः ।

मर्जुनम् । इदानीं तस्य ते कर्ण !, दिष्ट्या द्रष्टास्मि विक्रमम् ॥ ४४ ॥ इत्युक्तस्तेन राधेयः, सुविधेयधनुःक्रमः । मदीयं विक्रमं पश्ये-त्युक्त्वा चिक्षेप सायकान् ॥ ४५ ॥ तस्याक्षामभुजस्थाम्न-स्तादृशीं लघुहस्तताम् । सोऽपि विद्याधराधीशः, स्मेरचक्षुरवेक्षत ॥ ४६ ॥ निजमादान-संधाना-कृष्टि-विच्छेदगोचरम् । अनघं लाघवं सोऽपि, राधासूनोरदर्शयत् ॥ ४७ ॥ तयोर्बभूव सुभट-स्पृहणीयो महारणः । तस्थौ माध्यस्थ्यमास्थाय, जयश्रीरुभयोरपि ॥ ४८ ॥ अथ विद्याधरेन्द्रेण, बाणैर्मर्मणि ताडितः । पलायनकलां नव्यां, राधेयोऽध्यापितस्तदा ॥ ४९ ॥ कर्णे नष्टे भवन्ति स्म, खेचरा जितकाशिनः । सर्वोऽपि सुमनायेत, निर्जिते दुर्जये ह्यरौ ॥ ५० ॥

अथ क्रुद्धो भवद्बन्धु-र्बन्धुभिर्निखिलैः सह । वीरंमन्यमरिं योद्धु-मढौकत समातुलः ॥ ५१ ॥ विलोक्य मूल[1]संनाह-सहितं तं हसन्मुखः । अखर्वगर्वगरिमा-ऽवादीद्विद्याधरेश्वरः ॥ ५२ ॥ सुयोधन ! तवायं किं, दोर्मदः ? श्रीमदोऽथवा ? । यदस्मदीयमुद्यानं, सौधं चापि विलुप्यते ॥ ५३ ॥ असौ मदं[2]गदः कोऽपि, निर्निदा[3]नोऽस्ति यस्तव । तच्चिकित्सां विधास्यामि, निजायुधमहौषधैः ॥ ५४ ॥ अथाभ्यधाद्भवद्बन्धु-रहो विद्याधरब्रुव ! । उपालम्भैरलं यस्य, शक्तिस्तस्य जगत्त्रयी ॥ ५५ ॥ आत्तैः सौधादिभिर्बाह्यैः, किमेभिर्वस्तुभिर्मम । जीवितव्यमपि क्षिप्रं, तवाऽऽदास्ये सह श्रिया ॥ ५६ ॥ इति जल्पन्नसौ शत्रु-माजघान शितैः शरैः । प्रतिपक्षो हि नोपेक्ष्य, इत्येषा वः कुलस्थितिः ॥ ५७ ॥ सर्वैः सर्वात्मना शस्त्रैः, सोऽप्यरातिरयुध्यत । द्विषा विक्रमिणाऽऽक्रान्तः, किं नु कोऽपि प्रमाद्यति ? ॥ ५८ ॥ शराघातैर्भवद्बन्धो-रन्धंभावुकविक्रमाः । सममेवारिवर्गीणाः,

---

१ मूलं-मुख्यम् । २ गर्वव्याधिः । ३ कारणरहितः ।

पलायांचक्रिरे क्षणात् ॥ ५९ ॥ अथाम्मूल्य सुखग्राह्य-मेकाकिनमरिं पुरः । अधावत भवद्बन्धुः, सबन्धुर्विधृतायुधः ॥ ६० ॥
काण्डीरः सोऽतिशौण्डीरः, क्रुद्धः क्रोडं इव श्वभिः । कृत्वा कुण्डलनां रुद्धः, सर्वैर्व्यावृत्त्य खेचरैः ॥ ६१ ॥ युध्यमानः स
भूयोभि-स्तैः संभूय नभश्चरैः । खेदयित्वा क्रमाद्बद्धा, गृहीतः सहितोऽनुजैः ॥ ६२ ॥ निविडैर्निगडैः पूर्वं, दृढं संयम्य
पादयोः । एकैव खेचरैस्तेषां, चिक्षिपे शृङ्खला गले ॥ ६३ ॥ पुरस्कृत्य पदातीन् वः, शतमप्यनुजन्मनः । तदुपेत्य निजं
सौध-मध्यस्थान खेचरेश्वरः ॥६४॥ सर्वां स श्रियमादत्त, राजवर्गस्य पश्यतः । युष्मद्बन्धूंश्च धत्ते स्म, दुःसहे तपनातपे ॥६५॥
पत्युश्च देवराणां च, दृष्ट्वाऽहं तादृशीं दशाम् । ततोऽत्युच्चैः कृताक्रन्दा, रणक्षेत्रमुपागमम् ॥ ६६ ॥ निरौजस्कान्निजांस्तत्र,
मेदिनीशानवादिशम् । जयद्रथ ! रथः क्व ?, बृहद्बल ! बलं क्व ते ? ॥ ६७ ॥ दृष्टा कला कलिङ्गेश !, लज्जालेशोऽपि
नास्ति वः । यद्बद्धा नीयते स्वामी, पुरतः पश्यताममी ॥ ६८ ॥ इत्युक्तास्तेऽप्यधः कृत्वा, वक्त्रं पश्चान्निवृत्त्य च । दूरे जगृ-
दृगालोका-नाश्रित्य विषमां महीम् ॥ ६९ ॥ नित्यं विमानमारोप्य, दीनान्निगडितांस्तथा । खेचराः कटकस्यास्य, दर्शयन्ति
तवानुजान ॥ ७० ॥ अजल्पंश्चैष वः स्वामी, धृतोऽसमत्स्वामिना हठात् । अमुं स मोचयत्वाशु, सन्ति यस्योर्जिता भुजाः
॥ ७१ ॥ तेऽपि नो बान्धवा बाष्प-जलार्द्रां चिक्षिपुर्मुहुः । स्वराजन्यजने मोक्ष-प्रार्थनापिशुनां दृशम् ॥ ७२ ॥ राजानस्तेऽ-
प्यजायन्त, लज्जयाऽवनताननाः । चिरराऽऽकाङ्क्षिणोऽभीक्ष्णं, वीक्षमाणा इव क्षितिम् ॥७३॥ प्रभोर्बन्दिग्रहात्तस्मात्, तस्माच्च
स्वपराजयान । कर्णो जीवन्मृतावस्थ-मात्मानं मन्यतेऽधुना ॥ ७४ ॥ तमुदन्तमथ ज्ञात्वा, भीष्म-द्रोण-कृपाः स्वयम् ।

१ (काण्डीरो बाणवान् । २ क्रोडः शूकरः ।) ३ वेष्टनम् ।

समर्प्य धृतराष्ट्रस्य, राज्यं वेगादिहाययुः ॥ ७५ ॥ दुःखादधोमुखीमुच्चै, रुदन्तीं पादयोः पुरः । गाङ्गेयो मां बृहत्तातः, सगद्गदमभाषत ॥७६॥ वत्से ! मा स्म रुदः सत्य-मीदृशी भवितव्यता। मया निषिद्धोऽप्यागच्छत्, पतिस्तेऽत्र किमन्यथा ? ॥ ७७ ॥ इदानीमपि नान्येन, पतिस्ते मोचयिष्यते । एकं गत्वा प्रपद्यस्व, शरणं तपसः सुतम् ॥ ७८ ॥ स त्वद्भर्तृकृतां-श्चित्ते, नापकारान् करिष्यति । विशेषेणोपकर्तारः, साधवो ह्यपकर्तरि ॥ ७९ ॥ इदं गुरुवचः कृत्वा, हृदि तूर्णमिहागमम् । संप्रति स्वां पुरीं सोऽपि, यियासुः खेचरेश्वरः ॥ ८० ॥ इतो यदुचितं देव !, तद्विधेहि धियांनिधे ! । कुलव्योममणे ! नूनं, तेजोहानिरियं हि ते ॥ ८१ ॥

श्रुत्वा मन्युमयीमेनां[1], भीमो भानुमतीगिरम् । अपवार्य प्रियां मन्द-मवादीत् फुल्ललोचनः ॥ ८२ ॥ देवि ! दिष्ट्याऽधुनैवेदं, त्वत्केशग्रहसंभवम् । निर्यातयितुमारेभे, वैरं दैवेन पश्य[3] नः ॥ ८३ ॥ सुयोधनवधौत्सुक्य-मार्येणात्माज्ञया पुरा । विनिवारितमस्माक-मार्यादेशो हि मूर्धनि ॥८४॥ आर्योऽधुनाऽप्युदास्ते चेत्, तत्र शत्रौ विपद्गते । किं ततः स्यान्न नः श्रेयो ?, न ह्येवं तु करिष्यति ॥ ८५ ॥ येन स्नेहातिरेकेण, वने ऽस्मिन्नयमाययौ । नार्येण स्मर्यते सोऽपि, प्रियंवदनिवेदितः ॥८६॥ अथ भानुमतीमाह, स्नेहार्द्रस्तपसः सुतः । मद्बन्धोरपि हा वत्से !, कीदृग्व्यसनमाययौ ? ॥ ८७ ॥ तमहं मोचयिष्यामि, भ्रातरं नात्र संशयः । बद्धस्तु यन्मदीयोऽपि, बान्धवस्तद्दुनोति माम् ॥ ८८ ॥ इत्याश्वास्य स्नुषां स्नेहा-द्रत्वैकान्ते महीपतिः । भीमस्य याज्ञसेन्याश्च, पश्यतोः पार्थमभ्यधात् ॥ ८९ ॥ बद्धा केनापि पापेन, गृहीतं व्योमचारिणा । गच्छ वत्स !

१ शोकमयीम् । २ प्रतिकर्तुम् । ३ 'पश्यत' प्रतित्रय० ।

त्राक्रन्मं, विमोचय सुयोधनम् ॥९०॥ अथ भीमोऽभ्यधादार्य !, किं नः पश्यसि विप्रियम् ? । दैवेनापि कृतं येन, सहसे नाम्मदीप्सितम् ? ॥ ९१ ॥ गरदान–जलक्षेप–द्यूत–केशग्रहादयः । अपकारा रिपोरस्य, कथमार्यस्य विस्मृताः ? ॥ ९२ ॥ ऊचे धर्मसुतो वत्स !, यान्धवस्य कनीयसः । तस्याप्यापत्प्रतीकारो, मय्येवायततेतमाम् ॥ ९३ ॥ निजमापद्गतं सन्तो, नोपेक्षन्ते कदाचन । भानुमान् विपदं हन्ति, पङ्कजानां प्रगे प्रगे ॥ ९४ ॥ गोत्रं त्रातुमहोरात्रं, कुलीनानामुपक्रमः । आम्नातो मुनिभिः पूर्वं–स्कुलीनो हि गोत्रहा ॥ ९५ ॥ अपि दुर्वृत्तमात्मीयं, त्रायन्ते भुवनोन्नताः । अप्युष्णं न हि पुष्णन्ति, पयोदाः किमिरंमदम् ॥ ९६ ॥ यद्यप्यालोकयत्यस्तं, पूर्णोऽसौ प्रतिपूर्णिमम् । तथाप्युपकरोत्येव, चन्द्रं दर्शगतं रविः ॥ ९७ ॥ एते शतं वयं पञ्च, यावद्वैरं परस्परम् । परैस्तु परिभूता हि, वयं पञ्चोत्तरं शतम् ॥ ९८ ॥ तद्गच्छत्वर्जुनो बन्धुं, विमोचयतु बन्धनात् । ईदृगन्यूपकाराय, भूयोऽप्यवसरः कुतः ? ॥ ९९ ॥

आदेशमेनमानाय, ज्यायसस्तास्थिवान् रहः । ततो विद्यामुखेनेन्द्रं, पार्थः प्रार्थितवांश्चमूम् ॥ १०० ॥ इन्द्रेण प्रहितम्तूर्णं, शौण्डीरभटसंकटाम् । दधद्वैमानिकीं सेना–माययौ चन्द्रशेखरः ॥ १०१ ॥ ऐन्द्रं विमानमारूढः, खेचरेन्द्रैरनुद्रुतः । आराध्यवर्गमानम्य, प्रतस्थे कपिकेतनः ॥ १०२ ॥ अलंकृतानि संनद्धै–र्भटैर्गच्छन्ति दूरतः । पुरो विमानवृन्दानि, ददृशुः पार्थसैनिकाः ॥ १०३ ॥ तन्मध्ये मानुजं वद्धं, संवर्मितचमूवृतम् । दृष्ट्वा दुर्योधनं जिष्णु–र्वेगात् तानन्वधावत ॥ १०४ ॥ ते पार्थसैनिकैरुक्ता, रे रे ! तिष्ठत तिष्ठत । बन्धुर्दुर्योधनस्याय–मागादनुपदी हि वः ॥ १०५ ॥ खेचराणामभूत् तेषां. वचनं

१ इंरंमदं–वडवानलम् । २ अमावास्यास्थितम् ।

तद्विपोपमम् । नव्यपीयूषगण्डूष-तुल्यं दुर्योधनस्य तु ॥ १०६ ॥ ततः फाल्गुनवर्गीणाः, पश्यन्तो लोप्त्रमात्मनः[1] । समं
तैः खेचरैर्योद्धु-मारभन्त खरैः शरैः ॥ १०७ ॥ स्वामिनः कीर्तिसर्वस्वं, परिवृत्य सुयोधनम् । शौण्डीरमानिनस्तेऽपि, प्रत्य-
युध्यन्त खेचराः ॥ १०८॥ लग्नेऽत्र सैन्ययोर्युद्धे, कपिकेतुरुदायुधः । अभ्यर्णमभ्यर्णमित्रीणः[2], प्रेक्षांचक्रे सुयोधनम् ॥१०९॥
सोऽपि फाल्गुनमालोक्य, दध्यौ ध्यामलिताननः[3] । मृत्युमेवाधुना धातः !, क्रुद्धः किं न करोषि मे ॥ ११० ॥ यन्मे बन्दि-
ग्रहादस्मा-दर्जुनेन विमोचनम् । हृन्मर्मभेदकृन्नित्यं, मृत्योरप्यधिकं हि तत् ॥ १११ ॥ इति चिन्तापरे तस्मिन्, क्रोधाद्विद्या-
धरेश्वरः । तस्यैवाभ्यर्णमभ्येत्य, स्थितोऽद्राक्षीत् पुरोऽर्जुनम् ॥ ११२ ॥ विनिवार्य ततो युद्धं, धार्तराष्ट्रस्य पश्यतः । स
गत्वा भूमिलुठनै-रपतत् पार्थपादयोः ॥ ११३ ॥ उत्थाप्यालिङ्गितः स्नेहा-न्निविडं पाण्डुसूनुना । सोऽत्यन्तविनयी नीचै-
र्निविष्टो विष्टरे पुनः ॥ ११४ ॥ चित्राङ्गद ! कथा केय-मिति पृष्टः किरीटिना । कथयामास सोऽप्युच्चै-र्धार्तराष्ट्रस्य
शृण्वतः ॥ ११५ ॥

कुमार ! त्वद्विसृष्टोऽहं, स्वां गच्छन्नगरीं पुरा । मार्गे नारदमद्राक्षं, मूर्ध्नाऽस्प्राक्षं च तत्क्रमौ ॥११६॥ सोऽथ मां मुदि-
तोऽवादी-च्चित्राङ्गद ! कथं चिरात् । दृष्टोऽस्यतीव सोत्कण्ठं, मनो मे संगमाय ते ॥ ११७ ॥अजल्पिषमृषीन्द्रं त-मिन्द्रकील-
शिलोच्चये । आदिनाथनमस्यार्थं, गतोऽस्मि भगवन् ! पुरा ॥ ११८ ॥ कीर्तिकोलाहलं तत्र, किरातविजयोर्जितम् । पार्थ-
स्याकर्ण्य यातोऽस्मि, तं द्रष्टुं रथनूपुरम् ॥ ११९ ॥ दृष्टे तस्मिन्निजान् बन्धून्, व्यस्मार्षमतिविस्मितः। स मे तत्र गुरुर्भूत्वा,



१ चौर्यधनम् । २ शत्रुसंमुखगन्ता । ३ श्याममुखः ।

मनुःपारायणं जगौ ॥ १२० ॥ खेचराः शतमन्येऽपि, प्रययुस्तस्य शिष्यताम् । तस्याहमेव शिष्येषु, प्रियोऽस्मि निखिले-ष्वपि ॥ १२१ ॥ इदानीं तु बहोः कालाद्, बन्धूनां मिलितोऽर्जुनः । निजामहमयं यामि, तद्विसृष्टश्चिरात् पुरीम् ॥ १२२ ॥ जगाद नारदः स्मित्वा, चित्राङ्गद ! सुयोधनः । त्वद्गुरुं बन्धुभिः सार्धं, हन्त हन्तुमुपेत्यसौ ॥ १२३ ॥ पश्चादपि गुरु-भ्रान्त्या, निधातासि शुचं यदि । अधुनैव प्रतीकार-स्तच्चित्राङ्गद ! चिन्त्यताम् ॥ १२४ ॥

मुनावेवं वदत्येव, खेचरानुचरो मम । आगत्य कथयामास, क्रोधाग्निसमिधं कथाम् ॥ १२५ ॥ अस्ति क्रीडावनं देव !, यत्ते द्वैतवनान्तिके । तदेत्योपाद्रवद्दूरं, विरोधीव सुयोधनः ॥ १२६ ॥ प्रियाभिरपि ते देव !, लूना यस्य न पल्लवाः । आकन्दं तेन माकन्द-खण्डश्चक्रे स खण्डशः ॥ १२७ ॥ यदीयकुसुमामोदं, वेद[3] मूर्द्धैव तावकः । विलूनप्रसवाः प्रापु-श्चम्प-काश्चानुकम्पनाम् ॥ १२८ ॥ सेचं सेचं त्वया शश्व-च्छालितं यदपत्यवत् । तदभूत् संप्रति प्राप्त-लवनं कदलीवनम् ॥१२९॥ भास्वन्मरकतस्तम्भं, स्फटिकोपलभित्तिकम् । स सौधं तत्त्वाध्यास्ते, बलाद्व्यापाद्य रक्षकान् ॥ १३० ॥ अहं तूत्प्लुत्य नभसा, तवेत्याख्यातुमागतः । इतो यदुचितं देव !, त्वं तदाधातुमर्हसि ॥ १३१ ॥ निशम्यामूदृशीं वाचं, नारदस्य च तस्य च । क्रोधाद्दुर्योधनं हन्तु-मुत्सुकोऽहमधाविषम् ॥ १३२ ॥ यदार्ये तपसः पुत्रे-ऽप्यमुना दुर्मनायितम् । असौ तेनांहसा बद्धः, कोऽहमस्य पुरः पुनः ॥ १३३ ॥ अथोवाच पृथासूनु-श्चित्राङ्गद ! मुखेन मे । जवात् तवादिशत्यार्यो, दुर्योधनविमोचनम् ॥ १३४ ॥ भानुमत्यधुना येन, भर्तृभिक्षाञ्चलं पुरः । उदश्रुर्धृतवत्यस्ति, तेनार्यः खिद्यतेतमाम् ॥ १३५ ॥ तयोरेतां गिरं

१ क्रोधाग्नौ काष्ठसमाम् । २ मूलपर्यन्तम् । ३ वेत्ति ।

श्रुत्वा, धार्तराष्ट्रो व्यचिन्तयत् । क्षते प्रक्षिपति क्षारं, हा ! धिग्वेधाः पुनःपुनः ॥१३६॥ ततश्चित्राङ्गदोऽवादीत्, कुमार ! मुखेन्दु-स्फारसौरभः । आदेशो मे नरेशस्य, शिरोमाल्यमनारतम् ॥ १३७ ॥ भ्रातरं प्राभृतीकृत्य, धर्मसूनोरिमं पुनः । मुच्छलज्ज्योत्स्नं, करिष्याम्यधुना ध्रुवम् ॥ १३८ ॥ विमोच्य बन्धनाद्बन्धु-मानम्य च धनंजयः । चित्राङ्गदसमेतोऽथ, ज्येष्ठान्तिकमुपागमत् ॥ १३९ ॥

विमानकिङ्किणीकाण-श्रवणेनोन्मुखीकृतैः । नभस्यदृश्यताऽऽगच्छन्, बन्धुभिः स विकस्वरैः ॥ १४० ॥ नयनैः स्नेहकल्लोल-निर्निमेषैरुदैक्ष्यत । कुन्त्या च याज्ञसेन्या च, स विमानशतान्वितः ॥ १४१ ॥ दृष्ट्वा पार्थं पृथुश्रीक-मश्रीकं च पतिं तदा । भानुमत्या मनो जज्ञे, संकीर्णरससंकुलम् ॥ १४२ ॥ समुत्तीर्य विमानेभ्यः, सर्वे नेमुर्युधिष्ठिरम् । दुर्योधन-स्तथैवासी-दप्रणन्तुमनाः पुनः ॥१४३॥ आपादमौलि तस्यासी-न्न्यस्ता सत्यं कुशीलता । यदस्य नम्रता नाभूद्, धर्मजेऽपि महात्मनि ॥ १४४ ॥ असौ द्राघीयसो बन्धा-दचंक्रमण इत्यतः । उत्पाट्य खेचरैर्नीतो, नृपाभ्यर्णे सुयोधनः ॥ १४५ ॥ वेगादागत्य कुन्ती तु, नीवाराक्षततण्डुलैः । आशीःपरम्परापूर्वं, तं तदानीमवर्धयत् ॥ १४६ ॥ राज्ञाऽऽश्लिष्यत स प्रीत्या, मत्सरादनमन्नपि । न ह्यौचित्यविधौ सन्तः, परौचित्यव्यपेक्षिणः ॥ १४७ ॥ अजल्पत्तं नृपो वत्स !, किमु तेजस्विनोरपि । राहुबन्दिग्रहो नैव, सूर्याचन्द्रमसोर्भवेत् ? ॥ १४८ ॥ नाभविष्यत्तवावश्य-मसावपि पराजयः । यदि द्वैतवनादस्मा-न्नाया-स्यामः पुरः पुरा ॥ १४९ ॥ अनाथाः कुरवो वत्स !, बाढं सीदन्ति संप्रति । तत्तानवार्यदोर्वीर्य !, गत्वा नय सनाथताम्

१ 'कल्लोलैः' प्रत्यन्तर० । २ अनमनन्चित्तः ।

दुर्योधनं मोचयित्वा युधिष्ठिर-समीप आ-नयनम् ॥

॥ १५० ॥ एवमाभाष्य सत्कृत्य, भूपतिर्वन्यवस्तुभिः । पर्यश्रुः सानुजन्मानं, विससर्ज सुयोधनम् ॥ १५१ ॥ सोऽपि
कृष्णामुन्नम्रपूर्णी-मेवाख्याय ययौ ततः । दुरात्मन्युपकारोऽपि, नश्येन्नीरं मराविव ॥ १५२ ॥ चित्राङ्गदं विसृज्याथ, चन्द्र-
शेखरमप्यनु । तस्थौ तास्ताः कथाः कुर्व-न्नुर्वीशः सह जिष्णुना ॥१५३॥ सानुकम्पा नृपस्यासीत्, तत्र दौर्योधनी कथा।
अपरेषां तु बन्धूना-मुपहासपुरःसरा ॥ १५४ ॥

सुखेन तस्थुषां तेषां, गते भूयस्यनेहसि । प्रातः प्रसृमरं व्योम्नि, रजो दृष्टिपथं ययौ ॥ १५५ ॥ सायुधव्रातपादात[2]-
मुदाताश्वीयहास्तिकम् । गन्धोद्धूतवनान्तेन, तैरनीकमदृश्यत ॥ १५६ ॥ परिणेतुं पुरो गच्छ-न्नभ्येत्य सपरिच्छदः ।
जयद्रथोऽनमत् कुन्तीं, दुःशल्यायाः पतिस्तदा ॥ १५७ ॥ आनन्द्याशीर्भिरर्थ्याभि-र्जामातेति सगौरवम् । कियन्तमपि
कालं सा, तं तत्राध्यापयन्मुदा ॥ १५८ ॥ दिव्यया रसवत्याऽथ, जिष्णुर्विद्योपहूतया । आतिथ्यं प्रथयांचक्रे, तस्य मातुर्नि-
देशतः ॥ १५९ ॥ जातु क्रीडाविहारेण, पाण्डवेषु गतेषु सः । छलाज्जहार पाञ्चालीं, जानकीमिव रावणः ॥ १६० ॥
दुष्यन्ति हि दुरात्मानः, सुतरां सत्कृता अपि । दन्दशूको दशत्येव, पीयूषमपि पायितः ॥ १६१ ॥ पञ्चानामपि भर्तृणां, प्रत्येकं
नाम गृह्णती । ह्रियमाणा च पाञ्चाली, चक्रन्दोच्चैःस्वरं तदा ॥ १६२ ॥ उपश्रुत्य तमाक्रन्दं, प्रेयस्या दुःश्रवं ततः । अभ्यर्ण-
वर्तिनौ भीमा-र्जुनौ क्रोधादधावताम् ॥ १६३ ॥ आदिशत् तौ तदा कुन्ती, वत्सावेतस्य जीवितम् । रक्षतं यततो मा स्म,
दुःशल्या विधवा भवत् ॥ १६४ ॥ सांयुगीनभुजौ वीक्ष्य, तावायान्तौ जयद्रथः । संवर्मितचमू रौद्रो, रणायाभिमुखोऽभवत्

१ काले । २ पदातीनां समूहः पादातम् ।

॥ १६५ ॥ भीमसेनो गदास्तम्भं, दम्भोलिमिव दोलयन् । दन्तिनः पातयामास, सर्वतः पर्वतानिव ॥ १६६ ॥ वृकोदरो
दरोद्रेकात्, कांदिशीके द्विषद्दले । शेषं वटमिवारामे, दग्धेऽद्राक्षीज्जयद्रथम् ॥ १६७ ॥ अङ्गमाविश्य पार्थेन, तदेकाकी
जयद्रथः । उत्तरीयेण तस्यैव, दस्युबन्धमबध्यत ॥ १६८ ॥ भल्लीं किरीटिनस्तूणा–त्तूर्णमादाय मारुतिः । मुण्डयित्वा
व्यधात् क्रोधात्, तस्य पञ्चशिखं शिरः ॥ १६९ ॥ आदाय द्रौपदीं बाहौ, तमुवाच वृकोदरः । मातुरादेशतः कुन्त्या, जीव-
न्मुक्तोऽसि याहि रे ॥ १७० ॥ पाञ्चाल्याः पुरतस्तेन, लम्भितस्तां विडम्बनाम् । लज्जानम्रमुखोऽवादीद्–भीमसेनं जय-
द्रथः ॥ १७१ ॥ अरे ! शौण्डीरतागर्व–पीनोदर ! वृकोदर ! । निर्विवेक ! ममाप्येक–मिदमाकर्ण्यतां वचः ॥ १७२ ॥
पञ्चानामपि युष्माकं, नियतं मृत्युहेतवः । पञ्चाप्येते शिखाबन्धा, ज्ञायन्तां धूमकेतवः ॥ १७३ ॥ तस्याततायिनो वाक्य–
मपकर्ण्यैव निर्भयौ । आगत्य मिलितौ ज्येष्ठ–बन्धोर्भीम–धनंजयौ ॥ १७४ ॥ जयद्रथस्य वृत्तान्तः, सैष तेषां परस्परम् ।
चिरं सहस्ततालस्य, हास्यस्य स्यान्निबन्धनम् ॥ १७५ ॥
अन्यदा नारदस्तेषा–मेकत्रैव निषेदुषाम् । स्वैरमाजग्मिवांस्तैश्च, सप्रश्रयमुपास्यत ॥ १७६ ॥ मुनीन्द्र ! कथयास्माकं,
संप्रत्यागम्यते कुतः ? । इति मारुतिना पृष्टः, सोऽथ प्रमुदितोऽब्रवीत् ॥ १७७ ॥ इति युष्मद्विसृष्टस्य, दुष्टवृत्तेः कुतूहलात् ।
दुर्योधनस्य वृत्तान्तं, विदित्वाऽहमिहाऽऽगमम् ॥ १७८ ॥ हसन्नाह पुनर्भीमः, कथ्यतां मुनिपुङ्गव ! । इतस्तदा कथं यातः ?,
कथं चास्ते सुयोधनः ? ॥ १७९ ॥ पुनर्मुनिरभाषिष्ट, विषण्णो वः स बान्धवः । दत्त्वा दुःशासनस्कन्धे, बाहुं प्रस्थित-

१ वज्रम् । २ भयाधिक्यात् । ३ मुमूर्षोः । ४ अनाकर्ण्य ।

मानितः ॥ १८० ॥ विमर्शैः शृङ्खलाबन्धै-र्भग्नचंक्रमणक्रमान् । पश्यन्निजानुजान्मार्गे, सोऽन्तर्मन्युमयोऽभवत् ॥ १८१ ॥ अथा-र्गणय एराव-मत्तः शाल्मलिभूरुहः । दुःशासनेन शनकैः, समानीयोपवेशितः ॥ १८२ ॥ कर्णोऽपि ज्ञातवृत्तान्तः, स्कन्धावारनिवेशितः । एत्य तूर्णं तदभ्यर्णे, सान्त्वयामास तं शनैः ॥ १८३ ॥ यस्त्वं दुस्तरया देव !, चित्राङ्गदमहापदा । विमुक्तोऽसि तदस्माकं, नास्ति न्यूनं हि किंचन ॥ १८४ ॥ धार्तराष्ट्रोऽप्यभाषिष्ट, साक्षेपं शोकसंकुलः । सूतात्मज ! तव क्षुण्णं, जीवतो नास्ति किंचन ॥ १८५ ॥ अलब्धपूर्वी न्यक्कार-महं त्वस्मि सुयोधनः । ततः प्राणैः किमेभिर्मे, पराभवमलीमसैः ॥ १८६ ॥ चित्राङ्गदेन बद्धोऽस्मि, तदेकमपि दुःसहम् । यन्मोचनं तु पार्थेन, सा हि तस्यापि चूलिका ॥ १८७ ॥ प्रायोपवेशनं तस्मात्, ममास्तु स्वस्ति वोऽधुना । गत्वा कुरुत सर्वेऽपि, सनाथं हस्तिनापुरम् ॥ १८८ ॥ अथाभ्यधत्त राधेयः, नेदं देव ! दूयासि किम् ? । रणे हि बहुशः शूरा, जीयन्ते च जयन्ति च ॥ १८९ ॥ भूमिवासपणक्रीतं, तव पार्थेन मोचनम् । पाण्डवेया यदेतेऽपि, रमन्ति भवतः क्षितौ ॥ १९० ॥ भूमिवासाधमर्णा हि, कुलीनाः कुलवेदिनः । राजन्याः शत्रुसंरुद्धं, नेतारमुपकुर्वते ॥ १९१ ॥ न बन्धो न च मोक्षोऽयं, स्मरणीयस्त्वया प्रभो ! । विपदः स्मर्यमाणा हि, कुर्युर्दुःखं पदे पदे ॥ १९२ ॥ अथ कर्णे वदत्येवं, सर्वे शिविरपार्थिवाः । एत्य संबोध्य चात्यन्तं, पुरीं निन्युः सुयोधनम् ॥ १९३ ॥ गतत्रप न निर्व्रीड, सव्रीडः किं त्वधोमुखः । शयानः शयनीयेऽसौ, निनाय दिवसान् बहून् ॥ १९४ ॥

अथ जागग्नोन्मादः, सचिवैः सर्ववचस्विभिः । पटहं दापयामास, हस्तिनापुरवीथिषु ॥ १९५ ॥ यः कश्चिदस्त्रैः शस्त्रैश्च,

---

१ क्षुण्णं-पराभूतं-नष्टमित्यर्थः । २ अनशनम् ।

निंधायास्त्राणि संनिधौ ॥ २२५ ॥ उज्झितः शान्तचेतोभि–स्तैस्तदा चिरसंस्तुतः । अस्त्रव्याजाद्रसो वीर–स्तदुपास्तिमिवाकरोत् ॥ २२६ ॥

अथ पाण्डुसुतैः पांसु–पूरो दूरप्रसृत्वरः । अभितः करभीकण्ठ–रोमधूम्रो व्यलोक्यत ॥ २२७ ॥ अतिजङ्घालमुत्तालफालग्रस्तनभस्तलम् । तैरश्वीयमनल्पीयः, प्रेक्षांचक्रे समन्ततः ॥ २२८ ॥ जितोद्दामतडिद्दाम–वर्षद्वर्षास्विवाम्बुदाः । सिन्दूरिणः स्रवद्गण्डा–स्तैरदृश्यन्त दन्तिनः ॥ २२९ ॥ अथ वेणुलतां पाणौ, बिभ्राणाः क्रूरमूर्तयः । केचन द्वाःस्थवर्गीणा–स्तानागत्य बभाषिरे ॥ २३० ॥ अरे वनचराः शीघ्रं, स्थानमेतद्विमुञ्चत । राज्ञो धर्मावतंसस्य, निवासोऽत्र भविष्यति ॥ २३१ ॥ तेषां दुर्वचसा तेन, समुत्सार्य शमं बलात् । भीमान्तःकरणे क्रोधः, समर्थोऽस्थाप्यत क्षणात् ॥ २३२ ॥ आकस्मिकतिरस्कारै, रौद्राकारो वृकोदरः । साटोपं कोपकम्प्रेण, पाणिनोपाददे गदाम् ॥ २३३ ॥ अभाषिष्ट च रे दुष्टाः !, कः कालेन कटाक्षितः ? । बलान्मौलिमणिं हन्त, वासुकेः को जिघृक्षति ॥ २३४ ॥ कः केसरिकिशोरस्य, कर्षति स्कन्धकेसरान् ? । तिष्ठतोऽत्र सुखेनास्मान्, को नु निर्वासयिष्यति ? ॥ २३५ ॥ वयं निर्वासयिष्यामो, युष्मानिति विवक्षवः । ते भीमेन तथा क्रोधा–द्गले धृत्वाऽपहस्तिताः ॥ २३६ ॥ उच्चैःकारं कृताक्रोशाः, क्रोशमात्रां भुवं यथा । उत्पतन्तः पतन्तश्च, जग्मुः कन्दुकलीलया ॥ २३७ ॥ उल्लुण्ठैर्वेत्रिवण्ठैस्तै–र्गत्वा संवर्मितां चमूम् । समानीय निमेषार्धात्, सर्वेऽरुध्यन्त पाण्डवाः ॥ २३८ ॥

१ ' विधाय ' प्रतित्रय० । २ अश्वानां समूहः । ३ ' र्षासुजाम्बु ' प्रतिद्वय० । ४ ' तक्षकात् ' प्रतित्रय० । ५ निरस्ताः । ( ६ वण्ठशब्दो भृत्यवाची ) नपुंसकवाची दृश्यते ।

ऊर्जस्वलनयस्नेत्रो–निस्तुषीकृतकान्तयः। मावज्ञमनसस्तेऽपि, जगृहुः स्वं स्वमायुधम् ॥ २३९ ॥ तैः संग्रामकृतोद्योगै–रग्रनारैः पुरस्कृताः। अनेशन् पञ्चभिः सिंहै–रेणश्रेणीव सा चमूः ॥ २४० ॥

सेनानुगमशौण्डेषु, पाण्डवेष्वेत्य पृष्ठतः। नृपलक्ष्मा पुमानेक–स्तेपामुटजमाविशत् ॥ २४१ ॥ षड्दिनोपोषिते कुन्ती–कृष्णे धर्मकृतत्परे। पर पुरुषमालोक्य, परमं क्षोभमीयतुः ॥ २४२ ॥ पाण्डवेषु दवीयस्सु, ते उभे भयकातरे। निमील्य केवलं नेत्रे, हृदि सस्मरतुर्जिनम् ॥२४३॥ बलाद्ग्राही स जग्राह, नरेन्द्रो द्रुपदात्मजाम्। हयमारोहयच्चोच्चै–रुदीर्णरुदितध्वनिम् ॥२४४॥ तुरङ्गान्तरमारुह्य, न प्रसभ जहार ताम्। द्रौपद्याश्च तमाक्रन्दं, शुश्रुवुः पाण्डवाः समम् ॥२४५॥ त्यक्त्वा चमूं तां कुद्धास्ते–ऽभ्येयुः कान्तापहारिणम्। जविना वाजिना सोऽपि, ध्वजिनीमध्यमध्यगात् ॥२४६॥ एकतस्तन्नृपानीक–मन्यतः पञ्च पाण्डवाः। तथापि बलिनां तेषां, न क्षोभस्य लवोऽप्यभूत् ॥२४७॥ क रे यासि क रे यासि, प्रेयसीमपहृत्य नः?। इति व्याहृत्य पार्थेन, समन्तु प्रेषिताः शराः ॥२४८॥ उद्यतैर्युगपत् पातुं, सेनां सप्तार्णवीमिव। चक्रे तपःकृशीयोभि–स्तैरगस्तीयितुं स्पृहा ॥२४९॥ यदा ते संनिदधते, दधते च पराक्रमम्। तदा स नृपतिः कृष्णां, कशाघातैरताडयत् ॥२५०॥ तेन न्यक्कारतापेन, शिरःस्थेनांशुमालिना। तपसा चाभवत् तेषा–मुदन्या तालुशोषिणी ॥ २५१ ॥ तेन तर्षप्रकर्षेण, क्लान्तोऽतीव तपःसुतः। समाऽऽपे बान्धवान् वत्साः !, तृष्णा मां बाधतेऽधिकम् ॥ २५२ ॥ सुशाद्वलदलश्रेणि–व्याख्यातजलसंनिधेः। असौ पश्यत मार्गेण, दृश्यते निकटो वटः ॥ २५३ ॥ इन्द्रनीलशिलानीलैः, पत्रैर्नेत्रप्रियंकरैः। दृष्टोऽपि बन्धुवद्दूरं, न्यग्रोधो मां धिनोत्य–

१ एणो–मृगः। २ सेनामध्यम। ३ तृषा।

निधायास्त्राणि संनिधौ ॥ २२५ ॥ उज्झितः शान्तचेतोभि-स्तैस्तदा चिरसंस्तुतः । अस्त्रव्याजादसो वीर-स्तदुपास्तिमिवाकरोत् ॥ २२६ ॥

अथ पाण्डुसुतैः पांसु-पूरो दूरप्रसृत्वरः । अभितः करभीकण्ठ-रोमधूम्रो व्यलोक्यत ॥ २२७ ॥ अतिजङ्घालमुत्तालफालग्रस्तनभस्तलम् । तैरश्वीयमनल्पीयः, प्रेक्षांचक्रे समन्ततः ॥ २२८ ॥ जितोद्दामतडिद्दाम-वर्पद्वर्षास्विवाम्बुदाः । सिन्दूरिणः स्रवद्दण्डा-स्तैरदृश्यन्त दन्तिनः ॥ २२९ ॥ अथ वेणुलतां पाणौ, बिभ्राणाः क्रूरमूर्तयः । केचन द्वाःस्थवर्गीणा-स्तानागत्य बभापिरे ॥ २३० ॥ अरे वनचराः शीघ्रं, स्थानमेतद्विमुञ्चत । राज्ञो धर्मावतंसस्य, निवासोऽत्र भविष्यति ॥ २३१ ॥ तेषां दुर्वचसा तेन, समुत्सार्य शमं बलात् । भीमान्तःकरणे क्रोधः, समर्थोऽस्थाप्यत क्षणात् ॥ २३२ ॥ आकस्मिकतिरस्कारै, रौद्राकारो वृकोदरः । साटोपं कोपकम्प्रेण, पाणिनोपाददे गदाम् ॥ २३३ ॥ अभापिष्ट च रे दुष्टाः !, कः कालेन कटाक्षितः ? । बलान्मौलिमणिं हन्त, वासुकेः को जिघृक्षति ॥ २३४ ॥ कः केसरिकिशोरस्य, कर्षति स्कन्धकेसरान् ? । तिष्ठतोऽत्र सुखेनास्मान्, को नु निर्वासयिष्यति ? ॥ २३५ ॥ वयं निर्वासयिष्यामो, युष्मानिति विवक्षवः । ते भीमेन तथा क्रोधा-द्दले धृत्वाऽपहस्तिताः ॥ २३६ ॥ उच्चैःकारं कृताक्रोशाः, क्रोशमात्रां भुवं यथा । उत्पतन्तः पतन्तश्च, जग्मुः कन्दुकलीलया ॥ २३७ ॥ उल्लुण्ठैर्वेत्रिवण्ठैस्तै-र्गत्वा संवर्मितां चमूम् । समानीय निमेपार्धात्, सर्वेऽरुध्यन्त पाण्डवाः ॥ २३८ ॥

१ 'विधाय' प्रतित्रय० । २ अश्वानां समूहः । ३ 'पांसुजाम्बु' प्रतिद्वय० । ४ 'तक्षकात्' प्रतित्रय० । ५ निरस्ताः । ( ६ वण्ठशब्दो भृत्यवाची ) नपुंसकवाची दृश्यते ।

कृत्याया उपद्रवः ॥

कृतैश्चलनपस्पन्दो–निस्तुषीकृतकान्तयः । मावज्ञमनमस्तेऽपि, जगृहुः स्वं स्वमायुधम् ॥ २३९ ॥ तैः संग्रामकृतोद्योगै–कथनागैः पुरस्कृताः । अनेशत् पञ्चभिः सिंहै–रेणश्रेणीव सा चमूः ॥ २४० ॥

सेनानुगमशौण्डेषु, पाण्डवेष्वेत्य पृष्ठतः । नृपलक्ष्मा पुमानेक–स्तेषामुटजमाविशत् ॥ २४१ ॥ षड्दिनोपोषिते कुन्ती–कृष्णे धर्मकृतत्परे । परं पुरुषमालोक्य, परमं क्षोभमीयतुः ॥ २४२ ॥ पाण्डवेषु दवीयस्सु, ते उभे भयकातरे । निमील्य कराले नेत्रे, हृदि सस्मरतुर्जिनम् ॥२४३॥ बलाद्ग्राही स जग्राह, नरेन्द्रो द्रुपदात्मजाम् । हयमारोहयच्चोच्चै–रुदीर्णरुदितध्वनिम् ॥२४४॥ तुरङ्गान्तरमारुह्य, स प्रसह्य जहार ताम् । द्रौपद्याश्च तमाक्रन्दं, शुश्रुवुः पाण्डवाः समम् ॥२४५॥ त्यक्त्वा चमूं तां क्रुद्धास्ते–ऽन्वेयुः कान्तापहारिणम् । जविना वाजिना सोऽपि, ध्वजिनीमध्यमध्यगात् ॥२४६॥ एकतस्तन्नृपानीक–मन्यतः पञ्च पाण्डवाः । तथापि बलिनां तेषां, न क्षोभस्य लवोऽप्यभूत् ॥२४७॥ क रे यासि क रे यासि, प्रेयसीमपहृत्य नः ?। इति व्याहृत्य पार्थेन, तमनु प्रेषिताः शराः ॥२४८॥ उद्यतैर्युगपत् पातुं, सेनां सप्तार्णवीमिव । चक्रे तपःकृशीयोभि–स्तैरगस्तीयितुं स्पृहा ॥२४९॥ यदा ते संनिदधते, दधते च पराक्रमम् । तदा स नृपतिः कृष्णां, कशाघातैरताडयत् ॥२५०॥ तेन न्यक्कारतापेन, शिरःस्थेनांशुमालिना । तपसा चाभवत् तेषा–मुदन्या तालुशोषिणी ॥ २५१ ॥ तेन तर्षप्रकर्षेण, क्लान्तोऽतीव तपःसुतः । यमाग्रे बान्धवान् वत्साः !, तृष्णा मां बाधतेऽधिकम् ॥ २५२ ॥ सुशाद्वलदलश्रेणि–व्याख्यातजलसंनिधेः । असौ पश्यत यामेन, दृश्यते निकटो वटः ॥ २५३ ॥ इन्द्रनीलशिलानीलैः, पत्रैर्नेत्रप्रियंकरैः । दृष्टोऽपि बन्धुवद्दूरं, न्यग्रोधो मां धिनोत्य–

१ गणो–गणः । २ सेनामध्यम् । ३ तृषा ।

निधायास्त्राणि संनिधौ ॥ २२५ ॥ उज्झितः शान्तचेतोभि-स्तैस्तदा चिरसंस्तुतः । अस्त्रव्याजाद्रसो वीर-स्तदुपास्तिमिवाकरोत् ॥ २२६ ॥

अथ पाण्डुसुतैः पांसु-पूरो दूरप्रसृत्वरः । अभितः करभीकण्ठ-रोमधूम्रो व्यलोक्यत ॥ २२७ ॥ अतिजङ्घालमुत्ताल-फालग्रस्तनभस्तलम् । तैरश्वीयमनल्पीयः, प्रेक्षांचक्रे समन्ततः ॥ २२८ ॥ जितोद्दामतडिद्दाम-वर्पद्वर्षौस्विवाम्बुदाः । सिन्दूरिणः स्रवद्दण्डा-स्तैरदृश्यन्त दन्तिनः ॥ २२९ ॥ अथ वेणुलतां पाणौ, बिभ्राणाः क्रूरमूर्तयः । केचन द्वाःस्थवर्गीणा-स्तानागत्य बभाषिरे ॥ २३० ॥ अरे वनचराः शीघ्रं, स्थानमेतद्विमुञ्चत । राज्ञो धर्मावतंसस्य, निवासोऽत्र भविष्यति ॥ २३१ ॥ तेषां दुर्वचसा तेन, समुत्सार्य शमं बलात् । भीमान्तःकरणे क्रोधः, समर्थोऽस्थाप्यत क्षणात् ॥ २३२ ॥ आकस्मिकतिरस्कारैः, रौद्राकारो वृकोदरः । साटोपं कोपकम्प्रेण, पाणिनोपाददे गदाम् ॥ २३३ ॥ अभाषिष्ट च रे दुष्टाः !, कः कालेन कटाक्षितः ? । बलान्मौलिमणिं हन्त, वासुकेः को जिघृक्षति ॥ २३४ ॥ कः केसरिकिशोरस्य, कर्षति स्कन्धकेसरान् ? । तिष्ठतोऽत्र सुखेनास्मान्, को नु निर्वासयिष्यति ? ॥ २३५ ॥ वयं निर्वासयिष्यामो, युष्मानिति विवक्षवः । ते भीमेन तथा क्रोधा-द्गले धृत्वाऽपहस्तिताः ॥ २३६ ॥ उच्चैःकारं कृताक्रोशाः, क्रोशमात्रां भुवं यथा । उत्पतन्तः पतन्तश्च, जग्मुः कन्दुकलीलया ॥ २३७ ॥ उल्लुण्ठैर्वेत्रिवण्ठैस्तै-र्गत्वा संवर्मितां चमूम् । समानीय निमेषार्धात्, सर्वेऽरुध्यन्त पाण्डवाः ॥ २३८ ॥

१ 'विधाय' प्रतित्रय० । २ अश्वानां समूहः । ३ 'र्षांसुजाम्बु' प्रतिद्वय० । ४ 'तक्षकात्' प्रतित्रय० । ५ निरस्ताः । ( ६ वण्ठशब्दो भृत्यवाची ) नपुंसकवाची दृश्यते ।

अजस्य स्तपस्तेज्रो-निस्तुषीकृतकान्तयः। मावज्ञमनसस्तेऽपि, जगृहुः स्वं स्वमायुधम् ॥ २३९ ॥ तैः संग्रामकृतोद्योगै-र्गयनार्गैः पुरस्कृताः। अनेशन् पञ्चभिः सिंहै-रेणश्रेणीव सा चमूः ॥ २४० ॥

सेनानुगमशौण्डेषु, पाण्डवेष्वेन्य पृष्ठतः। नृपलक्ष्मा पुमानेक-स्तेपामुटजमाविशत् ॥ २४१ ॥ षड्दिनोपोषिते कुन्ती-कृष्णे धर्मकल्पने। परं पुरुषमालोक्य, परमं क्षोभमीयतुः ॥ २४२ ॥ पाण्डवेषु दवीयस्सु, ते उभे भयकातरे। निमील्य हस्तं नेत्रे, हृदि सस्मरतुर्जिनम् ॥२४३॥ बलाद्ग्राही स जग्राह, नरेन्द्रो द्रुपदात्मजाम्। हयमारोहयच्चोच्चै-रुदीर्णरुदितध्वनिम् ॥२४४॥ तुरङ्गान्तरमारूढा, न प्रसभं जहार ताम्। द्रौपद्याश्च तमाक्रन्दं, शुश्रुवुः पाण्डवाः समम् ॥२४५॥ त्यक्त्वा चमूं तां प्रदाम्ने-ऽन्वीयुः कान्तापहारिणम्। जविना वाजिना सोऽपि, ध्वजिनीमध्यमध्यगात् ॥२४६॥ एकतस्तन्नृपानीक-मन्यतः पञ्च पाण्डवाः। तथापि बलिनां तेषां, न क्षोभस्य लवोऽप्यभूत् ॥२४७॥ क्व रे यासि क्व रे यासि, प्रेयसीमपहृत्य नः[1]। इति व्याहृत्य पार्थेन, समन्तु प्रेषिताः शराः ॥२४८॥ उद्यतैर्युगपत् पातुं, सेनां सप्तार्णवीमिव। चक्रे तपःकृशीयोभि-स्तैरगस्तीयितुं स्पृहा ॥२४९॥ यदा ते संनिदधते, दधते च पराक्रमम्। तदा स नृपतिः कृष्णां, कशाघातैरताडयत् ॥२५०॥ तेन न्यक्कारतापेन, शिरःस्थेनांशुमालिना। तपसा चाभवन् तेषा-मुदन्या[3] तालुशोषिणी ॥ २५१ ॥ तेन तर्पप्रकर्षेण, क्लान्तोऽतीव तपःसुतः। बभाषे बान्धवान् वत्साः!, तृष्णा मां बाधतेऽधिकम् ॥ २५२ ॥ सुशाद्वलदलश्रेणि-व्याख्यातजलसंनिधेः। असौ पश्यत मार्गेण, दृश्यते निकटो वटः ॥ २५३ ॥ इन्द्रनीलशिलानीलैः, पत्रैर्नेत्रप्रियंकरैः। दृष्टोऽपि बन्धुवद्दूरं, न्यग्रोधो मां धिनोत्य-

१ पृष्ठो-मुखः। २ सेनाभिगम। ३ तृषा।

यम् ॥ २५४ ॥ पथिकाश्वासनाहेतुः, सेतुरेतस्य वामतः । शंसत्यसौ पिपासार्त-वितीर्णावसरं सरः ॥ २५५ ॥ अमी वञ्जुल-हारीत-जीवंजीवकपिञ्जलाः । एतस्योपरि कूजन्ति, जलवैभवबन्दिनः ॥ २५६ ॥ एतानि मृगयूथानि, निर्यान्ति प्रविशन्ति च । ध्रुवमेतस्य निर्दोषं, स्वाद्यं चाचक्षते पयः ॥ २५७ ॥ एषोऽपि द्रौपदीदस्यु-र्विलोक्यास्मानवस्थितान् । यावद्विलम्बमानोऽस्ति, तावदानीयतां पयः ॥ २५८ ॥ द्विषं प्रोषिततृष्णस्तु[1], दोष्णोर्बलभरादहम् । कीनाशवेश्म नेष्यामि, प्रत्यानेष्यामि च प्रियाम् ॥ २५९ ॥ इत्युदीर्य तपःसूनु-स्तस्मिन् सरसि रंहसा । नकुलं सहदेवं च, प्रेषयामास वारिणे ॥ २६० ॥ तावथ त्वरितं गत्वा, यथेष्टं पपतुः पयः । कृत्वा च पद्मिनीपत्रे, चेलतुः पञ्चपान् क्रमात् ॥ २६१ ॥ ततस्तावुच्छलन्मूर्छा-निःसहौ पेततुर्भुवि । जन्तवो हि विडम्ब्यन्ते, कर्मभिर्भिन्नमर्मभिः ॥ २६२ ॥ विलम्बमम्बुनः पश्यन्, पार्थमूचे युधिष्ठिरः । जलाय प्रहितौ वत्स !, वत्सौ चिरयतः कथम् ? ॥ २६३ ॥ जवात्तद्गच्छ वृत्तान्तं, जानीहि च कनीयसोः । तूर्णमानीय पानीयं, मुषाण च तृषां मम ॥ २६४ ॥ तडागमथ जङ्घालो[2], जगाम च धनंजयः । स्वांसाविव कनीयांसौ, पेतिवांसौ[3] ददर्श च ॥ २६५ ॥ तावालोक्य तथाऽवस्थौ, पार्थः पृथुलपूत्कृतः । पर्यदेवत हा ! वत्सौ !, केनेमां गमितौ दशाम् ? ॥ २६६ ॥ द्रुत-मुत्तिष्ठतं वत्सौ !, नन्वार्यः खिद्यतेतमाम् । तस्मै तृष्णातुरायैत-दुपढौकयतं पयः ॥ २६७ ॥ एतां तूष्णीकतां वत्सौ !, मुक्त्वा कथयतं मम । कृतमत्याहितं केन ?, निगृह्णाम्येष येन तम् ॥ २६८ ॥ यद्वा पिपासामार्यस्य, पूर्वं व्यपनयाम्यहम् । ततो विपदमेतां वां, प्रतिकर्तास्मि यत्नतः ॥ २६९ ॥ इत्युदीर्यार्जुनः साश्रुः, कण्ठे[4]हत्य पयः पपौ । बन्धुहेतोर्गृहीत्वा च, प्रतस्थे

१ नष्टतृष्णः । २ शीघ्रगतिः । ३ पतितौ । ४ तृप्तिपर्यन्तम् ।

क्रियतीं भुवम् ॥ २७० ॥ अश्रुमिश्रं वहन्नीरं, कनिष्ठान्तिकमागतः । तार्तीयिकस्तयोरासीत्, सोऽपि मूर्च्छाविसंस्थुलः ॥ २७१ ॥ अभ्यधादग्रजो भीमं, बान्धवान्वेषणाकृते । प्रहितस्यार्जुनस्यापि, कालो भूयानभूत् कथम् ? ॥ २७२ ॥ कनिष्ठ-बन्धूनागम्य, निसर्गप्रीतिशालिनः । गत्वा जानीहि वृत्तान्त-मपतृष्णं च मां कुरु ॥ २७३ ॥ इति ज्येष्ठगिरा भीमः, सरस्ती-समुपेयिवान् । अपश्यद्बान्धवान् भ्रातॄन्, मृत्योर्नेदीयसीं दशाम् ॥ २७४ ॥ विललाप च हा वत्साः !, किमिदानीमुपस्थितम् ? । इदं सोऽप्येकको दौःस्थ्य-मन्यतः क्लिश्यते गुरुः ॥ २७५ ॥ इतश्च ह्रियते कृष्णा, केनाप्यस्मद्विरोधिना । इतश्चैकाकिनी माता, दुःखं तिष्ठति पृष्ठतः ॥ २७६ ॥ न जाने सममस्माभि-र्हतकस्य विधेरहो । कौतस्कुतमिदं वैर-मेवं द्रुह्यति येन नः ॥ २७७ ॥ परं पितामहार्येभ्य, प्रतिकृत्याम्बुनाऽमुना । अहं वत्साः ! प्रतीकारं, विधास्यामि विधेरपि ॥ २७८ ॥ शुचं कृत्वैव-मार्गेण, सरस्याश्रममक्रन् । गृहीत्वा च व्रजन्नासीत्, तुल्यावस्थः स बन्धुभिः ॥ २७९ ॥ स्थित्वाऽतिमहतीं वेलां, ततो दध्यौ नृपःसुतः । विलम्बते स्म भीमोऽपि, कथंकारमनादरः ? ॥ २८० ॥ तद्गत्वा निखिलाचार-चतुरांश्चतुरोऽपि तान् । शौण्डीर(रि)मकलागिन्भून्, बन्धूनन्वेषयाम्यहम् ॥ २८१ ॥ इत्यालोच्य शुचाऽऽचान्त-चेताः कुन्तीसुताग्रजः । गतस्तत्रानु-जान् भ्राता-नद्राक्षीत् तादृशीं दशाम् ॥ २८२ ॥ विलप्य तुमुलं चोच्चै-रुवाचात्यन्तविह्वलः । वत्सा ! युष्माभिरेकाकी, कथं त्यक्तोऽस्मि कानने ? ॥ २८३ ॥ चतुर्भिरपि युष्माभि-र्वैरिभूधरभेदिभिः । दन्तैस्त्रिदशदन्तीव, सदैवाहं विजित्वरः ॥ २८४ ॥ बभूवाहमतुलश्रीको, युष्माभिः पार्श्ववर्तिभिः । धराभोगः समर्यादै-श्चतुर्भिः सागरैरिव ॥ २८५ ॥ हा ! वत्स ! भीम ! मां

१ नवीरस्थाम । २ अग्रमन्य ।

त्यक्त्वा, किं शेपे निद्रयाऽनया ? । सांप्रतं सांप्रतं[1] किं ते, सदुःखं मामुपेक्षितुम् ? ॥२८६॥ दुर्योधनस्य गदया, नोरुभङ्ग-स्त्वया कृतः । न च दौःशासनं वक्षः, क्षुण्णं तन्मां किमत्यजः ? ॥ २८७ ॥ हिडम्ब-बक-किर्मीराः, कृतान्तातिथय-स्त्वया । महाबाहो ! कृता येन, तच्छौण्डीर्यं क्व ते गतम् ? ॥ २८८ ॥ सिंहेनेव त्वया मुक्तो, वनोदेश इवाधुना । अभूव-महमाक्रम्यो, हा ! मृगैरिव वैरिभिः ॥ २८९ ॥ हा ! वत्स ! पार्थ ! पार्थक्यं[2], प्राणैरपि न ते मम । इयं कथमवस्था ते, जीवत्यपि युधिष्ठिरे ? ॥२९०॥ किं पूरयसि वत्स ! त्वं, पिशुनानां मनोरथान् ? । दृढचण्डिमगाण्डीवं, यद्दूरं तत्यजे त्वया ॥ २९१ ॥ येन मृत्युपरीरम्भं, लम्भितास्तलतालवः । अकाण्ड एव गाण्डीवे, तत्रानास्था कथं तव ? ॥ २९२ ॥ नाद्यापि विहितं कृष्णा-पराभवनिशुम्भनम्[3] । त्वमेवं किमु निद्रासि, विस्मृताराातिविक्रमः ? ॥ २९३ ॥ इदानीमपि केनापि, ह्रिय-माणा सधर्मिणी । मोचनीया त्वयैवेयं, तत्किं स्वपिषि निर्भरम् ? ॥ २९४ ॥ अभवत् पूर्णदेशीया[4], वत्स ! द्वादशवत्सरी । प्राप्तोऽस्यम्बुधिमुत्तीर्य, गोष्पदे मज्जनापदम् ॥ २९५ ॥ राधासुतस्य सफलैः, संजातमुपयाचितैः । यातोऽसि दैवयोगेन, यत्त्वमेतादृशीं दशाम् ॥ २९६ ॥ वत्सौ ! यमौ ! युवां दृष्ट्वा, हृदयं मे विदीर्यते । अक्षतोऽहं गतो मातु-र्माद्या वक्ष्यामि किं पुरः ? ॥ २९७ ॥ एवं विक्लवमुर्वीशं[5], कश्चिदूचे पुलिन्दकः । भोः ! कापुरुष ! केनापि, प्रेयसी ते विलुप्यते ॥२९८॥ उत्तरीय-मपाकृत्य, कशाभिस्ताड्यते भृशम् । आर्यपुत्रार्यपुत्रेति, करुणं साऽपि रोदिति ॥ २९९ ॥ हेतोः कुतश्चिदेते तु, मूर्च्छितास्तव बान्धवाः । सरःसमीरणस्पर्शा-दुत्थास्यन्ति स्वयं क्रमात् ॥ ३०० ॥ ततः प्रियतमामाशु, शत्रोस्त्रायस्व सांप्रतम् । कलङ्को

१ उचितम् । २ पृथक्त्वम् । ३ निशुम्भनं-नाशः । ४ प्रायः पूर्णा । ५ व्याकुलम् ।

हि महान् पुंसां, दाराणामप्यरक्षणम् ॥३०१॥ अनेन वचसा तस्य, धर्मसूनुः क्रुधा ज्वलन्। पयः पीत्वा जवाद्धावन्, बन्धूनां
सविधेऽपतत् ॥ ३०२ ॥ तथा तेषामुपागच्छ-न्मूर्छा काऽप्यतिशायिनी। पञ्चत्वमेव निश्चिक्ये, यथा व्योमचरैरपि ॥ ३०३ ॥
तस्मिन्मूर्च्छाक्षणे नेशा-मारण्याः पशवोऽपि हि। तृणग्रासादिकं सर्वं, सर्वेऽपि मुमुचुः शुचा ॥ ३०४ ॥ समं समस्तभूतानां,
प्रमोदनरकन्दलैः। किंचित्क्षणान्तरे तेऽथ, नयनान्युदमीलयन् ॥ ३०५ ॥

कृत्वाऽम्बु नलिनीपत्रे, रत्नमालापवित्रितम्। प्रत्येकं तेऽभिषिञ्चन्तीं, द्रौपदीं ददृशुः पुरः ॥३०६॥ स्ववासःपल्लवाग्रेण,
वीजयन्तीं मुहुर्मुहुः। सिञ्चन्तीं चाश्रुभिः कुन्तीं, ते वीक्षांचक्रिरेऽग्रतः ॥ ३०७ ॥ बाष्पप्लावितपक्ष्मान्तै-र्नभश्चर-वनेचरैः।
ते पश्यन्ति स्म वेदन्यौ, संकीर्णे स्वजनैरिव ॥ ३०८ ॥ निविष्टास्ते पटान्तेन, प्रमृष्टरजसोऽम्बया। प्रियामप्राक्षुराक्षेपात्,
अन्याशङ्कादिनेक्षणाः ॥ ३०९ ॥ तवापहर्ता पापीयान्, स निस्त्रिंशशिरोमणिः। क ययौ ? यदिहायासीः, सुमनोमालधारिणी
॥ ३१० ॥ प्रक्षिप्तरत्नमालेन, किं नो नीरेण सिञ्चसि ?। वृत्तान्तमेनमस्माकं, द्रुतमावेदय प्रिये ! ॥ ३११ ॥ समक्षमेव
गोपा-मानन्यौ गाऽथ भूभुजे। त्वय्यायाते पयः पातुं, तं नाद्राक्षं न तां चमूम् ॥ ३१२ ॥ किंत्वेकाकिनमात्मान-मपश्य-
मटवीगतम्। व्यालानां शृण्वती नादा-नभूवं च भयातुरा ॥ ३१३ ॥ त्वमार्यपुत्र ! कुत्रासि ?, रक्ष मामिति वादिनी।
इतस्ततश्च पर्यट-मटवीपदवीष्वहम् ॥ ३१४ ॥ पञ्चपान् विशिखान् पाणौ, दधद्धन्व च जर्जरम्। उपेत्य शबरः कश्चि-न्मा-
मार्दाश्यान्वितः ॥ ३१५॥ परिभ्रमसि शून्येषु, कथं कान्तारवर्त्मसु ?। भद्रे ! भद्रंकराकाराः,सन्तीह तव वल्लभाः ॥३१६॥
स युष्मान् दर्शयित्वा मे, कुन्तीं चार्यामिहानयत्। अपश्याव मृतप्राया-नावां वः साश्रुलोचने ॥ ३१७ ॥ यावदावामती-

वार्ते, प्रवृत्ते परिदेवितुम् । आकर्णयावः सहसा, तावत्किलकिलारवम् ॥ ३१८ ॥

ततो व्यात्तमुखप्रेङ्ख-दंष्ट्राङ्कुरभयंकराम् । पिङ्गाक्षीं पिङ्गचिकुरां, गवलश्यामलाकृतिम् ॥११९॥ आलोकयाव फेत्कारैः, कर्णज्वरकरीं भृशम् । कांचित्त्वरितमायान्ती-मन्तरिक्षेण राक्षसीम् ॥३२०॥ (युग्मम्) दूरादालोक्य तस्यास्त-माकारमतिभैरवम् । आवाभ्यामतिभीताभ्यां, सेयं कृत्येति निश्चितम् ॥ ३२१ ॥ विभाव्याथ तथोद्भ्रान्ते, स पुलिन्दः पितेव नौ । अन्तर्द्धाय स्वदेहेन, तस्थौ स्नेहार्द्रमानसः ॥ ३२२ ॥ साऽप्यागत्य मृतान् युष्मान्, वीक्ष्य वैलक्ष्यमागता । अभ्यर्णस्थामभाषिष्ट, राक्षसीं राक्षसेश्वरी ॥ ३२३ ॥ पिङ्गले पाण्डवानेता-न्मृतानेव निशुम्भितुम् । प्रहिताऽहमहो तेन, ब्राह्मणेन दुरात्मना ॥ ३२४ ॥ एतेषां किं नु निश्छद्मा, मृत्युश्छद्मकृतोऽथवा ? । इत्यासन्नतरीभूय, सम्यग्जानीहि पिङ्गले ! ॥ ३२५ ॥ तामिमां स्वामिनीवाचं प्रमाणीकृत्य पिङ्गला । युष्मान् पर्यस्य पश्यन्ती, पुलिन्देन न्यगद्यत ॥३२६॥ त्वादृशां मृतकस्पर्शः, पिङ्गले ! नन्वमङ्गलम् । सरस्यमी विषं पीत्वा, मृता एव न संशयः ॥३२७॥ यद्यल्पमपि जीवेयु-रेते ते चण्डि ! पाण्डवाः । विपक्षक्षयमाधातुं, प्रभवेयुस्ततो ध्रुवम् ॥ ३२८ ॥ विक्रामन्ति मृतेष्वेव, शृगालीसरमादयः[3] । जीवत्स्वेव महेभेषु, सिंही संरभते पुनः ॥ ३२९ ॥ गत्वा हन्तु तमेवासौ, तद्विप्रं विप्रतारकम् । दुष्प्रयुक्तः प्रयोक्तार-मभिचारो हि लुम्पति ॥ ३३० ॥ पिङ्गलाव्यपदेशेन, तां गिरं शबरोदिताम् । निशम्य गगनेनैव, ययौ व्यावृत्य राक्षसी ॥ ३३१ ॥

युष्माकमन्तिकेऽभ्येत्य, भूयोऽपि सममार्यया । विलापान् कुर्वती तांस्तां-स्तारतारमरोदिषम् ॥ ३३२ ॥ स्मृत्वाऽथ

१ गवलं-महिषशृङ्गम् । २ मारयितुम् । ३ सरमा-शुनी । ४ मन्त्रप्रयोगः ।

नागराजस्य, गिरं स्वं कर्णपङ्कजम् । वीक्ष्य चासंदिहानाऽह-मार्यां कुन्तीमवादिषम् ॥ ३३३ ॥ देवि ! कर्णावतंसाब्ज-
मयान्येतद्विरूस्वरम् । तन्नामी नियतं प्राणै-र्विमुच्यन्ते सुतास्तव ॥ ३३४ ॥ केवलं दधते दूरं, परीपाकमुपेयुषा । केनाप्याप-
द्विर्नेन, ध्रुवं मूर्च्छालितामभी ॥ ३३५ ॥ तत्तस्यैव प्रतीकारः, कश्चिदन्तर्विचिन्त्यताम् । एवं वदन्तीं मामेत्य, कृपालुः शबरो-
ऽब्रवीत् ॥ ३३६ ॥ कृतं ते चिन्तया भद्रे !, नृपकण्ठविलम्बिनीम् । रत्नमालां निधायान्तः, कान्तान् सिञ्च सरोऽम्भसा ॥ ३३७ ॥
कृत्वा नेतानि तद्वानं, निषिञ्चामि जलेन वः । युष्मचैतन्यलाभाच्च, फलितं मे मनोरथैः ॥ ३३८ ॥ निष्कारणोपकारी मे, स
एव शबरोऽधुना ? । इति कन्दलितानन्दः, पप्रच्छ नृपतिः प्रियाम् ॥३३९॥ कृती सांप्रतमत्रैव, सोऽभूदिति तयोदिते । दृशौ
व्यापारयामास, सर्वास्वाशासु पार्थिवः ॥ ३४० ॥ स दूरे शबरस्ताव-न्न सरस्तन्न तं वटम् । तं भूनभश्वरं लोकं, न चाद्रा-
क्षीन्नरेश्वरः ॥ ३४१ ॥ तपस्यासु व्यवस्यन्त-मात्मानमुटजान्तिके । मुदितः सानुजन्मान-मालोकत स केवलम् ॥ ३४२ ॥
पुरां च पुरः कंचित्, काञ्चनद्युतिविग्रहम् । चलन्माणिक्यताटङ्कं, सोऽपश्यद्दिव्यमूर्तिकम् ॥ ३४३ ॥
अथासौ विस्मयस्य-दितिकर्तव्यताजडम् । जगाद मेदिनीनाथं, प्रसादविशदाननः ॥ ३४४ ॥ शृणु विश्वंभराधीश !,
यदेकमनसा त्वया । योऽयमाराधितो धर्म-स्तस्येयं स्फूर्तिवर्णिका ॥ ३४५ ॥ यतः सौधर्मवास्तव्यः, सुरो वासववल्लभः । अहं
धर्माध्यक्षनामा, धुर्यो धार्मिकपालने ॥ ३४६ ॥ ज्ञात्वाऽहमवधिज्ञाना-त्तपोनियमशालिनाम् । कृत्योपसर्गमुच्छेत्तुं, रभसादा-
गतोऽस्मि वः ॥ ३४७ ॥ उत्पाद्य कृत्रिमां सेना-मेनां हृत्वा च वः प्रियाम् । अपूजयं कशाघात-मिषान्मन्दारदामभिः ॥३४८॥
मयेऽपि न तदन्येषु, पीयूषप्रतिमोदकम् । युष्मास्वहं विपीचक्रे, पुलिन्दश्चाभवं ततः ॥ ३४९ ॥ सांप्रतं मुक्तभूयिष्ठं, भवतामपि

दुष्कृतम् । निकाचितेष्वपि तपः, प्रभवत्येव कर्मसु ॥ ३५० ॥ इदानीमनुजानीहि, पुनः स्वर्गमनाय माम् । ज्ञेयः सहायसंख्या-या-महमप्यात्मनस्त्वया ॥ ३५१ ॥ इत्युदीर्य गते देवे, ययौ सूर्योऽप्यदृश्यताम् । सतां कृतोपकारं तं, हर्षादन्वीयिवानिव ॥ ३५२ ॥ स्थापिते च नभःस्थाले, नक्षत्राक्षतसंभृते । आययौ किल तानिन्दु-दध्ना वर्धयितुं निशा ॥ ३५३ ॥ मत्सरं कुरुराजस्य, क्रूरतां च द्विजन्मनः । तीक्ष्णत्वं चैव कृत्यायाः, सौजन्यं च दिवौकसः ॥ ३५४ ॥ मुहुश्चिन्तयतां नाना-भावचित्रेण चेतसा । सा तेपामतिचक्राम, क्षणेनैव निशीथिनी ॥ ३५५ ॥ युग्मम् ॥

अम्लानांस्तानिव द्रष्टुं, सप्तरात्रमुपोषितान् । पौरस्त्यादर्णवात्तूर्ण-मर्यमाऽथ विनिर्ययौ ॥ ३५६ ॥ पारणाविधये तेषां, कुर्वन्नभ्यर्थनामिव । पाणिपादे सहस्रांशु-र्लगति स्म मुहुः करैः ॥ ३५७ ॥ अथ वन्यैः फलैर्धान्यैः, शाकैश्च हृदयंगमैः । कृष्णा निष्पादयामास, नवां रसवतीं जवात् ॥ ३५८ ॥ स्वस्वासनोपविष्टानां, जनन्या परिवेषिते । वस्तुजाते समस्तेऽपि, चिन्ता तेपामभूदियम् ॥ ३५९ ॥ कुतोऽपि समयेऽमुष्मिन्, किंचित्पात्रं तपोमयम् । यद्युपैति तदा विघ्नो, भाग्यानामनुकूलताम् ॥ ३६० ॥ धन्यास्ते पुण्यकर्माण-स्तेषां चासन्नभव्यता । येषामभूदृशे काले, सत्पात्रमुपतिष्ठते ॥ ३६१ ॥ अवतारो मनुष्येपु, तेपामेव फलेग्रहिः । सुक्षेत्र इव यैः पात्रे, न्यायात्तं वित्तमुप्यते ॥३६२॥ इति चिन्तापरेष्वेषु, सार्थे क्वचन तस्थुषः । सूरेः सुचरिताख्यस्य, मुनिः कोऽप्यतिसंयमी ॥ ३६३ ॥ वपुष्मदिव चारित्रं, मूर्तं तप इवानघम् । एत्य तेषां पुरस्तस्थौ,

( १. काचितः शिक्ये स्थापित इति कोशः । उन्नत इत्यर्थः. ) नितरां सचितेषु-तीव्राध्यवसायेन बद्धेषु इत्यर्थः संगतः ।

( २. ' शिष्य इति शेपः इति गद्यपाण्डवचरिताज्ज्ञायते । नाम चास्य मुनेर्धर्मयो(घो)ष इति च. )

मासक्षपणपारणे ॥ ३६४ ॥ ( युग्मम् ) तं तपोधनमालोक्य, लोकोत्तरगुणोदयम् । पुनः पल्लवितानन्दा-स्तेऽन्तःस्वान्तम-निनयन् ॥ ३६५ ॥ एषणीयमिदं वस्तु, पात्रमेतत्तपोमयम् । तदयं सुकृतप्राप्यः, कौमुदीन्दुसमागमः ॥ ३६६ ॥ क क्रूरश्वापदसंचार-घोरा कान्तारभूरियम् ? । पुण्यैरप्यतिदुर्लभः, क चैष मुनिकुञ्जरः ? ॥ ३६७ ॥ ततो रूक्षरटद्ध्वाङ्क्ष-शर्मामात्रनगो मेने । अकस्मादयमस्माकं, ध्रुवं कल्पद्रुसंगमः ॥ ३६८ ॥ इत्युद्दामपरीणाम-शुद्धिनिर्धौतचेतसः । आदाय भाननान्वितै, मुनिमेत्य बभाषिरे ॥ ३६९ ॥ प्रभो ! सुप्रातरद्यैव, पुण्यैरद्यैव पुष्पितम् । निजैर्यत् पावितं पादै-स्त्वयेदमुट-जाङ्गणम् ॥ ३७० ॥ तदिमं शुद्धमाहारं, गृहाणानुगृहाण नः । लभ्यतां दैवयोगेन, निर्धनैरपि सेवधिः ॥ ३७१ ॥ द्रव्यादि-शुद्धमाहारं, विज्ञायात्यन्तनिःस्पृहः । मुनिरप्याददे तादृ-ग्न विराध्यति संयमम् ॥ ३७२ ॥

तदानीं नादयामासु-र्द्युसदो दिवि दुन्दुभिम् । उद्यत्प्रमोदकल्लोला-श्चेलोत्क्षेपं च चक्रिरे ॥ ३७३ ॥ विहितार्थिजनाधारा, वसुधारा दिवोऽपतत् । पुष्पगन्धाम्बुवृष्टी च, पेततुर्वासितक्षिती ॥ ३७४ ॥ अवादीद्देवता काचित्, प्रसन्ना तान्नभःस्थिता । दानस्यास्य प्रभावाद्वः, समीपे संपदोऽखिलाः ॥ ३७५ ॥ विराटनगरे किं तु, वर्षमेतत्त्रयोदशम् । नवाभ्यां वेषकर्मभ्यां, प्रच्छन्नाः स्थातुमर्हथ ॥ ३७६ ॥ एवमावेद्य सा तेभ्यः, क्षणेनैव तिरोदधे । मुनिश्च स्वर्गिणश्चैव, ययुः सर्वे यथागतम् ॥ ३७७ ॥ पारणं पाण्डुतनया-स्तेनुः पुण्यमयं पुरा । पश्चादन्नमयं चक्रुः, शरीरस्थितिहेतवे ॥ ३७८ ॥ आर्थिनः प्रीणया मासु-स्ते तया वसुधारया । नतां च तोयदानां च, सार्वजन्या हि संपदः ॥ ३७९ ॥

---

१ मनोज्ञभूमी । २ द्रव्यनिधानम् । ३ धनवृष्टिः । ४ सर्वजनहिताः ।

सौरभ्यसारघनसारकणावदातै-र्लोकंपृणैर्मुनिपतेर्विमलैर्गुणौघैः ।
तत्रैव ते विदधतो वदनाधिवासं, द्वित्राण्यहानि मुदिता गमयांबभूवुः ॥ ३८० ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये दुर्योधनमोचन-कृत्योपद्रवनिवर्तनवर्णनो नाम नवमः सर्गः ।

## अथ दशमः सर्गः ।

अथ द्वैतवनात् पाण्डु-सूनवो देवतागिरा । प्रतस्थिरे गुप्ततमा, विराटनगरं प्रति ॥१॥ ते मातरं पुरस्कृत्य, मूर्तां नीति-
मिवाध्वनि । व्रजन्तोऽनुगता रेजुः, साक्षाल्लक्ष्म्येव कान्तया ॥ २ ॥ नगेन्द्र-नगर-ग्राम-निम्नगा-रामसंकुलाम् । भूयसीं भीम-
संचारा-मतिक्रम्य क्रमान्महीम् ॥ ३ ॥ नीलदुद्यानकल्लोलि-सरःश्रेणिमनोरमे । ते विराटमहीभर्तुः, पुरीपरिसरे ययुः ॥४॥
(युग्मम्) रामणीयकमाराम-सरःपुष्करिणीगतम् । पश्यतां पाण्डुपुत्राणां, तत्रोच्चैर्मुमुदे मनः ॥ ५ ॥ क्वचित् सरसि निर्निद्र-
नलिनीमालभारिणि । पयःपानादिना तेऽध्व-श्रमव्यपगमं व्यधुः ॥ ६ ॥ तत्तीरे सहकारस्य, नवपल्लवशालिनः । छायायामति-
सान्द्रायां, तेऽनुज्येष्ठमुपाविशन् ॥ ७ ॥

१ कणः-सूक्ष्मः, अवदातः-शुद्धः ।

अथारातिपराभूति-स्मरणार्द्रीकृतेक्षणः। सदैन्यमवदद्भ्रन्धून्, धर्मसूर्गद्गदाक्षरम् ॥८॥ वत्साः! साम्राज्यसौरम्य-संभोगसुभगोदयाः!। युधिष्ठिरेण नीताः स्थ, ह हा! धिक्कामिमां दशाम्? ॥ ९ ॥ वस्तव्यमस्ति तत्रापि, वर्षमेतत्त्रयोदशम्। अज्ञातेर्जनसन्मत्स्य-भर्तुः सेवापरायणैः ॥ १० ॥ ततो निसर्गविज्ञात-सर्वसेवाक्रमानपि। स्नेहाद्ब्रवीमि वः किंचित्, सागरे सनत्रोदितान् ॥ ११ ॥ परं मान्यत्वमाप्यापि, विश्वस्यात् क्षितिपेषु न। विधावैवधिकेभ्योऽपि, जातु रुष्यन्ति दन्तिनः ॥ १२ ॥ गुरुमनुल्वणं वेषं, अगन्नुचितमासनम्। अजल्पितोऽप्रजल्पंश्च, राज्ञो भवति वल्लभः ॥ १३ ॥ नान्तःपुरपुरंध्रीभि-र्न चान्तःपुरचारिभिः। न च वैरैर्महीशस्य, संगच्छेत विशारदः ॥ १४ ॥ यस्य कोपो महाबाधः, प्रसादश्च महाफलः। न तस्य मनसोऽप्रीत्या-प्रियं प्राज्ञसंमतः ॥ १५ ॥ अत्रूयन्ति हि राजानो, जनायानृतवादिने। क्षणादप्यवमन्यन्ते, तथा पण्डितमानिनम् ॥ १६ ॥ अम्लानो बलवान् शूर-च्छायेवानुगतः सदा। सत्यवादी मृदुर्दान्तः, क्ष्मापतेः प्रियतां व्रजेत् ॥ १७ ॥ सर्वं मनसि कृत्वैव-यः सम्यग्धर्मं वेत्ति यत्। स तदेव पुरस्कृत्य, श्रयतु क्षितिवल्लभम् ॥ १८ ॥ जयो जयन्तो विजयो, जयसेनो जयद्बलः। आतुरे कश्चिदाख्यान-नामानीति भवन्तु नः ॥ १९ ॥ इति ज्येष्ठानुशिष्टिं ता-मोमिति प्रतिपद्य ते। निशभानुं कथां चैवं, सव्यसाचिनमूचिरे ॥ २० ॥ विलोक्य सायुधानस्मान्, लोकः पार्थ! व्यथिष्यते। आयुधानि निधातुं तत्, कन्दितानि सांप्रतम् ॥ २१ ॥ जगाद विजयो येय-मुपप्रेतवनं पुरः। निरूप्यते शमी जीर्णा, फणिफूत्कारिकोटरा ॥ २२ ॥ लूताजालकरालाया-मतुच्छच्छदसंपदि। निहितान्यायुधान्यस्यां, कोऽप्यवेक्षिष्यते न हि ॥ २३ ॥ इत्युक्त्वा सर्व-

१ (विधा गजाशनम्। वैवधिको वणिक्.) पक्षे विधा-वेतनम्. वैवधिको-घृततैलान्नादिव्यापारी।

तेजांसि, धारयन्तीव मूर्तताम्। आयुधानि न्यधात्तत्र, शमीशाखिनि फाल्गुनः ॥ २४ ॥ मध्येऽद्रिकन्दरं तेऽथ, पञ्च पञ्चानना इव । विराटस्य विशांभर्तु-रन्तर्नगरमाविशन् ॥ २५ ॥

तिलकान् द्वादशाङ्गेषु, करे कुशपवित्रिकाम् । कलयन्नुपवीताङ्क-तनुर्धौतसितांशुकः ॥२६ ॥ गत्वा राजकुलं कश्चि-द्ब्राह्मणस्त्वां दिदृक्षते । इत्यात्मानं तपःसूनु-र्वेत्रिणाऽज्ञापयन्नृपम् ॥ २७ ॥ युग्मम् । तथा विज्ञापितो वेत्रि-पुंगवेन विशांपतिः । तं सभामर्घदानादि-पुरःसरमवीविशत् ॥ २८ ॥ विलोकयंस्तमायान्त-मिति चान्तरचिन्तयत् । किं स्वयं धर्म एवायं, महीतलमवातरत् ? ॥ २९ ॥ न हि ब्राह्मणमात्रस्य, क्वचिद्दृष्टेयमाकृतिः । समुद्ररसनामेष[1], महीं शासितुमर्हति ॥ ३० ॥ अभिवाद्य नमन्मौलि-स्तं वितीर्णाशिषं पुरः । प्रीत्या परमया पीठे, विशामीशो न्यवीविशत् ॥ ३१ ॥ जगाद च कुतो ब्रह्म-न्नजिह्मब्रह्मवार्धिना । आगम्यते त्वया ? को वा, भवान् भुवनपावनः ? ॥ ३२ ॥ अथावोचदजातारिः, कङ्को नाम द्विजोऽस्म्यहम् । भूमिभर्तुस्तपःसूनोः, प्रियमित्रं पुरोहितः ॥ ३३ ॥ अक्षैश्च दीव्यतस्तस्य, सभास्तारो[2]ऽस्मि सर्वदा । मदन्यो हि न दक्षोऽभूदक्षद्यूतेऽस्य संसदि ॥ ३४ ॥ मयि ग्रामान्तरे याते, समानीय निजं पुरम् । कुरुभिः कैतवागारै-र्हारितः सोऽखिलां महीम् ॥ ३५ ॥ पाण्डवेयास्तदारभ्य, वभूवुर्वनवासिनः । राज्यप्रत्याशया तेषा-मनैषमियतीः समाः[3] ॥ ३६ ॥ मायावीति मया राजन् !, श्रितो दुर्योधनो न हि। पाण्डवानामिदानीं तु, किंवदन्त्यपि न क्वचित् ॥३७॥ धर्म-न्याय-सदाचार-विवेक-विनयादिभिः। गुणैराकीर्णमेषोऽहं, तद्भवन्तमुपस्थितः ॥ ३८ ॥ अजल्पन्नृपतिः कङ्क !, निःशङ्कोऽत्रापि पूर्ववत् । सुखेन तिष्ठ

---

१ समुद्रः रसना-कटिमेखला यस्याः ताम् । २ सभासद् । ३ वर्षान् ।

मन्मार्गे, क्वाऽऽप्यते त्वादृशः सुहृत्? ॥ ३९ ॥ धन्यः स राजा कौन्तेयो, यस्य मित्रं भवादृशम् । सुलभा खलु राज्यश्री-र्दुर्लभं मित्रमद्भुतम् ॥ ४० ॥ इत्युदीर्य समभ्यर्च्य, काञ्चनै रचिताञ्जलिः । विराटभूपतिश्चक्रे, सभास्तार युधिष्ठिरम् ॥ ४१ ॥

ज्वलन्निव स्फुलिङ्ग्या, खजं दर्वीं च धारयन् । करवालकरोऽत्युच्चैः, सानुमानिव जङ्गमः ॥ ४२ ॥ राजपाद्यामुपेताय, मत्स्येनगरमन्यदा । विराटभूभुजे तस्थौ, गुरुस्थामा मरुत्सुतः ॥ ४३ ॥ (युग्मम्) दूरादुर्वीपतिर्भीमं, वीक्ष्य मांसलमंसलम् । मुदा नेदीयसीनाङ्गं, वेत्रिणाऽऽह्वाययत् क्षणात् ॥ ४४ ॥ सोऽनुयुक्तस्ततो राज्ञा, स्वां कथामित्यचीकथत् । वल्लवः सूपकारोऽस्मि, भूपतेर्धर्मजन्मनः ॥ ४५ ॥ न केवलमलंकारः, पौरोगव्यकलैव मे । ममैव मल्लसंदोह-ज्येष्ठताऽप्यस्य भूभुजः ॥ ४६ ॥ किं तु राज्यपरिभ्रंशात्, तस्य भ्राम्यन्नितस्ततः । राजन्! कलाविशेषज्ञ-मिदानीं त्वामुपागमम् ॥ ४७ ॥ नृपोऽप्यूचे न युक्त-मस्यामुचितमाकृतौ । कुर्वीत को हि गन्धेभे, कक्षभाराधिरोपणम् ॥ ४८ ॥ ऊर्जस्विनौ हि ते बाहू, पृथिवीरक्षणक्षमौ । तथाऽपीच्छसि यत् कर्तुं, तदेव कुरु वल्लव! ॥ ४९ ॥ इत्याभाष्य नृपो भीम-मानन्द्य कनकोत्करैः । पौरोगवानां सौधा-मकरोदधीश्वरम् ॥ ५० ॥

आमुच्य कञ्चुकं चित्र-मारच्य कबरीं वराम् । कर्णयोः कुण्डले न्यस्य, नेत्रयोरञ्जनं वहन् ॥ ५१ ॥ निर्मायान्यदपि स्त्रैण-माकल्पं नृपवेश्मनि । विवेश विस्मयस्मेरै-र्लोकैरालोकितोऽर्जुनः ॥ ५२ ॥ (युग्मम् ।) भूपतिर्वलभौ कुर्वन्, केलिचंक्रमणक्रमम् । उदीक्ष्य मुदितो वेत्र-पाणिना तमजूहवत् ॥ ५३ ॥ ऊचे च भद्रे! स्त्री चेत्त्वं, वक्षस्तल्लक्षणं न किम्? । यदि

१ गर्व-भाषया नमना । २ पाकशालाध्यक्षत्वकला । ३ कक्षः-तृणम् । ४ पाकशालाऽध्यक्षाणाम् ।

वाऽसि पुमानेव, कुतः स्त्रीवेषधारिता ? ॥ ५४ ॥ आकृतिस्ते पुनः सेयं, स्त्रीपुंसव्यतिवर्तिनी । इहागत्य च किं स्थानं, विहितं विरहातुरम् ? ॥ ५५ ॥ कपिकेतुरभाषिष्ट, नास्मि नारी न वा पुमान् । अहं बृहन्नटो नाम, किं तु षण्ढोऽस्मि भूपते ! ॥ ५६ ॥ योषिद्वेषं वहन्नेव-मवन्यां विहराम्यहम् । नाट्याचार्यस्तपःसूनो-रभूवं राज्यभूषणम् ॥ ५७ ॥ तूर्यत्रय-रहस्याना-महं वा खलु कोविदः । देवी विश्वत्रयाराध्या, सा वा वाचामधीश्वरी ॥ ५८ ॥ हेमस्तोमैस्ततस्तैस्तै-रभिनन्द्य बृहन्नटम् । भूमीन्दुरुत्तरां पुत्री-मध्यापयितुमार्पयत् ॥ ५९ ॥ ततस्तूर्यत्रयाभ्यास-हेतोः पुत्र्याः क्षितीश्वरः । उत्तरेण निजं वेश्म, नाट्यशालामचीकरत् ॥ ६० ॥

हरिदश्वरथाश्वाभ-मन्येद्युरवनीभुजः । हयं कारयतश्चित्रं, वाह्याल्यां चंक्रमक्रमम् ॥ ६१ ॥ मांसलांसस्थलो बद्ध-मौलिः प्रावारवाससा । निर्लोमाङ्घ्रिः कशापाणि-र्दृढं परिकरं वहन् ॥ ६२ ॥ नकुलः कुलशैलाभ-मूर्तिरागाद्दृशोः पथि । वेत्रिणा चाह्वयत् स्मेर-विस्मयस्तं महीपतिः ॥ ६३ ॥ ( त्रिभिर्विशेषकम् ) सोऽभ्यधाद्भूभुजा पृष्ट-स्तपःसूनोर्महीभुजः । सर्वाश्वसा-धनाधीश-स्तन्त्रिपालाभिधोऽस्म्यहम् ॥ ६४ ॥ अश्वानां लक्षणं वेद्मि, वेद्मि सर्वं चिकित्सितम् । देशं वेद्मि वयो वेद्मि, वेद्मि वाहनिकाक्रमम् ॥ ६५ ॥ राजाऽब्रवीत् तव ज्ञान-माकृत्याऽपि निवेद्यते । आर्द्रता हि वदत्यम्भ-स्कुम्भस्य परिपूर्णताम् ॥ ६६ ॥ इत्युदीर्याश्वमारोप्य, परीक्ष्य किल तत्क्षणात् । नेतारं नकुलं चक्रे, निजाश्वीयस्य भूपतिः ॥ ६७ ॥

परिधानपटार्धेन, बद्धकक्षं स्थवीयसीम् । बिभ्राणं वैणवीं यष्टिं, वृषस्कन्धं महाभुजम् ॥ ६८ ॥ गोत्रजेषु व्रजन्नूर्ध्वी-भूतं भूपः परेद्यवि । सहदेवमुदैक्षिष्ट, व्रततीबद्धमूर्धजम् ॥ ६९ ॥ (युग्मम्) धरित्रीपतिरामन्त्र्य, विस्मयेन तमभ्यधात् ।

भद्र ! कोऽसि ? कुतश्चासि, स्थानादागतवानिह ? ॥ ७० ॥ जगाद सहदेवोऽथ, पाण्डवेयस्य भूभुजः । गणशो गोकुलान्यासन, प्रत्येकं लक्षसंख्यया ॥ ७१ ॥ स तेषां ग्रन्थिकं नाम, संख्याकारं न्ययुङ्क्त माम् । सर्वेषां वत्सानां च, राजन्नेतान्यमाननोत् ॥ ७२ ॥ गर्भाधाने गवां काल-मुपायमपि वेद्म्यहम् । शरीरलक्षण-व्याधि-चिकित्सासु तु का कथा ? ॥ ७३ ॥ इत्याकर्ण्य गिरं मात्य-प्रमोदविवशाशयः । सहदेवं महीदेवो, गोकुलाधिपतिं व्यधात् ॥ ७४ ॥

अथ वैदेशिकौचित्य-कल्पिताकल्पशालिनी । रूप-लावण्य-सौभाग्य-विसारितरतिस्मया ॥ ७५ ॥ महादेव्याः सुदेष्णायाः, समाभ्यर्णे कदाचन । विहरन्ती भुजिष्याभि-र्ददृशे द्रुपदात्मजा ॥ ७६ ॥ दृष्ट्वा सविस्मयास्ताश्च, सुदेष्णायै न्यवेदयन् । कुतूहलाती साऽपि, तामेताभिरजूहवत् ॥ ७७ ॥ उपवेश्य परप्रीत्या, तां महत्यासने क्वचित् । नरेन्द्रपत्नी ताम्बूलदानपूर्वमभाषत ॥ ७८ ॥ शुभे तवायमाकारो, न क्ष्मावस्थानमर्हति । किं पुनः पादचारेण, विदेशगमनं क्वचित् ? ॥ ७९ ॥ ततः कथय काऽसि त्वं, पत्नी कस्यापि भूभुजः ? । कुतश्चेयमवस्था ते, विपयान्तरदर्शनी ? ॥ ८० ॥ स्नुषाऽथ पाण्डुराजस्य, स्मितपूर्वमभाषत । मालिनी नाम सैरंध्री, दास्यस्मि न नृपप्रिया ॥ ८१ ॥ मयि प्रमाणमत्युच्चै-र्द्रौपदी धृतपूर्विणी । मुकुन्दमहिषी दध्ये, सत्यभामाऽपि संमदम् ॥ ८२ ॥ प्रिया विराटभूभर्तुः, पाञ्चालीं पुनरब्रवीत् । हन्ताहमपि सैरंध्रि ! त्वां सत्करोमि ते ॥ ८३ ॥ किं तु त्वां यदि वीक्षेत, कदाचित् क्षितिवासवः । प्रियामपि तदानीं मां, मनसा न हि संस्पृशेत ॥ ८४ ॥ भूयोऽप्युवाच पाञ्चाली, कृतं ते शङ्कयाऽनया । प्रच्छन्नाः सन्ति यत् पञ्च, गन्धर्वाः पतयो मम ॥ ८५ ॥

---

१ गोपानाम् । २ धर्मीभिः । ३ परगृहनिवासिनी कलावती स्त्री । ४ कृष्णपट्टराज्ञी ।

विरूपया विलोकेत, यः कश्चन दृशाऽपि माम् । नैव ते तस्य मृष्यन्ति, तत्क्षणादेव जीवितम् ॥ ८६ ॥ विद्यातिरोहितात्मानः, सर्वतः संचरन्ति ते । न च दन्तीव सिंहानां, तेषां राजाऽपि किंचन ॥ ८७ ॥ ततोऽभ्यधत्त भूपाल-वल्लभा तर्हि मालिनि ! । मम लक्ष्मीस्तवैवेयं, यथेच्छमुपभुज्यताम् ॥ ८८ ॥ इत्यालप्य दुकूलानि, काञ्चनाभरणानि च । परिधाप्यात्मनः पार्श्वे, सुदेष्णा तामतिष्ठिपत् ॥ ८९ ॥ मुखवासं वितन्वाना, कुर्वती पत्रवल्लरीः । धम्मिल्लं विविधैः पुष्पै-र्ग्रथ्नती ललिताः स्रजः ॥ ९० ॥ तैस्तैः सुगन्धिभिर्द्रव्यै-रङ्गरागं च पिंषती । नरेन्द्रपत्न्याः सैरंध्री, नीरन्ध्रां मुदमातनोत् ॥ ९१ ॥ ( युग्मम् )

तेऽपि कर्माणि कुर्वाणाः, स्वानि स्वानि प्रतिक्षणम् । प्रीतिं ताण्डवयामासुः, पाण्डवाः पृथिवीपतेः ॥ ९२ ॥ केनाप्यविदिताः शश्व-द्गत्वा सर्वेऽपि ते निशि । कुन्त्याः पादानवन्दन्त, स्थापितायाः क्वचिद्गृहे ॥ ९३ ॥ अवाप्तैरवदानेषु, भूपतेः पारितोषिकैः । ते प्रीत्या परया नित्य-मभ्यनन्दन् परस्परम् ॥ ९४ ॥ तेषां सर्वप्रकारेण, तत्रान्योऽन्योपकारिणाम् । सेवादुःखमपि प्रायो, न मनस्तापमातनोत् ॥ ९५ ॥ इति संवसतां तेषां, विराटनृपतेः पुरे । त्रयोदशस्य वर्षस्य, मासा एकादशात्यगुः ॥ ९६ ॥

अथ निध्याय सैरंध्रीं, कदाचिदपि कीचकः । सहोदरः सुदेष्णायाः, कंदर्पवशगोऽभवत् ॥ ९७ ॥ दध्यौ च किं रतिर्भूमौ, स्वर्गलोकादवातरत् ? । प्राणेशदेहदाहार्त्या, तस्या वा क्वेदृशं वपुः ? ॥ ९८ ॥ इमां रसायनैर्मन्ये, तरुणीभूय निर्ममे । रूपेऽस्मिन्न प्रगल्भेत, जराकम्प्रोऽन्यथा विधिः ॥ ९९ ॥ न चेदस्यास्तनुस्पर्शैः, प्रीणितं शिशिरात्मभिः ।

---

१ सहन्ते । (२ ※'धम्मिल्लविधये पुष्पैर्ग्रथ्नती ललिताः स्रजः ।' इति गद्यपाण्डवचरितधृतः पाठ उचितः । ३ 'कुर्वती' इत्यपि तत्रैव पाठान्तरम् ।) ४ पराक्रमेषु । ५ युवा भूत्वा । ※ अयं पाठः प्रतित्रयेऽप्यस्ति ।

वपुरेतत्तदानीं मे, हविर्भूतं स्मरानले ॥ १०० ॥ ममात्मनो रसस्येव, तस्य मदनाग्निना । जायेत यद्यवस्थान-मस्या भानोरिवाशया ॥ १०१ ॥ इति संचिन्त्य दीर्णाङ्गः, कीचकः स्मरसायकैः । प्रगल्भवदनां कांचि-द्दूतीं प्रैपीत्तदन्तिके ॥ १०२ ॥ क्षणादभ्येत्य सा तस्याः, पुरः कृपणमभ्यधात् । पतिव्रताव्रतं जाने, भवत्या विश्वविश्रुतम् ॥ १०३ ॥ तव प्राप्तास्मि सैरन्ध्रि !, त्वदभ्यर्णमुपागता । जानासि कीचकं देव्याः, सुदेष्णायाः सहोदरम् ॥ १०४ ॥ तस्य प्रकाममस्वस्थं, वपुरस्य ज्वलन्नन । न केनापि प्रकारेण, स्मेराक्षि ! स्वास्थ्यमश्नुते ॥ १०५ ॥ यदि नाम भवत्पाणि-स्पर्शैः शाम्यति तद्यथा । अनुभावः मतीनां हि, सर्वदोपद्रिपंतपः ॥ १०६ ॥ वेगात्तदेत्य कल्याणि !, निजस्पर्शसुधाभ्यैः । प्रसीद रतये तस्य, त्वादृश्यो हि कृपालवः ॥ १०७ ॥ इति श्रुत्वा वचस्तस्याः, कमनीयाक्षरं बहिः । व्यञ्जयत्तु दुराकूत-मन्तर्ज्वाल मालिनी ॥ १०८ ॥ कोपादूचे च रे दूति !, तावकं सविपान्नवत् । मुखे मधुरमादत्ते, शीलप्राणानिदं त्वः ॥ १०९ ॥ मृत्यवे कीचको नूनं, मत्पाणिस्पर्शमिच्छति । सिंहीकरावमर्शेन, गोमायुः किमु जीवति ? ॥ ११० ॥ यदि स्वरूपगोप्येन-आनीयुः पतयो मम । तदा न ते न तस्यापि, जीवितव्यकथा क्वचित् ॥ १११ ॥ इत्याक्रुश्य भृशं दूती, मालिन्या गलदम्बिना । गत्वा म्लानमुखी सर्वं, कीचकस्य न्यवेदयत् ॥ ११२ ॥ उपायैर्विविधैरन्यै-रपि दानादिभिर्यदा । प्रयुक्तैरीहते रन्तुं, पाञ्चाली न कथंचन ॥ ११३ ॥ तदाऽन्येद्युर्बलाद्ग्राही, रहः क्वचन कीचकः । करेण धारयामास, तां मृणालीमिव द्विपः ॥ ११४ ॥ तत्करस्पर्शमासाद्य, ज्वलदङ्गारसोदरम् । तदैव ताम्रतां भेजे, दारुवन्मालिनीमुखम् ॥ ११५ ॥

१ मन्दः दीनं वा । २ निष्कासिता ।

तस्यावधीर्य सैरंध्री, चाटूक्तिं विषवृष्टिवत् । हठादाकृष्य दोर्वल्लि-माक्रोशमुखरा ययौ ॥ ११६ ॥ विलक्षमनसा तेन, कीचकेन दुरात्मना । गच्छन्ती सा पदा पृष्ठे, ततः कोपादहन्यत ॥ ११७ ॥

दीनवक्त्रा भुवि न्यस्त-दृष्टिरस्राविलेक्षणा[1] । संसद्युपेत्य भूभर्तु-रिति चक्रन्द सा भृशम् ॥११८॥ राजन्नन्यायदुर्वार-पावकप्रावृडम्बुदः[2] (द) । त्वमेव भुवनेऽमुष्मिन्, सर्वदुर्वृत्तशासिता ॥ ११९ ॥ पूत्करोमि पुरः कस्य ?, बभूव शरणाद्भयम् । धराधीश ! यदन्यायं, त्वदीया एव कुर्वते ॥ १२० ॥ स्वप्रतिज्ञातनिर्वाह-कोविदाः सत्यवादिनः । परोपकारैकधना, भुवि प्रच्छन्नचारिणः ॥ १२१ ॥ ऊर्जस्वलभुजौर्जित्या, धर्मधामान्यमर्पणाः । गन्धर्वाः पतयो यस्याः, पञ्च पञ्चाननोपमाः ॥ १२२ ॥ व्यलीकरहितां तां मा-मनाथामिव दुर्मदः । पतिव्रतां पदा पृष्ठे, पापीयान् कीचकोऽवधीत् ॥ १२३ ॥ ( त्रिभिर्विशेषकम् । ) नियतं तेऽपि कुत्रापि, न सन्त्येव मम प्रियाः । भवेयुश्चेन्निहन्येत, स्पृशन्नैवैप[3] मां पदा ॥ १२४ ॥

भ्रुकुटीभङ्गभीमास्यो, दृशा धर्मात्मजन्मना । मारुतिस्तं क्रुधा हन्तु-मुत्थास्यन् विनिवारितः ॥ १२५ ॥ ततो ज्ञातेयदाक्षिण्यात्, किंकर्तव्यत्वमोहिते । किंचिदप्रतिपेदाने, राज्ञि तूष्णीकताजुषि ॥ १२६ ॥ असंस्तुत इवोत्थाय, मध्येसंसद्युधिष्ठिरः । औदासीन्यजुषा वाचा, सैरंध्रीमित्यभाषत ॥ १२७ ॥ युग्मम् ॥ तादृशास्तव चेत् सन्ति, प्रिया वदसि यादृशान् । ते न नाम सहिष्यन्ते, त्वां प्रत्यविनयं द्विषः ॥ १२८ ॥ तद्गच्छ गच्छ सैरंध्रि !, स्वस्थानं किं नु रोदिषि ? । विद्धि कीचकमन्याय-दावपावककीचकम्[4] ॥ १२९ ॥ उदासीनवदित्युक्ता, द्रौपदी धर्मसूनुना । संवृत्य शोकसंरम्भ-मन्तःपुर-

१ अश्रुव्याप्तनेत्रा । २ 'दुर्दावपाव०' प्रतिद्वय० । ३ 'न्नैवैप' इति प्रतित्रयपाठो न सम्यक् । ४ कीचको-वंशः ।

मगात् पुनः ॥ १३० ॥ कीचकस्यानये तस्मि-न्निर्माय गजमीलिकाम् । पृथिवीपतिरास्थाना-दुत्थायाभ्यन्तरं ययौ ॥१३१॥

तस्यामेव निशीथिन्या-मविज्ञाताऽथ केनचित् । जगाम द्रौपदी मन्द-पादपातं महानसे ॥ १३२ ॥ चरणाङ्गुष्ठमानस्य, याज्ञसेनी शनैः शनैः । तत्र जागरयामास, सुखसुप्तं वृकोदरम् ॥१३३॥ सोऽब्रवीत् प्रेयसीं देवि !, किमश्रूणि विमुञ्चसि ? । शौर्दीर्घांश्च निश्वासान्, भाषसे चातिगद्गदम् ? ॥ १३४ ॥ साऽप्यूचे पृच्छसि स्वामिन् ! किं नामासंविदानवत् ? । किं न त्वं नामद्राक्षीः, कीचकाविनयं मयि ? ॥ १३५ ॥ भवन्तोऽद्यापि जीवन्त-मात्मानं मन्वते किमु ? । प्रेयसी पश्यतां येषा-मपरैः परिभूयते ॥१३६॥ शौर्यं सत्त्वमहंकार-श्चण्डिमा भुजदण्डयोः । जगाम सर्वमप्येत-न्मन्ये लक्ष्म्या सहैव वः ॥१३७॥ पक्षिणोऽपि प्रियां वीक्ष्य, संपन्नान्यपराभवाम् । न बलंभूष्णवः सोढुं, किं पुनर्मानशालिनः ? ॥ १३८ ॥ इत्यादिभिः प्रिया-वाक्यै-र्गर्हितो मरुतः सुतः । ज्वलन्नपत्रपानम्र-मौलिर्नीचैरवोचत ॥ १३९ ॥ कथं दुरात्मनो देवि !, तस्यैतावदहं सहे ? । श्वः सभां तदाऽऽवेद्य, प्रत्यूहाय न चेद्भवेत् ॥ १४० ॥ प्रातस्तु यदि कीनाश-दासतां लम्भये न तम् । कदापि गणये-देवि !, मा स्म तत्पुरुषेषु माम् ॥ १४१ ॥ पर कामातुरः स त्वां, प्रातर्भूयोऽपि योक्ष्यते । नारीषु सिद्धये काम-मवैलक्ष्यं हि कामिनाम् ॥ १४२ ॥ स च त्वयाऽभियुञ्जानो, माननीयो मनस्विनि ! । निहन्तुमनसा मीन-मामिषं हि निधीयते ॥१४३॥ ततः किरीटिनो नाट्य-शालायां शीलशालिनि ! । गृह्णीयास्तेन संकेतं, निशीथसमये निशि ॥ १४४ ॥ त्वदीयेनैव वेषेण, तत्राहं पुरतो गतः । तज्जीवितं हरिष्यामि, निबिडालिङ्गनच्छलात् ॥ १४५ ॥ इत्यालोच्य रहः कान्तां, विससर्ज वृकोदरः ।

---

१ अगातनर । २ 'देवी' इति पाठश्चेन साधु । ३ लज्जाराहित्यम् ।

निययौ निभृतन्यस्त–पदं साऽपि महानसात् ॥ १४६ ॥
अप्सरोजित्वराकल्प[1]–शिल्पेनाधिकशालिनी । आकृषन्ती विशेषेण, कामिनीनामपीक्षणे ॥ १४७ ॥ द्रावयन्ती मनः कामं,
कृष्णा लीलावलोकितैः । कीचकाय प्रगे तस्थे, राजवेश्मप्रवेशने ॥ १४८ ॥ (युग्मम् ।) तां प्रेक्ष्य पदमप्येकं, जातस्तम्भः
स नाचलत् । तत्पृष्ठचरणाघात–पातकेनेव यन्त्रितः ॥ १४९ ॥ स्वेदोदबिन्दुसंदोहै–स्तस्य दन्तुरितं वपुः । द्रौपदीस्पर्शपापेन,
जातस्फोटमिवाभवत् ॥ १५० ॥ तद्वपुर्बद्धरोमाञ्चं, नरकक्रोडभाविभिः[2] । सर्वं विद्धमिहैवाभू–दयःसूचीचयैरिव ॥ १५१ ॥
कृष्णाऽपि तं तथैक्षिष्ट, स्निग्धस्निग्धैरिवेक्षणैः । स प्रकामं यथा मेने, तामात्मन्यनुरागिणीम् ॥ १५२ ॥ शनैः शनैः समभ्ये-
त्य, दीनैर्दीनैर्वचःक्रमैः । सोऽथ तामर्थयांचक्रे, तद्गिरं साऽप्यमन्यत ॥ १५३ ॥ तमभ्यधत्त सैरंध्री, निशीथे नाट्यवेश्मनि ।
स्थास्याम्यहमुपागम्य, तत्रागच्छेद्भवानपि ॥ १५४ ॥ इति संकेतमादाय, द्रौपद्यन्तःपुरं ययौ । कीचकोऽप्युल्लसत्प्रीति–
रन्तिकं नृपतेरगात् ॥ १५५ ॥
देवताराधनैस्तैस्तैः, कीचकस्याभिलष्यतः । प्रियः सुहृदिवागच्छत्, कथंचिद्दिवसात्ययः ॥ १५६ ॥ भाविनीमापदं
पश्यन्, सुदेष्णासोदरस्य ताम् । शङ्के पङ्कजिनीनाथ–स्तद्दुःखादस्तमाययौ ॥ १५७ ॥ यथा यथाऽतिपीवानो[3], बभूवुस्ति–
मिरोर्मयः । पीवतामाप हर्षोऽपि, कीचकस्य तथा तथा ॥ १५८ ॥ अथ बिभ्रत्यहंकार–मन्धकारे वृकोदरः । निर्माय
मालिनीवेष–मविशन्नाट्यवेश्मनि ॥ १५९ ॥ कीचकोऽपि तमस्काण्ड-ताण्डवाडम्बरोल्वणे[4] । वासयन्नङ्गसौरभ्यै–र्दिशस्तस्मि-

१ आकल्पः–नेपथ्यम् । २ नरकमध्ये भाविभिः । ३ अतिपुष्टाः । ४ 'रोल्वणः' प्रत्यन्तर० ।

नृपागमत् ॥ १६० ॥ स तत्राघातसंकेतं, द्वारि तिष्ठन्नबूबुधत् । भीमोऽप्यन्तः स्थितस्तूर्णं, हुंकारमकरोच्छनैः ॥ १६१ ॥ प्रविश्य नृपतेः स्याल-स्मरक्लिन्नमनोभवः । जगाद मुदितो भीमं, सैरंध्रीवेषधारिणम् ॥ १६२ ॥ एह्येहि देवि ! सैरंध्रि !, दोर्युगालिङ्गिमोर्ष्मभिः । अङ्गं निर्वापयालिङ्ग्य, मन्मथज्वलितं मम ॥ १६३ ॥ इत्यालपन्तमायान्तं, तमभ्येत्य वृकोदरः । गाढमेव तथाऽऽलिङ्ग-द्यथा सोऽगात् परासुताम् ॥ १६४ ॥ नाट्यौकसो बहिस्तस्मा-न्मारुतिः कीचकं भुवि । मांसपिण्डी-मर्दितं, गदाक्षेण ततोऽक्षिपत् ॥ १६५ ॥ मरुत्सुनः कृतात्मीय-वैरनिर्यातनस्ततः । मेदुरानन्दमागत्य, स्वपिति स्म महानसे ॥ १६६ ॥

तथाभूतं च लोकेभ्यः, प्रातर्विज्ञाय कीचकम् । गतं शोकोर्मिविवशा-स्तस्याधावन्त बान्धवाः ॥ १६७ ॥ तं तथा-विधमालोक्य, महीतलविलोठिनम् । ते सर्वे तारपूत्कार-मरुदन् शोकविक्लवाः ॥ १६८ ॥ तेषां नेत्रतडागेषु, स्वबन्धोर्वध-कारिणि । अमर्षग्रीष्मघर्मांशु-रश्रुवारीण्यशोषयत् ॥ १६९ ॥ यदा विलोकयन्तोऽपि, भ्रातुर्नाज्ञासिषुर्द्विषम् । तदा सर्वेऽपि संभूय, ते पर्यालोचयन्मिथः ॥ १७० ॥ पूर्वमप्यस्य जानीमो, मालिन्यामनुरागिताम् । भ्रातुर्नः सैव तन्नून-मभवन्मृत्यु-हेतवे ॥ १७१ ॥ तदीयदयितैरेव, बन्धुर्नो नियतं हतः । कथंचिन्नोपलभ्यन्ते, ते च प्रच्छन्नचारिणः ॥ १७२ ॥ तदेतामेव सैरंध्रीं, महानेन स्वबन्धुना । चितावैश्वानरे क्षिप्त्वा, क्रोधं विध्यापयामहे ॥ १७३ ॥

इत्यालोच्य चितावह्नौ, निजेन सह बन्धुना । प्रक्षेप्तुमनसोऽभ्येत्य, मालिनीमाकृपन् भुजे ॥ १७४ ॥ बलादाकृष्य-माणा तैरिति पूत्कुरुते स्म सा । जयो जयन्तो विजयो, जयसेनो जयद्बलः ॥ १७५ ॥ यूयं चेत् क्वापि वर्तध्वे, तन्मां

रक्षत रक्षत । एतैश्चितानले क्षेप्तुं, नीयमानां दुरात्मभिः ॥ १७६ ॥ इत्यस्याः कृपणां वाणी–माकर्ण्य पवनात्मजः । क्रोधाद्दूरोच्छलत्फालं, धावति स्म महानसात् ॥ १७७॥ सोऽब्रवीत्तान् किमेतां भो !, बलादाकृषथ स्त्रियम् । अस्याः कुत्रापि किं नाम, कश्चिदस्त्येव न प्रभुः ? ॥ १७८ ॥ तेऽप्यूचुर्वल्लवैतस्य, मृत्यवे सोदरस्य नः । इयमेवाभवत् कोऽपि, हन्ता तु ज्ञायते न हि ॥ १७९ ॥ यं निहत्य बलाद्वैर–मात्मनः शमयामहे । चितामध्ये निधास्याम–स्तदिमामेव पुंश्चलीम् ॥ १८० ॥ भीमोऽभ्यधाद्व्यधादेव–मन्यायं वः सहोदरः । रिरंसुः परवामाक्षीं, तत्फलं चाप्यवाप्तवान् ॥ १८१ ॥ किं नामाबिभ्यतो यूयं, स्त्रीहत्यापातकादपि ? । द्वैतीयीकं कुरुध्वेऽमुं(दो), लप्स्यध्वेऽस्य न किं फलम् ? ॥१८२॥ ज्ञातेययन्त्रितो वश्ये–न्नृपोऽन्यायं सहिष्यते । नोदेष्यति शिरःशूलं, किमन्यस्यापि कस्यचित् ? ॥ १८३ ॥ तेऽथाभ्यधुः क्रुधा शक्ति–र्यस्यास्ति भुजदण्डयोः । इमामवतु सोऽस्माभिः, क्षिप्यमाणां चितानले ॥ १८४ ॥ ततस्तान्निकटं भीमः, कमप्युत्पाट्य शाखिनम् । कीचकस्यावधीद्बन्धून्, शतमप्येकहेलया ॥ १८५ ॥ वल्लवेन हताः पेतुः, सुदेष्णाबन्धवो भुवि । जज्ञिरे साधु दुर्वृत्ता, इत्युदस्थात्तु लोकवाक् ॥ १८६ ॥ स्वस्थानं मालिनीं प्रेष्य, हताऽरातिमतङ्गजः । गुहामिव हरिर्भीमो, ययौ निर्भीर्महानसम् ॥ १८७ ॥

ततो बन्धुवधक्रोध–स्फुरदोष्ठभयंकरा । सुदेष्णा भूपमभ्येत्य, बभाषे साश्रुलोचना ॥ १८८ ॥ आर्यपुत्र ! तवायं मे, प्रसादोऽपि विडम्बना । हन्यन्ते बान्धवा यस्याः, पश्य कर्मकरैरपि ॥ १८९ ॥ तदेकः कीचकाराति–स्तावन्न ज्ञायते क्वचित् । वल्लवस्त्वयमस्त्येव, पापस्तद्बन्धुघातकः ॥ १९० ॥ सैन्यैः समस्तैरप्यद्य, न चेदेनं हनिष्यसि । नूनमात्मानमुद्बध्य, ततस्त्यक्ष्यामि जीवितम् ॥ १९१ ॥ राजाऽथ सान्त्वयन् वाक्यैः, कोमलैः कोमलैः प्रियाम् । पाणिनोदश्रुणी नेत्रे,

प्रेंगाश्चिदमभ्यधात् ॥ १९२ ॥ देवि ! दुर्नयमप्युच्चै-स्त्वद्दाक्षिण्यादहं सहे। बन्धूनां ते न खल्वन्ये, सहन्ते भुजशालिनः ॥ १९३ ॥ अथ तथाऽपि यत्किंचि-न्मृगाक्षि! करोम्यहम्। वल्लवोऽयं परं मर्वे, सैन्यं हन्यात् खलीकृतः ॥१९४॥ तस्यान्यस्तु यथोपायः, संप्रत्यस्त्येव भामिनि। युद्धैव हि निहन्यन्ते, दुर्जयाः परिपन्थिनः ॥ १९५ ॥ आगतो धार्तराष्ट्रस्य, गतो मल्लमतल्लिका। नृपकर्परनामास्ति, पुरेऽस्मिन् हस्तिनापुरात् ॥ १९६ ॥ जितानेकाहवः सर्वान्, स च मल्लानधिक्षिपन्। नाग्यां भुजगर्वेण, वल्लवेन सहिष्यते ॥ १९७ ॥ ततः शश्वत्कृताभ्यासः, कदाचिदकृतश्रमम्। स एवामुं दुरात्मानं, निहनिष्यति वल्लवम् ॥ १९८ ॥ इति पृथ्वीपतिः प्रेम्णा, मृदुभिर्मृदुभिः पदैः। सान्त्वयित्वा शनैः प्रेयसी-दन्तरन्तःपुरं प्रियाम् ॥ १९९ ॥

मल्लार्गतिरस्कार-कारिणं नृपकर्परम्। वल्लवोऽन्येद्युराहास्त, नियोद्धुं नृपतेः पुरः ॥२००॥ ततोऽक्षवाटमृक्षेशे-वलक्षसिकतान्वितम्। भूपतिः कारयांचक्रे, तन्नियुद्धकुतूहली ॥ २०१ ॥ इमं च परितो मञ्चान्, सुरेन्द्रसदनोपमान्। धराधीशोऽधिकोशाय, राजन्यानामकारयत् ॥ २०२ ॥ दिव्येऽन्यस्मिंस्ततो मञ्चे, रत्नमण्डपिकातले। मणिसिंहासनेऽभ्येत्य, भूमीपतिरुपाविशत् ॥ २०३ ॥ ततो निदेशमासाद्य, विराटवसुधाभुजः। सर्वेऽप्यारुरुहुर्मञ्चान्, सामन्ताः सपरिच्छदाः ॥ २०४ ॥ यद्यप्यस्त्रिणं भीमे, न ते संशेरते क्वचित्। आययुस्तदपि त्रस्त-मनसो धर्मजादयः ॥२०५॥ स्थेयांसौ विश्रुतावंसौ, कस्तूरी-

१ प्रोन्नतान। २ प्रेयसम्. । ३ मल्लयुद्धस्थानम। ४ ऋक्षेशश्चन्द्रः, तद्वत् वलक्षा-उज्ज्वलाः सिकता., ताभिः चितं-व्याप्तम। ५ मंशां चक्रुः। ६ अतिस्थिरौ।

स्तबकाङ्कितौ। चन्दनालिप्तसर्वाङ्गौ, चण्डचण्डातकांशुकौ ॥२०६॥ सह्यविन्ध्याविवाध्यक्षौ, मल्लश्रेणिशिरोमणी। तौ ततोऽविशतां रङ्गं, वृषकर्पर-वल्लवौ ॥२०७॥ (युग्मम्) असौ कृतश्रमो मल्लो, वल्लवस्त्वकृतश्रमः। नियुद्धमनयोर्युक्तं, नादधे वसुधाधिपः ॥ २०८ ॥ परं श्यालारिरस्यायं, हन्तव्योऽस्ति यथा तथा। निनिन्द मेदिनीनाथ-मिति सर्वस्तदा जनः ॥ २०९ ॥ (युग्मम्) कन्दरादारिणोऽद्रीणां, भुजास्फोटरवास्तयोः। तदा चक्रुर्जगत् सर्वं, विद्राणश्रवणेन्द्रियम् ॥ २१० ॥ कम्पयन्तौ भुवं पादै-र्ददानौ तलहस्तकान्। ततस्तौ विविधैर्भङ्गै-र्बद्धमुष्टी प्रसर्पतुः ॥२११॥ आश्वेव हन्तुमीशोऽपि, वल्लवो वृषकर्परम्। नेत्रोत्सवाय लोकानां, कंचित् कालं व्यलम्बत ॥ २१२ ॥ अभूतां शतशस्तत्र, तयोर्जयपराजयौ। विन्ध्यधात्रीधराटव्यां, मत्तमातङ्गयोरिव ॥ २१३ ॥ वल्लवेनाथ कस्मिंश्चि-दानीय निजबन्धने। प्राणप्रयाणदीनास्यो, बभञ्जे वृषकर्परः ॥ २१४ ॥ वल्लवस्य जये हृष्य-ल्लोककोलाहलो महान्। उदस्थादवनीभर्तुः, सहैव पुलकाङ्कुरैः ॥ २१५ ॥ सहायो विधुरे देवि!, नेदृशः क्वापि लभ्यते। प्रसीदास्मिंस्तदित्येवं, भूपः कान्तामसान्त्वयत् ॥ २१६ ॥

हतं पौरोगवेणाथ, विराटस्य महीशितुः। वृषकर्परमाकर्ण्य, चरेभ्यो धृतराष्ट्रभूः ॥ २१७ ॥ कर्ण-दुःशासन-द्रोण-गाङ्गेय-सुबलात्मजान्। प्रद्विष्टमतिरेकत्र, मीलयित्वेत्यमन्त्रयत् ॥ २१८ ॥ (युग्मम्) कृत्योपायः पुरा चक्रे, हन्तुं यः पाण्डुनन्दनान्। सोऽयं सुरोचनस्यैव, प्रत्युत प्राभवत् क्षणात् ॥ २१९ ॥ छन्नं च वसतः क्वापि, समा[3]मेतां त्रयोदशीम्। पाण्डवान् संप्रति ज्ञातुं, प्राहैषं वृषकर्परम् ॥ २२० ॥ शतकोटिकठोराङ्गं, सर्वस्मिन्नवनीतले। विना भीममलं-

१ चण्डातकं-वस्त्रविशेषः। २ कष्टे। ३ वर्षम्।

पाण्डवानां विराटनगरे वासः॥

धृष्णु-र्जंतुमेनं न कश्चन ॥ २२१ ॥ कुत्रापि यदि गुप्तोऽपि, भवेदनिलनन्दनः । नूनं तत्र सहेतास्य, भुजाहंकारडिण्डिमम् ॥ २२२ ॥ गृह्यमाणोऽमुना भीम-श्चेन्निहन्येत तन्मम । हतः स्यादहितो हन्यात्, स वाऽमुं विदितो भवेत् ॥ २२३ ॥ इत्याकलयता मल्ल-ग्रामणीः प्रहितो मया । स मेदिनीं क्रमात् क्रामन्, विराटनगरं ययौ ॥ २२४ ॥ तस्मिंश्च तस्य भूभर्तुः, सूपकृत्सूपकृत्परम् । नवानेति श्रुतिर्जाने, तन्नूनं स वृकोदरः ॥ २२५ ॥ स यत्रास्ति ध्रुवं भाव्यं, तत्रान्यैरपि पाण्डवैः । गजगन्धा हि न स्थान-काम-श्चामादिभिर्विना ॥ २२६ ॥ परं ते चेदभिव्यक्ति-मानीयन्ते कथंचन । तत्तानुच्छेत्तुमुत्सेको, नर्मदः सफलो भवेत् ॥ २२७ ॥ विराटपुरसंरोध-प्रष्ठैरौपयिकैरपि । न ते व्यक्तिमुपेष्यन्ति, तैरमीषां हि का व्यथा ? ॥ २२८ ॥ किं नृपयोर्दिशोस्तत्र, कृते जीव-धनग्रहे । भजेयुः प्रकटीभावं, ते दयामयचेतसः ॥ २२९ ॥ अस्माभिस्तद्ग्रहे पूर्वमेकस्यां निलिन दिशि । धाविष्यते धराधीशः, स्वसैन्यैरखिलैरपि ॥ २३० ॥ अन्यस्यां तु कृते तस्मि-न्शून्यतां नगरे गते । निर्यास्यन्ति स्थिताः पश्चात्, पाण्डवा एव केवलम् ॥ २३१ ॥ तदेवं पाण्डवेयेषु, गतेषु स्फुटतां भृशम् । संरप्स्येऽहं तदुच्छेद-कृते पुनर्नोर्मिभिः ॥ २३२ ॥ इत्यालोच्य बलैः कैश्चित्, सारैर्दन्तुरयन् दिशः । विराटपुरमभ्येतुं, प्रतस्थे धृतराष्ट्रभूः ॥ २३३ ॥ तदश्वीयखुरोत्खात-रजःस्थगितमण्डलः । तस्यान्यायमिवाद्रष्टुं, रविरागाददृश्यताम् ॥ २३४ ॥ मूर्तिमद्भिरिवाधर्म-स्याम्याश्ववल्पांशुभिः । पतद्भिरखिलाः शोप-मनीयन्त समुद्रगाः ॥ २३५ ॥ कुरुगोत्रप्रदीपस्य, सांप्रतं ते न दस्पृशा । इत्याख्यातुमिवैतस्य, मारुतोऽभिमुखं ववौ ॥ २३६ ॥ युक्तं न तव कर्मैतत्, कर्मसाक्षिणि पश्यति । इत्याख्या-

१ भृशं । २ गर्व. । ३ रविरिन्दे । ४ नयः । ५ योग्या ।

न्त्य इव शिवाः, सूर्यस्याधो ववासिरे ॥ २३७ ॥

अथाविदित एवायं, प्रयाणैरविलम्बितैः । विराटनगराभ्यास-माससाद सुयोधनः ॥ २३८ ॥ ततोऽभ्यर्णे तमायातं, द्रोण-कर्णादिभिः सह । भीत्या चराः स्खलद्वाचो, विराटस्याचचक्षिरे ॥२३९॥ ततः स्वसैन्यसंभार-भारभङ्गुरितक्षितिः । गान्धारेयमभि क्षोणि-पतिर्यावत् प्रतिष्ठते ॥ २४० ॥ तावद्व्रणितनिःशेष-वर्ष्माणो बाणपङ्क्तिभिः । आगत्य मन्दिरद्वारि, पूत्कुर्वन्ति स्म वल्लवाः ॥ २४१ ॥ भूरिभिर्बलसंभारै-रागत्य प्रणिहत्य नः । कुरुभूपालगृह्येण, नरेन्द्रेण सुशर्मणा ॥ २४२ ॥ दक्षिणस्या दिशः सर्वे, नीयन्ते सुरभीगणाः । क्षात्रं धर्मं पुरस्कृत्य, ततो धावत धावत ॥ २४३ ॥ युग्मम् ॥ इत्युपश्रि(श्रु)त्य, गोपानां, गिरः करुणपीवराः । भूपतिर्गोगणत्राण-मैच्छत् प्राणैरपि क्षणात् ॥ २४४ ॥ गोमुनिब्राह्मणभ्रूण-स्त्रैणत्राणे हि साधवः । प्राणानपि तृणीयन्ति, यशो हि किल तत्प्रियम् ॥ २४५ ॥ संग्रामरसवाचालै-र्बलैस्तुमुलयन् दिशः । ततः सर्वाभिसारेण, प्रतस्थे पृथिवीपतिः ॥ २४६ ॥ रणकौतूहली तत्र, कृतगाण्डीवताण्डवः । विमुक्तवनितावेषः, सैष द्राग्भविता स्फुटः ॥२४७॥ इत्यालोच्य व्यवस्थाप्य, कथंचन किरीटिनम् । विराटेन समं सर्वे, पाण्डवेयाः प्रतस्थिरे ॥२४८॥ युग्मम् ॥ आयुधानि समानीय, सहदेवः शमीतरोः । यथात्मीयसमग्राणा-मग्रजानां तदार्पयत् ॥ २४९ ॥ विराटभूभुजो वाजि-सैन्यैर्धावद्भिरुद्धतम् । क्षुण्णा क्ष्मा शरणं रेणु-व्याजाद्विष्णुपदं[3] ययौ ॥ २५० ॥ यमप्रतिममालोक्य, नृपमेनममूः स्त्रियः । कम्पिष्यन्तेऽधुनेतीव, पांसवः पिदधुर्दिशः ॥ २५१ ॥ मा गाश्चौरेति शंसन्त, इव कामं सुशर्मणः । कर्णजाहमगाहन्त, तस्य

१ अर्कवृक्षस्याधः । २ गोपाः । ३ आकाशम् ।

विराटोपरि धार्त-राष्ट्रस्य गमनम्॥

निम्नानननिम्नगाः ॥ २५२ ॥ कानप्यधिकवाचालान्, प्रेष्य वैतालिकोत्तमान् । त्वरमाणं सुशर्माणं, स्थापयामास पार्थिवः ॥ २५३ ॥ जानशर्मा सुशर्माऽपि, विराटाय महीभुजे । निधाय धेनुकं पृष्ठे, सर्वैः सैन्यैरतिष्ठत ॥ २५४ ॥

उभयोरपि नासीर-शौण्डीराणां शराशरि । रणः क्षणमभूत् पीत-पतङ्गकरपञ्जरः ॥ २५५ ॥ अलभन्त रणोत्सङ्ग-चक्रोत्सेका युगम्भृशः । धानुष्केभ्यस्तदा लक्ष्य-मुभयेऽपि हि मार्गणाः ॥ २५६ ॥ परस्परस्य विशिखैः, खण्डिता शरमण्डली । अधोमुखी मगेदेव, भूपल्यङ्कतलेऽपतत् ॥ २५७ ॥ सैन्ययोरुभयोर्बाणै-र्विलूनावयवावलिः । दुर्धरो रुधिरोद्गारि-व्रणः प्रववृते रणः ॥ २५८ ॥ कच्छपायितमूर्द्धानो, मीनायितकराङ्घ्रयः । पङ्कजायितपाण्योघाः, प्रगमुरसृगापगाः ॥ २५९ ॥ चक्रिरेऽथ निरस्तास्त्र, भटैः सैन्याः सुशर्मणः । पाश्चात्यगामिनोऽम्भोधि-तरङ्गैर्निम्नगोर्मिवत् ॥ २६० ॥ अथोत्तस्थे नलैः कश्चित्, नागैः स्फारैः सुशर्मणः । दवाग्निनेव निःशेषं, वैरिकक्षं दिधक्षुणा ॥ २६१ ॥ कृतस्वैरस्वरास्तीव्र-शस्त्रज्वालाकरालिताः । निक्षमा ज्वालनश्यन्, विराटस्यापि सैनिकाः ॥ २६२ ॥ एकाङ्गवीरयोः कामं, संगरोऽभूदभङ्गुरः । द्वयोरपि तयोरन्त-र्गणं पौनीन्द्रगोचिर ॥ २६३ ॥ जयलक्ष्मीः शरासार-वर्षद्दुर्द्धर्षतेजसोः । एकमप्यनयोरन्य-मृत्युभीत्येव नाश्रयत् ॥ २६४ ॥ एकस्मिन्नतिविक्रान्ते, स्वर्गिणां पुष्पवृष्टयः । पतन्त्योऽन्यशरैर्मार्गे-च्छेदच्छेकैर्न सेहिरे ॥ २६५ ॥ समाप्तिमागते शस्त्र-प्राग्भारे तावुभावपि । रथादुत्तीर्य दोर्युद्ध-मतिकुद्धौ वितेनतुः ॥ २६६ ॥ विराटं विकटाभोगै-र्भुजदम्भोलिकेलिभिः । सुशर्मा हत-मर्माण-मावध्य न्ये रथेऽक्षिपत् ॥ २६७ ॥

१ नासीरम्–अग्रसैन्यम । २ शत्रुतुल्य । ३ वेष्टकियाँ ।

अथालोक्य तथा कङ्कः, सातङ्कमवनीपतिम् । भीममाहूय दाक्षिण्य–क्षीराम्भोनिधिरभ्यधात् ॥ २६८ ॥ वत्स ! संव-
त्सरः सोऽय–मस्माभिर्गमितोऽखिलः । एतत्साहायकेनैव, तदेनं किमुपेक्षसे[1] ॥२६९॥ निहत्य क्रूरकर्माणं, सुशर्माणं क्षणा-
दमुम् । विराटपृथिवीनाथं, विमोचयितुमर्हसि ॥ २७० ॥ उद्धर्तव्यः सतामाप–न्निमग्नोऽनुपकार्यपि । किं पुनः कृतसर्वस्वो–
पकारोऽयं महामनाः ? ॥ २७१ ॥ इत्यादेशगिरा ज्येष्ठ–बन्धोः पवननन्दनः । हन्तुकामः सुशर्माण–मधावत सबा-
न्धवः ॥ २७२ ॥ विभाव्य भीममायान्तं, दोःशृङ्गस्थगदाद्रुमम् । भ्रातृभिर्गण्डशैलाभै–र्गिरीन्द्रमिव जङ्गमम् ॥ २७३ ॥
पुनःकाका इवोपेताः, संविभक्तुं जयामिषम्। दिशो दिशि पलायन्त, सुशर्मपृतनाचराः ॥ २७४॥ युग्मम्॥ पर्वतं कुलिशेनेव,
देवो गोत्रनिषूदनः । सुशर्मणो मरुत्सूनु–र्बिभेद गदया रथम् ॥ २७५ ॥ भीमस्तुतीरिव क्रष्टु–मनिर्यान्तीररिं प्रति ।
क्षिपन्तमङ्गुलीर्वक्त्रे, तं जीवन्तममुञ्चत ॥ २७६ ॥ विराटभूपतिं भीमो, विधाय गतबन्धनम् । आबध्य पुनरात्मीयै–र्गुणै-
रारोपयद्रथम् ॥ २७७ ॥ पाण्डवानामुदात्तं त–द्विभाव्य चरिताद्भुतम् । प्रीतिप्रह्वीभवच्चेता–श्चिन्तयामास पार्थिवः ॥२७८॥
कौतुकात् केऽप्यमी देवाः, किं धरित्रीमवातरन् ? । विस्मृत्य युगमेतद्वा, धात्रा विदधिरे नराः ? ॥२७९॥ किं वा कृतयुग-
स्यैव, नराः कतिचिदुध्धृताः ? । स्फुरत्यैदंयुगीनं हि, नामीषां पुरुषव्रतम् ॥२८०॥ न भवेयुः सहायाता–श्चेदमी समरे मया ।
क्रूरैस्तन्मे समाप्येत, कथाऽपि परिपन्थिभिः ? ॥ २८१ ॥ सुशर्माम्भोधरारब्धो, मद्यशश्चन्द्रविद्रवः । वल्लवेनानिलेनेव,
रक्षितः सोऽयमक्षतः ॥२८२॥ विचिन्त्येति महीपालः, प्रीतिपर्यश्रुलोचनः। निमीलितकराम्भोज–कुड्मलस्तानभाषत ॥२८३॥

१ ब्राह्मणवेषधारी युधिष्ठिरः ।

कक्ष ! श्रीकुलिपल्यङ्क !, वल्लव ! प्रीतिपल्लव ! । नत्रिपाल ! द्विपत्काल !, प्रत्यर्थिकाप्रतिपन्थिक ! ॥ २८४ ॥ एषा लक्ष्मीरिदं राज्य-मदश्च मम जीवितम् । अद्यप्रभृति युष्माक-मेवैतत् किमतः परम् ॥ २८५ ॥ यौष्माकीणभुजौर्जित्य-फलकेनैव संप्रति । मत्कीर्तेर्गो ममोत्तेरुः, सुशर्मविपदर्णवम् ॥ २८६ ॥ इत्युच्चैः स्तुतिवाचाले, भूपाले पुलकाङ्किते । त्रपावनतमूर्द्धानः, पाण्डवेया बभाषिरे ॥ २८७ ॥ अनुमानस्तवैवायं, जयामो यदरीन् वयम् । महोभिर्मिहिरस्यैव, हन्ति ध्वान्तं यतोऽरुणः ॥ २८८ ॥ इत्यूदीय भटान् गर्व्यैः, संभाव्यार्पत्रपाहरैः । गाः समस्ताः पुरस्कृत्य, भूत्वा भूमिपतेः पुरः ॥ २८९ ॥ नेत्रनीलाब्जमालाभि-रर्चिताः पृतनानरैः । विश्वं विस्मापयन्तस्ते, चलन्ति स्म पुरं प्रति ॥ २९० ॥ (युग्मम्)

किमपि व्यजया मूक-मागत्य नृपतिः पुरम् । चिन्ताचान्तपरीवारं, राजमन्दिरमाविशत् ॥ २९१ ॥ त्रहिः ! संस्थाप्य कङ्कादीन, ससङ्गोऽन्तःपुरं ययौ । वीक्ष्य मेदस्विखेदां च, सुदेष्णामवदन्नृपः ॥ २९२ ॥ विच्छायं ते मुखं देवि !, किं प्रगे मुग्धलक्ष्मवत् ? । मत्कीर्तिवल्लरीकच्छः, क वत्सोऽगच्छदुत्तरः ? ॥ २९३ ॥ साऽब्रवीद्देव ! युष्मासु, धावितेष्वनुगोग्रहम् । एत्य सर्वांदिने कश्चित्, पूत्करोति स्म वल्लवः ॥ २९४ ॥ तमूचे विक्रमाधारः, कुमारः खेदकारणम् । कृच्छ्रात्तदाचचक्षेऽसौ, दक्षिणेर्मरापुः शरैः ॥ २९५ ॥ उत्तरस्यां दिशि द्रोण-भीष्म-कर्णादिभिः सह । स्वयं दुर्योधनोऽभ्येत्य, सौरमेयीरचालयन् ॥ २९६ ॥ ततः सर्वेऽपि संभूय, वल्लवास्तमयोधयन् । तत्र प्राणपरित्यागा-द्गवामानृण्यमाययुः ॥ २९७ ॥ किंवदन्तीहस्तेगा-मेक एवास्मि जीवितः । सन्ति चाद्यापि गावस्तान्, पतितान् परितः स्थिताः ॥ २९८ ॥ इत्याख्यातं मया ताव-

१ मूर्धन्य । २ रक्षार्थैः । ३ प्रभूतरोमाम । ४ चन्द्रवत । ५ कच्छः—सजलप्रदेशः ।

द्विराटतनयस्य ते । कुमार ! स्फारदोःसार !, तद्यथोचितमाचर ॥ २९९ ॥ इत्याकर्ण्य वचस्तस्य, वत्सः स्फुरितमत्सरः । शौण्डीरिमसरोमाञ्चः, सखेदमिदमभ्यधात् ॥ ३०० ॥ सहापि द्रोण-कर्णाद्यैः, को नु दुर्योधनो मम ? । पपौ बलि-मुकुन्दाद्यैः, सहैव मुनिरर्णवम् ॥ ३०१ ॥ जयः[2] किं तु न विज्ञेन, रणे सारथिना विना । विश्वदाहक्षमोऽप्यग्नि-र्न ज्वलत्यनिलादृते ॥ ३०२ ॥ तमभ्यधान्मदा(द)भ्यर्ण-वर्तिनी मालिनी ततः । योऽयं तूर्यत्रयाचार्यो, भगिन्यास्ते बृहन्नटः ॥ ३०३ ॥ जानीहि तममुं सर्व-सारथीनां शिरोमणिम् । कोटिशोऽयं मया दृष्टः, प्रेरयन् रथवाजिनः ॥ ३०४ ॥ ततः क्लीबोऽयमित्युच्चै-र्विचिकित्सापरोऽपि सन् । त्वत्तनूजः समाहूय, वितेने सारथिं रथे ॥ ३०५ ॥ गृहीतास्त्रेण तेनाथ, प्रयुक्ताश्वमतल्लिकः । सुतोऽभूदभ्यमित्रीण-स्तवैकाङ्गभटाग्रणीः ॥ ३०६ ॥

तां निशम्य गिरं तस्या, भूपतिः सुतवत्सलः । गतमेकाकिनं सूनु-मित्यशोचन्मुहुर्मुहुः ॥ ३०७ ॥ ह हा बाहुसहायोऽयं, क्षीरकण्ठः क मे सुतः ? । क चेयं वैरिकासार-गाहिनी कुरुवाहिनी[3] ? ॥ ३०८ ॥ तदनीके हि योधाना-मेकैकस्य पराक्रमैः । हरेर्मनसि वात्सल्या, भीतयश्चक्रिरे चिरम् ॥ ३०९ ॥ तदोर्वीर्यानले कीर्ते-रायुष्टोमा[4]य जाग्रति । हा भविष्यति तन्नूनं, सूनुर्मे प्रथमाहुतिः ॥ ३१० ॥ इत्यभीक्ष्णं पतिः क्षोणेः, शोचन्नूचे ससौष्ठवम् । मालिन्येति न भीः काचित्, सहायश्चेद्बृहन्नटः ॥ ३११ ॥ भीतिर्न हि भुजङ्गेन्द्रा-दभ्यर्णस्थे गरुत्मति । न तमस्काण्डभीः कापि, भास्करे करवर्तिनि ॥ ३१२ ॥ इमां बृहन्नटस्तोत्र-कोविदां मालिनीगिरम् । आकर्ण्य कुपितो याव-न्नृपः किमपि जल्पति ॥ ३१३ ॥ तावद्धाव-

१ अगस्त्यः । २ 'जय' प्रतित्रयपाठो न साधुः । ३ वाहिनी-सेना, पक्षे नदी । ४ आयुष्टोमः-यज्ञविशेषः ।

क्षिरम्येन्य, राजमन्दिरचारिभिः। आगच्छन्युत्तरो(रे) दिष्ट्या, वर्धितो भूमिवल्लभः ॥ ३१४ ॥ (युग्मम्) सुतागमश्रुतिसुधा-विभागमिव यान्तिनुम्। क्ष्माभृतश्चक्षुषी हर्षा-दीयतुः श्रवणान्तिकम् ॥ ३१५ ॥ अद्भिर्नेत्रघटीयन्त्र-मुक्ताभिः प्लाविते मुदा। क्षणात क्षोणीभृतः क्षेत्रे, जज्ञिरे पुलकाङ्कुराः ॥ ३१६ ॥ प्रीत्या पृथ्वीपतिर्यावत्-त्वं प्रत्युद्गन्तुमिच्छति। कुमारस्तावद्-भ्येन्य, पपात पादयोः पितुः ॥ ३१७ ॥ ततस्तनयमुत्थाप्य, गाढमालिङ्गय भूपतिः। रणाङ्गणजयोदन्तं, पृच्छति स्म समन्ततः ॥ ३१८ ॥

आसीनेषु यथास्थानं, सर्वेष्वथ कृताञ्जलिः। कृतनमौलिमाणिक्यं, कुमारस्तमचीकथत् ॥३१९॥ यस्मिन् कृताङ्गनाकल्प-कपटोऽयं बृहन्नटः। नयः किमतिदुर्लभ-स्तत्र संभाव्यते रणे? ॥३२०॥ तादृशा बाहवोऽस्यैव, यादृशैर्वैरिनिर्जयः। करा मृग-पतेरेव, देव! दन्तावलद्रुहः ॥३२१॥ इत्युत्तरस्य भारत्या, विस्मेरितमना भृशम्। अपृच्छन्नृपतिर्मूला-त्तमुदन्तं विशेषतः ॥३२२॥ सव्यसाचीत्तरः स्वामि-न्नमाचादन्यसारथेः। सारथिं षण्ढमप्येन-माधाय समरेऽगमम् ॥ ३२३ ॥ अनेकरथचीत्कार-वाचालवियद-ङ्गणम्। गन्धसिन्धुरसिन्दूर-लोहितायितपुष्करम् ॥ ३२४ ॥ तुरङ्गमखुरोद्धूत-धूलीकन्दलिताम्बुदम्। शौर्यविदातपादात-क्ष्वेडा-क्षोभितकाननम् ॥ ३२५ ॥ प्लावयन् परितो धात्रीं, कल्पान्तजलराशिवत्। तत्रानीकं कुरूणां त-दपश्यमविशेषतः ॥ ३२६ ॥ (त्रिभिर्विशेषकम्) गाङ्गेयोऽयमयं द्रोणः, कर्णोऽसावेष सौबलः। सैष दुर्योधनश्चेति, विशेषमविदं ततः ॥ ३२७ ॥ गतं निःसत्त्वतां सत्त्वं, विक्रमोऽभूदविक्रमः। जातमोजोऽप्यनोजस्वि, गर्वोऽप्यागाढगर्वताम् ॥ ३२८ ॥ क्षणादत्यजदभ्यासं,

१ शरीरे। २ दन्तावलः-हस्ती। ३ पुष्करम्-आकाशम्। ४ समीपम्।

शस्त्राभ्यासः समीरिव । अतिष्ठत् कुललज्जाऽपि, तदानीं पृष्ठतो मम ॥ ३२९ ॥ (युग्मम्) केवलं नौरिवाभ्येत्य, भयोदन्वति
मज्जतः। पलायनमतिर्मेऽभू-दैवादभ्यर्णवर्तिनी ॥ ३३० ॥ विस्तीर्णवेपथुर्भीत्या, ततोऽवोचं बृहन्नटम् । पुरः पश्यसि पाथोधि-
प्रतिमां वैरिवाहिनीम् ॥ ३३१ ॥ भूयोभिरपि मे शुष्ये-न्न बाणकलशैरसौ । कैरर्हि परिमीयेत, किं नाम गगनाङ्गणम् ?
॥१८६॥ ॥ ३३२ ॥ पलायिष्ये तदाश्वेव, कातरं मा स मां वदः[1] । दावानलोऽपि को नाम, वर्षति प्रावृडम्बुदे ? ॥ ३३३ ॥ इत्यु-
दीर्य प्रणश्यन्तं, स्वामिन्नादाय मां करे । बृहन्नटः ससंरम्भः, सावष्टम्भमभाषत ॥ ३३४ ॥ कुमार! युज्यते नैत-द्विराट-
॥ १८७ ॥ तनयस्य ते । शूरस्यायशसे दृष्टे, परानीके पलायनम् ॥ ३३५ ॥ पश्चादपि प्रयास्यन्ति, प्राणा न स्थास्नवस्तव[2] । यशस्तद्गत्वरै-
॥ १८८ ॥ रेभि-रर्जनीयमगत्वरम् ॥ ३३६ ॥ उत्तरेण रणे नष्ट-मित्यकीर्तिरवस्तव । कीर्तिकोलाहलैस्तैस्तैः, पितुर्नो तिरयिष्यते
॥ ३३७ ॥ प्रकामं यदि नामासि, संग्रामोत्सवभङ्गुरः। तथापि मा पलायिष्ठा-स्तिष्ठत्येवान्तिके मयि ॥ ३३८ ॥ जयन्नि(न्ने)व
रिपूंश्चेन्मे, विभाति भुजविक्रमः । तदानीमवतिष्ठेथाः, पलायेथास्त्वमन्यथा ॥ ३३९ ॥ किं पुनः सारथीभावं, भजस्व मम
संप्रति । निहन्मि द्विषतो याव-द्रोग्रहग्रहिलौजसः ॥ ३४० ॥ इत्थमेतस्य भारत्या, भिया तरलतारकः । स्थितोऽहमुल्लसल्लज्जा-
भारः सारथ्यमाचरन् ॥ ३४१ ॥ लज्जयाऽऽरम्भनिर्वाहो, मृत्युर्युद्धेषु लज्जया । लज्जयैव नये वृत्ति-र्लज्जा सर्वस्य कारणम्
॥ ३४२ ॥ ततः स्त्रीवेषमुन्मुच्य, कलयन् कार्मुकं करे । बृहन्नटः स्फुटानन्द-निस्यन्दं ददृशे न कैः? ॥ ३४३ ॥ विभाव्य
दिव्यमूर्तिं च, तं तदाहमचिन्तयम् । कोऽप्ययं खेचरः क्रीडा-तिरोहितवपुः किमु ? ॥ ३४४ ॥ धनुर्वेदः किमध्यक्षः ?,

पत्रांक १९३-१९४ उब्बल छपायेल छे परंतु मेटर बराबर संबंधवाळुं छे.

१ 'वद' प्रतित्रय० । २ तिष्ठन्तीत्येवं शीलाः स्थास्नवः ।

गाआर्दीगे गयो नु किम् ? । किं वा निःशेषशौण्डीर-शौण्डीर्यं पिण्डतां गतम् ? ॥ ३४५ ॥ इत्याद्यालोचयन्नास्य-खेलदुत्कर्ष-
कुतूहलः । निस्मामोऽस्मि नो तृप्ति-मीक्षमाणो बृहन्नटम् ॥ ३४६ ॥ ( त्रिभिर्विशेषकम् ) तेनाथ शिखरोन्माथ-पटीयः
शरैर्विभूनाम् । चक्रे निपञ्चवक्षोऽस्म-टङ्कारिकार्मुकम् ॥ ३४७ ॥ प्रत्यनीकभटैर्भीष्म-भारद्वाजादिभिस्ततः । वितेने
विगतानन्द-शब्दैः गांरोनिणं क्षणम् ॥ ३४८ ॥ ऊचेऽन्योन्यं पुरः सोऽय-मर्जुनः सोऽयमर्जुनः । वर्षतो विशिखानस्य,
त्रिलोकगत कौतुकम् ॥ ३४९ ॥ परं कस्यापि पश्यामो, नेदृशीं सत्त्वसंपदम् । अवस्थाय भुजस्थाम, क्षणं वीक्षिष्यतेऽस्य यः
॥ ३५० ॥ ततोऽमी किं द्विषो युद्धं, किमेतन्मृत्युरत्र किम् । विस्मृत्य सर्वमप्येत-दानन्दैकमयोऽभवन् ॥ ३५१ ॥
गाान्नः स्वान्तमासीन्मे, किमयं पाण्डवोऽर्जुनः ? । अन्वेनं खलु योद्धारः, श्रूयन्ते सांप्रतं भुवि ॥ ३५२ ॥ सोऽयं मन्ये
नटीभूय, दूरनेकगमन्यगान् । प्रविश्य जलधिं रात्रिं, देवोऽप्यत्येति भानुमान् ॥ ३५३ ॥ तत्संप्रत्ययस्य सारथ्ये, प्रत्यर्थिभ्यो
गयं न मे । नाम्बोऽर्के हि गृह्णन्ते, तमोभिरभिभूयते ॥ ३५४ ॥ विस्मृतातङ्कनिःशङ्क-स्ततोऽहं समराजिरे । यथामनसमेतस्य,
प्रेरयामासिवान् हयान् ॥ ३५५ ॥ रथो दीप इवैतस्य, धावति स यतो यतः । तमांसीवारिशौण्डीरा, नालोकयन्त ततस्ततः
॥ ३५६ ॥ एकको दोर्महायोऽय-मन्यतः कोटिशोऽरयः । नोत्थितः किं तु तैः सेहे, पतङ्ग इव तारकैः ॥ ३५७ ॥ एकमे-
गास्य संधान-मपश्यं निकटेऽप्यहम् । निस्पष्टं मुष्टिमप्येकं, कैशिकैन्यायवर्तिनम् ॥ ३५८ ॥ निर्वाणप्राणसौहार्दाः, क्ष्मातले
पतयालवः । लक्षशः प्रतिपक्षास्तु, निरीक्षांचक्रिरे मया ॥ ३५९ ॥ अन्यतेजोऽसहस्यास्य, पिधातुं घर्मदीधितिम् । कृपयेव

१ कोलाहलः । २ दुःसमयम । ३ सूर्यः । ४ (कैशिकं केशसमूहः ।)

३२

शराश्रङ्क–रस्तम्भं दिवि मण्डपम् ॥ ३६० ॥ द्विषां गाण्डीवनिर्मुक्तैः, काण्डैरेतस्य खण्डिताः । ह्रियेव मार्गणाः क्षोणि–रेणु-ध्वास्यमनीनशन् ॥ ३६१ ॥ प्रक्रीडति प्रतापेऽस्य, प्रक्षरत्क्षतजा[1] द्विषः । रणधारागृहे धारा–यन्त्रपुत्रकतां ययुः ॥ ३६२ ॥ यावन्तो वैरिवाहिन्यां, भटाः प्रत्येकमेव तैः । आत्मनैव समं जिष्णु–र्युद्ध्यमानो व्यभाव्यत ॥ ३६३ ॥ क्रीडत्तत्कीर्तिसीमन्त–घुसृणौघैरिवारुणाः[2] । जज्ञिरे रुधिराम्भोभिः, सरितः कूलमुद्रुजाः[3] ॥ ३६४ ॥ रणे चकार कीलाल[4]–कूलिनीनामुपर्यसौ । संचाराय चिरं कीर्ते–रिव सेतुं शरोत्करैः ॥ ३६५ ॥ पार्थनिर्लूनमौलीनां, सुरस्त्रीसंगमीयुषाम् । कबन्धैर्वैरिवीराणां, मुदेव ननृते चिरम् ॥ ३६६ ॥ ततः किमपि बीभत्सु–शरैराकुलतां गतौ । द्वावपि द्रोण–गाङ्गेयौ, रणाग्रादपसस्रतुः ॥ ३६७ ॥ तन्मनःक्षोभविक्षिप्त–मन्दाक्षैरपरैरपि[5] । रथा महारथैर्दूरं, निन्यिरे समरोदरात् ॥ ३६८ ॥ नीतां वरूथिनीं पार्थ–शरौघैर्विशरारुताम् । विलोक्य चकितः कर्णं, नियुज्यैतस्य संगरे ॥ ३६९ ॥ सौरभेयीः पुरस्कृत्य, धृतराष्ट्रतनूरुहः । लुण्टाक इव साशङ्कः, प्रतस्थे स्वपुरीं प्रति ॥ ३७० ॥ (युग्मम्)

स बभूव रणारम्भ–स्ततः कर्ण–किरीटिनोः । यत्रैकोऽपि जयन्नीषे, जयलक्ष्म्यापि न[6] द्रुतम् ॥ ३७१ ॥ विलोकितुमिवाश्चर्या–त्तयोः समरलाघवम् । उभयोरपि शौण्डीर्या–दुत्तस्थुर्मौलिकुन्तलाः ॥ ३७२ ॥ तावुभावपि संग्राम–रसरोमाञ्चितं वपुः । पुरैव दधतुः कीर्ण–मन्योन्यविशिखैरिव ॥ ३७३ ॥ वीरयोरुभयोर्बाणैः, परस्परपराहतैः । पतद्भिरन्तरालेऽपि, राशि-

१ क्षतजं–रुधिरम् । २ घुसृणं–कुङ्कुमम् । ३ तीरभेदकाः । ४ कीलालं–रुधिरम् । ५ मन्दाक्षं–लज्जा ।
६ 'नाद्भुतात्' प्रतित्रय० ।

नामुपक्रान्तम् ॥ ३७४ ॥ गच्छन् मोत्सेक्रमेकस्य, प्रतिवीरशरेरितः। उच्चैरुच्छलन् बाणो, गीर्वाणान् दिव्यनीनशत् ॥ ३७५ ॥
संग्राममनाम्यमालोक्य, मुञ्चता मार्गणानथ। सहैव क्रोधयोधेन, द्विगुणः फाल्गुनोऽभवत् ॥ ३७६ ॥ अथ सारथिरालोक्य,
फाल्गुनेपुरुत्कलितम्। राधेयमभ्यधान्मूर्ध्नि, निधाय प्रणयाञ्जलिम् ॥ ३७७ ॥ गतः सुयोधनस्ताव-दूरमादाय धैनुकम्। ततः
स्वामिन् किमात्मान-मिदानीं खेदयिष्यसि ॥ ३७८ ॥ सन्ति भूयांसि कार्याणि, कार्याणि सुहृदस्त्वया। तदात्मानमकाण्डेऽपि, किं
मुधा गमयिष्यसि ॥ ३७९ ॥ इत्युदीर्य मशौण्डीर्य-रसोत्कर्षादनिच्छतः। रथं कर्णस्य संग्रामा-दपवाहितवान् बलात् ॥ ३८० ॥
अपगामिनं वीक्ष्य, कर्णमप्यवकीर्णिनम्। मामुत्साह्य ततस्तैस्तै, रथवेगाय चाङ्घ्रिभिः ॥ ३८१ ॥ मत्पुरस्तादुरात्मायं, गच्छ-
त्यादाय गा इति। अनुदुर्योधनं क्रुद्धो, धावति स्म धनंजयः ॥ ३८२ ॥ (युग्मम्) आगच्छत्यर्जुने दूरा-द्धृतराष्ट्राङ्ग-
जन्मनः। तुरैरिव महावायौ, मनिकरैरपचक्रमे ॥ ३८३ ॥ ततः प्रक्षिप्य गाः पृष्ठे, सुभटैकधुरंधरः। बभूव सितयुग्येन,
सांमुखीनः सुयोधनः ॥ ३८४ ॥ क्षुरप्रानक्षिपत्तस्मिन्, प्रातेति सदयोऽर्जुनः। सर्वप्राणं स बाणांस्तु, मुमुचे सव्यसा-
चिनि ॥ ३८५ ॥ तथापि नात्यरिच्यन्त, पार्थेपुभ्यस्तदाशुगाः। गजेन्द्रगर्जयः किं नु, विजयन्ते घनध्वनीन् ? ॥ ३८६ ॥
ततो गौर्योधनं शौर्य-मिव साक्षान् कपिध्वजः। चिच्छेद सायकैश्छेकैः[3], केतुदण्डं पताकिनः ॥ ३८७ ॥ तथापि कौरवे
दर्प-सर्पदध्यान्तरात्मनि। चैतन्यविकले काम-मात्मनीनमजानति ॥ ३८८ ॥ मनाग्विद्यामनुस्मृत्य, जिष्णुरप्राणहारिणम्।

१ भग्नक्रम। २ सर्वे प्राणा यस्मिन् कर्मणि यथा स्यात्तथा सर्वात्मबलपूर्वकमित्यर्थः। (३ 'छेको विदग्धः' इति
नानार्थचिन्तामणिः।)

कृपालुहृदयोऽमुञ्च-द्रागवस्वापनं शरम् ॥ ३८९ ॥ ( युग्मम् ) दुर्योधनयशश्चन्द्र-लक्ष्मीलीलामुपस्ततः । क्षणादाक्रान्तदिक्चक्राः, प्रससुस्तिमिरोर्मयः ॥ ३९० ॥ उच्चरच्चण्डगाण्डीव-प्रतापोल्काभयादिव । निखिलानीकनेत्राणि, निमीलन्ति स्म निद्रया ॥ ३९१ ॥ ससैन्यस्यापि संजात-लज्जानीव भुवस्तले । आयुधानि पतन्ति स्म, करात् कुरुनरेशितुः ॥ ३९२ ॥ केचिद्धनुरवष्टभ्य, रथमाश्लिष्य केचन । सूतमालम्ब्य केचिच्च, तस्थुर्योधास्तदाऽखिलाः ॥ ३९३ ॥ तस्थुषः केतुमाश्रित्य, सानीकस्य कुरुप्रभोः । ततस्तात ! मया जिष्णु-रुत्तरीयाण्यहारयत् ॥ ३९४ ॥ क्षणं नानुबभूवासौ, मयाऽपहृतचीवरः । महीयःप्रसरन्मोह-सज्जो लज्जारसज्ञताम् ॥ ३९५ ॥ अस्त्रे कारुण्यतस्तत्र, संहृते सव्यसाचिना । रिपुसैन्येऽथ चैतन्य-माविरासीत्रपाकरम् ॥ ३९६ ॥ अथोच्चैश्चकितस्वान्तः, सौरभेयीखुरोद्धतैः । संवीताङ्गो रजःपूरै-रनेशद्धृतराष्ट्रभूः ॥ ३९७ ॥ प्रक्षरन्तीस्ततः क्षीर-मुत्सुकाः प्रतिवत्सकान् । आदाय ववले स्वामि-न्नर्जुनीरर्जुनोऽखिलाः[1] ॥ ३९८ ॥ सितांशुरुचिसध्रीचीर्मूर्ताः कीर्तीरिवात्मनः । नागरेभ्यः स्तुतीर्गृह्ण-न्नार्पयद्गाः कपिध्वजः ॥ ३९९ ॥ शपथैर्देवपादाना-महं तेनास्मि वारितः । यदाख्येयो न देवाय, व्यापृतोऽहमिहाहवे ॥ ४०० ॥ सर्वथाप्येतदेव त्व-माचक्षीथाः क्षितीशितुः । यदानीता मया गावो, निर्जित्य कुरुवाहिनीम् ॥ ४०१ ॥ किं तु मे नैव जिह्वेय-मेतदाख्यातुमीश्वरी । स्वशक्तेरतिरिक्तं हि, ब्रुवाणोऽप्युपहस्यते ॥ ४०२ ॥ यन्मृगेण मृगारीणां, श्रद्धत्ते कः पराभवम् । मन्यते कुडवस्थाल्यां, प्रस्थपाकं न कश्चन ॥ ४०३ ॥ पुनः स्त्रीवेषमादाय, स्वयं तु विजयोऽधुना । नाट्यशालामगादेव-पादाभ्यर्णे प्रहित्य माम् ॥ ४०४ ॥ इत्युत्तरगिरं श्रोत्र-सुधाकादम्बिनीं[2]

अर्जुनस्य प्रकटभावः ॥

१ धेनूः । २ कादम्बिनी-मेघघटा ।

नृपः । आगागामीत्सवोन्मील–न्मेदुरानन्दकन्दलः ॥ ४०५ ॥

न प्रेक्ष्य नाट्यशालायां, यस्त्रीगोऽथ वेत्रिणम् । पराक्रममिवाध्यक्षं, धनंजयमजूहवत् ॥ ४०६ ॥ तमानन्दाश्रुभिः साद्रं, मदैरिव पुलकाङ्कुरैः । आयान्तं मुदितः प्रत्यु–ज्जगाम जगतीपतिः ॥ ४०७ ॥ हृदयेन नरेन्द्रस्त–मालिङ्ग्य निविडं भुजैः । कामिनीमिवमुत्सोन्य, परिहासपुरःसरम् ॥ ४०८ ॥ दुकूलानि समं रत्न–भूषणैः परिधाप्य च । महीयसि समश्रेण्या–मासने निवेशयामास ॥ ४०९ ॥ (युग्मम्) जगाद तं महीनाथः, पार्श्वमीपत्कृतस्मितः । वासरोऽयं समग्राणां, वासराणां विशेषकः ॥ ४१० ॥ नदीनामपि मुहूर्तोऽय–ममृतैकमयः खलु । वीरावतंस ! यत्र त्वं, किरीटीति निरीक्ष्यसे ॥ ४११ ॥ युग्मम् ॥ विराटनृपकर्मस्य कः स्थैर्यतो गगनः पदम् । आतमागमामृतैर्यस्य, त्वं गृहानभिषिञ्चसि ॥ ४१२ ॥ राष्ट्रमेतद्विराटाख्य–मभाभूदद्यशाश्वतम् । स्पृष्टं यदीरधौरेय !, त्वदीयपदपांसुभिः ॥ ४१३ ॥ अनुत्तरगुणैर्वेय–मुत्तरा तनया मम । त्वमध्यापयिता यस्याः, कलानां कुलदेवता ॥ ४१४ ॥ ममासि तनयस्यास्य, प्राणत्राणेन संप्रति । धनुर्धरधुरीण ! त्वं, जीवितस्यापि जीवितम् ॥ ४१५ ॥ कङ्क–वल्लवयोस्तन्ति–पालस्य ग्रन्थिकस्य च । अमीषामपि चानृण्यं, न मे प्राणैरपि क्वचित् ॥ ४१६ ॥ संप्रत्येव रिपुशोद–दक्षैर्दक्षिणगोग्रहे । यशश्च जीवितव्यं च, यैर्मदीयमरक्ष्यत ॥ ४१७ ॥

किंचिज्जिह्मस्य सोन्माद–मथाह कपिकेतनः । कोऽपि स्वभाव एवाय–मखण्डः पाण्डुतेजसाम् ॥ ४१८ ॥ किं किमात्येति विस्मेर–मनसा मेदिनीभृता । पृष्टोऽथ स्पष्टरोमाञ्चं, व्याजहार महेन्द्रसूः ॥ ४१९ ॥ कङ्कोऽरिजनितातङ्कः, सोऽयं

१ आलिङ्ग्य ।

देवो युधिष्ठिरः । वल्लवश्च द्विषद्वल्लि-वह्निरार्यो वृकोदरः ॥ ४२० ॥ तन्तिपालो विलूनारि-कुलश्च नकुलः खलु । ग्रन्थिकश्च कृतासेवः, सहदेवो विरोधिभिः ॥ ४२१ ॥ किं च देव्याः सुदेष्णाया-स्तां तामापुष्णती मुदम् । सैरंध्री मालिनी नाम, सेयं द्रुपदनन्दिनी ॥ ४२२ ॥ इति बीभत्सुभारत्यां, गतायां कर्णपूरताम् । विराटेन्द्रः प्रमोदश्री-सुभं-गंभावुकोऽभवत् ॥ ४२३ ॥

अथाभ्येत्य स पार्थोऽपि, युधिष्ठिरपदाम्बुजम्। आनन्दाश्रुकणैर्मुक्ता-फलैरर्चन्निवानमत् ॥ ४२४ ॥ कौशेयवसनैस्तैस्तै-र्भूषणैश्च हिरण्मयैः। तान् विभूष्याखिलानात्म-भद्रपीठे युधिष्ठिरम् ॥ ४२५॥ निवेश्य स्वयमासीनः, पुरः कन्दलिताञ्जलिः । व्यज्ञापयद्विराटेन्द्रः, सान्द्रहर्षोर्मिगद्गदम् ॥ ४२६ ॥ ( युग्मम् ) यत् प्रति त्वां कदाप्युक्त-मवज्ञावचनं भवेत् । देव! तत्किं-चन प्राच्यं, व्यलीकं हृदि मा कृथाः ॥ ४२७ ॥ अद्य माद्यन्ति नाधर्म-विषाणि विषये मम । यत्र ते पुण्यपीयूष-प्रावृषः पादपांसवः ॥ ४२८ ॥ वीक्षणैर्धार्मिकंमन्य-मनसां जातपाप्मनोः । प्रायश्चित्तमिवासीन्मे, नेत्रयोस्तव दर्शनम् ॥ ४२९ ॥ पुरेऽस्मिन्नद्य कल्याण-भूरुहः कोरकोल्वणाः । यत्र स्वयं गुणश्रेणि-सुरभिस्त्वमुपागमः ॥ ४३० ॥ त्वत्प्रसादामृतैः सिक्ता-स्त्वत्प्रतापार्कतापिताः । मम श्रीवल्लयो देव!, पल्लवैरुल्लसन्त्यमूः ॥ ४३१ ॥ मत्कीर्तिवीरुधो यन्न, देहिरेऽरिदवानलैः । नूतनाम्भोभृतः सोऽयं, खड्गस्य महिमा तव ॥ ४३२ ॥ अवेदं गोग्रहेऽप्येतत्, किंचित्तत्त्वान्तरं खलु । प्राकृतानां न नामेद-मीक्ष्यते भुजवैभवम् ॥ ४३३ ॥ किमात्मानं निगूह्यैवं, नामवेषविपर्ययैः। स्थितं युष्माभिरागत्य, निज एव निकेतने ॥४३४॥

१ आत्मानं सुभगं भावयतीति सुभगंभावुकः । २ वसन्तः ।

नानमंरिदि निगूढं, मयि भक्तिं विनन्वति । युष्मान् को नाम जानीया-द्वसतोऽत्र स्ववेश्मनि ? ॥ ४३५ ॥ परं किं नाम भाग्यानि, तादृशान्येव सन्ति मे ? । सेवां वः पादयोः काल-मियन्तं तादृशैर्लभे ॥ ४३६ ॥ इदानीमपि तदेव !, स्वप्रतापार्जिता इमाः । श्रियः सहोदरैः सार्धं, परिभोगैः कृतार्थय ॥ ४३७ ॥ भ्रातृभिः पुरुहूताभैः, पत्तिना च मया तव । न ता अपि दुर्योधनस्यो, हस्तिनापुरसंपदः ॥ ४३८ ॥ ऊर्जितं वो ध्रुवं राज्या-दिदानीमतिदुःसहम् । वह्निः प्रदीपावस्थाया-मधिकं हि प्रदीप्यते ॥ ४३९ ॥ राज्यं च जीवितव्यं च, दत्तमेतत्त्वयैव मे । तत्किमन्यदिदानीं ते, करोमि यदुपायनम् [१] ॥ ४४० ॥ अर्जुनो मे सुतां कन्या-मुत्तरामध्यजीगपत् । तामस्यैवोपदां कुर्वे, चेत् प्रसीदस्यनुज्ञया ॥ ४४१ ॥ पश्यत्यास्यं ततो ज्येष्ठ-बन्धौ बीभत्सुरभ्यधात् । उत्तरा देव मे शिष्या, सुतातुल्यैव तन्मम ॥ ४४२ ॥ विराटः कुरुवंश्यैस्तु, यदि स्वासम्बन्धकाम्यसि । सौभद्रेयोऽभिमन्युस्तां, तदुद्वहतु मे सुतः ॥ ४४३ ॥ इति प्रणयगर्भां तां, भारतीं सितवाजिनः । प्रीतिकल्लोललोलाक्षो, विराटः प्रत्यपद्यत ॥ ४४४ ॥

सुभद्रामभिमन्युं च, कृष्णं चाहातुमुत्सुकः । कंचिद्दूतमजातारिः, प्राहिणोद्द्वारकां प्रति ॥ ४४५ ॥ पञ्चभिः सह पाञ्चाल्ये-रात्मजैर्द्रुपदं नृपम् । आनेतुमपरं दूतं, काम्पिल्ये प्रजिघाय सः ॥ ४४६ ॥ तौ दूतवचनात् पाण्डु-सुतानामभ्युदये नन्दिनः । भेजतुर्भृशमानन्दं, कृष्ण-द्रुपदभूपती ॥ ४४७ ॥ भूयस्तरैर्वितन्वानौ, सैन्यैरेकार्णवां महीम् । तौ ततः मार्गागतौ, विराटपुरमीयतुः ॥ ४४८ ॥ सानीकेन विराटेन, समं सर्वैश्च बन्धुभिः । ततः प्रत्युदगच्छत्तौ, प्रीतचेतास्तपः-

१ अभिदूरथा । २ वत्स ।

सुतः ॥ ४४९ ॥ विराटस्य श्रियो रेजु-र्युधिष्ठिरमधिष्ठिताः । स्वदन्ते हि पयोराशे-रापः प्राप्ताः पयोमुचम् ॥ ४५० ॥ विराटस्य गिरा कृष्ण-द्रुपदौ फुल्लभूरुहि । अथावासमगृह्णीतां, पुरस्योपवने क्वचित् ॥ ४५१ ॥ सुभद्रा च स्नुषा नप्ता-भिमन्युर्भक्तिमन्दिरम् । नप्तारः पञ्च पाञ्चाला, अपि कुन्तीं ववन्दिरे ॥ ४५२ ॥ कृष्णां मातरमानम्य, पाञ्चालैः पञ्चभिः सुतैः । प्रीतिप्रह्वैरनुज्येष्ठं, पाण्डवेयाः प्रणेमिरे ॥ ४५३ ॥ चिरसंगतयोः प्रीत्या, राका-श्विन्योरिवाभवत् । मनोज्ञप्रणयाश्लेषो, याज्ञसेनी-सुभद्रयोः ॥ ४५४ ॥ इलातलमिलन्मौलि, प्रणम्य द्रुपदात्मजाम् । पाण्डवाः क्रमशः सर्वे, नम्यन्तेऽस्माभिमन्युना ॥ ४५५ ॥ अर्चितः सकुटुम्बोऽपि, देवतेव कृतादरम् । आवासे केशवस्यैव, प्रीत्याऽतिष्ठद्युधिष्ठिरः ॥ ४५६ ॥ चिराय मिलिता विष्णो-रपुष्णन् पाण्डवा मुदम् । स्मरस्येव वसन्ते-न्दु-पिका-म्र-मलयानिलाः ॥ ४५७ ॥

पाण्डवाश्च विराटश्च, योग्यस्वाजन्यहर्पुलाः । उपचक्रमिरे सर्वे, कर्म वैवाहिकं ततः ॥ ४५८ ॥ तत्तत्कर्म दधानानां, यादवीनामितस्ततः । आह्लादिमनसामुच्चै-रुच्चेरुर्मङ्गलारवाः ॥ ४५९ ॥ कर्मण्यौद्वाहिके सक्ता, विराटहरिणीदृशः । जानन्ति स्म श्रमं किंचि-न्न प्रमोदतरङ्गिताः ॥ ४६० ॥ मन्मथागारशृङ्गारै-र्[1]प्सरोविसरैरिव । उलूलु[2]चटुलैः प्रीत्या-नुयातो यादवीगणैः ॥ ४६१ ॥ नवीनकल्पिताकल्पैः, सुरकल्पैरनेकशः । विविधं यानमारूढै-रन्वितः पृतनाचरैः ॥ ४६२ ॥ दिकुञ्जक्रोड-विश्रान्त-प्रतिश्रुतिभिरुच्चकैः । सोत्साहपटहश्रेणि-ध्वानैर्बधिरिताम्बरः ॥ ४६३ ॥ राकाशशाङ्कदेशीय-विधृतातपवारणः । [3]सुप्रतीकप्रतीकाश-मारूढो गन्धसिन्धुरम् ॥ ४६४ ॥ सह द्रुपद-कृष्णाभ्यां, पाण्डवैः परिवारितः । अभिमन्युः प्रतस्थे-

१ अप्सरसां समूहैः। (२ उलुलुरुत्सवकाले स्त्रीभिः क्रियमाणः शब्दविशेषः। ) ३ ईशानविदिग्गजः सुप्रतीकः, तत्सदृशम्।

न्य, पाणिपीडनपर्वणि ॥ ४६५ ॥ (पञ्चभिः कुलकम्) दिशो हि दर्शनानर्हा-श्चमूरेणुरजस्वलाः । इतीव चक्रे नीरङ्गी, नगरीनभिमन्युना ॥ ४६६ ॥ विहाराय बहिः स्वैर, कुमारयशसामिव । निस्वाननिस्वना रोदः, स्फोटयन्त इवोदगुः ॥ ४६७ ॥ कुङ्कुमाम्भश्छटाच्छोटे-र्घण्टापथरेणुकम् । तत्कालमभितः कीर्ण-पुष्पप्रकरदन्तुरम् ॥ ४६८ ॥ नवोत्क्षिप्तैः पताकाभि-र्गगनाङ्गणसंगीनिकम् । मञ्चन्यञ्चितगीर्वाण-गेहाहंकारहुंकृति ॥ ४६९ ॥ मिलत्पौरचकोराक्षी-लोचनाञ्जलिभिर्भृशम् । पीनलावण्यगंभारः, कुमारः पुरमाविशत् ॥ ४७० ॥ (त्रिभिर्विशेपकम्) दत्तारमगर्भकाकूत-चूतपल्लवतोरणम् । रम्भास्तम्भ-दम्भोलि-मानागमनरञ्जनम् ॥ ४७१ ॥ मौक्तिकस्वस्तिकोदार-द्वारगोमयगोमुखम् । धावद्वाराङ्गनावार-वीक्षणाक्षिप्तकार्मुकम् ॥ ४७२ ॥ प्रमोदमेदुरश्वश्रू-विहितार्वादिमङ्गलः । विशति स्म विशांपत्यु-रभिमन्युर्निकेतनम् ॥ ४७३ ॥ (त्रिभिर्विशेषकम्) कुमारीकरमादाय, मातृगेहे करेण सः । तस्यै ददद्विवाजन्म, प्रेमदक्षिणहस्तकम् ॥ ४७४ ॥ कुमारः कौतुकोदार-पर्गिरारीकिन्नरः । प्रसूनस्रग्निपातारं, तारामेलकमन्वभूत् ॥ ४७५ ॥ सर्वतेजस्वितेजांसि, परिक्षिप्य स्वतेजसा । जगल्लक्ष्मीं गरीयोऽङ्ग-मिलेनं कथयन्निव ॥ ४७६ ॥ विराटकन्यया सार्ध-मभिमन्युः करात्तया । प्रदक्षिणीकरोति स्म, ज्वलन्तं जातवेदसम् ॥ ४७७ ॥ युग्मम् ॥ दत्ते स्म हास्तिकाश्वीय-स्वर्णरत्नादिकं बहु । कुमाराय विराटेन्द्रः, पाणिमोचनपर्वणि ॥ ४७८ ॥ पर्वं परस्परग्राम-गमनागमनोद्यताः । यादवाश्च विराटाश्च, पौराणां ददिरे मुदम् ॥ ४७९ ॥

(१ आक्रोशोऽत्र शब्दोऽवगुण्ठनवाचकः । 'अंगुट्ठीइणिरङ्गीणीरङ्गीउ' इति देशीनाममाला ।) २ आकाशम् । ३ घण्टापथः—राजमार्गः । ४ गोमुखं—लेपः । ५ वीक्षणं—नेत्रम् । ६ हस्ते गृहीतया ।

आनन्दैकमयाः सुधारसमयाः कल्याणसंपन्मया,
लक्ष्मीकेलिमया महोत्सवमयाः कौतूहलश्रीमयाः ।
एतेषां कतिचिद्विराटनगरे तस्मिन् ययुस्तस्थुषा-
मन्योऽन्यप्रणयेन पुण्यदिवसेष्वग्रेसरा वासराः ॥ ४८० ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये विराटावस्थाने गोग्रहवर्णनो नाम दशमः सर्गः ॥

## अथ एकादशः सर्गः ।

अथ प्रीतिपरो विष्णु–र्गौरवेण गरीयसा। सबान्धवं सराजन्यं, निन्ये स्वपुरि धर्मजम् ॥ १ ॥ निविष्टयोर्मिथः स्नेहा–देकत्रैव रथे पथि। समपद्यत संवादो, द्रौपदी–सत्यभामयोः ॥ २ ॥ सत्यभामा विहस्योच्चै–र्जगाद द्रुपदात्मजाम्। ममास्ति महदाश्चर्यं, ततः पर्यनुयुज्यसे ॥ ३ ॥ अस्मादृशीनामेकोऽपि, दुराराधः प्रियः सखि!। प्रियाणां त्वं तु पञ्चानां, कथं चेतोऽनुवर्तसे ? ॥ ४ ॥ बभाषे महिषी पाण्डु–तनयानां नयोज्ज्वला। सखि! प्रियवशीकार–मन्त्रपारायणं शृणु ॥ ५ ॥

१ पृच्छयसे ।

गुरोर्वचनगानां मे, प्रिवेष्वेव लयोऽन्वहम् । यदेव रोचते तेभ्य–स्तदेव च करोम्यहम् ॥ ६ ॥ अहं मन्यहमश्नामि, भुक्तपूर्णेषु भर्तृषु । तेषु स्वपिमि सुप्तेषु, प्रतिबुध्ये च पूर्वतः ॥७॥ अभ्युत्थानं च पञ्चाना–मप्यमीषामुपेयुषाम् । करोमि विनयानम्र, मौलि चालापकारिणाम् ॥ ८ ॥ एतेषामङ्गशुश्रूषां, स्वयं विरचयाम्यहम् । करोम्यपत्यवात्सल्यं, निजं परिजनं प्रति ॥ ९ ॥ अविशेषेण वर्ते च, पञ्चस्वपि पतिष्वहम् । तन्मां पञ्चापि मन्यन्ते, नित्यं प्राणप्रियां प्रियाः ॥ १० ॥ वार्तयन्त्योस्तयोरेव–मतिक्रम्य भुवं क्रमात् । आवासान् दापयामास, द्वारकाद्वारि धर्मजः ॥ ११ ॥ दशाप्येत्य दाशार्हाः श्री–समुद्रविजयादयः । प्रणेमुः प्रणयात्तत्र, कुन्तीं सोत्कण्ठचेतसः ॥ १२ ॥ मातुलानतुलस्नेह–निघ्नवान् विस्मृतक्रमाः । प्रीतिपर्यश्रुनेत्रास्ता–समसान्ति स्म पाण्डवाः ॥ १३ ॥

अथाभ्यधुर्दशार्हास्तान्, पुराऽस्माभिः किरीटिने । ईयुषे तीर्थयात्रातः, सुभद्रा प्रतिपादिता ॥ १४ ॥ इदानीं सन्तु युष्माकं, शेषाणामप्युपायनम् । लक्ष्मीवती–वेगवती–विजया–रतयः सुताः ॥ १५ ॥ इत्युदीर्य प्रहृष्टैस्तैः, प्रारब्धमधुरोन्तरम् । स्वकन्यास्ताश्चतस्रोऽपि, पर्यणाय्यन्त पाण्डवैः ॥ १६ ॥ सानुजस्य तपःसूनो–र्विधाय स्वागतक्रियाम् । दर्शयामास कंसारिः, स्वयं द्वारवतीश्रियम् ॥ १७ ॥ प्रद्युम्नाद्यैः पुरोद्याना–दिषु पाण्डवसूनवः । पाञ्चालप्रमुखाः कृष्णकुमारैः सह रेमिरे ॥ १८ ॥

आगांसि तानि भूयांसि, दुर्योधनकृतान्यथ । कृष्णा भीमश्च कृष्णस्य, साश्रुनेत्रौ शशंसतुः ॥ १९ ॥ कृष्णोऽपि वाग्मिनामिन्द्रं, द्रुपदेशपुरोहितम् । दूत्याय प्रेषयामास, क्रोधाद्दुर्योधनान्तिकम् ॥ २० ॥ गुणैः श्रितः स वाग्मित्व–चण्डिम-

अदिमादिभिः। दूत्योचितपरीवारो, हस्तिनापुरमभ्यगात् ॥ २१ ॥ सेवागतानां भूपानां, नानामणिविभूषणैः। तुङ्गतुरङ्ग-मातङ्ग-शकटैः संकटाङ्गणम् ॥ २२ ॥ संचरद्वारनारीणां, मञ्जुमञ्जीरशिञ्जितैः। उजागरूकमदनं, स राजसदनं ययौ ॥ २३ ॥ (युग्मम्) द्रोणेन द्रोणपुत्रेण, जाह्नवीतनुजन्मना। शल्येन सिन्धुराजेन, कृपेण कृतवर्मणा ॥ २४ ॥ भगदत्तेन कर्णेन, विकर्णेन सुशर्मणा। गान्धारपतिना भूरि-श्रवसा चेदिभूभुजा ॥ २५ ॥ भ्रातृभिश्चण्डदोर्दण्डै-र्दुःशासन-पुरःसरैः। नन्दनैर्लक्ष्मणाद्यैश्च, परितः परिवारितम् ॥ २६ ॥ गीयमानगुणं रक्त-कण्ठैर्गान्धर्वगर्वितैः। स्तूयमानं स्तुतिप्रह्व-जिह्वैर्वैतालिकोत्तमैः ॥२७॥ वीक्ष्यमाणमुखाम्भोजं, सेवकैरौपजानुकैः। नम्रमौलिभिरादीय-मानाऽऽदेशं निदेशिभिः ॥२८॥ श्राव्यमाणं सुधासेक-च्छेकाः सूक्तीः कवीश्वरैः। कथ्यमानकथं पूर्व-भूभृतां वृत्तवेदिभिः ॥ २९ ॥ स्मृतिवेदिभिरावेद्य-मानधर्मव्यवस्थितिम्। उद्ग्राह्यमाणषाड्गुण्य-रहस्यं नीतिकोविदैः ॥ ३० ॥ अध्यासीनं सुधर्मायाः, श्रीविलासोपहासिनीम्। निर्मितां मणिचूडेन, सभामाजातशात्रवीम्[1] ॥ ३१ ॥ भूपणाङ्कितमाणिक्य-ज्योतिर्मञ्जरिताकृतिम् ॥ ३२ ॥ धृतराष्ट्राङ्ग-जन्मानं, विशामीशं विशारदः। सान्धिविग्रहिकाख्यात-पूर्वस्तत्र ददर्श सः ॥ ३३ ॥ (दशभिः कुलकम्)

स करौ कुड्मलीकृत्य, पुरस्तादुपविश्य च। उवाच वाग्मिषु प्राप्त-गौरवः कौरवप्रभुम् ॥ ३४ ॥ राजन् देवो मुरारातिररातिकरिकेसरी। तवान्तिकमतिस्नेहा-दाख्यातुं प्रजिघाय माम् ॥ ३५ ॥ उररीकृतनिर्वाह-हेतवे सह बान्धवैः। विराटपुरि दुष्कर्म-गुप्तोऽतिष्ठद्युधिष्ठिरः ॥ ३६ ॥ त्रयोदश्याः समायास्तु, प्रान्ते पूर्णे च वोऽवधौ। जगाम गोग्रहोद्घाते, व्यक्ततां स

१ युधिष्ठिरसंबन्धिनीम्।

तिनिर्वाः ॥ ३७ ॥ चिराद्यो दैवतं किंचि-द्विानन्दाद्दिवानिशम् । किंकुर्वाण इव प्राणै-रप्याराधयति स्म तम् ॥ ३८ ॥
'आगत्य द्रुपदाधीश. गोऽजनीशैरनेकशः । रसाल इव शैलम्बैः, शिश्रिये श्रितवत्सलः ॥ ३९ ॥ अभिमन्यू-त्तरापाणि-
पीडनप्रक्रमे तदा । पुरे तत्राक्रमप्युच्चै-रेतदुत्कण्ठितोऽव्रजम् ॥ ४० ॥ पाञ्चालप्रमुखास्तस्य, सर्वे तत्रामिलन् सुताः । सम-
गंसत पृथांग-नन्दनेऽपि सुहृद्गणाः ॥ ४१ ॥ तथापि वदनाम्भोज-मपश्यन् सानुजस्य ते । कदाचिदपि कौन्तेयः, सुप्रातं
नाभिमन्यते ॥ ४२ ॥ त्वद्योगविरहे नित्यं, स ताम्यत्येव केवलम् । बन्धुस्नेहोऽप्यहो काम-मनर्थः पृथुचेतसाम् ॥ ४३ ॥
उत्कण्ठातरलोऽप्युग्र-र्विलङ्घ्य समयावधिम् । मा स्म भूद्विमनस्यं ते. किंचिदित्यागमन्न सः ॥ ४४ ॥ नास्मिन् काचिदभक्ति-
र्ते, नाप्यसौ नागपाशलः । तदप्येतदहो ! जातं, धिग्विधेर्दुर्विलङ्घ्यताम् ॥ ४५ ॥ पूर्णेऽपि समये सोऽय-मनाहूतस्त्वया
ननु । कोऽस्मिनं नन्दनस्येतुं, महात्मानोऽभिमानिनः ॥ ४६ ॥ हर्षादुत्तोरणाशेष-द्वारां द्वारवतीं ततः । उपरुध्य मया काम-
मानिनो धर्मनन्दनः ॥ ४७ ॥ अधुनाऽपि तदात्मीयं. बन्धुमाह्वातुमर्हसि । द्वयोर्बान्धवयोर्मा स्म, विरोधो भून्मूर्धन चाम्
॥ ४८ ॥ विरोधेनाप्युपार्ज्यन्ते, बन्धुहेतोः खलु श्रियः । उदात्तचेतसः क्वापि, नोदरंभरिचेष्टता ॥ ४९ ॥ तेभ्यः सुखं निप-
त्तेभ्यः, श्रियः त्यागमुपागतम् । प्रणयेन क्रियन्ते चे-त्तन्महत् पुरुषव्रतम् ॥ ५० ॥ हेतोः कुतश्चन त्वं चे-देनं नाह्वाययि-
ष्यसि । भ्रातृभिर्निजगन्धेऽरु-र्नीरसानेष्यते बलात् ॥ ५१ ॥ न चैवमागतास्तुभ्य-मेते कल्याणहेतवः । सर्वां कदाचिदुत्सेका-
[illegible] ॥ ५२ ॥ भवताऽपि तदाऽवश्यं, मर्तव्यं वा रणाङ्गणे । कर्तव्यं वा श्रियं हित्वा, तैरिवारण्यगाहनम्

१ नगरैः । २ हस्तिनापुरम् ।

॥ ५३ ॥ प्रच्युतप्रभुशक्तेर-प्युत्साहे मतिशालिनः । कामं धर्मः सुखस्येव, जयस्य प्रतिभूर्नयः ॥ ५४ ॥ भूयांसश्चापि मादृक्षा-स्तादृशां सहचारिणः । श्रियं बृहत्सहायश्च, कलयत्यमहानपि ॥ ५५ ॥ नातिदुर्लम्भमम्भो हि, वारिदे वशवर्तिनि । न च मौक्तिकदुर्भिक्ष-मम्भोराशौ निदेशिनि ॥ ५६ ॥ वर्धयिष्यसि पैशुन्यं, त्वं तु केवलमात्मनः । उलूक इव वैराय-माणः किरणमालिनः ॥ ५७ ॥

तां निशम्य गिरं तस्य, कम्पमानाधरः क्रुधा । कामं ताम्रीभवच्चक्षु-रभ्यधत्त सुयोधनः ॥ ५८ ॥ ब्रह्मन्नजिह्मवाग्ब्रह्मन्, वचस्ते प्रतिभासते। कर्कन्धूफलवत् पूर्वं, कोमलं कठिनं ततः ॥ ५९ ॥ को भुवं मद्भुजस्तम्भ-न्यस्तामुत्तारयिष्यति ?। प्रक्षिप्य कवलं कुम्भि-मुखात् क इव कर्षति ॥ ६० ॥ को नाम केशवः? के च, पाण्डवाः पुरतो मम?। को नाम चन्द्रमाः? के वा, तारकास्तरणेः पुरः? ॥ ६१ ॥ हरिर्मत्कार्मुकोन्मुक्त-मार्गणव्रणितो रणे । द्वेधापि वेदनाविष्टः, क्रोष्टेव स भविष्यति ॥ ६२ ॥ खगाधीशध्वजो[1]ऽप्येष, मामकीनैः खगोत्करैः[2] । बलीकरिष्यतेऽवश्यं, खगानां समराङ्गणे ॥ ६३ ॥

इत्युपश्रुत्य तद्वाच-मुदश्चितमवाश्चयन् । बलादमर्पणो रोष-मग्रजन्माग्रणीर्जगौ[3] ॥ ६४॥ लक्ष्मीभुजा[4] भुजोत्कर्ष-संहर्षः क इवैष ते ?। आकाशमणिना कीट-मणेः स्पर्द्धाकणोऽपि कः ? ॥ ६५ ॥ अरिष्ट-केशि-चाणूरा-नाहुतीकृत्य यः पुरा । कंसं पूर्णाहुतिं चक्रे, स्वतेजोजातवेदसि ॥ ६६ ॥ आस्तां तावत् स निःशेष-द्विषदावाग्निवारिदः । सोढारः केन वोढार-श्चण्डतां युधि पाण्डवाः? ॥६७॥ तपःसुतशमाम्भोदा-दुत्थितः कोपपावकः। दुर्निर्वापो रिपुस्त्रैण-बाष्पपूरशतैरपि ॥ ६८॥

१ गरुडध्वजः—कृष्णः । २ बाणसमूहैः । ३ ब्राह्मणाग्रणीः । ४ कृष्णेन ।

भीमः शमितकिर्मीर-हिडम्ब-बक-कीचकः । न कस्य समरारम्भ-पर्वसर्वंकषो भुवि ? ॥ ६९ ॥ सुशर्मा यस्य
दोःक्रमं, वीक्ष्य दक्षिणगोग्रहे । तदानीं भवतः किं न, प्राभृतीकृतवान् भियम् ? ॥ ७० ॥ निहत्य हेलया येन, सदर्पं नृप-
कर्परम् । सनाथ तत्र मृत्युश्च, संकथां कामितो मिथः ॥ ७१ ॥ विधाय कीचकध्वान्त-विध्वंसं येन भास्वता । निर्ममे
शिञ्जिलच्छायः, सुदेष्णामुखचन्द्रमाः ॥ ७२ ॥ विद्विषामर्जुनच्छाय-मर्जुनस्य शिलीमुखाः । मलीमसं वितन्वन्ति, कीर्ति-
करनिर्वापनम् ॥ ७३ ॥ अस्तमस्तमहीध्रेण, प्रत्यूप इव पूषणम् । क्षिप्तमिन्द्रं विपक्षेण, यः पदे स्वे न्यवीविशत् ॥ ७४ ॥
भानुमत्यां कदन्यां यो, ज्येष्ठवन्योर्निदेशतः । त्वां मृगेन्द्रादिव मृगं, गन्धर्वेन्द्रादमोचयत् ॥ ७५ ॥ ह्यस्तने गोग्रहे येन, त्वं
न सा एव कालम् । मोनयाचकिरेऽस्त्राणि, वस्त्राणि च शरोत्करैः ॥ ७६ ॥ किमाचक्षे रिपुक्षोद-विलक्षनियमौ यमौ ।
गृह्णीतन्तु ननाराति-जीवितं गुनयौ न यौ ॥ ७७ ॥ ज्येष्ठभ्रातुः सरस्वन्त, इवाज्ञावेलया धृताः । ते चत्वारोऽप्यहंकार-द्वीपं
न प्रापयन्ति ते ॥ ७८ ॥ अर्पयिष्यामि तन्नूनं, काश्यपीं शिरसा समम् । लोभोऽयं लम्भयेत् प्राण-संशयं हि गुरूनपि ॥ ७९ ॥
इत्युक्तवान स गाम्भीर्य-प्रौढिमाढ्यंभविष्णुधीः । स क्रुधा धार्तराष्ट्रेण, संरम्भादभ्यधीयत ॥ ८० ॥ दूतत्वाच्च द्विजत्वाच्च,
नामभ्योऽसि भूभुजाम् । तेन यद्रोचते तुभ्यं, ब्रूहि तद्ब्राह्मणब्रुव ! ॥ ८१ ॥ वैरिणां तु पुरः कोऽपि, यदि स्यात्तस्य तद्गु-
णम् । गां जल्पत एव द्राक्, छिन्ना रसना भवेत् ॥ ८२ ॥ किं तु चेत्ते विशिष्टत्व-मस्ति किंचित्ततो मम । सर्वैकुण्ठान्
कुर्मो, दशरेयाः पृथासुतान् ॥ ८३ ॥ इति व्याहृत्य विस्फूर्ज-त्कोपाटोपारुणेक्षणः । न्यस्राक्षीत्तं पतिः क्षोणे-र्ग्राहयित्वा

१ [illegible] । २ सूर्यम । ३ समुद्राः । ४ कृष्णसहितान् ।

गले बलात् ॥ ८४ ॥ विदुराद्यैस्तदा वीक्ष्य, तं तथा गलहस्तितम् । समीरजन्मनो मेने, संधा निर्वाहशालिनी ॥ ८५ ॥

वैरिभूधवसंबाध-वारकां द्वारकां ततः । सोऽभ्येत्य पाण्डवोपेतं, पुण्डरीकाक्षमैक्षत ॥ ८६ ॥ स्वस्तिगर्भमुखाब्जेन, निविश्याग्रे गदाग्रजम् । अभ्यधीयत गान्धारी-सुतोदन्तः पुरोधसा ॥ ८७ ॥ देव ! दोर्गर्विते तस्मिन्, साम निर्नाम नश्यति । अम्भःकुम्भ इव क्षिप्तो, दीप्ते दवहुताशने ॥ ८८ ॥ दीपयेत् प्रत्युत प्रायः, साम शौण्डीरिमोद्धतान् । अलं ज्वलति सप्तार्चिः, सर्पिषा तर्पितः खलु ॥ ८९ ॥ सैष निःशेषभूपाल-मौलिलालितशासनः । तृणाय न श्रियं शार्ते-मन्यवीमपि मन्यते ॥ ९० ॥ राजानस्तेन संमान-दानैरानन्दितास्तथा । चक्रुर्यथोपकुर्वाणाः, प्राणानपि न किंचन ॥ ९१ ॥ ह्रियन्ते स्म तथा तेन, भीष्माद्या अपि भक्तितः । यथा तुल्येऽपि वात्सल्ये, तस्यैव जयकाङ्क्षिणः ॥ ९२ ॥ चतुरङ्गचमूक्रान्त-विश्वविश्वंभरातलः । नाकनायकमप्येष, करदीकर्तुमिच्छति ॥ ९३ ॥ चतुर्भिरपि तन्नाय-मुपायैर्बत साध्यते । दम्यते क्वापि केनापि, किं केसरिकिशोरकः ? ॥ ९४ ॥ गजेन्द्रसज्जनं वाह-वाहनं पत्तिवीक्षणम् । रथनिर्माणमित्युच्चै-स्तत्पुरे समरोद्यमः ॥ ९५ ॥ मया विष्णुर्मया जिष्णु-र्मया भीमो मया यमौ । तपःसूनुर्मयेत्येवं, त्रियन्ते तद्भटैर्भटाः ॥ ९६ ॥ कृच्छ्रेणैव ततो नैदं-युगीनभुजताण्डवैः । पाण्डवैर्देवपादैश्च, यद्यादीयेत मेदिनी ॥ ९७ ॥

इत्याख्याय स्थिते तस्मि-न्नग्रण्यामग्रजन्मनाम् । विकूणितमुखाम्भोजः, कैटभारिरभाषत ॥ ९८ ॥ पुराऽपि ज्ञातमेवैतत्, कार्यं दण्डैकगोचरम् । दूतस्तु प्रहितोऽस्माभि-र्लोकनिर्वादभीरुभिः ॥ ९९ ॥ तस्य धीरधुरीणस्य, न नाम तदसांप्रतम् ।

१ प्रतिज्ञा । २ इन्द्रसंबन्धिनीम् ।

दूतेन कृष्णसभायां कथितो वृत्तान्तः॥

नीतितुं समगेन्वह-स्तमुद्यच्छते स यत् ॥ १०० ॥ आत्मनश्च रिपूणां च, यद्दृष्टैव दोर्बलम्। अर्प्यते पृथिवी सा हि, शूराणां
मर्त्री नवा ॥ १०१ ॥ तत्प्रदत्ता महीमेता-मस्माकमपि गृह्णताम्। कामं हसिष्यते राज-गोष्ठीषु भुजसौष्ठवम् ॥ १०२ ॥
न नाम निर्जितामन्य-र्लक्ष्मीं कामन्ति दोर्भृतः। स्वयं हि निहतैर्नागै-राहारं कुरुते हरिः ॥ १०३ ॥ भीमोऽप्यघातुवस्तेन,
समर्जायमनर्गलम्। अन्यथा हि कथं मे स्यात्, मऊरोऽयमभङ्गुरः ? ॥ १०४ ॥ शिर-सरोरुहाकीर्णै-र्विरोधिरुधिरासवैः। हरिष्याम्यद्य
मेदिन्याः, स्वभागाद्ननऊमम् ॥ १०५ ॥ पार्थोऽपि प्रथमानाङ्ग-वेपथुः कोपतोऽब्रवीत्। क्षोणेरनर्पणे नूनं, भार्ग्यैर्जागरितं मम
॥ १०६ ॥ निराम्येन गोशाद्रः कौरवैरेन मे भुजः। न सरःकृतमौहित्य-स्तृष्यतीभः कराम्भसा ॥ १०७ ॥ आदीयते स्म तैः
नाके, कृष्णाकेशांशुकः क्षितिः। गृह्णन्तः केवलामेव, वयं लज्जामहे न किम् ? ॥ १०८ ॥ तत्तां प्रत्याहरिष्यामो, जीवितैः सह
विद्विषाम्। तत्कीर्तिः मुनिरोपात्ताः, कलान्तरपदे पुनः ॥ १०९ ॥ यमावप्यूचतुः काल-द्विजिह्वरसनोपमौ। संहर्तुं ताम्यतः
कार्म, गातानारोभुनौ ॥ ११० ॥ धर्मज्ञोऽप्यत्र रौद्रन्धु-वधाय किमु धावति। मनो मे ? किं तु कार्येऽस्मिन्, दैवदृष्टे
करोमि किम् ? ॥ १११ ॥ सर्वैः गर्जीक्रियन्तां तत्, पताकिन्यः क्षितीश्वरैः। धर्मभूः पश्यतु भ्रातृ-वधपातकमप्यमौ
॥ ११२ ॥ उत्पाटंशात्तरःसूनो-र्देवस्य च सुरद्विषः। प्रस्थानाय नृपैः सेनाः, सज्जीकर्तुं प्रचक्रमे ॥ ११३ ॥
अन्येद्युर्हस्तिनापुरात्, सारथिः संजयाभिधः। प्रतीतः प्रतिदौत्याय, तपःसुनमुपागमत् ॥ ११४ ॥ सोऽथ सान्त्व-
मयैर्वाक्यै-रभाषत युधिष्ठिरम्। देवो वैचित्रवीर्यस्त्वां, भाषते भूप ! मद्गिरा ॥ ११५ ॥ त्वं विवेकस्य धर्मस्य, नयस्य

१ पुरस्तादः।

विनयस्य च । एक एवाकरः शङ्ख-मुक्तादीनामिवार्णवः ॥ ११६ ॥ तत् करौ कुड्मलीकृत्य, वत्स ! किंचित्त्वमुच्यसे । कन्या इव नियुज्यन्ते, पात्रे हि गुरुभिर्गिरः ॥ ११७ ॥ वाचो मेऽस्मिन् पुनः सर्वा, ग्रावणीव शिलीमुखाः । कुण्ठीबभूवुरुल्लुण्ठे, शाठ्यधाम्नि सुयोधने ॥ ११८ ॥ स्वयमासन्न एवास्य, पातः पातकिनस्ततः । पित्तज्वरी चिरं हार-हूरादिद्विट् किमेधते ? ॥ ११९ ॥ वंशस्येव खलु प्रांशो-रप्यनम्रत्वशालिनः । बहिःसारस्य दुर्वार, एव भङ्गः पदे पदे ॥ १२० ॥ अकीर्तिपटहं विश्वे, दास्यसे तत् किमात्मनः ? । महात्मानो हि मुञ्चन्ति, प्राणानप्ययशस्करान् ॥ १२१ ॥ दीप्रस्यापि विवेकस्य, तमः-संपर्कशालिनः । महिमा मिहिरस्येव, बंहीयानपि हीयते ॥ १२२ ॥ विरोधयति लोभेन, धर्ममेकोऽपरः पुनः । लोभं त्यजति धर्मार्थ-मन्तरं तदसत्सतोः ॥ १२३ ॥ वरं वनं वरं भिक्षा, क्षुद्वरं मरणं वरम् । न तु श्रीर्बन्धुसंघात-घातपातकपङ्किला ॥ १२४ ॥ द्वेष्टि बन्धून् धनस्यार्थे, बन्धुद्वेषे धनक्षयः । तस्माद्बन्धुविरुद्धानां, न धनं न च बान्धवाः ॥ १२५ ॥ रणस्य च गतिर्दैवी, कस्तत्र जयनिश्चयः ? । जीयन्ते जातु दोर्वीर्य-स्फूर्तिमन्तोऽपि दुर्बलैः ॥ १२६ ॥ शाश्वतिक्यः श्रियः पिक्य, इव नावेक्षिताः क्वचित् । अकीर्तयः पुनः काक्य, इवावस्थास्नवश्चिरम् ॥ १२७ ॥ तद्विवेकमनुस्मृत्य, कृत्यं मनसिकृत्य च । हातुमर्हसि धात्रीश !, विरोधं सह बन्धुभिः ॥ १२८ ॥

इति श्रुत्वा रिपुश्रेणि-दुर्जयः संजयोदितम् । धर्मभूरभिधत्ते स्म, स्मितस्तबकिताधरः ॥ १२९ ॥ आर्य संजय ! जीवातु-र्धर्मस्य यशसोऽपि च । तातेन न्यायनिर्णिक्त-मुक्तमायतिपेशलम् ॥ १३० ॥ शौण्डीराणां तु धर्मोऽयं, न खलु क्वापि

(१ हारहूरा-द्राक्षा ।) २ चन्द्रस्य । ३ स्थिराः । ४ परिणामसुन्दरम् ।

कृष्णपाण्डवानां युद्धसज्जता । संजयस्य युधिष्ठिरसमीपे कथनम् ॥

गीयते । भुज्यते भूः पुरस्तेषां, बान्धवैरपि यद्बलात् ॥ १३१ ॥ अकीर्तिर्भुजविस्फूर्ति-मतां बन्धुवधोद्यमः । भूभोगस्तु प्रस-
ह्याय-मकीर्तेरपि मञ्जरी ॥ १३२ ॥ शमः प्रसाधनं पुंसां, यावन्नारिपराभवः । पराभूतौ पुनः क्रान्त-वैरिचक्रपराभवः
॥ १३३ ॥ तन्न मे बान्धवान् हन्तुं, काममुत्कण्ठते मनः । राज्यमप्यात्मनस्त्यक्तु-मेवमेव च नेच्छति ॥ १३४ ॥ त्यजामि
चेत् प्रशान्त्यर्थं, कथंचन महीमहम् । अमी त्वत्कार्यशौण्डीर्य-मन्दिरं न महोदराः ॥ १३५ ॥ तद्विचिन्त्य तदादेश्यं,
यदेवं नाति युज्यते । इति मे वृद्धतातस्य, नतिपूर्वं निवेदयेः ॥ १३६ ॥

जगाद नन्दनस्तार-निस्वनो मातरिश्वनः । क्षोणिप्रत्यर्पणेनापि, न तैः संधिं विदध्महे ॥ १३७ ॥ पश्यतां चिर-
मस्माकं-मायातोऽयं रणोत्सवः । अत्र वीक्षिष्यते वैरि-कबन्धशतताण्डवम् ॥ १३८ ॥ ऊरुं दौर्योधनीं भित्त्वा, छित्त्वा
दौःशासनीं भुजाम् । भविष्यामि ध्रुवं पारं-गमः संगरसागरे ॥ १३९ ॥ जिष्णुरप्युज्जगावेत-त्यजामः समरं न हि । तृष्य-
न्त्यमी नानासृ-क्पानश्रद्धाः खगाः क मे ? ॥ १४० ॥ जल्पतः स्म यमौ संधि-र्यदि स्यात्तत्कथं द्विषाम् । भित्त्वा वक्षः-
स्थलीं भीम-गदे कौटिल्यपाटवम् ? ॥ १४१ ॥

एवमुद्गीर्णे संग्राम-रङ्गशौण्डैः स पाण्डवैः । विसृष्टः संजयः स्पष्ट-खेदोऽगान्नागसाह्वयम् ॥ १४२ ॥ तत्र वैचित्रवीर्य-
स्य, क्ष्मापालस्य सारथिः । दुर्योधनाद्युपेतस्य, व्याजहार गिरं रहः ॥ १४३ ॥ विना विश्वंभरादानं, संधानं वः किलेप्सि-
तम् । अर्पणेनापि मेदिन्याः, संधिमन्ते न ते पुनः ॥ १४४ ॥ पाञ्चालीचिकुराकृष्टि-प्रतीकारकरालिताः । यौष्माकीणैः

१ रणः । २ हस्तिनापुरम् ।

सह प्राणै-रादित्सन्ते हि ते महीम् ॥ १४५ ॥ एते नितान्तकान्तार-वासनिर्वासितौजसः । इत्यमून्माऽवमंस्थास्त्वं, कुरुभूपाल! पाण्डवान् ॥ १४६ ॥ संप्रत्यस्ति यदेतेषां, पूर्वस्मादधिकं महः। कामं घनापदुत्तीर्णः, पतिस्तपति रोचिषाम् ॥ १४७॥ नात्यजीषज्जयो ज्याया-नजय्यावनुजौ पुनः । नात्यनीषत्सहो दन्ती, हन्त दन्तौ तु दुःसहौ ॥ १४८ ॥ तेजस्विनस्तिरस्कृत्य, दुष्करं खलु जीवितम् । प्राणन्ति दन्तिनः कैण्ठी-रवोल्लुण्ठनया कियत् ? ॥ १४९ ॥ शूरं प्रत्यात्तधाराल-वैराणां तमसामिव । कन्दराः शरणायन्ते, केवलं काश्यपीभृताम् ॥ १५० ॥ इयत्यपि गते तेभ्य-स्तद्भुवं दातुमर्हथ । सर्वस्य चेत् कुटुम्बस्य, कल्याणमभिलष्यथ ॥ १५१ ॥

अथामर्षरसोत्कर्ष-वर्षदश्रूदबिन्दुना । बभाषे धार्तराष्ट्रेण, भालभङ्गुरितभ्रुवा ॥ १५२ ॥ नूनमेष द्विपद्गृह्यः, संजयः समजायत । यदेवं पौरुषोत्कर्षा-द्विषां भीषयतेऽद्य नः ॥ १५३ ॥ जिघत्सोः शत्रुसैन्यानि, मत्कौक्षेयकरक्षसः । भवन्ति प्रथमग्रास, एव पश्चापि पाण्डवाः ॥ १५४ ॥ क्षोणिराक्षिप्यते केन, मद्बाहुकुलिशोदरात् ? । मांसमाकृष्यते केन, सिंहदंष्ट्राङ्कुरान्तरात् ? ॥ १५५ ॥ क्वाहं भ्रूभङ्गसंगीत-नर्तितानेकराजकः?। मत्स्य-द्रुपद-गोपाल-मात्रगुप्ताः क च द्विपः? ॥ १५६ ॥ रणारण्ये ज्वलत्युच्चै-र्मत्प्रतापदवानले । भटित्रीभवितारस्ते, वाजेया इव जन्तवः ॥ १५७ ॥ निन्दन्नेवं तु नः साक्षात्, :संजयोऽयं धनंजयः । छिद्यते तातदाक्षिण्या-न्नास्य जिह्वा दुरात्मनः ॥ १५८ ॥

१ निर्वासितं-नष्टम् । २ अतिसुजयः इति भावः । ३ सिंहस्य तिरस्कारेण । ४ धारालं-तीव्रम् । ५ नृपाणाम्, पक्षे पर्वतानाम् ।

संजयस्य हस्तिनापुरे आगमनम् ॥

गिरं तामन्वगुस्तस्य, कर्ण-दुःशासनादयः । ध्वान्त-ध्वाङ्क्ष-विपक्षाद्याः, प्रदोषस्यानुगामिनः ॥ १५९ ॥ ययौ दुर्योधनः क्रोधा-द्विग्वजाय संजयम् । द्विषन्ति श्लेष्मवन्तो हि, पथ्यायाप्युपपाथसे ॥ १६० ॥ गते तस्मिन्नपस्मार-मंदिरे विदुरादिभिः । शङ्कातङ्काकुलैर्मेने, नेदीयान् कुलविप्लवः ॥ १६१ ॥ अथाक्षमी कुरुक्षेत्रं, प्रति प्रस्थानहेतवे । महौजाः गजगामाग, गान्धारेयो वरूथिनीम् ॥ १६२ ॥ हस्तिनापुरवास्तव्यः, समस्तोऽपि जनस्तदा । समग्रकुरुसंहार-शङ्काशोक-मयोऽभवत ॥ १६३ ॥

अन्येद्युरपदानन्द-मादाय विदुरं रहः । पप्रच्छ कुलकल्याणं, धृतराष्ट्रो धराधवः ॥ १६४ ॥ अवादीद्विदुरो राजन्, प्रतिभासचक्षुषा । त्वः प्रागेव विस्पष्टः, मर्मोऽप्यर्थो भवत्यसौ ॥ १६५ ॥ भवानेवाभवन्मूल-मस्य वैरमहीरुहः । जातमेव दुर्गन्मानं, नान्यजयः सुयोधनम् ॥ १६६ ॥ मद्वाचः स्वादवोऽप्यासं-स्तदानीं विरसास्त्वयि । स्रोतोवार इवावार-पारे रत्नधामानि ॥ १६७ ॥ छिनत्ति नाम्नणप्रान्त-प्ररूढं यो विषद्रुमम् । स एव भाविनं हन्त, कुलक्षयमुपेक्षते ॥ १६८ ॥ अगिन्यम्भोभिरुचिप्र-श्चेतानिर्वापितोऽनलः । केन नाम निरुध्येत, निःशेषं सदनं दहन् ? ॥ १६९ ॥ नोद्वेगहेतवे कस्य, दुर्योधनो महानपि ? । भयंकरः पयोदोऽपि, ज्वलन्तमशनिं वहन् ॥ १७० ॥ आत्मीयेष्वप्यपन्याय-प्रवृत्तिं येऽधिकुर्वते । तेष्वेव गरुद्रुमेषु, जायन्ते न सुखाय ते ॥ १७१ ॥ पातयन्तस्तटीस्तुङ्गा-स्तरङ्गा हि तरङ्गिणीः । कुशेशयकुलैः साकं, पङ्कि-मीकुर्वतेनगम् ॥ १७२ ॥ अङ्गीकुर्वन् कदाचारं, न्यायमुल्लुम्पति क्रमात् । शमीद्रुम इवाभ्यर्णं, चूतमूरीकृतानलः ॥ १७३ ॥

१ 'गाद्र-गा', प्रतिगय० । २ दुःखेन नहितः । ३ कमलसमूहैः । ४ अङ्गीकृतोऽग्निर्येन सः ।

संजयेन धृतराष्ट्रस्य कृत उपदेशः ॥

अपाकृतनयं मोहा–न्न धर्मोऽभ्येति भूपतिम् । न हंसः श्रयते हन्त, वीताम्भोजवनं वनम् ॥ १७४ ॥ दुर्नयध्वस्तधर्मस्य, श्रियो भङ्गुरसंगमाः । व्योम्नि पाथोदपीतेन्दौ, कौमुदी कियदीक्ष्यते ? ॥ १७५ ॥ भोग्याः श्रियो न साधूना–मधर्मशबलीकृताः । सेव्याः किं नाम्न हंसाना–मापः प्रावृड्जलाविलाः ? ॥ १७६ ॥ श्रियोऽप्यधर्मसंपृक्ताः, कस्य नाम न मृत्यवे ? । हारहूरापि किंपाक–संपर्कान्न हिनस्ति किम् ? ॥ १७७ ॥ नित्यमारब्धधर्मस्य, नेदीयस्यस्तु संपदः । करारोपितदीपस्य, न प्रभा हि दवीयसी ॥ १७८ ॥ धर्मकर्मान्तिकीभूय, सततं यस्य सिञ्चति । तस्यावश्यं भवेल्लक्ष्मी–वल्लिरुल्लासिपल्लवा ॥ १७९ ॥ नासीरे[3] यस्य धर्मोऽयं, संवर्मयति संगरे । तस्यार्पयति केशेषु, समाकृष्य जयश्रियम् ॥ १८० ॥ धर्मकल्पद्रुमस्यैते, पल्लवाः क्षितिपश्रियः । पुष्पाणि वैरिविजयः, फलानि सुखसंपदः ॥ १८१ ॥ तदा वैरिपराभूति–यामिनी क्षयगामिनी । जायतेऽसौ यदा धर्म–धर्मद्युतिरुदित्वरः ॥ १८२ ॥ अन्तिके यस्य जागर्ति, धर्मोऽयं नित्ययामिकः । प्रभवेयुः कुतः क्रूरा–स्तस्य व्यसनदस्यवः ॥ १८३ ॥ यस्य धर्मोऽस्ति सत्कर्म–संधिकृत्पारिपार्श्विकः । स निर्वहणमभ्येति, विरोधिवधनाटके ॥ १८४ ॥ स च धर्मो न लुब्धानां, सेर्ष्याणामिव सौहृदम् । महान् सहानवस्थान–विरोधो धर्मलोभयोः ॥ १८५ ॥ नैव लोभपरीरम्भ–शालिनो धर्मसंगमः । कुतस्त्यः शौचसंपर्कः, सरमासुतसङ्गिनः[4] ॥ १८६ ॥ न्यायशैलपविलाभो, लोभो धर्मार्कदुर्दिनम् । श्रीवल्लिपरशुर्लोभो, लोभः कीर्त्यब्जिनीविधुः ॥ १८७ ॥ लोभेन भ्रश्यति न्याया–दन्यायी धर्ममुज्झति । मुक्तधर्मा गतश्रीः स्या–दश्रीकस्य न कीर्तयः ॥ १८८ ॥ मुञ्चेन्महान् वृथा लोभ–मलुब्धो नयमन्दिरम् । धर्ममन्विष्यति न्यायी, धार्मिकं वृणुते जयः

१ कमलजलाभ्यां रहितम् । २ अतिसमीपस्थाः । ३ अग्रसैन्ये । ४ श्वानसङ्गिनः ।

॥ १८९ ॥ राजंस्तल्लोभमुन्मुच्य, धर्ममालोच्य जित्वरम् । कीर्तिवल्लिसुधासेकं, विवेकमवलम्ब्य च ॥ १९० ॥ आत्मजन्मानमेनस्मा-न्निवर्तय कदाग्रहात् । ग्रासीभूयं भवन्मृत्यो-स्त्रायस्व सकलं कुलम् ॥ १९१ ॥ (युग्मम्)

शुद्धधीर्धृतराष्ट्रोऽथ, जगाद विदुरं प्रति । त्वां विना वक्ति को नाम, तथ्यवाक्पथ्यमीदृशम् ? ॥ १९२ ॥ इयमापानतिक्ताऽपि, गीस्त्वदाऽऽयतिसुन्दरा । मुखद्वेष्याऽपि किं नैव, गुडूची संनिपातभित् ? ॥ १९३ ॥ यो बन्धूनामुपेक्षेत, कुल्यापाग्दवानलम् । पश्य तस्यापि किं न स्या-त्तद्दोषप्लोषवैशसम् [?] ॥ १९४ ॥ मृत्युमूलं ह्यनुच्छिन्दन्, कालकूटस्य पाटवम् । कलङ्कपङ्किलः शङ्कू, सुधाधामाऽप्यजायत ॥ १९५ ॥ परं मया दुरात्माऽयं, बोधितोऽपि सहस्रधा । पिशाचकीव दुर्दैवाद्वध्यते न कथंचन ॥ १९६ ॥ द्वावप्यावां तमभ्येत्य, बोधयावः पुनस्ततः । कथंचिद्यदि नामास्मा-दपस्मारान्निवर्तते ॥ १९७ ॥

इत्यालोच्याथ तौ गत्वा, बद्धप्रणयमूचतुः । दुर्निरोधस्फुरत्क्रोध-सुदुर्बोधं सुयोधनम् ॥ १९८ ॥ वत्स ! वात्सल्यसौन्दर्य-मस्मदीयमिदं मनः । त्वां प्रति प्रसभं वक्तुं, नियुंक्ते नौ पुनः पुनः ॥ १९९ ॥ निष्ठां वचःप्रतिष्ठैव, प्रापयेत् पुरुषव्रतम् । क्षमेव गुणसंभारं, राकेव मृगलाञ्छनम् ॥ २०० ॥ वाचि भ्रष्टप्रतिष्ठस्तु, हीयते पुरुषव्रतात् । पुरुषव्रतशून्याऽऽत्मा, श्वसन्नपि शवायते ॥ २०१ ॥ शवायमानः क्रमश-स्त्यज्यते स्वजनैरपि । जायते क्षुद्रजन्तूनामास्पदं स ततः परम् ॥ २०२ ॥ मा कृथास्तद्वचोलोपं, पुरुषव्रतहारिणम् । असत्यवचसः सत्यं, स्थास्नवो न श्रियोऽपि ते ॥ २०३ ॥ यान्त्यस्ताश्रोतपथायाताः, सपुत्र-पशु-बान्धवम् । भवन्तमपि नेष्यन्ते, तटग्राममिवापगाः ॥ २०४ ॥ सत्य-

१ मुखकमिवाचरति ।

पूतं तु कौन्तेय-मेष्यन्ति नियतं श्रियः । मरालानामिव श्रेण्यः, सरः सरसिजोज्ज्वलम् ॥ २०५ ॥ सत्यमेव तदीयं ते पुराऽपि हि महीमदात् । को नामापरथा तस्मा-दिमामाच्छेत्तुमीश्वरः ? ॥ २०६ ॥ दोर्दण्डान् पाण्डवेयानां, संनिधाया-धिमानसम् । आत्मनः सत्यमत्यन्त-मुत्तम्भयितुमर्हसि ॥ २०७ ॥ यद्वा राधेय-गाङ्गेय-द्रोणादीनां धनुष्मताम् । भुजा-नालोक्य निर्भीको, भुवं नार्पयसि ध्रुवम् ॥ २०८ ॥ अमीषामपि गन्धर्व-राज-गोग्रहविग्रहे । प्रत्यक्षीकृतमेवास्ति, भुजयोरू-र्जितं त्वया ॥ २०९ ॥ निदेशाद्यद्यजातारे-र्नागमिष्यद्धनंजयः । त्वां गन्धर्वेन्द्रपारीन्द्रात्, कस्ततोऽमोचयिष्यत ? ॥ २१० ॥ गोग्रहे स्मरसि प्राण-निग्रहे सघृणोऽर्जुनः । सानीकस्यापि ते वस्त्र-मूर्त्या कीर्तिं हरिष्यति ॥ २११ ॥ प्रेयस्यः सर्वदा यस्य, धर्ममर्माविधः क्रियाः । धर्माभिसारिणीयाभि-र्लक्ष्मीभिर्नास्य संगमः ॥ २१२ ॥ यस्य धर्मोऽयमेकोऽपि, सैन्ये संनह्यते मुदा । कक्षवत्प्रतिपक्षौघं, तस्य संहरतेऽग्निवत् ॥ २१३ ॥ वत्स ! मत्सरमुत्सृज्य, तदर्पय महीमिमाम् । धर्म-जीवित-कीर्तीनां, मा स्म भूः क्षयवासरः ॥ २१४ ॥

इत्याकर्ण्य तयोर्वाच-मुच्चैरुत्प्रासपांसुरः । दोर्दर्पदर्शितावज्ञ-मभ्यधाद्धृतराष्ट्रभूः ॥ २१५ ॥ तातौ ! धर्ममपि क्षात्रं, न जानीथः कथं युवाम् ? । काश्यपीं करमारूढां, क्षत्रियः क इवार्पयेत् ? ॥ २१६ ॥ प्रत्युतार्पयतः कामं, दोःकीर्तिः कलु-षीभवेत् । कराक्रान्तकरित्यागे, कुण्ठं कण्ठीरवोर्जितम् ॥ २१७ ॥ न्यायोऽपि स खलु न्यायो, यस्तेजस्विभिरादृतः ।

१ मनसि । २ पारीन्द्रः-सिंहः । ३ वस्त्रमिषेणेत्यर्थः । ४ तृणवत् । ५ उपहाससहितः । ६ सिंहशौर्यम् । ७ 'अन्या-योऽपि खलु न्यायः' इति गद्यपाण्डवचरितानुसारेणोचितं प्रतिभाति ) एकस्यां प्रतौ अयं पाठोऽस्ति ।

अन्तीकृतः प्रदीपौघ-र्दर्शोऽपि हि महोत्सवः ॥ २१८ ॥ किं च यज्जीयते जातु, कातरैरप्यकातरः । तद्दैववैभवं किंचि-न्न नाम मदभिर्मन्ययः ॥ २१९ ॥ तन्मा भैष्टमदीपिष्ट, विष्टपग्राससलालसः । मद्विक्रमकृशानुश्चे-त्तदग्धा एव पाण्डवाः ॥ २२० ॥ एतैर्जराप्रलापैस्तु, मा मा मां भयविक्लवैः । पुनः पुनर्मनःक्लान्ति-हेतुभिर्व्यथयिष्यथः ॥ २२१ ॥ तस्येत्युक्तिमुपश्रुत्य, श्रुतिनिश्राणितजराम् । खेदादुत्थाय वैचित्र-वीर्यौ स्वस्थानमीयतुः ॥ २२२ ॥

अथ दायादसंदोह-क्षयाशङ्काविरक्तधीः । संसारसुखसंभार-भङ्गुरो विदुरोऽभवत् ॥ २२३ ॥ स वैराग्यभराचान्त-स्वान्तश्चेत्तिरचिन्तयत् । धिक् संपदः प्रभुत्वं धिक्, धिक् च वैषयिकं सुखम् ॥ २२४ ॥ यत्कृते पितरं पुत्रः, पिता पुत्रमपि कश्चित् । सुहृत् सुहृदं बन्धु-बान्धवं च जिघांसति ॥ २२५ ॥ धिक् पापप्रभवाः पाप-प्रसविन्यः श्रियोऽसताम् । जाता हि गाढशल्याढ्य, फलं प्रसुवते लताः ॥ २२६ ॥ श्रीमातङ्गीपरीरम्भ-लम्भिताद्भुतकल्मषाः । न धर्ममग्रजन्मानं, स्प्रष्टुमप्यधिकारिणः ॥ २२७ ॥ कथं नु विषयासङ्ग-पङ्कपङ्किलमूर्तयः । सुभगंभावुकीभूय, भजेयुर्मुक्तियोषितम् ? ॥ २२८ ॥ एतानधर्मचाण्डाल-संसर्गमलिनान् कुरून् । न खलु द्रष्टुमीशिष्ये, म्रियमाणान् रणाङ्गणे ॥ २२९ ॥ तत्तदीयमदृष्ट्वैव, संहारं समराजिरे । मम प्रव्रजितुं मंक्ष्व-प्युत्कर्षं दधते धियः ॥ २३० ॥

एवमालोचयन् सोऽय-मश्रौषीत् कस्यचिन्मुखात् । यदुद्याने मुनिर्ज्ञानी, विश्वकीर्तिरुपागमत् ॥ २३१ ॥ तत्रोपेत्य नतो हर्षा-दुन्मिषत्पुलकाङ्कुरः । स तं मुनीन्द्रमानम्य, तत्पुरस्तादुपाविशत् ॥ २३२ ॥ अथ संसारसंताप-निर्वापणसुधोप-

१ सुभटव्रजः (?) ।

माम् । आरेभे भगवान् दत्त-शर्माणं धर्मदेशनाम् ॥ २३३ ॥ मनःक्षेत्रे गुरोर्वाक्य-जलैरप्लावितात्मनि । पुण्यबीजानि किं नाम, देहिनां दधतेऽङ्कुरम् ? ॥ २३४ ॥ कषायदग्विषाहीन्द्र-विषविक्लविते हृदि । गुरुवागमृतस्यापि, नालंकर्मीणता क्वचित् ॥२३५॥ कषायघनवर्षेण, विवेककमलोत्करे । नाशितेऽस्यां मनोवाप्यां, धर्महंसः कियद्वसेत् ? ॥२३६॥ कषायमदिरास्वाद-विपर्यासितचेतसः । हहा ! देहभृतो हन्तु-मीहन्ते बान्धवानपि ॥ २३७ ॥ कषायनिम्नगापूरः, कषित्वा भाग्यभूरुहम् । जन्तून् प्लुतनयद्वीपः, प्रक्षिपेद्विपदार्णवे ॥ २३८ ॥ भवेत् पाणिंधमः कामं, सनातनपुरीपथः । स्वतन्त्रास्तत्र चेन्न स्युः, कषायाः परिमोषिणः ॥ २३९ ॥ त एवास्माद्विमुच्यन्ते, कषायदवपावकात् । ये श्रयन्ति नराः पुण्य-पीयूषसरसोऽन्तरम् ॥ २४० ॥ कषायविषकुल्याभिः, सिक्तान् संसारकानने । प्राणापहान् हहा जीवाः, सेवन्ते विषयद्रुमान् ॥ २४१ ॥ तत्त्वयाऽप्यद्य दायाद-कषायग्रीष्मतापितः । महात्मन् ! शमपीयूषै-रात्मा निर्वाप्यतामयम् ॥ २४२ ॥ मनस्तव परिज्ञाय, ज्ञानात् संसारकातरम् । आयातोऽस्मि पथो दूरा-त्तद्विधेहि स्वमीहितम् ॥ २४३ ॥ सर्वसंहारसाक्षेपा, राक्षसी भवितव्यता । न निवर्तिष्यते सेय-मकृत्वा ते कुलक्षयम् ॥ २४४ ॥

उत्थाय विदुरोऽवादीत्, ततः कुड्मलिताञ्जलिः । स्वामिंस्त्वमेव संसार-पारावारान्तरीपभूः ॥ २४५ ॥ त्वां वीक्ष्य विश्व-जीवातुं, जीमूतमिव नूतनम् । त्यक्तदुःखौघघर्मर्तु-संतापं मे मनोऽभवत् ॥ २४६ ॥ विमुक्तिपथपाथेय-कल्पमस्वल्पसौख्य-

१ दत्तसुखाम् । २ न समर्थता । ( ३ अन्धकाराद्यावृतमार्गः ) पाणिं धमतीति पाणिंधमः सप्रकाश इत्यर्थः संभवति । ४ अन्तरीपः-द्वीपः ।

दम् । तन् स्वपाणिसरोजेन, व्रतं मे दातुमर्हसि ॥ २४७ ॥ मा कृथाः प्रतिबन्धं त्व-मित्युक्ते मुनिना ततः । प्रणम्य प्रीति-पर्यश्रु-र्विदुरः पुरमागमन् ॥ २४८ ॥ ज्येष्ठं बान्धवमामन्त्र्य, मध्यमं तु विशुद्धधीः । निधाय मार्ग्यां तद्वाचा, स तं मुनिमगात् पुनः ॥ २४९ ॥ चकार सर्वसावद्य-निवृत्तिं च तदन्तिके । महीमप्रतिबद्धश्च, विजहार समीरवत् ॥ २५० ॥

अन्येद्युर्मितमामन्त-परिच्छदविराजितः । देवः स कंसविध्वंसी, स्वयं हास्तिनमाययौ ॥ २५१ ॥ मृगाङ्कमिव राकायां, स्तोकतारकभूषितम् । प्रत्युद्ययौ तमत्यल्प-परिवारं कुरूद्वहः ॥ २५२ ॥ मितैरपि हरेः सैन्यैः, कुरुसेना महत्यभूत् । भृशं वर्द्धयतेऽम्भोधे-स्तरङ्गोऽपि तरङ्गिणीम् ॥ २५३ ॥ अथोत्क्षिप्तपताकौघं, प्रसूनप्रकराङ्कितम् । पुरं संभ्रान्तरम्भोरु, कैटभा-रातिराविशत् ॥ २५४ ॥ ततः सौधे समानीय, सूत्रितस्वागतक्रियम् । तस्यां संसदि दिव्यायां, न्यवीविशदमुं नृपः ॥ २५५ ॥ रत्नसिंहासनज्योति-र्जटालिततनुद्युतिः । बभार कैटभारातिः, सेन्द्रायुधघनश्रियम् ॥ २५६ ॥ भीष्म-दुर्यो-धन-द्रोण-कर्ण-दुःशासनादिभिः । वृतः सधृतराष्ट्रैः स, व्यभादिन्दुरिवोडुभिः ॥ २५७ ॥ अथो जगाद सानन्दं, मुकुन्दं कुन्दसुन्दरैः । वैचित्रवीर्यः स्नपय-न्नुदश्रु दशनांशुभिः ॥ २५८ ॥ धन्यंमन्यं गृहं मेऽभूत्, त्वत्संभावनयाऽनया । इदानीं तु गिरा श्रोत्रे, पवित्रयितुमर्हसि ॥ २५९ ॥ संसदुद्द्योतनिस्तन्द्र-स्मितचन्द्रातपोज्ज्वलम् । वदनेन्दुं वहन्नुच्चै-र्व्याजहार हरिस्ततः ॥ २६० ॥

वैचित्रवीर्य ! धात्रीश !, वचोवैचित्र्यजन्मभूः । भवद्भिः प्रहितोऽगच्छ-द्वारकां संजयः पुरा ॥ २६१ ॥ स तदानी-

१ कृष्णः । २ संभ्रान्तनारि । ३ इन्द्रायुधं-विद्युत् । ४ 'स्नपयन् प्रांशुभिर्दश०' प्रतिद्वय० ।

कृष्णस्य दौत्येन हस्तिनापुरे गमनम्॥

मतिस्नेहात्, कुलप्रलयकातरः । संधानविषयं किंचि-त्तपःसुतमवोचत ॥ २६२ ॥ संधित्सत्यपि कौन्तेये, भूपाले बलशालिभिः । भ्रातृभिर्भीम-बीभत्सु-प्रमुखैर्नैव संदधे ॥ २६३ ॥ ततोऽस्माकमनावेद्य, विग्रहे जातनिश्चयः । द्वारवत्याः समेयाय, संजयो गजसाह्वयम् ॥ २६४ ॥ तं समस्तमुदन्तं मे, धर्मसूनुरचीकथत् । हृदयस्य हि सर्वेषा-मनाख्येयं न किंचन ॥ २६५ ॥ ततोऽहं कुरुभूपाल-कुलकल्पान्तभीरुकः । अनालोच्यैव कौन्तेयान्, दूत्याय स्वयमागमम् ॥ २६६ ॥ यूयं किंचित्तदाप्तत्वं, संभावयथ चेन्मयि । तन्ममेदं मनाग्वाक्यं, मनस्याधातुमर्हथ ॥ २६७ ॥ आप्तवाचोऽपि हि प्रायो, दर्पाध्माते जडात्मनि । हन्त मज्जन्ति निर्नाम, पर्वता इव सागरे ॥ २६८ ॥ प्रत्युत प्रज्वलत्याप्तो-पदेशैर्दोर्मदोद्धतः । दीप्यते नितरामग्नि-स्तैलभूरनलोऽम्बुभिः (१) ॥ २६९ ॥ अन्धत्वं नेत्रसद्भावे, बाधिर्यं श्रुतिपाटवे । मूकत्वं वाक्प्रवृत्तौ च, श्रीरियं महतामपि ॥ २७० ॥ दुर्गेहिनीव पुंसः श्री-र्वेश्मनीव न मानसे । दत्ते हितोपदेशानां, स्वजनानामिवाश्रयम् ॥ २७१ ॥ लक्ष्मीश्च भुजदर्पश्च, द्वयमेतद्दुरत्ययम् । ग्रीष्मश्रीश्च दवाग्निश्च, दुःसहौ खलु संहतौ ॥ २७२ ॥ सुजनोक्तिः कथंकार-महंकारमयं मनः । विशेत् कुलीनकन्येव, निवासं विटसंकटम् १ ॥ २७३ ॥ संवृत्य तद्भुजागर्वं, लक्ष्मीमदमुदस्य च । शृणोति चेत्तदेतर्हि, किंचिद्वच्मि सुयोधनम् ॥ २७४ ॥ स्वच्छन्दं वद गोविन्दे-त्युक्ते कुरुमहीभुजा । प्रतीतस्तं प्रति प्राह, विहङ्गेश्वरवाहनः ॥ २७५ ॥

---

१ नामरहितं यथा स्यात्तथा । २ ('अनिलाम्बुभिः' इति भवेत्) 'मग्नितैलभूरनलोऽम्बुभिः' इत्येकप्रतिपाठः सम्यग् भाति ।

पाण्डवेभ्यो भुवः खण्ड-मपि त्वं नैव दित्ससि । एतां ते तु जिघृक्षन्ति, तव प्राणैः सहाखिलाम् ॥ २७६ ॥ पार्थानु-ज्ञया साम्राज्यं, त्वमेवाथ करिष्यसि । तथापि न खलु श्रेयः, काः श्रियः स्वजनैर्विना ? ॥ २७७ ॥ रणाङ्गणे च ते नूनं, विपत्स्यन्ते न केवलाः । तत्रापि गात्रमात्रेण, यदि स्यादवशेषता ॥ २७८ ॥ तदारब्धकुलोच्छेदः, कोऽयं गौण्डीरिमा तव ? । किमेतच्च तुलाक्षिप्त-प्राभवं बुद्धिवैभवम् ? ॥ २७९ ॥ यतो द्वेधाऽप्यमौ वेधा, धर्मसूर्धर्मकर्मणि । आतङ्ककृद्दोर्गीणां, द्वेधाऽपि पवनोद्भवः ॥२८०॥ बीभत्सुरतिबीभत्स-कर्मकृद्वैरिदारणे । यमौ दोर्बलदुःप्रेक्ष्य-विपक्ष-पटलीयमौ ॥ २८१ ॥ श्रेयस्करस्तदेतैस्तैः, संधिरेव पृथासुतैः । ईदृशा हि क लभ्यन्ते, सहायाः स्वस्य बान्धवाः ? ॥ २८२ ॥ विचार्य तदपव्यागं, वितर्क्योदर्कमात्मनः । पञ्च ग्रामानिमान् पाण्डु-सुतेभ्यो दातुमर्हसि ॥ २८३ ॥ कुशस्थलं वृषस्थलं, माकन्दीं वारणावतम् । चतुरोऽवरजेभ्योऽमून्, किंचित्त्वाद्याय पञ्चमम् ॥ २८४ ॥ ( युग्मम् ) इयताऽपि त्वया संधिं, ते विधास्यन्ति मद्गिरा । सन्तोऽल्पेनापि तुष्यन्ति, वीक्षमाणाः कुलक्षयम् ॥२८५॥ अन्यथा नीरराशीना-मिव प्लावयतां जगत् । एतेषां क इवान्यो य-स्तेषां सेतुर्भविष्यति ? ॥ २८६ ॥

व्याहृत्येति हृषीकेशे, स्थिते दुःशासनाग्रजः । ऊचे चम्पाधिपालोक-साचिसंचारिलोचनः ॥ २८७ ॥ एतावदपि गोविन्द ! मन्यसे नैव किं बहु ? । यदद्याप्येष मुञ्चामि, प्राणतः पाण्डुनन्दनान् ॥२८८॥ इदानीमपि यद्येते, वार्ता ग्रामस्य देशदान् । एकस्यापि करिष्यन्ति, न भविष्यन्ति तद्ध्रुवम् ॥ २८९ ॥ स्वभुजौर्जित्यपर्यन्तं, तेऽथ काङ्क्षन्ति वीक्षितुम् ।

१ कुन्तीपुत्रान । २ 'कुलाक्षिप्त-प्रभावं' इतिप्रत्य० । ३ पटली-समूहः, तस्या यमराजसदृशौ ।

तदाऽऽयान्तु कुरुक्षेत्रे, क्षिप्रं साकमपि त्वया ॥ २९० ॥ इत्युक्त्वा सह कर्णेन, निर्गत्य सदनाद्बहिः । स निश्चित्य हरेर्बन्ध-मेत्य भूयोऽप्युपाविशत् ॥ २९१ ॥ तं कथंचित् परिज्ञाय, सात्यकिर्मन्त्रमेतयोः । संज्ञया ज्ञापयामास, कंस[1]विध्वंसकारिणः ॥ २९२ ॥ ततस्ताम्रीभवद्भाल-कपोलनयनोत्पलः । सस्वेदपुलकः क्रोधा-ज्जगादेति गदाग्रजः[2] ॥ २९३ ॥ उपकारिणमप्युच्चै-रपकुर्वन्ति दुर्धियः । दन्दहीति न होतारं, किं हुतोऽपि हुताशनः ? ॥ २९४ ॥ एतज्जीवातवेऽप्युच्चै-र्बहुधा मम धावतः । बन्धमिच्छति दुर्मेधा-स्तत्कोऽयं कुपिते मयि ? ॥ २९५ ॥ मन्दोऽपि न मृगारातिः, शृगालैः परिभूयते । ग्रस्यते न ग्रहोद्द्योतैः, क्षीणस्यापि विधोर्महः ॥ २९६ ॥ कृपयैव तु नेदानी-मेव व्यापादयाम्य[3]मुम् । भवन्तु पाण्डवेयानां, सावकाशाः क्रुधोऽपि च ॥ २९७ ॥ कुरुक्षेत्रे त्वसौ क्षत्र-लक्षगुप्तोऽपि ढौकताम् । सर्वेपामपि तत्रैव, ज्ञास्यते भुजवैभवम् ॥ २९८ ॥ एते तु वयमायाता, एव संप्रति सत्वरम् । ऊर्जस्विभुजवीर्याणा-माहवोऽपि महोत्सवः ॥ २९९ ॥

इत्युक्त्वा सहसोत्थाय, क्रोधात्ताम्रतनुद्युतिः । ज्वलन्निव बृहद्भानु-र्निर्ययौ सहसा हरिः ॥ ३०० ॥ तत्प्रकोपाऽऽकुलीभूत-स्वान्ताः सान्त्वयितुं ततः । गाङ्गेय-धृतराष्ट्राद्याः, पारिषद्यास्तमन्वयुः ॥ ३०१ ॥ ततः करे समालम्ब्य, गौरवोत्तरया गिरा । ते कामं चकितात्मानो, मञ्जुकेशिन[4]मूचिरे ॥ ३०२ ॥ महात्मानो न कुप्यन्ति, खेदिता अपि दुर्मदैः । तुषारतरधारो हि, तडित्तप्तोऽपि तोयदः ॥ ३०३ ॥ न ताम्यन्ति महीयांसो, दुर्वचोभिर्लवीयसाम् । वहते न हरिः खेदं, फेरण्डरवताण्डवैः ॥ ३०४ ॥ सन्तो विकृतिमेष्यन्ति, चेत् परैः परितापिताः । काञ्चनं दहनक्लिष्टं, तद्गमिष्यति

१ कृष्णस्य । २ कृष्णः । ३ 'म्यहम्' इति प्रतित्रय० । ४ सुन्दरकेशवन्तं-कृष्णम् ।

रीनिंताम् ॥ ३०५ ॥ तन्मनागपि मा कृष्ण !, क्रोधं दुर्योधने व्यधाः । आपद्यपि भवेयुः किं, हिमांशोरग्निवृष्टयः ? ॥ ३०६ ॥ आमतां पाण्डवास्तावत्–त्वयाऽप्येकाकिना रणे । अभियुक्ताः क नामैते, सन्ति दुर्योधनादयः ? ॥ ३०७ ॥ पुरः केसरिणः के हि, दुर्धरा अपि सिन्धुराः ? । भास्कराय कियत्कालं, तिष्ठन्ते तिमिरोर्मयः ? ॥ ३०८ ॥ त्वया पाणौ कृता पूर्वं, जयश्रीः परिभोगभाक् । कथं गोविन्द ! निर्व्रीडैः, पाण्डवैः परिणेष्यते ॥ ३०९ ॥ विनाऽपि त्वां विजेष्यन्ति, कौन्तेयाः गेमिति द्विषः । येषां तौ महयोद्धारौ, धर्मन्यायौ तरस्विनौ ॥ ३१० ॥ पापीयांसस्तु लप्स्यन्ते, गान्धारेयाः परं भयम् । जीवितव्यं कियन्नाम, गुर्वादेशविलङ्घिनाम् ? ॥ ३११ ॥ त्वं तु स्वजनदायाद–घातपातकसंभवाम् । अकीर्तिं मा ग्रहीरेनां, महतां हि यशः प्रियम् ॥ ३१२ ॥ तदाहूतोऽपि कौन्तेयै–रायासीर्मा स संयति । त एव हन्त युध्यन्तां, येषां वैरं परस्परम् ॥ ३१३ ॥ वयं मान्याश्च कार्येऽस्मिन्, वर्षीयांस इति त्वया । सुकृतात्मनि वृद्धानां, प्रणयो हि फलेग्रहिः ॥ ३१४ ॥

इत्येषां विनयार्द्राभि–र्भारतीभिर्मृदूकृतः । कोपप्रशान्तिकान्तश्री–र्जगाद गरुडध्वजः ॥ ३१५ ॥ वर्षीयांसो भृशं यूयं, माननीयगिरो मम । मां वीक्ष्य विग्रहः किं तु, प्रस्तुतः पाण्डवैरपि ॥ ३१६ ॥ तदेषां सांयुगीनानां, संयुगोत्सङ्गसङ्गिनाम् । साहाय्यमेव मया मद्भिः, प्रतिपन्नं हि नान्यथा ॥ ३१७ ॥ किं तु संग्राममुत्तीर्णो, न ग्रहीष्ये धनुः स्वयम् । सारथ्येनैव पार्थस्य, सहायो भवितास्म्यहम् ॥ ३१८ ॥ एतावताऽस्तु यौष्माक–वचसामनतिक्रमः । अमेयमहिमानो हि, मान्या एव

१ (रीतिरारकूटं रीर्णादिमलम्) रीतिः–पित्तलनामकधातुः इत्यर्थः साधुः । २ 'आः कदापि' प्रतिद्वय० । ३ युद्धे ।

भवादृशाः ॥ ३१९ ॥ इत्युक्त्वा स मिलत्पाणि-कुड्मलस्तान्व्यवर्तयत् । राधेयं च करे धृत्वा, रथमारोपयन्निजम् ॥ ३२० ॥ पाण्डुमालोकितुं गच्छन्, हरिर्विदुरवेश्मनि । कर्णमभ्यर्णमासीन-मभ्यधादिदमादरात् ॥ ३२१ ॥ कर्ण ! निर्नाम निर्मजत्, त्वया वीरव्रतं धृतम् । प्रकाशेन प्रदीपस्य, नेत्रकर्मेव रात्रिषु ॥ ३२२ ॥ त्वया दुर्योधनो दुर्यो-धन इत्यभिधीयते । दम्भोलिनैव देवेन्द्रो, देवेन्द्र इति गीयते ॥ ३२३ ॥ दधत्यासीदकर्णैव[1], पुनर्वीराननीदृशः । बिभ्रती त्वां तु भूः कर्ण !, सकर्णेयं[2] द्विधाऽप्यभूत् ॥ ३२४ ॥ त्वय्येवौदार्य-गाम्भीर्य-शौर्य-धैर्यादयो गुणाः । वारिधाविव रत्नानि, व्योमाङ्गण इव ग्रहाः ॥ ३२५ ॥ सन्त्येव वीराः किं त्वन्य-द्वीर ! वीरव्रतं तव । गिरयो गुरवः कामं, मेरोस्तु गरिमाऽपरः ॥ ३२६ ॥ किं तु दुर्योधने दुष्टे, दुनोति तव संश्रयः । माणिक्यस्येव जात्यस्य, भूषणे रीतिनिर्मिते[3] ॥ ३२७ ॥ मित्रं करोति को नाम, क्रूरकर्माणमीदृशम् ? । वयस्यीयति विश्रम्भ-घातिनं को हि पन्नगम् ? ॥ ३२८ ॥ कामं कृतोपकारेऽपि, विश्वस्यान्न जडात्मनि । किं न सांयात्रिकं जातु, निमज्जयति नीरधिः ? ॥ ३२९ ॥ पुमांसमनयक्रान्तं, विजहत्यात्मजा अपि । राहुग्रस्तं विवस्वन्तं, मुञ्चन्ति हि मरीचयः ॥ ३३० ॥ अवश्यं निपतन्त्येव, पतयालुषु संश्रिताः । पतत्येव तरुः कूलं-कषाकूले निपातिनि ॥ ३३१ ॥ वर्द्धन्ते तु विवार्द्धिष्णु-श्रिय(या)माश्रयतः श्रियः । लक्ष्मीर्वलक्षपक्षेन्दु[4]-मरीचीनामुदित्वरी ॥ ३३२ ॥ पावयत्यन्तरात्मानं, प्रणयः पुण्यशालिभिः । तरङ्गयति सौरभ्यं, कर्पूरद्रुमसंगमः ॥ ३३३ ॥ विक्रमोऽपि स्फुरत्युच्चैः, पुरतः पुण्यतेजसः । भास्वतः पुरतः कामं, दीप्यते दर्पणद्युतिः ॥ ३३४ ॥ सार्वजन्येन सौजन्यं, कीर्तिमावहते पराम् । प्राच्येन मरुता मैत्री, श्लाघनीया

१ पक्षे बधिरा । २ पक्षे श्रवणयुक्ता । ३ पित्तलेन निर्मिते । ४ वलक्षपक्षः-शुक्लपक्षः ।

गनस्य यत्र ॥३३५॥ तत्त्वाहेति धर्मात्म–जन्मना सह संगमः । न पुनर्धार्तराष्ट्रेण, मतिमन्! पापजन्मना ॥ ३३६ ॥ किं न त्वमपि कौन्तेय[1], प्रकारेणासि केनचित् । ममात्रेण्यत एवासौ, रहः कुन्त्या निवेदितः ॥ ३३७ ॥ त्यक्तलब्धस्तु राधायाः, कर्ण! त्वमसि नन्दनः । न हि निर्याति वैडूर्यं, वालवायभुवं विना ॥ ३३८ ॥ तद्भवान् सुभटोत्तंस! कौन्तेयानां सहोदरः । बन्धूनेव ततोऽभ्येतुं, साम्प्रतम् तव साम्प्रतम्[2] ॥ ३३९ ॥ कृते तेजस्विधौरेय!, संगते धर्मसूनुना । तदीयबन्धुतामुक्ता–लतायां नायकायसे ॥ ३४० ॥

इत्युदीर्य स्थिते प्रीति–निर्भरं कैटभद्विपि[3] । कर्णः कीर्णस्मितज्योत्स्ना–वदातवदनोऽवदत् ॥ ३४१ ॥ सत्यं नीतिलतारुन्द!, गोविन्द! त्वं यदभ्यधाः । मैत्री काममयुक्तैव, सार्धं दुर्योधनेन मे ॥ ३४२ ॥ आलिङ्गति कदाचित् किं, हेमन्तं मलयानिलः ? । भजते विभवः किं वा, दारिद्र्येण समागमम् ? ॥ ३४३ ॥ परं दुर्योधनेनैव, सूतत्वमविचिन्त्य मे । भूपतित्वं सितच्छत्र–पवित्रमभिसूत्रितम्[4] ॥ ३४४ ॥ मयाऽप्यमायिना तस्मि–न्नाजन्मेदमुरीकृतम् । यत्तवैव मम प्राणा, नेतव्या यत्र ते रुचिः ॥ ३४५ ॥ मित्रोपकृतिभिर्नित्य–मात्मा नीतोऽयमार्द्रताम् । तद्विपद्योगधूलीभिः[5], पङ्किलीक्रियते कथम् ? ॥ ३४६ ॥ गान्धारेयं परित्यज, पाण्डवेयं श्रयत्यपि । विश्रम्भो हन्त सौहार्दे, मयि तस्यापि कीदृशः ? ॥ ३४७ ॥ अकीर्तयस्तु काकोल–कोल–कोकिलकश्मलाः । विश्वेऽपि मयि कर्तारः, शाश्वतीं दर्शशर्वरीम् ॥ ३४८ ॥ तन्न्यायविकलस्यापि, गान्धारीतनुजन्मनः । कार्ये नूनममून् प्राणान्, मोक्ष्यामि समराङ्गणे ॥ ३४९ ॥ त्वया कक्षीकृतः[6] कृष्ण!, धर्मभूर्मो-

१ कुन्तीपुत्रः । २ योग्यम् । ३ कृष्णे । ४ कृतम् । ५ शत्रुसंयोगरूपधूलीभिः । ६ अङ्गीकृत. ।

क्ष्यते भुवम् । वातेनानुगृहीतो हि, पुष्पामोदोऽश्नुते दिशः ॥ ३५० ॥ भविता तु मया त्यक्तो, निराशः कौरवो भृशम् । वक्षः कियानवष्टम्भो, विमुक्तस्य नभस्वता ? ॥ ३५१ ॥ अङ्गैर्भूभारभूतैः किं ?, न येषामस्थिसंचयः । दधाति युधि मित्रार्थे, सैन्यसंमर्दपांसुताम् ॥ ३५२ ॥ मित्रस्नेहेन दिग्धोऽयं, रूषितो रणरेणुभिः । खड्गधाराजलैः स्नातो, धन्यस्यात्मा विशुध्यति ॥ ३५३ ॥ तन्न किंचन वाच्योऽहं, धर्मभूमैत्रकर्मणि । महात्मानो हि सर्वेषां, हृदयाकूतकोविदाः ॥ ३५४ ॥ किं तु मे नतिमाख्याय, मातुः कुन्त्या निवेदयेः । जीवितं न हरिष्यामि, चतुर्णां त्वत्तनूरुहाम् ॥ ३५५ ॥ फाल्गुनं पुनराबाल्या-दपि केनापि हेतुना । मन्मनो विजयाकाङ्क्षि, संपराये जिघांसति ॥ ३५६ ॥ तन्मातस्ते भविष्यन्ति, पञ्चैव नियतं सुताः । सार्जुना वा हते कर्णे, सकर्णा वा हतेऽर्जुने ॥ ३५७ ॥

इत्युक्तवन्तमालिङ्ग्य, तमभङ्गुरसंगरम् । उल्लसद्विस्मयः कर्णं, कंसारातिर्न्यवीवृतत् ॥ ३५८ ॥ मन्दिरे विदुरस्याथ, मग्नं शमसुधाम्बुधौ । अद्राक्षीत् पुण्डरीकाक्षः, पाण्डुं ताण्डवितोत्सवम् ॥ ३५९ ॥ पञ्चग्रामार्थनापूर्वं, विग्रहान्तमसौ ततः । निजागमनवृत्तान्तं, पुरः पाण्डोर्न्यवेदयत् ॥ ३६० ॥ प्रकोपं शमपीयूष-वार्धेरौर्वानलोपमम् । तत्कालं कलयन् पाण्डु-र्बभाषे कैटभद्विषम् ॥ ३६१ ॥ मत्कोपप्रलयाम्भोधे-र्दूरं कौरवभूधरान् । निमज्जयिष्यतः सेतुः, शस्त्रसंन्याससंगरः ॥ ३६२ ॥ अतस्तानेव मद्वाच-माचक्षीथाः पृथासुतान् । युष्माकं चेन्मया जन्म, मा स्म तद्भूत कातराः ॥ ३६३ ॥ मा भूच्च वः समीकेषु, बान्धवस्नेहविप्लवः । कार्यं बन्धुष्वपि प्रेम, न सर्वस्वविलोपिषु ॥ ३६४ ॥ सनाभीनपि निर्भिन्द्यात्, स्व-

कर्णेन दत्त उत्तरः कृष्णस्य । कृष्णस्य च पाण्डोर्मिलनम् ॥

१ नमस्कारम् । २ युद्धेषु । ३ पितृव्यान् ।

पद्माक्रान्तिकारिणः । निर्नाशयति तिग्मांशु-र्यद्व्योमव्यापिनो ग्रहान् ॥ ३६५ ॥ प्राणन् परैर्हृतक्षोणिः, क्षत्रियः क्षत्रियः किमु ? । विलूनकेसरो जीवन्, केसरी किमु केसरी ? ॥ ३६६ ॥ जीवतो यस्य जीवन्ति, परिभूयाप्यरातयः । तस्मात् पुंसो वरं पांसु-र्योऽस्ति नेद्ध ग्रसते जलम् ॥ ३६७ ॥ स ग्रावापि वरं योऽर्क-पादाक्रान्तो ज्वलत्यलम् । न पुनः स पुमान् वैरि-परिभूतोऽपि यः क्षमी ॥ ३६८ ॥ तद्भ्रातः ! शममुत्सृज्य, स्वमूरीकृत्य तन्महः । महीं कीर्त्या समं प्रत्याहरेन रिपुभिर्हृताम् ॥ ३७९ ॥ किं चान्यत् कृष्ण ! निष्णाते, वैरिखण्डनकर्मसु । सहाये त्वयि संग्रामः, कौन्तेयैर्नातिदुर्जयः ॥ ३७० ॥

इत्युक्ते पाण्डुना चण्ड-कोपारुणितचक्षुषा । मन्यमानस्तृणं शत्रून्, कैटभारातिरभ्यधात् ॥ ३७१ ॥ विरोधिनां जये राजन् !, संशयस्तत्र मा स्म भूत् । इयत्कालमगोपायत्, त्वत्तनूजक्षमैव तान् ॥ ३७२ ॥ दावानले ज्वलत्युच्चै-र्महान्तोऽपि महीरुहः । भान्ति भस्मसाच्चूर्ण-मिषीकाणां तु का कथा ? ॥ ३७३ ॥ किं तु राजन् ! मया सार्धं, त्वमप्यागतुमर्हसि । त्वद्वियोगातुराः कामं, दुःखं तिष्ठन्ति ते सुताः ॥ ३७४ ॥ इत्युक्तेऽम्भोजनाभेन, भूयः पाण्डुरदोऽवदत् । सति त्वयि सुतानां मे, न दूरे विजयो हरे ! ॥ ३७५ ॥ तद्विध्वस्तरिपुव्राता-नुदूढविजयश्रियः । भूयः प्राप्तस्वराज्यांस्तान्, द्रष्टुमिच्छामि नान्यथा ॥ ३७६ ॥ तद्गच्छ त्वं जवादेत्य, निर्जित्य समिति द्विषः । स्वबन्धुभ्यः पुनर्देहि, निजां साम्राज्यसंपदम् ॥ ३७७ ॥ इत्युक्तान्तं वैचित्र-वीर्यमापृच्छ्य तत्क्षणात् । जगाम त्वरितं कोपाद्, द्वारकां द्वारकापतिः ॥ ३७८ ॥ तत्रोपेत्य रहः

१ कुशले । २ तृणानाम् ।

सर्वां, हास्तिनीयां जनार्दनः । तां कथां कथयामास, सबन्धोर्धर्मजन्मनः ॥ ३७९॥ पाण्डवेयास्ततः सर्वे–ऽप्यानन्दमतुलं दधुः । नेदीयानिद्धबाहूना–माहवो हि महामहः ॥ ३८० ॥ मुरारेः पुनरादेशात्, सज्जीकर्तुमनीकिनीः[1] । सैनिकैर्विक्रमाह–विक्रमैरुपचक्रमे ॥ ३८१ ॥ दन्ताघात-कराघात–गात्राघातपुरःसरम् । कर्म सांग्रामिकं तत्त–दध्याप्यन्ते स्म सिन्धुराः ॥३८२॥ रचयन्ति स्म संचार्य, सर्वसान्नाह्यवीथिषु । तुरङ्गान् सङ्गरोत्सङ्ग–योग्यानश्वंदमोत्तमाः ॥ ३८३ ॥ केषुचिद्रू-वरूथा[2]-क्ष–युग-चक्र-ध्वजादिकम् । कांश्चिच्च स्यन्दनानन्यान्, सूत्रयन्ति स्म सूत्रिणः ॥ ३८४ ॥ पित्राख्या–जात्य-भिज्ञान–वृत्त्य-स्त्रप्रश्न-पूर्वकम् । प्रस्तूयन्ते स्म पत्तिभ्यो, दानानि कनकोत्करैः ॥ ३८५ ॥ सामन्तेभ्यः समस्तेभ्य–स्त्वरागमनहेतवे । राजदौवारिकैरासे, राजादेशा विनिर्ययुः ॥ ३८६ ॥ करीर–पिचुमन्दाऽऽदि–पल्लवाऽऽस्वादमेदुरम् । स्वं स्वमौष्ट्रिकमानायि, राजकैर्जाङ्गलस्थलात्[3] ॥ ३८७ ॥ गुड[4]-प्रक्षर-पर्याणो–पकार्या[5]–कवचादयः । राजवेश्मनि निर्मातु–मारभ्यन्ते स्म कारुभिः ॥ ३८८ ॥ भाराऽऽरोपकृते कैश्चि–द्दर्पा इव शरीरिणः । दम्यन्ते स्म ककुद्मन्तो, रेणुगोणिभिरुल्वणाः ॥ ३८९ ॥ पण्यसंग्राहिणः केऽपि, केऽप्यनःक्रयकारिणः[6] । वणिक्पुत्रभृतः केऽपि, संवहन्ते स्म नैगमाः ॥ ३९० ॥ सौधोपरि सपल्यङ्क–दत्तगुप्यद्दुरूत्कराः । सज्जन्ति स्म प्रयाणाय, वारसारङ्गचक्षुषः[7] ॥ ३९१ ॥

पाण्डोः प्रतिवचनम् ॥ कृष्णस्य द्वारकायां पाण्डवानां मिलनम् ॥

१ सेनाः । २ वरूथः–रथस्य लोहादिमयं वर्म । ३ वनात् । ४ गुडः–गजपीठास्तरणम् । ५ उपकार्या–वस्त्रगृहम्, 'तंबु' इति भाषायाम् । ६ 'प्यनःक्रयकारिणः' इति लिखितप्रतित्रयपाठोऽपि साधुः, तत्र "क्लीबेऽनः शकटोऽस्त्री स्यात्" इत्यमरकोशः । ७ वाराङ्गनाः ।

इति सर्वतः पुरनिवासिजनः, कटकप्रयाणरभसाऽऽकुलितः ।
निजकर्म तत्तदचिरं रचय-न्नभवद्भृशं प्रमदपल्लवितः ॥ ३९२ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये द्रुपदपुरोहित-संजयविष्णुदूत्यवर्णनो नामैकादशः सर्गः ॥ ११ ॥

---

# अथ द्वादशः सर्गः ।

अथान्येद्युर्गुर्जरामन्य-दूतः सोमकसंज्ञकः । आगमद्विक्रमद्वीपि-धारको द्वारकां पुरीम् ॥ १ ॥ स शालस्खलितालोल-
तुङ्गकल्लोलशालिनि । विश्रान्तचक्षुरश्रान्तं, सागरे परिखायिते ॥ २ ॥ ऊर्म्यानीतस्फुटच्छुक्ति-मुक्तमुक्ताङ्कवेदिके । प्राकारे
काञ्चनेऽन्युगे-र्लोचने चरितार्थयन् ॥ ३ ॥ वेलावननभस्वद्भि-रसौ वीतपथश्रमः । उल्लसद्विस्मयावेश-विवशः प्राविशत्
पुरीम् ॥ ४ ॥ (त्रिभिर्विशेषकम्) तां विलोक्य स निःशेष-हिरण्मयनिकेतनाम् । तृणाय मतिमान् मेने, पुरीं पौरन्दरीमपि
॥ ५ ॥ शुशोच विपणौ वीक्ष्य, रत्नकूटान् स कोटिशः। मुष्टः कष्टमसौ दुष्टै-रिति रत्नाकरं मुहुः ॥ ६ ॥ अथ भ्रातृभिरक्षोभ्य-
प्रमुखैः परिवारितम् । पुत्रैर्नेमि-महानेमि-सीरि-शौरिमुखैरपि ॥७॥ नमद्भूपालमौलिस्र-ग्मरन्दसुरभिक्रमम् । वारना-

---

१ शालः-प्राकारः । २ मरन्दः-मकरन्दः ।

रीकराम्भोज–चारुचालितचामरम् ॥८॥ रत्नसिंहासनासीनं, सुनासीरमिवापरम् । सोऽन्तःसदसमद्राक्षीत्, समुद्रविजयं नृपम्
॥ ९ ॥ ( त्रिभिर्विशेषकम् ) जरासन्धस्य भूभानोः, प्रताप इव मूर्तिमान् । पर्वेव गर्वशीतांशोः, सोऽग्रेनृपमुपाविशत् ॥ १० ॥
वाचालमौलिमाणिक्य–मुदश्चितविलोचनः । स राजानं जगादेति, यादवान्वयकौस्तुभम् ॥ ११ ॥ राजंस्त्वामाह माहात्म्य–
खर्वितामरपर्वतः । कीर्तिकृत्रिदशाधीश–मागधो मगधाधिपः ॥ १२ ॥ दारकौ तव गोक्षीर–पानपीनांसकुट्टिमौ । अस्मज्जा-
मातरं कंसं, जघ्नतुर्निघ्नचेतसौ ॥ १३ ॥ तदागःपवमानेन, प्रेङ्खितेऽस्मन्मनोवने । यदुवंशैकसंहार–कारी कोपाग्निरज्वलत्
॥ १४ ॥ सुताया जीवयशसः, पतिमृत्यूच्छलच्छुचः । लोचनाश्रुपयःपूरै–स्तस्मिन्नाज्यघटायितम् ॥ १५ ॥ ततः काल-
कुमारोऽस्मान्, कृतोद्योगान् व्यजिज्ञपत् । संरम्भस्तातपादानां, किं सुते सति मय्यपि ? ॥ १६ ॥ हुंकारेऽपि सति प्राण–
निग्रहग्रहिलौजसि । स्वयं संरभते हन्तुं, हरिः किं हरिणव्रजान् ? ॥ १७ ॥ ततः प्राप्यास्मदादेश–मावेशविवशः क्रुधः । स
युष्मान् प्रत्यधाविष्ट, सिन्धुरानिव केसरी ॥ १८॥ ततोऽस्मिन्नभ्यमित्रीणे, भिया यूयमनश्यत । उन्मीलिते वसन्ते हि, कीदृशाः
शिशिरानिलाः ? ॥ १९ ॥ क्रोधान्धंभावुकोऽधाव–त्तदप्यनुपदी स वः । व्यज्ञप्यत चरैरेत्य, ततः कैश्चिद्दिनैरदः ॥ २० ॥
यत् कुमारः पुरो गच्छन्, क्वचित् परिसरे गिरेः । शून्यानेकस्थलं शून्य–रथेभाश्वीयसंकुलम् ॥ २१ ॥ निर्मानुषपरीवारं,
स्कन्धावारमुदैक्षत । भीषणाभ्रंलिहज्ज्वाला–जटिलांश्च चिताचयान् ॥ २२ ॥ युग्मम् ॥ नामग्राहं यदूनां च, क्रन्दन्तीं परितो-
ऽपि तान् । कांचिद्वर्षीयसीमेकां, सोऽद्राक्षीदतिदुःखिताम् ॥ २३ ॥ सोऽथ पप्रच्छ तां भद्रे !, किमेतदसमञ्जसम् । साऽऽच-

१ इन्द्रम् । २ हतचित्तौ । ३ 'प्रेङ्खितो०' प्रतित्रय० । ४ ग्रहिलं–ग्रहीतुमिच्छत् । ५ वृद्धाम् ।

जरासन्धदूतेन समुद्रविजयसभायां कथितो वृत्तान्तः॥

नक्षे मत्पाणाक्षी, महाभाग !, निशम्यताम् ॥ २४ ॥ समुद्रविजयोऽमुष्या–मस्यामानकदुन्दुभिः । राम–दामोदरा-
वस्या–मेनास्त्वन्येऽपि यादवाः ॥२५॥ चितासु विविशुः काल–कुमारभयभङ्गुराः । एतस्यां त्वहमप्यस्मि, विविक्षुः कृष्ण-
मोदरा ॥ २६ ॥ (युग्मम्) कुमारोऽथाब्रवीत् मत्य–ज्ञासिपं पुरतः पितुः । विशन्तु यत्र कुत्रापि, दुष्टान् कष्टास्मि तांस्ततः
॥ २७ ॥ तत्कर्षामि द्विपो नून–मपि वैश्वानरोदरात् । इति क्रोधेन मूढात्मा, स्वमृत्युमविचिन्त्य सः ॥ २८ ॥ देव! मा मेति
गैन्याना–मुच्चैर्वारियतामपि । अस्यां कृपाणी दत्ते स्म, चितायां रामकृष्णयोः ॥ २९ ॥ युग्मम् ॥ क्षणाच्च भस्मसादासी–
त्तत्स्तत्लोकनिकुर्वः । भीतैश्च देवपादेभ्यः, सैनिकैरपि तत्कृतम् ॥ ३० ॥ तदाकर्ण्य क्षणान्नोऽभू–दुदूर्मिः शोकसागरः ।
क्रमेण न ययौ शान्ति, शत्रवोऽपि मृता इति ॥ ३१ ॥ दत्त्वा पत्युश्च बन्धोश्च, युष्माकं च जलाञ्जलिम् । सुता जीवयशा
क्षेमे, वैरनिर्यातनासुखम् ॥ ३२ ॥

निराय केनिदादाय, रत्नकम्बलकादिकम् । वस्तुजातमथाजग्मु–र्नैगमा नगरं मम ॥ ३३ ॥ तैर्जीवयशसोऽभ्येत्य,
रत्नकम्बलकास्ततः । दर्शयांचक्रिरे चक्रे, मूल्यं तेषां च भूरिशः[3] ॥ ३४ ॥ तेनाथ तैरसंतुष्टैः, खेदादिदमुदी(दै)र्यत । राज-
पुत्रि ! पुरा क्षेते, द्वारकावासिभिर्जनैः ॥ ३५ ॥ इतोऽष्टगुणमूल्येन, याचिता रचिताग्रहम् । परमानिन्यिरेऽस्माभि–रत्र भूय-
स्तरेच्छया ॥ ३६ ॥ तन्महीपतिमात्रस्य, सैव द्वारवती वरम् । न त्वर्धचक्रिणोऽश्रीक–मिदं राजगृहं पुरम् ॥ ३७ ॥
नैरित्यावेदितेऽप्रच्छ–द्विस्मयात्तनयाऽपि नः । काऽसौ द्वारवती नाम, येयमित्थं विकथ्यते ? ॥ ३८ ॥ तेऽप्यूचुः श्रूयतां

१ वसुदेवः । २ निर्यातना–प्रतिकारः । ३ 'भूरि सा' इत्येकप्रतिपाठः सम्यक् प्रतिभाति ।

देवि !, तीरे लवणनीरधेः । अस्ति द्वारवती नाम, पुरी सुरविनिर्मिता ॥ ३९ ॥ ऊर्मिषु स्खलनादुच्चै-रुच्छलत्सु बलाहकाः[1] । वप्रासीनाः सुखं यस्यां, गृह्णते सैन्धवीरपः[2] ॥ ४० ॥ यस्यामुत्तुङ्गसौवर्ण-निकेतवलभीगतः । प्रत्युत द्योतते विद्युदुत्सङ्गस्थ इवाम्बुदः ॥४१॥ यस्यां हिमकरो हैम-वेश्मकान्तिकरम्बितः । सत्यमेवेक्ष्यते वह्नि-मयो रात्रौ वियोगिभिः ॥ ४२ ॥ यस्यां यदुकुमाराणां, खुरलीखेदविप्रुषः । पिबन्ति मरुतोऽम्भोधि-वेलावनविहारिणः ॥ ४३ ॥ रत्नराशिमुपादातु-मिवाद्भुततरं चिरम् । शङ्के रत्नाकरो यस्याः, सेवाहेवाकवानभूत् ॥ ४४ ॥ समुद्रविजयस्तस्यां, यदुवंशैकमौक्तिकम् । खर्वीकृतसुपर्वेश-स्फीतगर्वोऽस्ति भूपतिः ॥ ४५ ॥ तस्यास्त्यवरजो दिव्य-मूर्तिरानकदुन्दुभिः । यद्गुणाः[3] खेचरीवर्ग-जागरा पर्वशर्वरी ॥ ४६ ॥ तस्यानेकतनूजस्या-प्यासाते तनयावुभौ । गोत्रस्य मण्डनं व्योम्नः, सूर्याचन्द्रमसाविव ॥ ४७ ॥ तयोराद्यो जगत्येक-बली बल इति श्रुतः । नित्यशल्यायितं यस्य, दोर्दण्डैर्हृदि विद्विषाम् ॥ ४८ ॥ द्वैतीयीकः पुनर्वीर-भोगीणभुजवैभवः । कृष्ण इत्युष्णधाम्नोऽपि, यन्महो महिमापदम् ॥ ४९ ॥ यस्य गोपाङ्गनावार-परीवारविराजिनः । कालिन्दीतीरवानीर-शाखिनः केलिसाक्षिणः ॥ ५० ॥ तथा केश्यादिकक्षोद-रसैर्यद्विक्रमानलः । पटुश्चक्रे यथा तत्त-द्वीरग्रासैर्न तृप्यति ॥ ५१ ॥ अंसयोर्यस्य चाणूरं, हन्तुं प्रस्थानकाम्यतः । स्थासकांश्चक्रिरे गोप्यः, कटाक्षमृगनाभिभिः ॥ ५२ ॥ कम्पिताशेषभूमीभृ-न्नृत्यन्[4] शक्तिप्रियंकरः । कंसकल्पान्तमातेने, भैरवो यस्य विक्रमः ॥ ५३ ॥ कर्तुं निश्चिन्तमात्मानं, समुद्रविजयो नृपः । यं चकार चिरं द्वार-वतीराज्याधिदैवतम् ॥ ५४ ॥ त एते यादवा यस्यां,

१ मेघाः । २ समुद्रस्य जलानि । ३ यद्गुणाः पूर्णिमारात्रिरूपाः सन्ति । ४ 'नृत्यच्छक्ति०' प्रत्यन्तर० ।

जरासन्ध-दूतेन समुद्रविजयसभायां कथितो वृत्तान्तः ॥

श्रियं निर्जित्य वज्रिणः । विक्रमन्ते न किं माऽपि, श्रुता द्वारवती त्वया ? ॥ ५५ ॥
इति जीवयशास्तेषां, वचः श्रुत्वाऽतिदुःश्रवम् । कष्टमद्यापि पापास्ते, जीवन्त्येवेत्यखिद्यत ॥ ५६ ॥ रुदन्ती सा तत-स्तात-मागत्योन्मुक्तकुन्तला । आस्थानीमास्थितानां न-स्तं वृत्तान्तमचीकथत् ॥ ५७ ॥ जगाद सा पितः ! क्रूरा-न्न चेत्तान् संहरिष्यसि । तदाऽहं नियतं तात !, प्रवेक्ष्याम्याशुशुक्षणिम् ॥ ५८ ॥ इत्येतस्मिञ्श्रुते मन्यो-र्जागर्यामङ्गलध्वनौ । सौखशायनिकी चास्य, चिन्ताऽस्माकमभूदियम् ॥ ५९ ॥ धिक् चैरर्नस्तदाऽऽख्यायि, निर्दग्धाः कुकुरा इति । अद्यापि ते तु जीवन्ति, तत्किं नामेदमद्भुतम् ? ॥ ६० ॥ यद्वा वर्षीयसी मन्ये, तद्वृद्धा देवतैव सा । संजहार कुमारं नो, विप्रलभ्य चिताऽनलैः ॥ ६१ ॥ यद्वा किं तेन तेऽद्यापि, दवीयांसो न यादवाः । वृद्धक्रोधे निदाघे हि, कियत् खेलन्ति पल्वलाः ? ॥ ६२ ॥ आख्यातुमिति वो राजन् !, परमद्यापि जामातृ-क्रियौ चेदर्पयिष्यथ । तदुदेष्यन्ति कल्याण-वल्लयो वः कुले चिरम् ॥ ६३ ॥ त्यजन्ति कृतिनः काम-मल्पीयो बहुहेतवे । स्वामिना प्रहितोऽस्म्यहम् । तदर्पय कुलक्षेम-कृते गोपालबालकौ ॥ ६४ ॥ भास्वानपि समाक्रान्तो, हेमन्तेन बलीयसा । निजं तेजः मुनयो विषयाऽऽनन्दं, महाऽऽनन्दकृते यथा ॥ ६५ ॥ एकं क्रमेलकं त्यक्त्वा, पामनं पामरैरपि । औष्ट्रकस्य समग्रस्य, किं न परित्यज्य, गमयेत् किं न वासरान् ? ॥ ६६ ॥ शान्तिर्वितन्यते ? ॥ ६७ ॥
दूतवाक्यमिति श्रुत्वा, स्वप्रभुप्राभवोर्जितम् । ईषत्कोपकरालास्यः, काश्यपीपतिरब्रवीत् ॥ ६८ ॥ रमणीयतमैवेयं,

१ 'श्रीविनिर्जित्यवज्रिणः' प्रतित्रय० । २ 'च यदि' प्रतिद्वय० । ३ अग्निम् । ४ उष्ट्रम् । ५ पामावन्तम् ।

वाचोयुक्तिस्तव प्रभोः । त्वमप्यहितमस्माक-मूचिवान्नैव किंचन ॥ ६९ ॥ क्षत्रगोत्रप्रसूतानां, नैतदश्चत्यनौचितीम् । गृह्यन्ते मित्रवर्गेऽपि, यद्दूरमपराधिनः ॥ ७० ॥ परं स यदि सौहार्दा-द्याचतेऽस्मानसूनपि । दद्म एव तदा सर्वं, मादृशानां हि मित्रसात् ॥ ७१ ॥ यत्तु स्वाजन्यमुत्सृज्य, बलाद्बलजनार्दनौ । याचते भवतः स्वामी, तदत्यन्तमसांप्रतम् ॥ ७२ ॥ किं च पापात्मनां कार्यं, शासनं भूमिशासनैः । भ्रूणघ्नस्तच्च कंसस्य, चक्रे चेत् सबलो हरिः ॥ ७३ ॥ तत् किं न ते प्रभोरेव, रमणीयमभूदिदम् ? । अरुणेन तमोध्वंसः, श्रेयसे किं न भास्वतः ? ॥ ७४ ॥ प्रत्युताधिक्षिपन् गोप-दारकाविति ताविमौ । जिघांसति स ते नाथो, दोर्दण्डबलदुर्मदी ॥ ७५ ॥ तन्नावैति स किं यादृ-ग्विधौ गोपालबालकौ ? । वेत्ति वा शक्ति-मग्नेः किं, भस्मतामगतस्तरुः ? ॥ ७६ ॥ स स्वस्य दास्यते नूनं, जीवितस्य जलाञ्जलिम् । दर्दुरेण हि दुर्जीवं, खली-कृत्य भुजंगमम् ॥ ७७ ॥ जातौ कंसश्च कालश्च, कालस्य भवनातिथी । अध्वना येन सोऽद्यापि, खिलोऽस्ति न खलु क्वचित् ॥ ७८ ॥

सावष्टम्भे भुवः पत्या-वित्यादाय वचः स्थिते । दूतः स कोपनिष्ठ्यूत-वाग्विषः पुनरब्रवीत् ॥ ७९ ॥ राजन्नाजन्म देवस्य, जरासन्धस्य शासनम् । मूर्ध्नि त्वयैव किं नाम, न शेषाकुसुमीकृतम्[2] ? ॥ ८० ॥ तत्तवाद्यतनः कोऽय-महंकारनवाङ्कुरः ? । पक्षौ पर्यन्तकाले[3] वा, कलयन्ति पिपीलिकाः ॥ ८१ ॥ एतयोर्बत मा दृप्य, गोपबालकयोर्बलात् । तमिस्रबलमाश्रित्य, कियन्माद्यन्ति कौशिकाः ? ॥ ८२ ॥ भिया कालकुमारस्य, विमुच्य मथुरां पुरीम् । नश्यतां वस्तदा नासी-दिदं

१ शून्यः । २ शेषापुष्पसदृशं कृतम् । ३ मरणसमये ।

गोपद्वयं किमु ? ॥ ८३ ॥ तज्ज्ञरामन्धदेवस्य, कश्च त्वं ? कौ च तौ शिशू ? । के चामी यादवाः सर्वे, सपौत्र-सुत-बान्धवाः ? ॥ ८४ ॥ वनवह्निर्विनोत्सङ्गे, दहन्नखिलभूरुहः । किं नु कण्टकिनां दाह-कृते संरभतेऽधिकम् ? ॥ ८५ ॥ अक्षौहिणीभिरासन्न-दशाभिरुपजग्मिवान् । कौरवेन्द्रोऽपि तं संप्र-त्यहितोच्छेदवाञ्छया ॥ ८६ ॥ संप्रत्येष विशेषेण, तदिन्द्रेणापि दुःसहः । दुस्तरः सर्वदाऽम्भोधिः, किमुत ग्रीष्मसंगमी ? ॥ ८७ ॥ किं चाङ्गीकृत्य मित्रस्य, शात्रवान् पाण्डवानमून् । मत्प्रभोर्वत गृम्भाभि-र्व्यलीकान्तरमादधे ॥ ८८ ॥ तद्वो यावन्न सोऽद्यापि, व्यलीकं कलयत्यदः । गोपद्वयार्पणात्ताव-द्युज्येतास्य प्रसादनम् ॥ ८९ ॥ तदद्यापि हि बुध्यस्व, हितमालोचयात्मनः । कुकुराणां कुलं मा स्म, लम्भयः स्मृतिशेषताम् ॥ ९० ॥ निमृश्य मत्वरं दुष्टौ, राजद्विष्टकृताविमौ । चिराय मेदुरामोदां, मुदं पुष्णन्तु वृष्णयः ॥ ९१ ॥

नानालपुलकूनस्य, श्रुत्वा दूतस्य तां गिरम् । उवाच केशवः कोप-रागश्यामारुणेक्षणः ॥ ९२ ॥ रे दूत ! नूतनं किंचित्त्वासन्नमिदं खलु । वक्तुं को नाम जानाति, त्वां विना पथ्यमीदृशम् ? ॥ ९३ ॥ गोपो गोप इति ब्रूते, प्रभुस्ते सत्यमेव माम् । खलेभ्यो यत् खलु क्षोणे-रहं पाताऽस्मि संप्रति ॥ ९४ ॥ किं चार्धभरतेशोऽपि, क एष पुरतो मम ? । कः कक्षतुङ्गकूटोऽपि, पुरो देवदविर्भुजः ? ॥ ९५ ॥ सारता जयजीवातु-र्न पुनर्बहुसैन्यता । उन्मूलयति वातूल-स्तूलराशीन् महीयसः ॥ ९६ ॥ किं नाम दृषदष्टङ्को, दारयेन्न गरीयसीः ? । न छिनत्ति कुठारः किं, भूरुहोऽभ्रंलिहानपि ? ॥ ९७ ॥ (युग्मम्) पक्षपातेन कंसस्य, भ्रूणध्वंसविधायिनः । सोऽपि हन्तव्यपक्षेऽभू-दस्माकं दुष्टशासिनाम् ॥ ९८ ॥ कुरूनन्यायिनः पुण्य-

१ अन्यापराधः । २ जयस्य जीवनम् । ३ वायुसमूहः ।

न्नन्यायी नायकोऽपि ते । अन्यायं च सहे नाहं, ततोऽप्यस्य न जीवितम् ॥ ९९ ॥ प्लावयत्यस्त्रकल्लोलै-र्मयि कल्पान्ततोयधौ । परित्राणक्षमास्तस्य, नोच्चकैरपि भूभृतः ॥ १०० ॥ निहन्तुं प्रस्थिता एव, कुरून् वर्तामहे वयम् । सोऽप्येतु समरे तस्मिन्, भवत्वस्मत्समीहितम् ॥ १०१ ॥ अहितानां तु बाहुल्यं, मुदे शौण्डीर्यशालिनाम् । आधिक्यमेधसां काम-मुत्सवाय हविर्भुजः ॥ १०२ ॥ मय्यागते तु संग्राम-व्योमन्युत्पातवातवत् । प्रभुः स भवतो मा गा-न्मेघवद्विशरारुताम् ॥ १०३ ॥ तद्गच्छ कथयेस्तस्य, सन्ति चेत्तव बाहवः । पुत्र-जामातृकल्पान्त-कोपश्च स्फुरति स्फुटः ॥ १०४ ॥ सांयुगीनो झगित्येव, तद्भवेः सह सेनया । चिरादुपोषितस्यास्तु, मत्कृपाणस्य पारणा ॥ १०५ ॥ युग्मम् ॥

एवमुदीर्य तं दूतं, विससर्ज गदाग्रजः । आहूय तमुदन्तं च, कौन्तेयानामचीकथत् ॥ १०६ ॥ तेनाख्यातेऽथ वृत्तान्ते, पाण्डवैर्मुमुदेतराम् । तत्कार्यमपि शौण्डीर्यात्, स्वयमेव चिकीर्षुभिः ॥ १०७ ॥ अथ प्रास्थानिके लग्ने, सर्वग्रहबलोज्ज्वले । प्रणीतमङ्गलाः कुन्त्या, पाण्डवेयाः प्रतस्थिरे ॥ १०८ ॥ अपरेऽप्यवनीपाला, विराट-द्रुपदादयः । तानन्वगुर्महोत्साहाः, संस्कारा इव धीगुणान् ॥ १०९ ॥ ते समुच्छलदुत्साह-लहरीपीवरश्रियः । समं सेनाभिरभ्येत्य, राजद्वारेऽवतस्थिरे ॥ ११० ॥ देवोऽपि कंसविध्वंसी, देवकीकृतमङ्गलः । प्रतस्थे सज्जितानेक-राजकानीकराजितः ॥ १११ ॥ बान्धवैश्च तनूजैश्च, वसुदेव-बलादिभिः । युतस्तमनुवव्राज, समुद्रविजयो नृपः ॥ ११२ ॥ तत्कालकलितौद्धत्यः, कार्मुकादिपरिग्रहात् । वहन्नुच्चै रसं शान्तं, बिभ्राणं वीरभूमिकाम् ॥ ११३ ॥ सवयोभिः स्मराऽऽकारैः, कुमारैः परिवारितः । दधद्दिव्यानलंकारान्, मायूरातपवा-

१ काष्ठानाम् । २ राज्ञां समूहो राजकम् ।

कृष्णस्योत्तरम् । सैन्यप्रयाणं च ॥

रणः ॥ ११४ ॥ बालाभिरङ्गसौभाग्य-विशेषवलितेक्षणम् । वीक्षितोऽनुक्षणं नेमिः, प्रतस्थे स्यन्दनस्थितः ॥ ११५ ॥ (त्रिभिर्विशेषकम्) दध्वने मधुरध्वानै-रानकैरभयानकम् । अवामाः शिशिरास्त्यक्त-पांसवो वायवो ववुः ॥ ११६ ॥ नूतनाम्भोदगम्भीरं, गर्जन्ति स्म मतङ्गजाः । उत्तरङ्गास्तुरङ्गाश्च, यद्वद्धर्षं जिहेषिरे ॥ ११७ ॥ अनीकानि तपःसूनो-र्देवकीनन्दनस्य च । मुदितानि मनांसीव, तदानीमेकतां ययुः ॥ ११८ ॥ यादवी पाण्डवीया च, जाह्नवी-यमुने इव । संभूय चेलतुः सेने, गन्तुं संगरसागरम् ॥ ११९ ॥ एकैकाऽपि चमूः काम्या, किमु संवलिते उभे ? । शौण्डीरता च नीतिश्च, यथा संजातसंगमे ॥ १२० ॥ उत्खातहेमभूपांशु-मांसलीकृतकान्तयः । प्रयाणपटहाऽऽहूता, धावन्ति स्म पुराङ्गनाः ॥ १२१ ॥ गवाक्षलक्षरामाक्षी-मुखैः कनकवेश्मभिः । चकाशेऽनेकशीतांशु-फलैः कल्पद्रुमैरिव ॥ १२२ ॥ जनैरेकमुखैः सर्वैः, प्रति प्रस्थानरत्नीम् । बभूवे सरितामोघै-रिव प्रति महानदीम् ॥ १२३ ॥ दृष्ट्वाऽमून्मा स्म भूद्ग्लानो-स्वङ्गा निजवाजिषु । इतीव सर्गाः कृत-वितानाः पांशुभिर्ययुः ॥ १२४ ॥ अजैषीत् कुञ्जरश्रेणि-मदकल्लोलपङ्किला । सिक्तं जम्बूरसैर्जाम्बू-नदाद्रिं काञ्चनावनिः ॥ १२५ ॥ यत्नकच्छविकौशेय-किरीटविकटद्युति । उग्रग्रैवेयककाण-निर्वाणानेकनिक्वणम् ॥ १२६ ॥ सुवर्णच्छविना साक्षा-त्तेजसेव निजप्रभोः । चीनांशुकेन संशोभि-पृष्ठं प्रातिष्ठतोष्ट्रकम् ॥ १२७ ॥ (युग्मम्) जयमङ्गलतूर्यस्य, गम्भीरैर्निभिर्गिरान् । मार्यते स्म मुकुन्दस्य, सिन्धुनिर्मथनध्वनिः ॥ १२८ ॥ केतुकन्दलितै रत्न-पीवितार्कमरीचिभिः । रथैः प्राप्तीगनोत्तीर्ण-र्विमानैरिव मेदिनीम् ॥ १२९ ॥ अङ्गमात्रेक्षणाकाङ्क्षैः, कामिभिर्मुहुरीक्षिताः । याप्ययानैः पटच्छन्ना, राज-

१ मिलितौ । २ 'लक्ष्य' प्रत्यन्तर० । ३ प्रयाणमार्गम् । ४ अश्वाः । ५ यावकः—अलक्तकः ।

दाराः प्रतस्थिरे ॥१३०॥ काषायैः केचिदुष्णीषैः, कौसुम्भैरपि केचन। कुर्वन्तः सर्वतः संध्यां, नूतनां सादिनो ययुः ॥ १३१ ॥ वारस्त्रियोऽप्सरोरूप-वैहासिकतनुश्रियः । अश्वैर्यान्ति स्म दृक्पात-पीतकामुकचेतसः ॥ १३२ ॥ विलोलपल्लवाश्वेलु-रनिलैरानुकूलिकैः । जयश्रीकर्षणप्रेङ्ख-त्कराग्रा इव केतवः ॥ १३३ ॥ वातोद्धूतेभसिन्दूर-पूरपिञ्जरिता दिशः । रेजुर्मङ्गलमाधातुं, सकौसुम्भांशुका इव ॥ १३४ ॥ गुप्तं खिङ्गास्तुदन्ति स्म, वेसरं तावदारया । यावदुत्प्लुत्य शुद्धान्त-दासीमयमपातयत् ॥ १३५ ॥ प्रयाणमीक्षितुं पाद-प्रान्तस्थैरट्टमूर्द्धनि । पतद्भिरुपरि स्त्रैणै-रुदगुः कामिनां मुदः ॥ १३६ ॥

अथ चेलाञ्चलोत्क्षेप-पूर्वं पौराङ्गनाजनैः । कीर्यमाणौ मुहुर्लाजै-र्मूर्त्तैः प्रीतिकणैरिव ॥ १३७ ॥ स्थाने स्थाने प्रतीच्छन्तौ, पौरमाङ्गलिकान्युभौ । अजातारिर्मुरारिश्च, जग्मतुः पुरगोपुरम् ॥ १३८ ॥ युग्मम् ॥ बलौघः स तदा तत्र, विशन् संकटतामगात् । पयोधिरिव राकाया-मुत्कल्लोलः सरिन्मुखे ॥ १३९ ॥ मणीनामनणीयोभिः, प्रभापुञ्जैः प्रतोल्यपि । बलौघस्यास्य कुर्वाणा, रेजे नीराजनामिव ॥ १४० ॥ संक्रान्तमभितोऽनीकं, गोपुरे रत्नभित्तिषु । बभार त्रिगुणीभावं, प्रभावात् प्राभवादिव ॥ १४१ ॥ गोपुरे वारनारीणां, प्रतिबिम्बैः कैरम्बिताः । विभान्ति स्म मणिस्तम्भा, जीवत्पाञ्चालिका इव ॥ १४२ ॥ शनैः शनैः पुरोद्वारा-न्निष्पपात पताकिनी । कवेर्वदनराजीव-कुहरादिव भारती ॥ १४३ ॥ उत्तरद्धास्तिकं हस्ति-नखादूरमधोमुखम् । सस्मार नर्मदातीर्थ-पथानां विन्ध्यकानने ॥ १४४ ॥ निर्यद्भिः शुशुभे शौरि-बालसौहार्द-

(१ कामुकाः ।) (२ अश्वतरम् ।) (३ चर्मप्रभेदिन्या ।) ४ प्रभुतायाः । ५ मिलिताः । (६ 'हस्तिनखः परिकूटम्' इति हलायुधः । पुरद्वारावतरणार्थं कृतः क्रमनिम्नो मृत्कूट इत्यर्थः ।)

मंगनैः । कालिन्द्या इव कल्लोलै–श्छत्रैर्मायूरपत्रकैः ॥ १४५ ॥ प्रग्रहाकर्षणादूर्ध्वं, भग्नग्रीवैस्तुरङ्गमैः । स्वस्थानस्थयुगैरेव, निन्यिरे स्यन्दनाः क्षितिम् ॥ १४६ ॥ हयादुत्तरतो वेगा–दधःस्कन्धं निपेतुषी । ययौ स्रस्तांशुका काचि–द्दासी सैन्यस्य हास्यताम् ॥ १४७ ॥ कदली-पूग-पुंनाग–नागवल्लीवनोल्वणम् । केतकी-कदली-ताली–नालिकेरीकरालितम् ॥ १४८ ॥ कल्लोलोत्कलितानेक–रत्नराजिविराजितम् । तयाऽभ्यूपे पताकिन्या, तीरं लवणनीरधेः ॥ १४९ ॥ (युग्मम्)

मायूरैरातपत्रौघै–र्नूतनाम्भोदकान्तिभिः । वेलाविपिनपङ्क्तीनां, पौनरुक्त्यमसृज्यत ॥ १५० ॥ तुहिनद्युतिसंतान, इवाम्भोधिं पितामहम् । आगतः शुशुभे राज्ञां, सितच्छत्रावलिच्छलात् ॥ १५१ ॥ राशीकृताः स्फुटन्तीभिः, पारेऽकूपारमूर्मिभिः । अगृह्यन्त सैनिकैः फेन–कल्पा मौक्तिकपङ्क्तयः ॥ १५२ ॥ प्रतिद्विपधिया क्रुद्धा–नीपादन्ताभिपादिनः । धावन्तो रुरुधुः सिन्धु–कल्लोलेभ्यः करीन्नन ॥ १५३ ॥ ताम्बूलीनां दलैः कांश्चि–न्नालिकेरासवैः परान् । कक्कोलै–लाफलैरन्या–नब्धिकूलमुपाकरोत् ॥ १५४ ॥ उल्लमन्पल्लवेऽप्यास्यं, लवङ्ग–लवलीवने । दीयते स्म न दासेरैः[3], करीरस्पृहयालुभिः ॥ १५५ ॥ सांयात्रिकैः कृतं तत्र, नानादेश्यमुपायनम् । सर्वमप्युपदीचक्रे, चक्रभृद्धर्मसूनवे ॥ १५६ ॥ केतकामोदमेदस्वी, वीचिसंचारमन्थरः । मध्याह्नार्कस्यलीकानि, लुम्पति स्मार्णवानिलः ॥ १५७ ॥ धावद्भिरूर्मिभिर्वारि–वारणा–श्वविराजिभिः । साहायकाय सानीकनालेरोर्मिमानपि ॥ १५८ ॥ वारिराशितटाराम–रामणीयकलम्पटान् । आचकर्ष पुरो वीरान्, युद्धश्राद्धं मनो बलात् ॥ १५९ ॥ सैन्यैरैक्षि पुरः श्यामः, शूरश्रान्तिच्छिदे रणे । सहागन्तुं स्थितोऽम्भोद, इव रैवतकाचलः ॥ १६० ॥ झरन्निर्झर-

१ 'गृगादु०' प्रत्यन्तरपाठः साधुः । (२ दीर्घदन्तगजान् ।) ३ उष्ट्रैः ।

झात्कार-मुखरोदारकन्दरैः। उल्लसन्मल्लिका-शोक-चम्पका-प्रकरान्वितैः ॥ १६१ ॥ उपत्यकावनैस्तस्य, भृङ्गीसंगीतसंगिभिः। विस्मार्यन्ते स्म सैन्यानां, वार्धिवेलावनश्रियः ॥ १६२ ॥ (युग्मम्) क्षणात् कन्दलितानेक-लोककामेऽत्र भूभृति। रन्तुं निःसङ्गतामेव, नेमिनश्चकमे मनः ॥ १६३ ॥ गण्डशैलातिगैर्नागैः, केतुभिः काननातिगैः। उत्तरङ्गैस्तुरङ्गैश्च, कुरङ्गनिकरातिगैः ॥ १६४ ॥ रेणुभिश्चाम्बरोत्सङ्ग-सङ्गिभिः शिखरातिगैः। धराधरो वरूथिन्या, स क्रमादतिचक्रमे ॥ १६५ ॥ (युग्मम्) परक्षेत्राण्यभिक्षुन्दन्, लुण्टयन् सरसां श्रियम्। उद्धतः स बलव्यूहो, दूरं मार्गमलङ्घयत् ॥ १६६ ॥ क्रमाद्वरूथिनी साऽथ, व्यतीत्य महतीं महीम्। दशार्णान् प्रवितीर्णारि-क्लेशावेशा समाविशत् ॥ १६७ ॥ धर्मसूनोश्च विष्णोश्च, दीयन्ते स्म निदेशिभिः। स्थलानि पृथुलाभोग-सुभगानि पृथक् पृथक् ॥ १६८ ॥ सौविदं[2]श्रेणिसंरुद्धाः, प्रतिसीरा[3]परिष्कृताः। एतानि परितोऽभूवन्, शुद्धान्तपटमण्डपाः ॥ १६९ ॥ यथास्थानं भुजस्थाम-नामिताशेषविद्विषाम्। सामन्तानामजायन्त, निवासाः सुन्दरश्रियः ॥ १७० ॥

अपराह्णेऽथ पल्यङ्क-विश्रान्तिगलितश्रमः। एष विज्ञापयांचक्रे, वेत्रिणा तपसः सुतः ॥ १७१ ॥ मातुः सहोदरो माद्र्या, मद्रमण्डलचन्द्रमाः। शल्यः कल्याणविक्रान्ति-र्द्वारि ते देव! वर्तते ॥ १७२ ॥ जवात् प्रवेशयेत्युक्त्वा, प्रतीहारं महीपतिः। सानुजः संभ्रमाद्भूमि-मभ्यगात् कियतीमपि ॥ १७३ ॥ आयान्तमग्रतो वेत्रि-दत्तहस्तावलम्बनम्। आश्लिष्यति स्म भूमीन्द्र-स्तं मद्राणामधीश्वरम् ॥ १७४ ॥ यथौचित्यं गतौद्धत्यमनोहारिप्रवृत्तयः। रचयांचक्रुराचार-मपरेऽपि

१ नृप., पक्षे पर्वतः। २ सौविदः-अन्तःपुररक्षकः। ३ प्रतिसीरा-जवनिका।

सकुटु-
नृपानुजाः ॥ १७५ ॥ प्रीतिपल्लवितानन्द–कन्दलो मेदिनीपतिः । निजासनसमानेऽथ, तं न्यवेशयदासने ॥ १७६ ॥ सकुटु-
म्बस्य तस्याथ, नाम गृह्णन् पृथक् पृथक् । पप्रच्छ कुशलोदन्त–मुदञ्चत्प्रमदो नृपः ॥ १७७ ॥ ऊचे मद्रपतिर्मद्रं, तस्य
राजन्! मनातनम् । स्वस्रीयो यस्य विश्वैक–मद्रकारो भवादृशः ॥ १७८ ॥ भगिन्यौ विश्वपाविन्यौ, कुन्ती माद्री च यस्य
मे । ययोः सङ्गेन गङ्गाऽपि, प्रत्युत स्वं पुपूषति ॥ १७९ ॥ परं किमपि वक्तव्य–मस्ति रुन्द्धे त्रपा तु माम् । वच्मि किंचि-
त्तथापि त्वां, नैव चेद्दुर्मनायसे ॥ १८० ॥ स्वाजन्यप्रणयेन त्व–मात्मीयमवगम्य माम् । प्रेषयांचकृषे दूतं, समित्यामन्त्रणाय
मे ॥ १८१ ॥ किं तु दूतागमात् पूर्व–मुर्वीचन्द्रः सुयोधनः । तैस्तैर्भक्तिक्रियारम्भै–रुपरोधं मम न्यधात् ॥ १८२ ॥
उपस्थानं समीकेषु, तन्मयाऽस्मै प्रतिश्रुतम् । प्रभवाम्यन्यथा कर्तुं, न चाहं वाचमात्मनः ॥ १८३ ॥ किं सोऽपि पुरुषो? यस्य,
न गीर्निर्वाहशालिनी । किं नाम स मणिर्यस्य, नैव शाश्वतिकी प्रभा ॥ १८४ ॥ विमुच्य तदहं राजन्!, वाहिनीमदवीयसीम् ।
इत्याख्यातुमिहायात–स्त्वं प्रमाणमतः परम् ॥ १८५ ॥ अथाजल्पदजातारिः, किं नामेदमसांप्रतम्? । गान्धारेयोऽपि
जामेय, एव ते ननु मातुल! ॥ १८६ ॥ तत्त्वया न त्रपा काऽपि, कर्तव्या व्रज सत्वरम् । समराय भवद्दत्त–सौष्ठवः स प्रति-
ष्ठताम् ॥ १८७ ॥ इत्युदीर्य तमौदात्त्य–दर्शितस्वागतक्रियः । अजातशात्रवो देवः, प्रयाणायान्वमन्यत ॥ १८८ ॥ स पादोप-
ग्रहं कुन्ती–मानम्य चलितं ततः । यमौ तमनुगच्छन्तौ, स्वच्छन्दमिदमूचतुः ॥ १८९ ॥ मातुलात्यन्तमौचित्य–च्युतमा-
चरितं त्वया । कर्हिचिन्मुह्यति प्रायो, विदुषामपि शेमुषी ॥ १९० ॥ माद्री माताऽपि लोकेषु, किंवदन्त्याऽनया तव ।

१ मङ्गलम् । २ भागिनेयः । ३ पवित्रं कर्तुमिच्छति । ४ युद्धेषु । ५ उदात्तमेव औदात्यम् अत्यन्तमित्यर्थः ।

शिरस्त्रपाभराभुग्नं, कथमुन्नमयिष्यति ? ॥ १९१ ॥ भीमोद्भूतैरमीभिस्ते, दुर्यशोभिर्मलीमसम् । आत्रामप्यास्यमार्यस्य, दर्शयिष्यावहे कथम् ? ॥ १९२ ॥ शल्योऽप्याह स्म हे वत्सौ !, ब्रूतं यद्युवयोर्मतम् । निर्वाहं स्वगिरां कुर्वन् , करिष्यामि तदप्यहम् ॥ १९३ ॥ जजल्पतुर्यमौ तर्हि, कर्तुमर्हसि मातुल ! । पदे पदे त्वमुत्साह-भङ्गं कर्णस्य संगरे ॥ १९४ ॥ गिरं तामुररीकृत्य, कृत्यविद्भागिनेययोः । स्फुरितामन्दमन्दाक्षो,मद्रक्षोणिपतिर्ययौ ॥ १९५ ॥

प्रतस्थेऽथ प्रगे प्रेङ्ख-त्पटीयःपटहारवा । कुरुक्षेत्रं प्रति क्षत्र-व्रातरौद्री वरूथिनी ॥ १९६ ॥ क्रमादुपकुरुक्षेत्रं, क्षोणिरेणूत्करैर्दिशः । क्षिपन्तीव पिबन्तीव, पुञ्जयन्तीव साऽगमत् ॥ १९७ ॥ प्रसाररुचिरोद्देशे, तस्मिन्ननुसरस्वति । निवासानाददाते स्म, पुण्डरीकाक्ष-पाण्डवौ ॥ १९८ ॥ भारोत्तारकृतेऽप्युष्ट्र-पालकैरुपवेशितम् । चुक्रोश परितः क्षिप्त-लोलौष्ठमुखमौष्ट्रकम् ॥ १९९ ॥ क्रमयांचक्रिरे स्वैर-मश्ववारैः कुतूहलात् । विरिञ्चिदुहितुः सान्द्र-सिकते सैकते हयाः ॥ २०० ॥ निरीक्ष्य मुरजित्केतुं, शकुन्तेश्वरमुच्चकैः । निजावासभुवः सर्वैः, सैनिकैरधिजग्मिरे ॥ २०१ ॥ अन्यस्यावासभूभाग-मन्ये प्रागागता अपि । शाड्वला-नोकहव्यूह-परीतमपि नाश्रयन् ॥ २०२ ॥ अहंपूर्विकया सर्वैः, सर्वतः पृतनाचरैः । श्रिताः सरस्वतीतीर-भूरुहः शिशिरश्रियः ॥ २०३ ॥ केचिदालोक्य संप्राप्त-मनोज्ञवसतीन् परान् । यानभङ्गादपर्यस्ताः, सैनिकाः शुशुचुश्चिरम् ॥ २०४ ॥ भूरिलाभस्फुरल्लोभै-रहंप्रथमिकागतैः । तेनिरे विपणौ वेगा-च्चैगमैः पटमण्डपाः ॥ २०५ ॥ द्रौहिणीलहरिव्यूह-विहारशिशिरीकृतैः । पीयमानश्रमस्वेद-वारयो मातरिश्वभिः ॥ २०६ ॥ द्रुमच्छायासु निद्राणा, विसंस्थुलित-

१ मन्दाक्षम्-लज्जा । २ सरस्वत्याः । ३ गरुडम् । ४ द्रौहिणी-सरस्वती (?) ५ वायुभिः ।

वागमः । ईश्वराणामपि स्वैरं, जनैरैक्ष्यन्त योषितः ॥ २०७ ॥ (युग्मम्) पीतैरत्यन्तमश्रान्तं, रोममार्गविनिर्गतैः । यशःक्षीरैरिवारीणां, फेनवारिभिरङ्किताः ॥ २०८ ॥ कौमुदीविशदे ब्रह्म-नन्दिनीपुलिनोदरे । वेल्लयांचक्रिरे वाहाः, स्वैरं वल्लभपालकैः ॥ २०९ ॥ (युग्मम्) विरेजुः कुञ्जराः काम-मुत्तीर्णकुथकेतनाः । समूलोन्मूलिताशेष-पादपा इव पर्वताः ॥ २१० ॥ ऋगन्नामन्नचारिभ्यः, मादिभ्यो विस्मृतश्रमः । महामात्रेण मत्तेभः, कथंचित् प्रत्यरुध्यत ॥ २११ ॥ काममध्वक्रमोत्तसं, नवमुक्ताफलोज्ज्वलैः । सिञ्चति स्म वपुः कश्चित्, करेणुः करशीकरैः ॥ २१२ ॥ निन्यिरे दूरमुद्भिन्न-कटान्ताः कटकाद्गजाः । कुर्वीत कोविदः को वा, नेदीयांसं मदोद्धतम् ॥ २१३ ॥ उपवाह्या न वाह्यत्वं, प्रभिन्ना अपि लेभिरे । कलङ्कयति निःशङ्कं, मदो हि न महीयसः ॥ २१४ ॥ चलन् प्रत्यन्यमातङ्गं, कोपतोऽवमताङ्कुशः । सिन्धुरेन्द्रो धुनोति स्म, निषिध्यन्तं निषादिनम् ॥ २१५ ॥ हसन्त इव हेषाभि-र्हरिदश्वहरीन्[3] हयाः । नदीवारिविहारार्थ-मवतेरुः सरस्वतीम् ॥ २१६ ॥ विस्मृत्य पयसः पान-मनारोहादखेदवान् । सहेषमनुदुद्राव, द्रुतमश्वां हयेश्वरः ॥ २१७ ॥ दन्तक्षोदैः[4] पदाघातै-स्तारहेषारवोल्बणाः । बलादकलहायन्त, नीरतीरे तुरङ्गमाः ॥ २१८ ॥ वारिबिन्दूत्करैर्मुक्ता-मण्डितास्तरणा इव । तुरङ्गपतयः सद्य-स्तटोत्तीर्णा[5] विरेजिरे ॥ २१९ ॥ दूरीकृतजनैर्नागा, हस्त्यारोहैरमर्पिणः । तीर्थे पृथक्पृथग्दूरं, निन्यिरे जलकेलये ॥ २२० ॥ मदाम्बुनिर्झरोद्गारी, करीन्द्रो ह्रदिनीह्रदम् । कामं विलोडयामास, पयोधिमिव मन्दरः ॥ २२१ ॥ हठाकृष्टमुखाम्भोजः, क्षिपन्

---

१ ब्रह्मनन्दिनी-सरस्वती । २ (राजवाहकहस्तिनो मत्ता अपि वाह्यत्वं न लेभिरे इत्यर्थः ।) ३ सूर्याश्वान् । ४ 'दन्तघातै' इति प्रत्यन्तरपाठः साधुः । ५ 'स्नानोत्तीर्णा' इति प्र० ।

करमितस्ततः । चकार सरितः क्षोभ-मभीकः करिपुंगवः ॥ २२२ ॥ श्वासोद्धूतैरिव स्थूल-मौलिमण्डलमौक्तिकैः । सिञ्चति स्म तनुं हस्ती, हस्तोदस्ताम्बुशीकरैः ॥ २२३ ॥ तदूर्मिसौहृदायाताः, पयोराशेरिवोर्मयः । विराजन्ते स्म मज्जन्तः, सरिद्वारिणि वारणाः ॥ २२४ ॥ चित्रिता इव भूयोऽपि, निर्यान्तः सरितोऽन्तरात् । सरोजिनीरजःपुञ्ज-पिञ्जराः कुञ्जरा बभुः ॥ २२५ ॥ समुद्र इव शीतार्ति[1]-निर्गतान्तर्धराधरः । गजैस्तीर्त्वा तटोत्तीर्णैं, राजते स्म नदीह्रदः ॥ २२६ ॥ बभौ स्वायंभुवी[2] सिन्धु-र्दन्तावलमदाविला । स्वं मालिन्यमपाकर्तुं, कालिन्द्येव निषेविता ॥ २२७ ॥ क्रीडदुन्मत्तवानेय-दन्तिदानाम्बुपङ्किले । कोपतः सरितः कूले, पर्यणंसीद्[3]गजाग्रणीः ॥ २२८ ॥ पेतुषीं सिन्धुरत्रासा-दवनीश्वरवल्लभाम् । कश्चिदालिङ्गनं सार्धं, साधुवादेन लब्धवान् ॥ २२९ ॥ श्रेणीबद्धैस्तुरङ्गेन्द्रै-र्लोलवालधि[4]शालिभिः । वीजयद्भिरिवाराजि, चामरैः स्वप्रभुश्रियम् ॥ २३० ॥ प्रेङ्खत्खुरैः स्फुरत्प्रोथै-स्तारग्रैवेयकस्वनैः । राशीकृताः पुरो वाहैः, स्वादयांचक्रिरे यवाः ॥ २३१ ॥ वैरिविक्रान्तिसंतापं, सप्ताङ्ग्याः स्वाङ्ग[5]संपदः । समुच्छेत्तुमिवातुच्छं, क्षरन्तः सप्तधा मदम् ॥ २३२ ॥ निवासान् परितः पाण्डु-तनूजवनमालिनोः । इभाः शाड्वलसान्द्रेषु, द्रुमेष्वालानिता बभुः ॥ २३३ ॥ (युग्मम्) आलानपादपः पुष्पै-रङ्गवल्गनपातिभिः । व्यभादिभेश्वरे हर्षात्, पुष्पवर्षं किरन्निव ॥ २३४ ॥ आनीय कुम्भयोः कर्ण-तालयोर्लोलयन्मुहुः । प्रस्फोटयन् कटे दन्त-कोशान्तः स्थापयन् क्षणम् ॥ २३५ ॥ तैस्तैर्हस्तिपकोद्गीर्णै-र्नोदनावचनक्रमैः । मन्दादरः करीन्द्रः स, तृणुते[6] तृणपूलकम् ॥ २३६ ॥ (युग्मम्)

१ शीतपीडया निर्गताः अन्तःस्थितपर्वताः यस्मात् सः । २ सरस्वती नदी । ३ तिर्यग्दन्तप्रहारमकरोत् । ४ वालधिः—पुच्छम् । ५ 'स्वामीसंपदः' प्र० । ६ खादति ।

अनीहैरिव नागेन्द्रै-र्विघापिण्डोऽप्युपाददे । अमेयमहिमानो हि, निःस्पृहा एव सर्वतः ॥ २३७ ॥ स्नातपीताः ककुभन्तः, पर्यटन्तः सरित्तटे । शशाङ्कविशदा रेजुः, फेनकूटा इव स्थिराः ॥ २३८ ॥ महीयः शुशुभे शुभ्रैः, कूलिनीकूलशाद्वलम् । चरद्भिः शाक्करस्तोमै-र्व्योमेव शतचन्द्रितम् ॥ २३९ ॥ अन्यापि वाहिनी नामे-त्यसूयाकलुषैरिव । जातं कल्लोलिनीकूल-मुद्गुर्जैर्वाहिनीश्वरैः ॥ २४० ॥ रिंसुमनसामेकां, गामनुद्रवतां जवात् । नाभून्नेत्रोत्सवः कस्य, महोक्षाणां रणः क्षणम् ॥ २४१ ॥ करीरादिनकस्तोम-कमनीयमनीयत । पीताम्भाः करभश्रेणि-विशालं जङ्गलस्थलम् ॥ २४२ ॥ करीश्वरकराक्रान्तं, दन्तात्तश्रवणाञ्चलः । करभोऽरक्षदात्मानं, "विक्रमो हि फलेग्रहिः" ॥ २४३ ॥

मार्गश्रमच्छिदे स्मेर-दम्भिजिनीखण्डमण्डितम् । स्वैरं तरङ्गिणीवारि, गाहन्ते स चमूचराः ॥ २४४ ॥ सुभ्रुवां नाभयः पागं, पायं सारस्वतं पयः । पाथोधिक्षिप्तमन्थाद्रि-दरीकार्यमपूरयन् ॥ २४५ ॥ तापोच्छित्तिकृते केऽपि, सरिद्वारि जगाहिरे । कामप्यालोक्य मज्जन्तीं, पुनस्तापं दधुस्तमाम् ॥ २४६ ॥ केचिदुच्छृङ्खलप्रेम, रथाङ्गमिथुनं मिथः । वीक्षमाणाश्चिरं तस्थुः, श्रमं विस्मृत्य सैकते ॥ २४७ ॥ मरालीं काचिदालोक्य, प्रेयसश्चाटुकारिणीम् । स्त्रीत्वं सासूयमेतस्या, निन्दति स मुहुर्मुहुः ॥ २४८ ॥ इतो भृङ्गाङ्गनागीतैः, सारसीरसितैरितः । आकृष्टश्रुतयस्तत्र, तस्थुर्व्यग्रं मृगीदृशः ॥ २४९ ॥ काश्चिद-म्भःपाने-र्मृणालवलयैः पराः । कर्णोत्तंसोत्पलैरन्या, धिनोति स वधूर्धुनी ॥ २५० ॥ काश्चित्तात्कालिकस्नान-कमनीयतमश्रियः । वानीरवेश्मसु प्रेयः-प्रार्थनामकृतार्थयन् ॥ २५१ ॥ प्रियाचंक्रमणे हंसी-प्रयाते चाधिसैकतम् । वेत्तुं नाभूदलं

१ 'अनीहर्यैव' प्रत्य० । २ हस्तिभक्ष्यान्नपिण्ड. । ३ 'काश्चिदु०' प्रत्य० । ४ प्रियाया गमने ।

कश्चि–दुपमानोपमेयताम् ॥ २५२ ॥

फलैः पुष्पैरपि ब्रह्म–तनयातीरभूरुहाम् । सैनिकाः पुण्डरीकाक्षं, पाण्डवं चोपतस्थिरे ॥ २५३ ॥ खर्जूर–नागरङ्गाम्र–जम्बू-जम्बीरमण्डिते । सप्तला-मालती–मल्ली–चम्पका-शोकशालिनि ॥ २५४ ॥ दत्तोन्मादपिकीनादे, हारिहारितनिक्वणे । कलकादम्बनिर्ह्रादे, पुष्यत्पुष्पंधय[1]ध्वनौ ॥ २५५ ॥ दिनान्ते हरि–कौन्तेयौ, रोधसि ब्राह्मसैन्धवे । आकल्पकमनीयाल्पप्रायप्रेयःपरिच्छदौ ॥ २५६ ॥ न्यञ्चितोच्चैःश्रवःकीर्ति–मुच्चमारुह्य वाजिनम् । करम्बितकरौ तैस्तैः, फलपुष्पैर्विजह्रतुः ॥ २५७ ॥ ( चतुर्भिः कलापकम् । ) तथार्हत्प्रतिमार्चादि–क्रियां प्राथमरात्रिकीम् । निर्माय निर्मितानन्दौ, दिव्यसंगीतभङ्गिभिः ॥ २५८ ॥ नमत्संभ्रान्तसामन्त–किरीटमणिजन्मभिः । अंशुभिर्मांसलीभूत–पादाम्बुजनखत्विषौ ॥ २५९ ॥ चामीकरमयानेक–भूषणाद्भुतकान्तिभिः । यादवैः पाण्डवेयैश्च, सेवितावौपजानुकैः ॥ २६० ॥ वार[2]संगतगाणिक्य–माणिक्यकिरणोत्करैः । दूरान्नीराजितात्मानौ, सेवायातैरिवाग्निभिः ॥ २६१ ॥ उज्जृम्भितप्रभाजाल–भासुरैर्मणिभूषणैः । निपीतदीपिकादीप्ति–मण्डलैः परिमण्डितौ ॥ २६२ ॥ इदं रम्यमथो वार–नारीवक्त्रमिति स्फुटम् । आत्तब्रह्मसुतासूत–केलिपङ्केरुहौ करे ॥ २६३ ॥ मनोज्ञमेकमासीनौ, वैडूर्यमयमासनम् । प्रणयात्तत्तदुद्दिश्य, मिथः सांकथितौ मुहुः ॥ ॥ २६४ ॥ कौन्तेयश्च शाकुन्तेन्द्र[3]–ध्वजश्चाध्वस्तसौहृदौ । समं सायंतनास्थान–स्थलमातिष्ठतामुभौ ॥ २६५ ॥ ( अष्टभिः कुलकम् )

क्षणादभ्येत्य कक्षायां, वेत्रं निक्षिप्य दक्षिणः । नत्वा कुड्मलयन् पाणी, वेत्रपाणिरभाषत ॥ २६६ ॥ त्वरितक्रममायातो,

१ पुष्पंधयः–भ्रमरः । २ वारः–अवसरः । ३ गरुडध्वजः–कृष्णः ।

देव ! राजगृहात् पुरात् । चरः शेखरको नाम, देवपादान् दिदृक्षते ॥ २६७ ॥ मुराराातेरथादेशा-द्वेत्रभृत्तमवीविशत् ।
सोऽप्यानम्य मिलत्पाणि-रुपविश्य व्यजिज्ञपत् ॥ २६८ ॥ देव ! दूतो जरासन्ध-भूभुजः सोमकाभिधः । द्वारका-
तस्तदा वेगा-दगाद्राजगृहं पुरम् ॥ २६९ ॥ भवद्भिर्विहितात्यन्त-धर्षणः सोऽत्यमर्षणः । तत्र व्यज्ञापयत् क्रोध-भास्वरं
मगधेश्वरम् ॥ २७० ॥ देव ! द्वारवतीं गत्वा, समुद्रविजयं नृपम् । देवादेशेन गोपाल-बालकौ तावयाचिपम् ॥ २७१ ॥
वर्षीयानप्यवर्षीयो-वृद्धिरुद्धरकन्धरः । प्रभो ! ताभ्यां तु गोपाभ्यां, स माति न जगत्यपि ॥ २७२ ॥ ब्रूते च स्वामिनस्तेऽह-
मीदृक्ः किंकरोऽथवा । यदाक्रम्य कुमारौ मे, दुर्मतिर्याचते बलात् ॥ २७३ ॥ अहीश्वरशिरोरत्नं, नूनमादातुमीहते । नर-
केसरिणोऽप्येप, दंष्ट्रामाक्रष्टुमिच्छति ॥ २७४ ॥ तौ तु गोपालकौ देव !, नवतारुण्यपीवरौ । अहंकाराविवोत्साहा-विवा-
मर्षाविवाङ्गिनौ ॥ २७५ ॥ ज्यायानेकोऽपि तत्रोग्र-दोर्विलासः पिपासति । कुम्भोद्भव इवाम्भोधीन्, सर्वान् युधि विरोधिनः
॥ २७६ ॥ कनीयांस्तु भुजस्तम्भ-न्यस्तनिस्तुलधामभिः । चरित्रैश्चित्रिताशेप-लोकैर्लोकोत्तरः परः ॥ २७७ ॥ असौ शक्ति
तृणायापि, शतमन्योर्न मन्यते । मानुषीमलकीटानां, पार्थिवानां तु का कथा ? ॥ २७८ ॥ कश्चित् क्वचिज्जरासन्धो-ऽप्य-
र्स्तीत्येवं न वेत्ति सः । भानुं जानाति न ध्वान्त-श्चक्रवालगिरेः परः ॥ २७९ ॥ निहत्य तं तथा कंस-मुत्तंसं वीरसंहतेः ।
सोऽभवद्धूरमुत्कण्ठः, कण्ठीरव इव द्विपम् ॥ २८० ॥ तद्रूपकलितोष्माणो-ऽभूवन्नन्येऽपि यादवाः । किं न तिग्मांशु-

१ अतिवृद्धः । २ 'हमाह कः किंक०' प्रत्य० । (३ 'नरः' इत्युचितं प्रतिभाति) 'ननु केस०' प्रतिद्वय० ।
४ सूर्यकान्ताः ।

वर्गाणा, ग्रावाणोऽप्यग्निवर्षिणः ? ॥ २८१ ॥ मारुतैरिव दावाग्निः, पाण्डवैर्दत्तचण्डिमा । सांप्रतं सैष निःशेष-द्वेपिकक्षं
दिधक्षति ॥ २८२ ॥
अवोचच्च स मां किंचि-द्यदि दूतत्वमस्ति ते । जरासन्धं तदावद्ध-निर्बन्धं युधि दर्शयेः ॥ २८३ ॥ महानपि स मे
कामं, न किंचिदिव संगरे । "स्थवीयानपि दम्भोले-र्भूधरः किल कीदृशः ?" ॥ २८४ ॥
"वह्निरिन्धनकूटेषु, तपनस्तिमिरोर्मिषु । वीरश्च वैरिवारेषु, स्वाधिकेष्वपि शक्तिमान्" ॥ २८५ ॥
जरासन्धशिरःस्कन्धा-च्छिन्नमुच्छलितं दिवि । मम तस्य च दोष्कर्म, रुद्रेण[1] द्रक्ष्यते क्षणम् ॥ २८६ ॥ उन्नम्य समर-
व्योम--न्यसिर्धाराधरो मम । निर्वापयिष्यति क्षोणिं, जरासन्धभुजोष्मलाम् ॥ २८७ ॥ दूरेऽहमर्जुनस्यापि, शराणां तं
जिघत्सताम् । तैर्भविष्यत्यपोशान[2]-मेव कौरवशोणितैः ॥ २८८ ॥ संख्यानविषयातीतै-र्बलौघैर्यदुभूभुजाम् । अमूभिः पाण्ड-
वेयस्या-क्षौहिणीभिश्च सप्तभिः ॥ २८९ ॥ अयमायात एवास्मि, कुरुक्षेत्रक्षितौ क्षणात् । तत्राभ्येतु त्वदीशोऽपि, यद्यस्ति
भुजवैभवम् ॥ २९० ॥ (युग्मम्)
इत्याकर्ण्योभयाकर्णि-कीर्णज्वरभरां गिरम् । जरासन्धोऽतिजज्वाल, कालानल इवाज्ञवान् ॥ २९१ ॥ ततोऽभ्यधायि
गान्धारी-पुत्रैरासन्नवर्तिभिः । राजन् ! कोऽयमिभारातेः, संरम्भो मृगधूर्तके ॥ २९२ ॥ वयमेनं हनिष्यामः, पृष्ठाधिष्ठायिनि
त्वयि । पृष्ठस्थे किमु घर्मांशौ, न घ्नन्ति घृणयः[3]स्तमः ? ॥ २९३ ॥ पाण्डुनन्दनकल्पान्त-नाट्यं नाटयतां हि नः ।

१ 'भद्रेण द्रक्ष्यति' प्रतिद्वय० । २ भोजनादौ यज्जलेनाचमनं क्रियते तत् । ३ किरणाः ।

शेखरकेण कथितः जरासन्ध-वृत्तान्तः कृष्णस्य॥

यशोऽमुष्य भवन्नेत्रा–नन्दी नान्दी भविष्यति ॥ २९४ ॥ खण्डयन् पाण्डवान्नैनं, भुजो नः शेपयिष्यति । मेरुमुज्झति किं शैलान्, मज्जयन् प्रलयार्णवः ? ॥ २९५ ॥ वारितोऽपि ततस्तैस्तै–र्दुर्निमित्तैः क्षुतादिभिः । आदिदेश जरासन्धः, प्रस्थानाय वरूथिनीम् ॥ २९६ ॥ भरं वोढुमसंभाव्य–मन्ये सैन्यस्य तावतः । देव ! तन्नगरोत्सङ्गे, चकम्पे काश्यपी मुहुः ॥ २९७ ॥ प्रभोर्भावि निमाल्येन, विपदर्णवमज्जनम् । दिशः श्याममुखाः कामं, जज्ञिरे मलिनाम्बराः ॥ २९८ ॥ सैन्यरेणुभिरश्रान्तं, वारयिष्यामहेतमाम् । भियेवेति दिवो भानि, झम्पामुल्काच्छलाद्ददुः ॥ २९९ ॥ प्रसर्पत्त्वत्प्रतापाग्नि–ज्वालाजालैरिवाभितः । अदृश्यन्त दिशां दाहाः, पुरे तस्य दिवानिशम् ॥ ३०० ॥ प्रस्थास्नोस्त्वदरिव्रातं, संहर्तुं समवर्तिनः[3] । सैन्यैरुत्तम्भितः शङ्के, दिवि केतुर्व्यजृम्भत ॥ ३०१ ॥ प्रस्थितोऽमीभिरुत्पातै–र्नैत्यसाविति[4] शङ्कया । निर्घाताः परितः क्षोणि–वक्षोघाता इवाभवन् ॥ ३०२ ॥ क्रोधावेशादनादृत्य, दुर्निमित्तान्यमून्यपि । प्रयाणं कुरुभिः सार्धं, विदधे मगधेश्वरः ॥ ३०३ ॥

हरिरित्यभिधायास्ते, देव ! त्रस्त इवात्यजत् । आरुरुक्षोः क्षणात्तस्य, कुञ्जरग्रामणीर्मदम् ॥ ३०४ ॥ तस्य प्रस्थास्यमानस्य, वाहिनीवाजिकुञ्जरम् । पुरीष-प्रस्रवौ चक्रे, त्वत्प्रचक्रभयादिव ॥ ३०५ ॥ ज्ञाततद्विपदो राज्य–लक्ष्म्या वक्ष इव क्षणात् । ताडनारम्भ एवोच्चै–रस्फुटज्जयदुन्दुभिः ॥ ३०६ ॥ भीष्म–द्रोण–कृपादीनां, कुरुसैन्यमहीयसाम् । तदाऽऽसन् जातखेदानां, परस्परमिमा गिरः ॥ ३०७ ॥ एतैर्दुष्टैः स्फुटं रिष्टैः, संगरोत्सङ्गमीयुषाम् । शौण्डीराणामपि प्रायः, प्रत्यावृत्तिर्न

१ 'यशो गुरुरिपोर्नेत्रा' प्रतित्रय० । २ 'मन्ये' प्रत्यन्तरपाठः, 'मन्यैः' इतिपाठः संभवति । ३ यमस्य । ४ 'नैतासा०' इति प्रत्यन्तरपाठः साधुः ।

जायते ॥ ३०८ ॥ परं द्वैमातुरो राजा, सोऽयमौद्धत्यमन्दिरम् । अप्यायत्येकपथ्याना-माप्तवाचामगोचरः ॥ ३०९ ॥ गान्धारेयस्तु धौरेय, एव दुर्मेधसामसौ । न खल्वर्हति वृद्धाना-मुपदेशं मनागपि ॥ ३१० ॥ एकस्तावज्जरासन्धो, दुर्धीर्दुर्योधनोऽपरः । सैष ग्रीष्मर्तुसंताप-कालकूटसमागमः ॥ ३११ ॥ दावपावकवत् सर्वं, निर्दह्य कुलकाननम् । नूनमेतौ दुरात्मानौ, निर्नाम क्षयमेष्यतः ॥ ३१२ ॥

अथासौ कौरवानीकै-रैन्दवैरिव रश्मिभिः । चचाल मांसलीभूतो, जरासन्धबलोदधिः ॥ ३१३ ॥ प्रागभ्यासा इवात्मान-मुदवाहा इवार्णवम् । भूभुजः कटकं तस्य, विशन्ति स्म सहस्रशः ॥ ३१४ ॥ तद्बलाक्रान्तभूभारो-द्धारसाहायकार्थिना । फणिनोऽन्ये फणीन्द्रेण, प्रार्थयांचक्रिरे ध्रुवम् ॥ ३१५ ॥ तत्तुरङ्गखुराघातै-र्विव्यथे पृथिवी तथा । रजोव्याजेन संजज्ञे, यथा गगनगामिनी ॥ ३१६ ॥ तदा सत्यापयामास, स्वां महाबलतां मरुत् । अभूद्वीरावतंसस्य, यदस्य प्रातिलोमिकः ॥ ३१७ ॥ गच्छन्तं मृत्यवे मित्र !, त्वमप्येनमुपेक्षसे । इतीवादित्यमभ्येत्य, शिवाः कामं ववाशिरे ॥ ३१८ ॥ अनीयुषीणां तत्सैन्य-शोषिताशेषपाथसाम् । वार्धिः शङ्केऽद्य कान्तानां[2], बिभर्ति विरहव्यथाम् ॥ ३१९ ॥ किमेते भूभृतो हन्त, पृथक्कटकशालिनः । इति क्रोधादिवानीकै-राचक्राम स भूधरान् ॥ ३२० ॥ अनूपाञ्जाङ्गलीकुर्व-ञ्जङ्गलानप्यनूपयन्[3] । उर्वीमनुर्वीकुर्वाणः, सत्रयन्नगानगान्[4] ॥ ३२१ ॥ व्यक्तशक्तिर्जरासन्धः, सोऽयमन्यः प्रजापतिः । समं कुरुबलैरागा-न्निकटे कोटरावणे ॥ ३२२ ॥ (युग्मम्) प्रातरेव कुरुक्षेत्र-मयमायास्यति ध्रुवम् । "वीरा हि प्रियसंग्रामा, न नाम चिरकारिणः" ॥ ३२३ ॥ इत्याकर्ण्य

१ जरासन्धः । २ नदीनाम् । ३ जलमयदेशान् । ४ वृक्षरहितान् पर्वतान् ।

चगेद्गीर्णां, तां कथां प्रतिपन्थिनः । हृष्यति स्म हृषीकेशः, पैतृस्वस्रैः सहाखिलैः ॥ ३२४ ॥
" प्रियाणां च रिपूणां च, सविधे हि समागमे । सारङ्गाक्ष्यश्च शूराश्च, बिभ्रते परमां मुदम् ॥ ३२५ ॥ "
दापयामास चाराय, मुरारिः पारितोषिकम् । नियोज्येषु प्रभोः प्रीति-र्न भवत्यफलेग्रहिः ॥ ३२६ ॥ उद्यन्तोऽथ दिशि
प्राच्यां, सूर्यसारथिना समम् । अश्रूयन्त जनैरूर्ज-स्विनो निस्वाननिस्वनाः ॥ ३२७ ॥ ईयामायुष्टोमयज्वानो, ध्वान्तभेद-
स्करोदयाः । निपीतप्रसरद्वास्त्र-दंशवः पांसवोऽस्फुरन् ॥ ३२८ ॥ जितोच्चैर्मन्दरक्षुब्ध-क्षोभिताम्भोनिधिध्वनिः । आकर्ण्य-
तोत्क्रमत्कर्णैः, सैन्यकोलाहलो जनैः ॥ ३२९ ॥ अवतेरुस्ततः सार्धं, करैः किरणमालिनः । दामोदरचमूलोक-लोचनाध्वनि-
त्तनः ॥ ३३० ॥ रोधस्येव सरस्वत्या-स्ततः सान्द्रतरद्रुमे । दवीयस्येव गोविन्द-स्कन्धावारस्य भूतले ॥ ३३१ ॥ अगृह्यन्त
जरासन्ध-सैनिकैर्व्रीतभीतिभिः । निवासा वासवागार-गर्वसर्वस्वहारिणः ॥ ३३२ ॥ युग्मम् ॥ निवासो मगधेशस्य, तैः[4]
शशाङ्कसितैः सितैः । रोचते स्म तुषाराद्रि-रिव प्रत्यन्तपर्वतैः ॥ ३३३ ॥ कर्णादीनां प्रवीराणां, शल्यादीनां महीभृताम् ।
गाङ्गेयतनयादीनां, स्कन्धावारगरीयसाम् ॥ ३३४ ॥ समभूवन् यथास्थानं, स्वस्वकेतनशालिनः । आवासा हास्तिका-श्वीय-
रथ्या-पादातशोभिनः ॥ ३३५ ॥ ( युग्मम् ) रेजे दुर्योधनावासो-ऽप्युज्ज्वलैस्तैः परिष्कृतः । मालतीमुकुलश्वेतैः, श्वेतभानुरिव
ग्रहैः ॥ ३३६ ॥ हास्तिका-श्वमयी रथ्या-मयी पौत्तमयी तथा । आसीद्द्वयैरनीकैस्तैः, कुरुक्षेत्रोपकण्ठभूः ॥ ३३७ ॥
अथ मायंतनाऽऽस्थान-मास्थितो मगधेश्वरः । आददे गिरमध्यक्षं, सर्वक्षोणीभृतामपि ॥ ३३८ ॥ मम चक्रस्य गोपालं,

१ श्यामा-रात्रिः । २ क्षुब्धः-मन्थनदण्डः । ३ सूर्यस्य । ४ निवासैः ५ रथानां समूहो रथ्या ।

कवलीकुर्वतो रणे । उपदंशपदे नूनं, ते भविष्यन्ति पाण्डवाः ॥ ३३९ ॥ राजता राजते चन्द्रा-द्विपरीतैव भूभृताम् । प्रणयादाश्रितं यत्ते, मित्रमेवोपकुर्वते ॥ ३४० ॥ यस्तु तादृग्विधो नैव, स कथं राजशब्दभाक् १ । लभतां च कथंकारं, गणनां पुरुषेष्वपि १ ॥ ३४१ ॥ तद्विधाय ध्रुवं प्रात-र्महीखण्डमपाण्डवम् । नेष्यामि कुरुराजस्य, राज्यं द्वैराज्यशून्यताम् ॥ ३४२ ॥

अथोच्चैः कुड्मलीकृत्य, करौ दुर्योधनोऽभ्यधात् । श्रोतुमर्हसि राजेन्द्र !, भारतीं मामिकामिमाम् ॥ ३४३ ॥ त्वयि शौण्डीर्यमाणिक्ये, संगराङ्गणसंगिनि । आस्तामन्यः स्फुटं सोऽपि, वराकः पाकशासनः ॥ ३४४ ॥ शत्रुमात्रेषु ते स्वैरं, तेऽप्यलंभूष्णुविक्रमाः । ये तावकीनमाहात्म्य-देवतापात्रतां ययुः ॥ ३४५ ॥ तदस्य यशसः पाण्डु-सूनुसंहारजन्मनः । वीरोत्तंस ! न मे गन्तुं, त्वमर्हस्यंशहारिताम् ॥ ३४६ ॥ तमप्येतैः समं युद्धे, हनिष्यामि हरिं यदि । तन्निदेश्यकृतत्वेन, विशेषयशसे तव ॥ ३४७ ॥ तद्यावद्देव ! कौन्तेय-कौरवीयोऽयमाहवः । सभ्य एव भवेस्ताव-न्मयि भूयादनुग्रहः ॥ ३४८ ॥ ओमिति प्रतिपेदाने, तां गिरं मगधेश्वरे । स्वावासान् सपरीवारो, जगाम धृतराष्ट्रभूः ॥ ३४९ ॥

संगमय्य तदैवायं, निजानीकमहीयसः । गाङ्गेय-द्रोण-कर्णादीन्, सुभटानित्यभाषत ॥ ३५० ॥ समागच्छदगाधोऽयं, प्रातः संगरसागरः । उत्तरीतुमिमं युष्म-द्दोर्दण्डा एव सेतवः ॥ ३५१ ॥ अनीषत्करमप्युच्चैः, कार्यमीषत्करं भवेत् । यत्रैकहृदयोत्साह-धारिणः सहकारिणः ॥ ३५२ ॥

---

१ राजद्वयाभावताम् ।

"कृतमालायकश्चन्द्र-वसन्त-मलयानिलैः । मुनीनामपि चेतांसि, किं न मथ्नाति मन्मथः ? ॥ ३५३ ॥"

भवदोर्विक्रमैः कामं, विजेष्येऽहं विरोधिनः । पक्षिराजोऽपि यत् पक्षै-स्तरत्यम्बरसागरम् ॥ ३५४ ॥ वैरिखड्गाम्बुदुर्वारै-र्गोष्माकीर्णैर्गुणोष्मभिः । मदीया सततोल्लास-मल्लिका कीर्तिमल्लिका ॥ ३५५ ॥ जरासन्धोऽधुनाभ्यर्णं, प्रार्थितः प्रथमाङ्गम् । स्वयं पाण्डुतनूजानां, वधश्रद्धालुना मया ॥ ३५६ ॥ तदनुग्रहमाधाय, निवेदयितुमर्हथ । स्वरूपं मे समग्राणा-मान्मानीकधनुष्मनाम् ॥ ३५७ ॥ कियन्तोऽतिरथाः सम्य-क्कियन्तश्च महारथाः । कति चार्धरथाः सैन्ये, सेनान्यं च करोमि कि(क)म् ? ॥ ३५८ ॥ अथाभाषत भीष्मस्तं, राजन्! किमिदमुच्यते । स्वयं वेत्स्येव यत् सत्यं, रहस्यं सर्वधन्विनाम् ॥ ३५९ ॥ राधेयस्तु प्रमादी च, कृपालुश्च रणाङ्गणे । तेनार्धरथ एवाय-मिति मे प्रतिभासते ॥ ३६० ॥ वचस्तदिदमाकर्ण्य, कर्णयोर्विषमोदरम् । अभिधत्ते स्म राधेयः, कोपकम्प्रोष्ठपल्लवः ॥ ३६१ ॥ गाङ्गेयस्य रणे याव-दातिरथ्यं प्रथिष्यते । न पाण्डवैः समं तान-द्वारयिष्ये धनुर्युधि ॥ ३६२ ॥ इत्युदीर्य भुजावीर्यै-र्मन्यमानस्तृणं जगत् । कर्णः क्रोधान्धलोऽगच्छ-दुत्थायास्थानमण्डपात् ॥ ३६३ ॥ गतेऽस्मिन्नसुखायन्तं, भीष्मोऽभाषिष्ट भूपतिम् । राजन्! कोऽयमकाण्डेऽपि, मुखे कष्मलिमा तव ? ॥ ३६४ ॥ प्रधने धृतधन्वाऽहं, यदि कर्णेन किं तदा ? । न चेदुपात्तचापोऽस्मि, राधेयेन तदाऽपि किम् ? ॥ ३६५ ॥ अथाभ्यभायि गान्धारी-तनयेन पितामहः । चेत् प्रसीदसि मे तात!, किंचिद्विज्ञापयाम्यहम् ॥ ३६६ ॥ तात-मैत्रेयमभ्यास्तां, रणभारधुरीणता । धराऽभ्युद्धारधौरेयः, को नामान्यः फणीश्वरात् ? ॥ ३६७ ॥ तां गिरं कौरवेन्द्रस्य, प्रत्य-

१ समीपस्थम् । २ युद्धे ।

श्रौपीत् पितामहः । सेनानीत्वे तदैवाय-मभ्यषिच्यत चामुना ॥ ३६८ ॥
अथ प्रस्थापितो राज्ञा, गान्धारीतनुजन्मना । सुमेधा मागधोऽभ्येत्य, पाण्डुनन्दनमभ्यधात् ॥ ३६९ ॥ राजन्! दुर्वारदोर्वीर्य-निर्जितारातिमण्डलः । जल्पति त्वामिदं वीरो, मद्गिरा कौरवाग्रणीः ॥ ३७० ॥ त्वद्भूर्यान्तभुवः कीर्तेः, संविभागमितंपचः[1] । अहमाद्यं रणारम्भं, जरासन्धमयाचिषम् ॥ ३७१ ॥ तत् प्रातस्तातगाङ्गेय-माहवोत्सवदीक्षितम् । पुरस्कृत्यावतीर्णं मां, द्रक्ष्यसि त्वं रणक्षितौ ॥ ३७२ ॥ तदन्तर्मनसं कोऽपि, सत्त्वोत्कर्षोऽस्ति चेत्तव । विश्वविश्वंभराभोगवैभवे च यदि स्पृहा ॥ ३७३ ॥ यदि दोर्विक्रमोऽप्यस्ति, तव कोऽपि पचेलिमः । बन्धवोऽपि रणोपास्ति-सौवस्तिकभुजा[2] यदि ॥ ३७४ ॥ तदाऽऽत्मीयबलैः सार्धं, सर्वैरपि हरेर्बलैः । तिष्ठेथाः पुरतः प्रात-राहवे मम बाहवे ॥ ३७५ ॥ ( त्रिभिर्विशेषकम् । ) तद्बन्दिनो वचः श्रुत्वा, शत्रुशौण्डीरिमोर्जितम् । दूरमङ्कुरितप्रीति-रभ्यधत्त युधिष्ठिरः ॥ ३७६ ॥ तस्यापि स्वप्रभोरेवं, बन्दिराज! निवेदयेः । त्वमप्येतद्वचः कार्षी-र्मा विपर्यासपांसुरम् ॥ ३७७ ॥ अहं तु यदि नाभ्येमि, त्वत् प्रागेव रणाङ्गणम् । सूनृतव्रतिनस्तन्मे, संपूर्णैवावकीर्णता[3] ॥ ३७८ ॥ व्याहृत्येति हिरण्यौघै-रमुं सत्कृत्य मागधम् । विसृज्य च तपःसूनु-र्ययौ कंसान्तकान्तिकम् ॥ ३७९ ॥ निवेद्य बन्दिनोद्गीर्णां, कौरवीयां कथामिमाम् । स्वयं प्रथमसंग्राम-मच्युतं सोऽप्ययाचत ॥ ३८० ॥ अरिष्टारिरभाषिष्ट, पाण्डवेयं ततो हसन् । मामत्रैकतुलाद्यूते, भागिनं न करिष्यसि ॥ ३८१ ॥ न हि साहायकापेक्षी, नूनं तस्मिन् रणे जयः । महः पाण्डुमहीभर्तु-र्यत्र देदीप्यतेतमाम् ॥ ३८२ ॥ तथापि सारथीभूय,

१ मितं पचतीति मितंपचः--लोभवान् । २ युद्धसेवाया कल्याणकारिणौ भुजौ येषां ते । ३ व्रतभङ्गः ।

धर्मसूतिः प्रतिश्रुत्य, तां गिरं सुरवि-
दर्शं दर्शं नवां नवाम् । कपिध्वजधनुष्मत्तां, प्रीणयिष्ये दृशौ मम ॥ ३८३ ॥
क्रियः । गत्वा च स्वचमूर्युद्ध-संवाहाय ममादिशत् ॥ ३८४ ॥ मतिमान् सर्वसंमत्या, द्रुपदोर्वीशनन्दनम् । पताकिनीपतिं
चक्रे, धृष्टद्युम्नं युधिष्ठिरः ॥ ३८५ ॥
नानावर्णास्तदैवान्तः-क्रोधार्चिष्मच्छिखा इव । स्कन्धावारप्रवीराणां, नेत्रपट्टा विनिर्ययुः ॥ ३८६ ॥ रणारम्भोत्सवे
वीर-कवलाय भटावलेः । करम्भाः करकाभासो, निरपाद्यन्त दाधिकाः ॥ ३८७ ॥ द्रक्ष्यामो भटकण्ठस्था, युद्धोत्सवमिति
ध्रुवम् । विकासमुभगामोगाः, सृज्यन्ते स्म नवाः स्रजः ॥ ३८८ ॥ घृष्यते स्म प्रवीराणा-मङ्गरागाय चन्दनम् । पिष्यन्ते
स्म ललामेभ्यो, भूयस्यो मृगनाभयः ॥ ३८९ ॥ बलिपुष्पोपहारादि-वस्तुभिर्भटवेश्मसु । पुरस्तादस्त्रदेवीनां, प्रावर्तन्त महो-
त्सवाः ॥ ३९० ॥ उपयाचितलक्षाणि, देवतानां पृथक्पृथक् । प्रतिशुश्रुविरे वीर-दारैर्भर्तृजयैषिभिः ॥ ३९१ ॥ तत्पूर्वसंगम-
प्रेम-कल्लोलिन्य इवोन्मिकैः । प्रेयसो रहसि स्वैर-मालिलिङ्गुर्भटाङ्गनाः ॥ ३९२ ॥ वीरसूतिरहं वीर-स्नुषा च जगति श्रुता ।
अखण्डं वीरपत्नीत्व-मिदानीं तु मम क्रियाः ॥ ३९३ ॥ भीताश्च सप्रमोदाश्च, त्वय्येव रणरङ्गिणि । विश्राम्यन्तु दृशः कामं,
वैरिणां च प्रभोश्च ते ॥ ३९४ ॥ निजकौक्षेयकक्षुण्ण-कुम्भिकुम्भस्थलोद्भवैः । विदध्या मौक्तिकैर्मां च, स्वामिकीर्तिं च हारिणीम्
॥ ३९५ ॥ कुर्वीथास्त्वं तथा नाथ !, यथा त्वां पश्यतो रणे । भटीजनस्य सर्वस्य, स्पृशामि स्पृहणीयताम् ॥ ३९६ ॥
निर्जित्यारीनुपेतस्य, प्रथयिष्यामि नाथ ! ते । निबिडालिङ्गनैरेव, प्रहारव्रणशोधनम् ॥ ३९७ ॥ इत्यालिङ्ग्य रहः काश्चि-

१ दधिविकाराः । २ भूषणेभ्यः । ३ कौक्षेयकः-खड्गः ।

दुच्चरत्पुलकाङ्कुराः । उपस्थितरणान् प्रातः, प्राणनाथान् बभाषिरे ॥ ३९८ ॥ (षड्भिः कुलकम्) वीरश्रिया पुरस्कृत्य, प्रीत्या दृष्टोऽप्सरोगणैः । जयलक्ष्म्या समाश्लिष्टो, नैव वीक्षिष्यसेऽपि नः ॥ ३९९ ॥ इत्युच्चैःकृतकासूया-निर्भरं वल्लभाजनैः । रणैषिणः स्मरस्मेर-कपोलैः केचिदूचिरे ॥ ४०० ॥ (युग्मम्) मया युधि हताः स्वर्गं, यास्यन्ति रिपवः स्फुटम् । मद्वैरात्तत्र योद्धार-स्तर्तः[1] क्षुण्णाः क्व गामिनः ? ॥ ४०१ ॥ आत्तासिर्जर्जरान् स्वर्ग[2]-भूमिकां ग्राहयन्नरीन् । रणरङ्गेऽभिनेष्यामि[3], स्वामिलक्ष्मीस्वयंवरम् ॥ ४०२ ॥ मत्कृपाणप्रहारोत्थै-र्मौक्तिकैरिभसंभवैः । द्विषो द्रक्ष्यन्ति सत्रासं, दिवा तारकितां दिवम् ॥ ४०३ ॥ उन्नतः समरव्योम्नि, ममासिर्नूतनोऽम्बुभृत् । स्त्रायिष्यति संतापं, केषां नाम न वैरिणाम् ? ॥ ४०४ ॥ कीर्ति-प्रावार[4]मुन्मुच्य, बहिर्बाहूष्मतापिताः । कृपाणाम्भसि मङ्क्ष्यन्ति, मम के नाम नारयः ? ॥ ४०५ ॥ एकस्मिन्नेव निक्षिप्ता, मदीयशरपञ्जरे । द्विषः सर्वेऽपि लप्स्यन्ते, केलिपारापतोपमाम् ॥ ४०६ ॥ पास्यन्ति मे पिपासार्ता, इव वेगेन गामिनः । विद्वेषिदन्तिनां दान-वारिधारां शिलीमुखाः ॥ ४०७ ॥ आदास्यन्ति ममाराति-दन्तिदानानि मार्गणाः । कीर्तिं तु मत्प्रभोरेव, करिष्यन्ति जगत्त्रये ॥ ४०८ ॥ इत्यादयस्तदाऽनेकाः, समीको[5]त्साहशालिनाम् । भटानामभवन् भूयो, भूय एव मिथः कथाः ॥ ४०९ ॥ (नवभिः कुलकम्)

अथोन्निद्रजपाजैत्रं, तन्यमानो रविर्महः । उल्ललास दिशि प्राच्या-मानन्दैः सह दोष्मताम् ॥ ४१० ॥ सर्वाङ्गागरयन्

१ 'स्तात !' प्रतिद्वयपाठः । २ 'स्वर्गि०' प्रतिद्वय० । ३ अभिनयं करिष्यामि । ४ कीर्तिवस्त्रम् । ५ समीकः-युद्धम् ।

सैन्य-राजन्यान् सह विक्रमैः । वारिजन्मा निदध्मान, द्राक्संनाहनिकस्ततः ॥ ४११ ॥ श्रोत्रेणान्तःप्रविष्टैस्त-न्नादैरुद्वेलिता
इव । निर्ययुः पुलकव्याजा-न्महीशानां बहिर्मुदः ॥ ४१२ ॥ रणराभसिकाः पत्ति-स्यन्दना-श्व-भसज्जने । राजानोऽधिकृतानुच्चै-
स्त्वगभाजोऽप्यनत्वरन् ॥ ४१३ ॥ मदाम्बुपङ्किलीभूताः, क्वणत्कनकशृङ्खलाः । काश्यपीशयनादुच्चै-रुदस्थाप्यन्त दन्तिनः
॥ ४१४ ॥ सादिभिर्द्रुतमभ्येत्य, रणत्काञ्चनभूषणाः । सर्वतोऽप्युदमोच्यन्त, वल्लितोऽश्वमतल्लिकाः ॥ ४१५ ॥ मा स्म कात-
रता कापि-द्बन्धुलोकस्य भूदिति । दृढशौण्डीर्यवर्माणो-ऽप्युर्वीशाः समवर्मयन् ॥ ४१६ ॥ हृदि यस्यैकदेशेऽपि, वरूथिन्यो
ममुर्द्विषाम् । युक्तमेव भटस्याङ्गं, ममौ वर्मणि यन्न तत् ॥ ४१७ ॥ सहिष्यतेऽरिनाराचान्, किमेतदिति केचन । परीक्षितु-
मिवाविध्यन्, वर्म गेमाञ्चतोमरैः ॥ ४१८ ॥ अनालोक्य मुखं संय-त्याह्वास्यन्ते द्विपो न नः । इति केचिच्छिरस्त्राणं,
नात्मनः शिरसि न्यधुः ॥ ४१९ ॥ क्षणमात्रान्महामात्रै-रिभाः संवर्मिता बभुः । सानुमन्तो नितम्बान्त-लम्बमानाम्बुदा
इव ॥ ४२० ॥ वार्धिकल्लोलतत्काल-निर्यदुच्चैःश्रवःश्रियम् । बिभ्रत्यः प्रक्षरोपेता, रेजिरे वाजिराजयः ॥ ४२१ ॥ रथैर्वरूथि-
भिर्दिव्यै-र्युक्तवाह्लीकवाजिभिः । कामं रेजेऽश्वमन्वानैः, पतङ्गस्य पताकिनम् ॥ ४२२ ॥
अरिष्टाय क्षिपां भर्म-जन्मापि सह बान्धवैः । दर्शिताङ्गो दुरीक्ष्योऽभूत्, परिवेषीव भानुमान् ॥ ४२३ ॥पश्चापि
पाण्डवा रेजु-र्धृतनानायुधास्तदा । कल्पान्त इव पाथोदाः, स्फुरितानल्पविद्युतः ॥ ४२४ ॥ पाथेयैरिव साम्भोभि-
र्निनिन्य विविधायुधैः । संगरार्णवनौकल्पा-नारोहन्ते स्म ते रथान् ॥ ४२५ ॥ आरूढकल्पितानेक-रथा-नेकप-वाजिनः ।

१ शत्रुः । २ 'यत्नतः' प्रत्य० । ३ तोमरम्-आयुधम् । ४ कवचवद्भिः । ५ रथम् । ६ कवचिताङ्गः ।

॥ करश्रेणिभिराग्नेयान्, मार्गणानिव धारयन् । शैचनिक्या रुचा
भूभुजः परितो भेजु-स्तानिन्द्रानिव नाकिनः ॥ ४२६ ॥ तदानीं विनतासूनु[2]-नोदिताश्वः पतिर्द्युताम् । तेषां साहायकायेव, दृश्यतामगमत् पुरः
हैमं, वारवाणं[1] वहन्निव ॥ ४२७ ॥ तदानीं विनतासूनु-नोदिताश्वः पतिर्द्युताम् । वीक्षामासुस्तदा सर्वे, कौवेरीमपि ते दिशम् ॥ ४२९ ॥
॥ ४२८ ॥ ( युग्मम् ) खेलदुच्छृङ्खलोद्योतां, चण्डरोचिःसहस्रिणीम् । वीक्षामासुस्तदा सर्वे, कौवेरीमपि ते दिशम् ॥ ४२९ ॥
तां दिशं यावदैक्षन्त, विस्मयस्मेरचक्षुषः । दिव्यानि ददृशुस्तावत्, ते विमानानि भूरिशः ॥ ४३० ॥ तेभ्योऽवतीर्य दोर्वीर्य-
पर्यस्तारिभुजौजसः । मणिचूड-सहस्राक्ष-चन्द्रापीड-महाबलाः ॥ ४३१ ॥ चित्राङ्गदादयोऽन्येऽपि, खेचरानीकिनी-
वृताः । विद्याधरेश्वराः सर्वे, प्रणेमुर्धर्मनन्दनम् ॥ ४३२ ॥ ( युग्मम् ) ऊचिरे च पुरा देव!, त्वया तत्र सहोदरैः । जीवितं सुकृतै-
स्तैस्तैः, कामं क्रीतमिदं हि नः ॥ ४३३ ॥ अथ विद्याधरेभ्यस्तत्, कौरवैः सह संगरम् । विदित्वा भवतो वेगा-दिहा-
गच्छाम शाधि नः ॥ ४३४ ॥ अथ कोऽयं रणारम्भ-संरम्भो भवतः स्वयम् । इयद्भिः सद्भिरस्माभिः, पत्तिभिर्निर्विपत्तिभिः ?
॥ ४३५ ॥ इत्युदीर्य यथौचित्य, भीमादीनभिवाद्य च । तुष्टात्मनस्तपःसूनो-र्निदेशात्तेऽप्यदंशयन् ॥ ४३६ ॥ हैडम्बेयो-
ऽपि विज्ञाय, विद्यया समरोद्यमम् । आययौ मनसा सर्वान्, द्विपो गण्डूषयिष्यता ॥ ४३७ ॥ आनम्य धर्मजं नत्वा,
क्रमात् पितृपितृव्यकान् । आदिष्टस्तैः प्रहृष्टास्यैः, सोऽपि संनाहमग्रहीत् ॥ ४३८ ॥ सदर्पो हयहेषाभि-रूर्जितो गजगर्जितैः ।
क्षीबैः[3] प्रवीरक्ष्वेडाभि-रञ्चितो रथचीत्कृतैः ॥ ४३९ ॥ लुम्पल्लोकश्रुतिश्रेणी-र्दारयन् गिरिकन्दराः । उद्वेलयन्महाम्भोधीन्,
कम्पयन् काश्यपीतलम् ॥ ४४० ॥ शब्दाद्वैतमयीं रोदः-संपुटीं घटयन्निव । महानादोऽथ दध्वानः, दुन्दुभिः सांपरायिकः

१ कवचम् । २ विनतासूनुः-गरुडोऽरुणश्च । ३ मत्तः ।

॥ ४४१ ॥ ( त्रिभिर्विशेषकम् ) अर्कवन्मकरं धर्म-सूतिरास्थितवान् रथम् । प्रतस्थेऽरिहिमोच्छित्त्यै, रणक्षोणिमनुत्तराम्
॥ ४४२ ॥ स प्रातिपन्थिकस्तस्य, प्लावयिष्यन्निवावनिम् । धृष्टद्युम्नं पुरस्कृत्य, चचाल वलनीरधिः ॥ ४४३ ॥ रथाङ्ग-
पाणिः सारथ्य-माचरन् मव्यसाचिनः । ददृशे विसयाल्लोकै-ररुणस्येव भानुमान् ॥ ४४४ ॥ ममोत्पत्तिभुवो व्योम्नः,
शल्यान्येतान्यतो ध्रुवम् । निस्वाननिस्वनस्तस्य, शैलशृङ्गाण्यपातयत् ॥ ४४५ ॥ तस्मिन् सैन्यौघसंमर्दे, निरुच्छ्वासं मही-
तनः । व्यश्नुते स्म चिरेण या-मप्युद्भूतमनेकधा ॥ ४४६ ॥ केतवः पवनैः काम-मनुकूलैस्तरङ्गिताः । इतो जय इतो लक्ष्मी-
रित्याह्वयान्त इवाबभुः ॥ ४४७ ॥ रेणुरानीपिकैर्गन्ध-वाहैरुद्वाहितः पुरः । नासीरस्यापि नासीरे, द्विपो जेतुमिवाचलत्
॥ ४४८ ॥ मदाः शत्रून पज्येयु-रेभिरन्धंभविष्णवः । इतीवाशमयन् दानैः, क्षोणिरेणून् करेणवः ॥ ४४९ ॥ शूरस्यापि
परम्योर्चैः-करक्षेपागहैरिव । कामं नीरायुधर्भास्व-त्कराश्लेपात् प्रजज्वले ॥ ४५० ॥ विमानैरनुकामीनैः, खेचराणां मणी-
मयैः । चकाशे दूरमाकाशे, कुर्वद्भिः कमलाकरम् ॥ ४५१ ॥ निवासेषु पदव्यां च, रणक्षोणौ च सा चमूः । साकल्ये-
नैव सर्वत्र, महावृष्टिरिवाबभौ ॥ ४५२ ॥ अथोपेत्य नमिद्भूमौ, पाण्डवेयस्य शासनात् । आरचय्य महद्व्यूहं, भूनेता-
रोऽवतस्थिरे ॥ ४५३ ॥

यदैव न तपःसूनो-रनीकं समनह्यत । तदैव कौरवस्यापि, शङ्खः सांनाहिकोऽध्वनत् ॥ ४५४ ॥ किं नामास्मिन्रणा-
रम्भे भवितेति धिया समम् । अथ प्रजागरांचक्रु-र्भूभुजो भुजशालिनः ॥ ४५५ ॥ वल्लभादोर्लताश्लेप-सुखनिर्मग्नचेतसः ।

१. सूर्ये मकरराशिमिव । २ 'स्तारः' प्रतिद्वय० । ( ३ अनुकूलैः ) । ४ 'नासीरद्वि०' प्रत्यन्तर० । ५ मार्गे ।

केचित्तल्पं चिरादौज्झ-ञ्श्रुतशङ्खस्वना अपि ॥ ४५६ ॥ तदानीं विदितात्यन्त-विप्रयोगागमा इव । स्वच्छन्दं दयितां केचि-दालिलिङ्गुः पुनः पुनः ॥ ४५७ ॥ उत्सुकोऽसि खलु स्वर्ग-स्त्रीभोगेष्विति भाषिणी । प्रेयसी कंचिदुत्थास्नु-माश्लिष्य रुरुधे चिरम् ॥ ४५८ ॥ ताभिस्ताभिः कृतोत्साहे, राजदौवारिकोक्तिभिः । संवर्मयितुमारेभे, ततो विश्वंभराधवैः ॥ ४५९ ॥ नवोढदयिताऽऽस्येन्दौ, केचित् स्तिमितदृष्टयः । उदस्तवर्मणोऽप्यग्रे, नापश्यन्ननुजीविनः ॥ ४६० ॥ किं भविष्यत्यसौ जाते, मम दैवादमङ्गले । शोचन्निति प्रियां कश्चि-न्न संवर्मणमस्मरत् ॥ ४६१ ॥ कश्चिद्व्यक्तजल्पाक-बाललालनलालसः । दंश-[1] नानयनादेश-मप्यदान्न निदेशिनाम् ॥ ४६२ ॥ श्रीशुद्धान्त-गजा-श्वादि-चिन्तयाऽऽचान्तचेतसः । आरोप्यमाणमप्यङ्गे, न वर्म विविदुः परे ॥ ४६३ ॥ राजानो रेजिरे नद्ध-हाटकोत्कटकङ्कटाः । वैश्वानरा इवोदग्र-ज्वालाजालजटालिताः ॥ ४६४ ॥ कश्चित् संहननोत्ताल-चलकोलाहलाकुलः । आलानद्रुममुन्मूल्य, जगाहे शिबिरं करी ॥ ४६५ ॥ सेनाकलकलोद्भ्रान्त-चेतसां सामजन्मनाम्[2] । विशुष्यन्ति स्म केषांचि-न्मदस्रोतांसि तत्क्षणात् ॥ ४६६ ॥ कथंचिद्ग्राहयांचक्रे, श्रुतसांग्रामिकानकः । उन्मीलितकटः[3] सद्यः, कङ्कटं[4] कोऽपि कुञ्जरः ॥ ४६७ ॥ आदाय सिन्धुरः सादि-मात्तैकगुडपक्षकः[5] । कश्चिदाकस्मिकक्षोभ-क्षुण्णचेताः पलायत ॥ ४६८ ॥ आजये सज्जिताः कामं, रेजिरे कुञ्जरेश्वराः । पत्रलाः परितो नम्र-शाखान्ता इव शाखिनः ॥ ४६९ ॥ विनीता अपि तत्कालं, कलिताविनयक्रमाः । ग्राह्यन्ते स्म बलात् केचित्, खलीनमपि वाजिनः ॥ ४७० ॥ कल्पयन्तं तथा पञ्चां, सादिनं कोऽप्यहन् हयः । यथा सोऽभूदलंभूष्णुः, सांयुगीने न कर्मणि ॥ ४७१ ॥ संस्यूत्रिततनुत्राणा-

१ (दंशनं कवचम् ।) २ गजानाम् ३ कटः-गण्डस्थलम् । ४ कवचम् । ५ गुडः-आस्तरणम्, स एव सहायो येन ।

मुरनेन्द्राश्रकामिरे । कल्लोला इव कूलिन्याः, पर्गताः पद्मिनीदलैः ॥ ४७२ ॥ संप्रत्यमङ्गलं बाष्प-निपातो मा स्म भूदिति ।
ऊर्द्ध्वपक्ष्मपुटप्रान्तं, नितन्वन्त्याः पदक्रमम् ॥ ४७३ ॥ करिष्यति प्रिये सिद्धिं, सरेकं स्खलनात् पदः । पपात पाणेः कस्याश्चि-
द्गलात् कनकभाजनम् ॥ ४७४ ॥ ( युग्मम् ) कस्यापि कुर्वतो वीरं-कवलं गृहकुक्कुरः । कृतं करे करम्भस्य, भ्रंशयामास भाज-
नम् ॥ ४७५ ॥ दूर्वादिमङ्गलेपिण्या-श्चलन्त्याश्चटुलक्रमम् । हारस्तुत्रोट कस्याश्चित्, पत्यौ संग्रामगामिनि ॥ ४७६ ॥
उन्मीलति क्षुते नार्या, विधतुं धावतो जवात् । प्रिये चलति कस्याश्चित्, सस्रंसे वलयं करात् ॥ ४७७ ॥ प्रक्षेप्तुमनसः प्रीत्या,
दूर्वादि पतिमूर्द्धनि । अम्बलुप्तदृशोऽन्यस्याः, पतति स्म तदन्यतः ॥ ४७८ ॥ परस्याः कुशली युद्धा-दागच्छेरिति भारती ।
आपृच्छमाने कान्तेऽश्रु-पूरैर्निन्ये वृथार्थताम् ॥ ४७९ ॥ आपृच्छ्य गच्छतः प्राण-नाथस्य वलिताननम् । कस्याश्चित् कृपणे-
दृष्टि-निपातैर्निगडायितम् ॥ ४८० ॥

गतधारालवैरन्या-युद्धश्रद्धावशादपि । दर्पाच्च दुर्निमित्तानि, तानि तान्यवहेलयन् ॥ ४८१ ॥ तुलामिव रविर्जेतुं, जीमू-
तानिव पाण्डवान् । अथारोहन्महाबाहुः, स्यन्दनं कुरुनन्दनः ॥ ४८२ ॥ ( युग्मम् ) सज्जितस्वस्वयानाधि-रोहिणः कव-
चाञ्चिताः । मूर्तिमन्त इवोत्साहा-श्चापवेदा इवाङ्गिनः ॥ ४८३ ॥ द्रोणाचार्य-कृपाचार्य-प्रमुखाः सामवायिकाः । कनी-
यांसश्च दुग्धारि-वना दुःशासनादयः ॥ ४८४ ॥ शल्य-प्राग्ज्योतिपाधीश-जयद्रथपुरःसराः । भूमीभुजश्च तं
युक्त-पर्याय पर्यवीवरन् ॥ ४८५ ॥ ( त्रिभिर्विशेषकम् ) ग्रहैरिव ग्रहाधीशः, स्वयूथैरिव यूथपः । पुण्डरीक इवाम्भोजैः,

१ नगपानम । २ वीरं-करम्भः । ३ सामूहिकाः ।

शोभते स्म स तैर्नृपैः[1] ॥ ४८६ ॥ कातरान् विमनीकुर्व-ञ्शूरान् कण्टकयंस्ततः । जजृम्भे दुन्दुभिध्वानो, दिग्निकुञ्जोदरंभरिः ॥ ४८७ ॥ आधाय पुरतो भीष्मं, भीष्ममिष्वासकर्मणा । कौरवीयाऽचलत् सर्व-पथीना सा वरूथिनी ॥ ४८८ ॥ केतनानि परोञ्चन्ति[2], पवनैः प्रातिलोमिकैः । कौन्तेयानीकिनीभीत्या, नश्यन्तीव चकासिरे ॥ ४८९ ॥ अस्मद्विरोधिनोऽम्भोदान्, बिभर्तीदं[3]मिति ध्रुवम् । पांशुभिर्नभसो लक्ष्मी-रक्षुद्यत बलोद्धतैः ॥ ४९० ॥ कस्याप्यौद्धत्यमन्यस्य, वयं न हि सहामहे । इतीव दन्तिभिर्दानै-र्नीयते स्म शमं रजः ॥ ४९१ ॥ आयुधान्यायुधीयानां, पतङ्गकरसंगमात् । साक्षान्निरीक्ष्यमाणाग्नि-दैवतानीव रेजिरे ॥ ४९२ ॥ क्षयार्णव इवोद्वेलः, क्षणात् कुक्षिंभरिर्दिशाम्, बलौघः सोऽपि संग्राम-भूमिसीमानमागमत् ॥ ४९३ ॥ बलैरलम्बुस (ष) प्रष्ठ-खेचराणामलंकृता । पाण्डवानीकमभ्यस्थात्, कृतव्यूहा चमूरसौ ॥ ४९४ ॥

तैस्तैरन्योऽन्यविच्छेद-पूरणप्रवणारवैः । विरामरहितोद्दाम-प्रवृत्तनिनदैरिव ॥ ४९५ ॥ मिथः पीतप्रतिध्वानै-रन्तर्मग्नान्यनिस्वनैः । प्रणेदेऽथ रणातोद्यैः, सैन्ययोरुभयोरपि ॥ ४९६ ॥ (युग्मम् ।) तर्जयन्त इव क्रोधा-न्मरुत्प्रेङ्खोलनैर्मिथः । अनीकद्वितयस्यापि, विराजन्ते स्म केतवः ॥ ४९७ ॥ स्वामिवैरेण वैराय-माणा इव परस्परम् । द्वयोरपि वरूथिन्यो-रम्बरे रेणवोऽमिलन् ॥ ४९८ ॥ पूर्वशौण्डीरदोर्दण्ड-चण्डिमस्तवपूर्वकम् । जनकस्यावदाना[4]ङ्क-नामोद्गारपुरःसरम् ॥ ४९९ ॥ शश्वत्प्राप्ताद्भुतस्वामि-प्रसादस्मरणोत्तरम् । प्रस्तुतस्तुतिकर्मभ्यः, संगरोत्साहहेतवे ॥ ५०० ॥ उभयोरप्यनीकिन्योः, सुभटैः समरोद्यतैः । प्रदीयन्ते स्म बन्दिभ्यो, भूषणानि यथोचितम् ॥ ५०१ ॥ (त्रिभिर्विशेषकम्) द्वयेऽपि भर्तुरादेशात्, कथं-

१ 'वृतः' प्रतिद्वय० । २ पश्चाच्चलन्ति । ३ नभः । ४ अवदान-पराक्रमः ।

निशितशस्त्रपाणिभिः । म्रियन्ते स्म धनुष्मन्तः, प्रथमप्रधनेच्छवः ॥ ५०२ ॥

पीयूषांशुमयं मुखैः कुवलयश्रेणीमयं लोचनै-र्नानारत्नमयैर्विमाननिवहैः संध्याम्बुदालीमयम् ।
कुर्वद्भिः कुरु-पाण्डवेयसमरव्यालोकनव्याकुलै-र्गान्धर्वा-मर-खेचरैर्वियदलंचक्रे तदानीं क्षणात् ॥ ५०३ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये दूतसोमकागमनप्रयाणकबलवर्णनो नाम द्वादशः सर्गः ॥ १२ ॥

# अथ त्रयोदशः सर्गः ।

अथैवं समयश्चक्रे, सैनिकैरुभयैरपि । नावहारे प्रहर्तव्यं, नापशस्त्रे न च स्त्रियाम् ॥ १ ॥ ततः प्रौढरथारूढौ, वृकोदर-किरीटिनौ । धृष्टद्युम्नस्य सेनान्य-श्चक्रतुश्चक्ररक्षिताम् ॥ २ ॥ अथ प्रतिपताकिन्या, भटानेकैकशः पुरः । सूतं पप्रच्छ पक्षीन्द्र-केतनं कपिकेतनः ॥ ३ ॥ ततः प्रत्येकमालोक्य, प्रतिपन्थिवरूथिनीम् । अभ्यधान्माधवो वाजि-केतुकीर्तन-पूर्वकम् ॥ ४ ॥ एष तालध्वजः कालः, साक्षादिव रणक्षितौ । सैरोहतुरगो गङ्गा-सूनुः सर्वकृपो द्विषाम् ॥ ५ ॥ द्रोणः शोणहयमतिद्राण-कीर्तिः कलशकेतनः । शोणसप्तिः समितसर्व-धुरीणधनुरूर्जितः ॥ ६ ॥ इतश्चायं कृपाचार्यो, ध्वजीकृतक-

१ प्रधन-युद्धम् । २ युद्धभूमेरन्यत्र शिबिरस्थाने । ( ३ पीयूषवर्णाश्वः । ) ४ रक्ताश्वः ।

मण्डलुः । धनुर्विद्यालताकन्द–श्चन्दनाभतुरङ्गमः ॥ ७ ॥ सैष दुर्योधनो धन्वी, नीलाश्वो नागकेतनः । भुञ्जानस्य भुवं
यस्य, शल्यन्ति त्वद्भुजाः परम् ॥ ८ ॥ दुःशासनोऽयमानाय–केतुः पीततुरङ्गमः । स्थितं यद्भयतो लीनै–र्दीनैर्मीनैरिवा-
रिभिः ॥ ९ ॥ वोल्लाहैश्च[2] हयैः सोऽयं, सौबलो गवलध्वजः[3] । भुवनेऽप्युत्तमर्णत्व–मस्यैव क्रूरिमाश्रियाम् ॥ १० ॥ अश्व-
त्थामायमस्थानं, वैरिवारभुवां भियाम् । द्रोणसूनुः किर्याहाश्वः, सिंहलाङ्गूलकेतनः ॥ ११ ॥ शल्यः सैष मनःशल्य-
मिव निःशेषविद्विषाम् । सीताकेतुर्द्विषत्केतु–रश्वैर्बन्धूकबन्धुरैः ॥ १२ ॥ विद्विषद्वारदुर्वार–रथः सोऽयं जयद्रथः । लोहिताश्वो
हतारातिचेतनः कोलकेतनः ॥ ॥ १३ ॥ असौ भूरिश्रवाः श्रव्य–कीर्तिकोलाहलः पुरः । पञ्चभद्रहरिः कामा–नुरूपो
यूपकेतनः ॥ १४ ॥ भगदत्तोऽयमात्तारि–कीर्तिरारोहकाग्रणीः । सुप्रतीकगजारूढः, प्रौढस्तम्बेरमध्वजः ॥ १५ ॥ एतेऽन्ये-
ऽपि सुशर्माद्या, भूभुजो भुजभूषणाः । तैस्तैः केतुभिरश्वैश्च, निरीक्ष्यन्तेऽभिलक्षिताः ॥ १६ ॥ एतावन्तो जयद्वीपं, यास्यतो
धर्मजन्मनः । अन्तरम्भोधयः सन्ति, पोतस्तु धनुरेव ते ॥ १७ ॥

इमामम्भोजनाभस्य, निशम्य विमलां गिरम् । न्यषीददुज्झितेष्वासो, रथक्रोडे कपिध्वजः ॥ १८ ॥ निजगाद च
गोविन्दं, गुरु–संबन्धि-बान्धवान् । हन्तुमुत्सहते नैतान्, मनागपि मनो मम ॥ १९ ॥ तत् किं राज्यं ? श्रियस्ताः काः ?,
किं च तत् पौरुषं मम ? । बीजानि यानि दायाद–गुरु-बन्धुवधैनसाम् ॥ २० ॥ मत्तनूवीरुधोऽमुष्याः, शश्वदावालतामगात् ।

१ आनायः–मत्स्यजालम् । (२ वोल्लाहः पाण्डुकेशरवालधिरश्वविशेषः ।) ३ महिषध्वजः । (४ रक्तवर्णाश्वः ।) ५ हल-
ध्वजः । ६ मुखादिषु पञ्चसु स्थानेषु भ्रमरचिह्नवान् पञ्चभद्रः । ७ 'विमना' प्रत्यन्तर० ।

यस्याङ्कः किं शरास्तस्मिन्, पतेयुर्मे पितामहे ? ॥ २१ ॥ अश्वत्थाम्नोऽपि नाऽऽम्नायं, तथा चापस्य यो ददौ । वात्सल्यान्मे यथाऽदत्त, तं गुरुं हन्मि किं रणे ? ॥ २२ ॥ बान्धवा बान्धवा एव, बाढमप्यपकारिणः । एतेष्वपि मदिष्वासः, मंद्वप्रपते शरान् ॥ २३ ॥

अथोजगार कंसारि-र्ननु वीरावतंस ! ते । कृपानवाङ्कुरः कोऽयं, क्षत्रधर्मविलक्षणः ? ॥ २४ ॥ गुरौ पितरि पुत्रे वा, बान्धवे वा भृतायुधं । वीतशङ्कं प्रहर्तव्य-मिति हि क्षत्रियव्रतम् ॥ २५ ॥ बान्धवा बान्धवास्ताव-द्यावत् परिभवन्ति न । पराभवकृतस्त्वूर्चैः, शीर्षच्छेद्या भुजावताम् ॥ २६ ॥

"वैश्वानरः करस्पर्शं, मृगेन्द्रः श्वापदस्वनम् । क्षत्रियश्च रिपुक्षेपं, न क्षमन्ते कदाचन ॥ २७ ॥"

दायादा अपि हन्तव्या, वहन्तो वैरिगृह्यताम् । "तमोगृह्यान्निगृह्णाति, ग्रहान् किं न ग्रहाग्रणीः ? " ॥ २८ ॥ भ्रातुर्निर्थकधानुष्के, गत्यपि त्वयि बान्धवे । यत् कृपन्ति द्विपो लक्ष्मीं, साऽपि ते महती त्रपा ॥ २९ ॥ तत् कृपां शिथिलीकृत्य, चापमादाय पाणिना । आधिपत्यं भुवो भूयः, स्वभ्रातुर्दातुमर्हसि ॥ ३० ॥ किं चामीषामुपेतोऽय-मन्तः स्वैरेव कर्मभिः । त्वं तु केवलमेतस्मिन्, हेतुमात्रं भविष्यसि ॥ ३१ ॥ अवश्यमव्यलीकस्य, वधः पापाय जायते । धनुष्मन्तो जिघांसन्ति, जिघांसन्तं पुनः परम् ॥ ३२ ॥ तद्गृहाण करे बाणान्, चापमारोपय द्रुतम् । घानिष्यन्तेऽरिभिः पश्य, पश्यतस्तव बान्धवाः ॥ ३३ ॥ इत्यादिष्टामुपश्रुत्य, विष्टरश्रवसो गिरम् । समुत्तस्थौ शनैः पार्थः, कार्मुकं कलयन् करे ॥ ३४ ॥

१ मधुपश्चम् । २ अनपराधिनः ।

उभयोरपि कौन्तेय–कौरवानीकयोस्ततः । धनूंषि धन्विनो घोर–निर्घोषाण्यध्यरोपयन् ॥ ३५ ॥ उत्तरङ्गयशोराशि–
क्षीरनीरनिधिध्वनीन् । ते विडम्बयतो दध्मु–र्जलजांश्च[1] निजान्निजान् ॥ ३६ ॥ तन्नादेन तदाचान्त, इवास्तमिव लम्भितः ।
प्राप्तवानिव विश्रान्तिं, रणतूर्यरवोऽभवत् ॥ ३७ ॥
अथोत्तीर्य रथात् पद्भ्या–मुपेत्य तपसः सुतः । भीष्मं कृपं च द्रोणं च, कल्याणीभक्तिरानमत् ॥ ३८ ॥ ततो
वैजयिकीं तां ता–मुच्चार्य मुहुराशिषम् । तेऽतिप्रह्वमभाषन्त, तं लज्जाजिह्मिताननाः ॥ ३९ ॥ वत्स ! त्वयि न वात्सल्य–मस्माकं
परिहीयते । तथैव भवतोऽद्यापि, भक्तिरप्यधिभूयसी ॥ ४० ॥ परं किं कुर्महे वीर !, कौरवैर्भूरिभक्तिभिः । गृहीताः स्म-
स्तथा नैतान्, यथा हातुं सहामहे ॥ ४१ ॥ अस्माभिर्जनताहास्यै–र्धनेन निधनप्रदः[2] । कृतः सुकृतहृद्दैन्य[3]–निकायः काय-
विक्रयः ॥ ४२ ॥ युधि युष्माकमेवायं, जयस्तु न हि संशयः । यत्रासीरे महावीरौ, न्यायधर्मौ विसर्पतः ॥ ४३ ॥ साक्षा-
द्विजयमूर्तिं ता–मादाय गुरुभारतीम् । आगत्य पुनरारोहत्, स्वं रथं स महारथः ॥ ४४ ॥
समीके मनसा साकं, विपक्षे सह चक्षुषा । इषूनैष्वासिकाश्चण्डान्, कोदण्डेष्वथ संदधुः ॥ ४५ ॥ दिक्कूलंकषनिर्घोष–
निर्भराशेषरोदसः । ततश्चक्रुरिष्वासा–नुभयेऽपि धनुर्भृतः ॥ ४६ ॥ नवविस्फूर्तिदोःकीर्ति–पटहोऽथ किरीटिनः । निपीतेतर-
विस्फारः, स्फारितश्रुतिवैशसः ॥ ४७ ॥ उल्ललास प्रतिस्वानैः, कामं तुमुलयन् दिशः । गाण्डीवकर्षणक्वाणः, प्राणप्रावासिको
द्विषाम् ॥ ४८ ॥ (युग्मम्) व्योम्नि व्योमचरस्त्रैणै–र्वीक्षितश्चकितेक्षणम् । जृम्भते स्म ततो वीर–दोःप्रियंकरणो रणः ॥ ४९ ॥

१ शङ्खान् । २ मरणप्रदः । ३ दैन्यनिवासः । ४ युद्धे ।

कृष्णार्जु-
नयोः
संलापः ।
युधिष्ठिरस्य
भीष्मादिषु
भक्तिः ।
युद्धारम्भः॥

पुञ्जयन्त इवाऽऽशान्तान्, संवृण्वन्त इवाम्बरम् । चेरुर्नासीरवीराणा–ग्मात्रभोजनिकाः शराः ॥ ५० ॥ पत्रिणां पत्रनिर्ह्रादैः, शिञ्जिनीनां च शिञ्जितैः । क्ष्वेडाभिर्दोर्भृतां चाभूत्, संभ्रमक्षुभितं जगत् ॥ ५१ ॥ निशातविशिखव्याजा–द्भूयस्यो रसना इव । मम्लं मर्मान् भटानत्तुं, प्रेतभर्तुर्जजृम्भिरे ॥ ५२ ॥ अन्योन्यास्फालनोद्भूत–स्फुलिङ्गैर्मार्गणा अपि । कोपादस्त्रमिवाग्नेय–मानेनुरितरेतरम् ॥ ५३ ॥ खेचरैः खेचराः खड्ग–पाणिभिः खड्गपाणयः । सादिभिः सादिनश्चाधो–रणैराधोरणा अपि ॥ ५४ ॥ रथारूढै रथारूढा, अप्युच्चैः समगंमत । द्वन्द्वयुद्धमिति स्वैरं, शौण्डीराणामवर्तत ॥ ५५ ॥ ( युग्मम् ) मा स्म रश्मीषवोऽभ्यापि, पतन् योधेष्विति ध्रुवम् । रेणवोऽतिरयन् भानुं, रथप्रधिभिरुत्थिताः ॥ ५६ ॥ बंहीयसि तदा पांशौ, रणोत्सवमिवेक्षितुम् । ललम्बेऽम्बरमभ्यर्णा–वभूवुः ककुभोऽखिलाः ॥ ५७ ॥ शराशरिपरित्रासा–दिव व्योम्नि पलायिताः । विद्याधरविमानान्त–गविशन् रणरेणवः ॥ ५८ ॥ निर्माय नूतनां सिद्ध–कामुका इव यामिनीम् । पांसवो दिक्पुरंध्रीणा–माकृपन्नम्बराञ्चलम् ॥ ५९ ॥ घनान्नौ(नो)पश्यबन्धून्नः, पङ्कयन्तितमाममी । इतीव शमयामासुः, पांसून् मदजलैर्गजाः ॥ ६० ॥ कर्णतालच्छलाताल–वृन्तैरिव मतङ्गजाः । रजः पराजयांचक्रुः, संपरायान्तरायकृत् ॥ ६१ ॥ दन्तिनामनिलोद्भूता, रेजुः सिन्दूररेणवः । अन्तःकोपकृशानस्य, ज्वाला बहिरिवोत्थिताः ॥ ६२ ॥ धावन्तः सिन्धुराः कामं, प्रतिस्तम्बेरमान् प्रति । उत्पातपवनोत्क्षिप्ताः, शैला इव चकासिरे ॥ ६३ ॥ वाजिनोऽप्याजिधौरेया, नवधोरितबन्धुराः । मनांसीवाश्ववाराणा–मश्वरूपेण

१ दिगन्तान । २ मत्यग्रानाम् । ३ "घनान्नः पश्यतां बन्धून्," "घनानौ पश्य बन्धून्नः" इति प्रतिद्वयपाठौ, मूलपाठश्च प्रतिद्वयेऽस्ति । ४ धोरितं–गतिविशेषोऽश्वस्य ।

रेजिरे ॥ ६४ ॥ रथानां पङ्क्तयः केतु-दुकूलैरनिलाकुलैः । चेरुराह्वयमानाना-मिव प्रतिचमूरथान् ॥ ६५ ॥ ऊर्ध्वजमूर्द्धजाः शौर्यात्, कोपारुणितचक्षुषः । वल्गन्ति स्म मुहुः काल-किंकरा इव पत्तयः ॥ ६६ ॥

बले द्रौपदिरेकस्मि-न्नन्यस्मिञ्जाह्नवीसुतः । सुरान् कुमारवद्योधान्, योधयामास वैरिभिः ॥ ६७ ॥ ततः शौर्यप्रवालानि, वीरव्रतनवाङ्कुराः । उत्साहकन्दलोद्भेदाः, क्षत्रधर्माग्रसूचयः ॥ ६८ ॥ उत्तरश्चाभिमन्युश्च, पाञ्चालाश्च रणाङ्गणम् । मुहुर्जगाहिरेऽन्येऽपि, कुमारा नवबाहवः ॥ ६९ ॥ (युग्मम्) पराञ्चश्चक्रिरे वीर-शौण्डीरास्तच्छिलीमुखैः । श्वापदा इव शार्दूल-वायुभिर्नासिकंधमैः ॥ ७० ॥ मद्रराजस्य शल्यस्य, वैराटेरुत्तरस्य च । जज्ञेऽथ समरो घोरः, स्यन्दनस्थगजस्थयोः ॥ ७१ ॥ श्रुतिनिर्भेदिनिर्ह्रादा-नभिद्योतयतो दिवम् । अशनीनिव जीमूतौ, तौ महेषूनमुञ्चताम् ॥ ७२ ॥ अम्बरेऽप्यमरस्त्रीणां, कुतूहलितयोर्दृशोः । मानसस्य च भीतस्य, तदाऽभूत् कलहो महान् ॥ ७३ ॥ उत्तरेणातिदुर्वारं, शरासारं वितन्वता । तिरश्चक्रे क्षणं शल्य-स्तोयदेनेव भानुमान् ॥ ७४ ॥ जितानेकाहवः शल्यो, ह्रादिन्येव[3] गिरिं हरिः । वैराटिं नवसंस्फोट-सक्तं शक्त्या न्यपातयत् ॥ ७५ ॥ मन्थानगिरिनिर्मथ्य-मानार्णवरवोपमः । आसीत् कौन्तेयसैन्येषु, हाकारतुमुलो रवः ॥ ७६ ॥ अथ प्रथितकर्माणो, धर्मसूनुधनुर्धराः । शरैः सेनानिभोगीनैः, कामं भीष्ममयोधयन् ॥ ७७ ॥ देवव्रतशरव्राताः, शत्रुसांतापिकास्ततः । दिशः सर्वाः क्षयाम्भोद-धारासारा इवास्तृणन् ॥ ७८ ॥

अथ केषांचिदक्षस्य, भङ्गो मानैः सहाभवत् । परेषामपतन् बाहु-सौष्ठवैः सह केतवः ॥ ७९ ॥ समं सत्त्वेन केषांचि-

(१ 'उद्धूतमूर्द्धजाः' इति युक्तं प्रतिभाति ।) २ विद्युतः । ३ वज्रेण । ४ भीष्मशरसमूहाः ।

द्रुमन्ते स्म धनुर्लताः । शिञ्जिन्यो जेन्यकाङ्क्षाभिः, साकं केषांचिदत्रुटन् ॥ ८० ॥ प्राणैः सार्धं पलायन्त, युग्याः केषांचन द्रुतम् । विक्रमैः सह चक्राणि, परेषां खण्डशोऽभवन् ॥ ८१ ॥ छिद्यन्ते स्म सहान्येषां, वर्माणि रणकर्मणा । सार्धं रोषेण केषांचि-द्ध्वजः सारथयोऽगमन् ॥ ८२ ॥ समं महिम्ना केषांचि-दातपत्राणि दुद्रुवुः । सहान्येषामहंकारैः, कूबराः कणशोऽभवन् ॥ ८३ ॥ पार्श्वानि जज्ञिरेऽन्येषां, शून्यानि मनसा समम् । ओजसा सह केषांचित्, सस्रंसे कार्मुकं करात् ॥ ८४ ॥ वल्गन्ति स्म समं कीर्त्या, केषामप्यश्रुगूर्मयः । भेजे भुजैः सहान्येषां, रथोत्सङ्गेऽस्त्ररिक्तताम् ॥ ८५ ॥ इत्थमुत्थापितानन्य-सामान्यशरकर्मणाम् । पाण्डवानां चमूश्चक्रे, गाङ्गेयेनाकुलाकुला ॥ ८६ ॥ धृष्टद्युम्नोऽपि दोर्द्युम्न-निम्नितारातिविक्रमः । शौरवीये बले भूपान्, संजहार सहस्रशः ॥ ८७ ॥ शैवलिन्यः कचै रक्तो-त्पलिन्यः सुभटाननैः । रथस्तोमैस्तरीमत्यो, मीनवत्यः करात्रिभिः ॥ ८८ ॥ सितच्छत्रैः कुमुद्वत्यो, वेतस्वत्यश्च केतुभिः । प्रावर्तन्त ततः कूलं-कषाः शोणितसिन्धवः ॥ ८९ ॥ (युग्मम्) उच्छृङ्खलं नर्तन्तीना-मसृग्जलधियोषिताम् । प्रहारपतिता मार्गे, शैलायन्ते स्म दन्तिनः ॥ ९० ॥ केतुदण्डमयी क्वापि, चापदण्डमयी कचित् । तोत्रंदण्डमयी क्वापि, छत्रदण्डमयी कचित् ॥ ९१ ॥ तुरङ्गाङ्गमयी क्वापि, कचिद्द्विपवपुर्मयी । शिरस्त्राणमयी क्वापि, रणक्षितिरवैक्षत ॥ ९२ ॥ (युग्मम्) प्रहारपाटवात् कामं, नभोऽङ्कमभिधावितैः । रक्तैः सक्तैरिवाताम्रो, भास्वानस्नमुपाययौ ॥ ९३ ॥ त्यजन्ननायुधं षण्ढं, योषितं पूर्वपोषितम् । वित्रस्तं कातरं दीनं, पराङ्मभयार्थिनम् ॥ ९४ ॥ व्योमान्तव्यापिभिस्तैक्ष्णैः, शरासारैररुंतुदैः । भीष्मः परःशतान् भूपा-नादिनान्तादपातयत् ॥ ९५ ॥ (युग्मम्) ततः स

१ युद्धकाङ्क्षाभिः । २ कूबरः—सारथिनिषदनस्थानम् । ३ द्युम्नं—बलम् । ४ याचमानानाम् । ५ तोत्रं—वज्रयष्टिः । ६ मृतप्रायम् ।

कृपया चाप–शिञ्जिनीमवरोपयन् । सैन्यद्वयेऽपि तत्काल–मवहारमकारयत् ॥ ९६ ॥ अथोत्तरवधात् खेद–मेदुराः पाण्डु-सूनवः । धार्तराष्ट्रास्तु सानन्दाः, स्वं स्वं शिबिरमन्वगुः ॥ ९७ ॥

विराटदयितां रात्रौ, पुत्रशोकार्तिविक्लवाम् । सुदेष्णां निर्यदुष्णाश्रुं, धर्मभूरित्यसान्त्वयत् ॥ ९८ ॥ कल्याणि ! वीरकान्ताऽसि, शुचा कस्तव संस्तवः ? । ननु वत्सेन तेनाद्य, वीरसूरसि निर्मिता ॥ ९९ ॥ तस्य पापीयसो मद्र–भूभर्तुरुदरादहम् । पृषत्कैश्चेन्न कर्षामि, तवाङ्गरुहमुत्तरम् ॥ १०० ॥ तदाऽयं समरारम्भो, मा स्म भून्मे फलेग्रहिः । कदाचिदपि मन्येथा, मा च मां सत्यसंगरम् ॥ १०१ ॥ (युग्मम्) एवमाश्वासिता धर्म–सूनुना साऽमुचच्छुचम् । " उदात्तप्रकृतीनां हि, शोकः स्तोकतरस्थितिः " ॥ १०२ ॥

तथैव विशिखव्रातै–र्नृपानीकान्यनेकशः । भीष्मो निघ्नन् घृणानिघ्नः, सप्ताहान्यत्यवाहयत् ॥ १०३ ॥ उदारधीः सदाराय, धृतराष्ट्राय संजयः । नित्यमावेदयांचक्रे, निशि सांग्रामिकीः कथाः ॥ १०४ ॥ धर्मात्मजोऽपि वात्सल्या–न्निजानां दक्षिणेर्मणाम् । निर्ममे स्वोर्मिकावार्भिः, प्रत्यहं व्रणरोहणम् ॥ १०५ ॥ अष्टमेऽपि तथैवाह्नि, युध्यमाने पितामहे । शमारेभिरे योद्धुं, पाण्डवानीकभूभुजः ॥ १०६ ॥ निषङ्गे योऽगमत् पाणि–स्तत्रैव तमकीलयन् । यश्चक्रे शरसंधानं, चिच्छिदुस्तस्य चाङ्गुलीः ॥ १०७ ॥ ज्यां करो योऽकृषत्तं तु, समं कर्णेन विव्यधुः । चक्षुरैक्षत यल्लक्ष्य–माकर्षंस्तस्य तारकाम् ॥ १०८ ॥ स्थैर्यगर्वं च मूर्च्छाया, मनागपि न सेहिरे । किं पुनर्ब्रूमहे छेदे, कार्मुकस्य गुणस्य च ॥ १०९ ॥ एवं

१ युद्धस्थानादन्यस्थाने नयनम् । २ विराटपुत्रवधात् । ३ बाणैः । ४ निर्दयः ।

कुरुवरूथिन्या, धानुर्दण्डिकमण्डलीम् । कुर्वते स्म निरुच्छ्वासां, कौन्तेयवलधन्विनः ॥ ११० ॥ (चतुर्भिः कलापकम् ।)
दोर्भृतः सर्वतः केचि-दाचिताङ्गाः शिलीमुखैः । शल्याकुलशरीरस्य, श्वाविधो दधिरे तुलाम् ॥ १११ ॥ मज्जत्तलिननाराच-मण्डलव्याप्तमौलयः । बभुर्युद्धरसोत्तब्ध-कुन्तला इव केचन ॥ ११२ ॥ बाणव्रणितसर्वाङ्गं, कुरूणां तद्बलं बभौ । उद्बुद्धमिव बन्धूक-वनं जङ्गमतां गतम ॥ ११३ ॥ तदानीं धन्विनां स्वैर-मुच्छलद्भिः शरोत्करैः । क्षुण्णः प्रेक्षकवन्मन्ये, वासरोऽप्यन्तमासदत् ॥ ११४ ॥ हतवत्यपि गाङ्गेये, महीपालान् सहस्रशः । हताभ्यधिकभूपालाः, सानन्दाः पाण्डुनन्दनाः ॥ ११५ ॥ कौरवाः पुनरुद्वेल-वैमनस्यमहार्णवाः । अवहारे कृते जग्मुः, स्कन्धावारं निजं निजम् ॥ ११६ ॥ (युग्मम्)
धार्तराष्ट्रस्ततो रात्रौ, गाङ्गायनिमुपागमत् । प्रणिपत्योपविश्याग्रे, सोपालम्भमदोऽवदत् ॥ ११७ ॥ तात! स्पष्टमवष्टम्भा-त्तव कार्मुककर्मणाम् । सर्वः पार्थविघातार्थ-मारम्भोऽयं ममाभवत् ॥ ११८ ॥ को नाम हिममुच्छेत्तुं, सूरोऽपि सुरभिं विना ? । कीदृशः काननं दग्धु-मग्निरप्यनिलादृते ? ॥ ११९ ॥ त्वं तु कौन्तेयदाक्षिण्यात्, संगरे तद्धनुर्धरैः । नित्यमास्माकसैन्यानाम्, हन्यमानानुपेक्षसे ॥ १२० ॥ तेभ्योऽस्मदहितेभ्यश्चेद्, दातुं राज्यं तवेप्सितम् । तद्व्यापादय मां तात!, मद्यः स्वेनैव पाणिना ॥ १२१ ॥ इत्यार्तभाषिणं भीष्मः, कौरवाधीशमभ्यधात् । वत्स! तुच्छोचितः कोऽय-मुद्गारोऽद्य गिरां तव ? ॥ १२२ ॥ ज्ञातेयान्मे यदप्येत-चेतस्तेष्वपि वत्सलम् । तथापि त्वयि विक्रीतं, जीवितव्यमिदं मया ॥ १२३ ॥ नात्मप्रयोजन एवेदं, व्ययनीयमसंशयम् । योद्धव्यमनुरोधं च, विमुच्य सह पाण्डवैः ॥ १२४ ॥ परं कपिध्वजो यत्र, करे

१ भाविन-भाषायां 'शाहुडी' । २ वसन्तम् । ३ ज्ञातिसम्बन्धात् । ४ अनुमरणम् ।

धारयते धनुः । जयः सांशयिकस्तस्मि-न्नवश्यं समराङ्गणे ॥ १२५ ॥ तथाप्याजन्मतोऽभ्यस्त-निस्तुषैश्चापकर्मभिः । तात ! प्रातः करिष्यामि, निःशौण्डीरां वसुंधराम् ॥ १२६ ॥ एवमुन्मीलितप्रीति-र्जाह्नवीतनुजन्मना । जगाम निजमावास-मुत्थाय कुरुपुङ्गवः ॥ १२७ ॥

नवमेऽह्नि ततः कोपात्, कौन्तेयानीकिनीभटान् । मथ्नाति स्म शरैर्भीष्मः, करैर्ध्वान्तानिवांशुमान् ॥ १२८ ॥ करेऽथ कार्मुकं कर्तु-मपि केचिन्न सेहिरे । शिञ्जिनीमटनिप्रान्त-मानेतुं तु कथैव का? ॥ १२९ ॥ केचन ध्वजदण्डस्य, लीयन्ते स्मान्तरे मुहुः । विशन्ति स्म वरूथान्त-र्नीचकैर्भूय केचन ॥ १३० ॥ पान्ति स्म केचिदात्मान-मन्तराकृत्य सारथिम् । अकीर्तिमुररीकृत्य, मुमुचुः केचिदाहवम् ॥ १३१ ॥ पश्यति स्म तदा पश्चा-द्भागानेव पितामहः । वैरिणां च शराणां च, नैव केषांचिदाननम् ॥ १३२ ॥ पार्थीयपार्थिवान् भीष्मो, हन्ति स्मैकोऽप्यनेकशः । नादेयानिव कल्लोलान्, कल्लोलः सलिलेशितुः ॥ १३३ ॥ बाणवर्षिणि गाङ्गेये, पाण्डवीया धनुर्भृतः । निर्जीवैर्धन्वभिः सार्धं, निर्जीवा एव जज्ञिरे ॥ १३४ ॥ अथाताम्राम्बुदव्याजा-च्छोणितोर्दकिलां दिवम् । कुर्वन्नेवनिसंहर्षा-दिवाभूद्दिवसात्ययः ॥ १३५ ॥ विकाशश्रीस्तदा लेभे, कौरवैः कैरवैरिव । प्राप्यते स्म च संकोचः पाण्डवैः पङ्कजैरिव ॥ १३६ ॥ उभे अपि पताकिन्यौ, वेत्रिवारितसंगरे । सायंकाले ततः स्वस्व-निवासानुपजग्मतुः ॥ १३७ ॥

समाहृत्य हृषीकेश-मुखान् सांसदिकांस्ततः । इदमालोचयामास, क्षपायां तपसः सुतः ॥ १३८ ॥ जाह्नवीतनयो

१ अटनिः-धनुरग्रभागः । २ रथास्तरणान्तः । ३ प्रत्यञ्चारहितैः । ४ उदकिलं-सजलम् । ५ 'त्रेवातिसं०' प्रत्य० ।

गात्र-द्धुनोति प्रधने धनुः । दूरेऽस्तु विजयस्ताव-जीविताशाऽपि नश्वरी ॥ १३९ ॥ संवर्मयति हि ध्वान्त-ध्वजिन्यां नव-
नीरदे । कः प्रकाशस्तुपारांशो-रस्तित्वेऽपि हि संशयः ॥१४०॥ तदैदंकालिकं किंचित्, कर्तव्यमुपदिश्यताम् । संशय्य तिष्ठते
यस्मा-द्युग्मामेव मनो मम ॥ १४१ ॥ ततः कंसान्तकोऽवोच-न्ननु मन्दाकिनीसुतम् । संग्रामेऽद्यतने कामं, संहरन्तं
यगभवान् ॥ १४२ ॥ स्वयमेव क्रुधा हन्तुं, वाहुरुत्सहते स्म मे । किं पुनः शपथैस्तैस्तै, रुरोध प्लवगध्वजः ॥ १४३ ॥
( युग्मम् ) इदानीमपि निःशङ्क-मनुजानीथ मां यदि । करोमि तदिदं भ्रात-र्निर्गाङ्गेयमिलातलम् ॥ १४४ ॥ व्याजहाराथ
भूनाथो, हरे! नापकरे त्वयि । रणतन्द्रालुरिन्द्रोऽपि, गङ्गासूनोस्तु का कथा ? ॥ १४५ ॥ कीर्तयः किं तु गान्धारी-सुत-
सर्गार्थोद्भवाः । प्रीतेन भवताऽस्मभ्यं, दक्षिणीचक्रिरे पुरा ॥ १४६ ॥ गाङ्गेयस्याङ्कपल्यङ्क-लालितौ बालकालतः । वधं
विधित्सतः साक्षात्, कथं भीम-किरीटिनौ ? ॥ १४७॥ तदावेदय गोविन्द !, किंचिदौपयिकान्तरम् । येन जीयेत विश्वैक-
रथी भागीरथीसुतः ॥१४८॥ अथाह स्म हरिस्तर्हि, ममेदं श्रूयतां वचः। इदमाबालगोपालं, तावदस्त्येव विश्रुतम् ॥१४९॥
स्त्रियां पूर्वस्त्रियां दीने, भीते पण्ढे निरायुधे । यद्गाङ्गेयस्य समीकेषु, न पतन्ति पतत्रिणः ॥ १५० ॥ तत् भ्रातर्द्रुपदो-
र्वीश-सुतं पण्ढं शिखण्डिनम् । पुरस्कृत्योपतिष्ठध्वं, समराङ्गणसीमनि ॥ १५१ ॥ ततस्तस्मिन्नमुञ्चन्तं, नाराचनिचयान्
रणे । स हन्यान्निशितैर्बाणै-रौपकर्णिककर्पणैः ॥ १५२ ॥ इत्युपायं परिज्ञाय, देशितं केशिवैरिणा । सर्वे निजं निजं स्थानं,
ययुरुत्थाय हर्षुलाः ॥ १५३ ॥

१ अन्धकाररूपसेनायाम् ।

अथ प्रातः पुरोधाय, तेऽपि चण्डं शिखण्डिनम् । संग्रामाग्रमुपागच्छन्, गाङ्गेयवधवाञ्छया ॥ १५४॥ बभौ भीम-किरीटिभ्यां, गताभ्यां चक्ररक्षिताम् । शिखण्डी चण्डरश्मी-न्दु-मध्ये बुध इव स्थितः ॥ १५५ ॥ मिथः सायकसंपात-खात्कारमुखराम्बरम् । आत्यन्तिकमभूद्युद्ध-मुभयोरप्यनीकयोः ॥ १५६ ॥ द्विपानामपनीतास्या-वरणानामपि क्षणात् । पांसवः स्यन्दनोद्धूता, मुखप्रच्छदतां ययुः ॥ १५७ ॥ अन्योऽन्यरदनाघात-जातैः कार्शानवैः[१] कणैः । अयुध्यन्तान्तरं तेजो, वमन्त इव दन्तिनः ॥ १५८ ॥ दन्तिनो दन्तदम्भोलि-संघट्टघटितैर्मिथः । प्लुष्येते स्म शिखिज्वाला-कलापैरास्य-कङ्कटौ[२] ॥ १५९ ॥ केनापि करिणोत्क्षिप्ते, रथाग्रे पृथिवीं ययौ । रथी ससारथी रथ्या, योक्त्रबद्धा ललम्बिरे ॥ १६० ॥ कुन्तैरूर्ध्वमुद-स्ताङ्गाः, सादिभिः प्रतिसादिनः । वंशाग्रगतशैलूष-केलिमाकलयन् मुहुः ॥ १६१ ॥ न वार्मिणैर्न रथ्याभि-र्नाश्वीयैर्न च हास्तिकैः । रेवापूर इव क्वापि, कोऽपि सादी न चस्खले ॥ १६२ ॥ एकैव विविदे मुष्टिः, कर्णजाहविगाहिनी । भटैः पतद्भिः केषांचि-दिषुमोक्षस्तु लक्षशः ॥ १६३ ॥ कस्यापि रथिनः क्रोधा-द्धावतोऽनुविरोधिनम् । आसीदुरुत्तरा रक्त-निमग्नैवान्त-र्गला ॥ १६४ ॥ कांश्चिज्जर्जरयन् कांश्चित्, समरादपसारयन् । कांश्चित् पिंपन्निषुव्राते-र्युध्यते स्म पितामहः ॥ १६५ ॥ न तस्य भेजिरे वैरि-श्रेणयः संमुखीनताम् । तरूणामापराह्णिक्य-श्छाया इव विवस्वतः ॥ १६६ ॥ केचिद्द्विषंतपैर्भीष्म-सायकैराकुलीकृताः । क्षिपन्ति स्म परासूनां, दन्तिनामन्तरे रथान् ॥ १६७ ॥ अनीके प्रत्यनीकानां, कामं विमुखतां गते । भीष्मस्य समरेऽतिष्ठ-दव्यापारः करश्चिरम् ॥ १६८ ॥ राकेन्दुमन्डलं भानु-बिम्बस्येवाम्बरे ततः । शिखण्डिस्यन्दनो

१ अग्निसंबन्धिभिः । २ कङ्कटः-कवचः ।

भीष्म-रथस्याभूत् पुरो रणे ॥ १६९ ॥ शिखण्डिनमनूद्दण्डं, धावन्तो धन्विनः परे । वृकोदर-किरीटिभ्यां, नाराचैः
प्रतिचक्रिरे ॥ १७० ॥ पुरोऽवलोक्य कोदण्ड-चण्डपाणिं शिखण्डिनम् । बभूव रणसंरम्भ-मन्दो मन्दाकिनीसुतः
॥ १७१ ॥ कोटिशो भटसंभार-संहारविहितश्रमम् । धनुर्विश्रमयांचक्रे, कृपयेव पितामहः ॥ १७२ ॥ हैमन्तिक इवादित्यो,
मन्दमन्द इवानलः । जरीव हरिणाराति-र्गाङ्गेयो ददृशे तदा ॥ १७३ ॥ ततः शिखण्डिना काण्डै-र्भीष्मः स्वैरमता-
ड्यत । गजो गम्भीरवेदीव, न किंचित्तु विवेद सः ॥ १७४ ॥ एतस्मिन्नन्तरे दृष्ट्वा, धृष्टद्युम्नादयोऽपि तम् । सर्वे सर्वाभि-
सारेण, शरासारैरताडयन् ॥ १७५ ॥ प्रहारदारुणानेतान्[1], वीक्ष्य गङ्गासुतस्ततः । कोपकम्प्राधरश्चापे, रोपमारोपयत्[2] पुनः
॥ १७६ ॥ तद्रक्षिणौ दुर्यो-धन-दुःशासनावपि । समं ववृषतुर्वेगा-द्बाणैः प्राणैकभिक्षुभिः ॥ १७७ ॥ न दिशो
विदिशो नापि, नाकाशं न च काश्यपी । आलोकि केवलं लोकैः, शराद्वैतमयं जगत् ॥ १७८ ॥ ससंभ्रममथाजल्पत्, कपि-
केतुं कृपाकृपिः । कथं वृथा पृथासूनो ! सैन्यक्षयमुपेक्षसे ? ॥ १७९ ॥ शिखण्डिना तिरोधाना-न्मानयित्वा त्रपामपि ।
तत् कुरुश्रीलतामूलं, भीष्ममुन्मूलय स्वयम् ॥ १८० ॥ कथंचिदमुमादृत्य, निदेशं मञ्जुकेशिनः । शिखण्डिरथमा-
रोहत्, ततः प्लवगकेतनः ॥ १८१ ॥ शिखण्डिवपुषा गुप्त-मूर्तिनाऽथ किरीटिना । इष्वासश्चकृपे कर्ण-प्रान्तविश्रान्त-
मुष्टिना ॥ १८२ ॥ अनिमेषा अपि दृशः, समुन्मेषयतां भृशम् । बभूव रभसोत्तालो, देवानां तुमुलस्तदा ॥ १८३ ॥ मार्त-
ण्डमण्डलं पूर्वे-वार्षिका इव वारिदाः । तिरयन्तोऽन्तरा भीष्म-रथं दुर्योधनादयः ॥ १८४ ॥ वातूलैरिव[3] दिङ्मूल-केलि-

१ 'प्रहारान् दारु०' प्रतिद्वय० । २ बाणम् । ३ वायुसमूहैः ।

स्तदा सूतमवोचत ॥१८८॥ कामं मर्माविधो वर्म-च्छेदकर्मणि कर्मठाः। वेगादच्छिन्नसंतान-पातिनः सरलक्रियाः ॥१८९॥
अलक्ष्यगतयो लक्ष्य-भेदमेदुरितौजसः। कुर्वन्तो विद्युदुद्द्योत-लेखां पुङ्खैर्हिरण्मयैः ॥ १९० ॥ सुरा इव सुपर्वाणः, सत्फलाः
शुभकर्मवत्। अवश्यमर्जुनस्यैते, विशिखा न शिखण्डिनः ॥ १९१ ॥ (त्रिभिर्विशेषकम्) वत्सस्यास्य धनुर्विद्या-मद्या-
नुभवतः स्वयम्। जीवतीवान्तरात्माऽयं, मृत्युकोटिगतोऽपि मे ॥ १९२ ॥ अत्रान्तरेऽन्तरिक्षान्त-रुल्लास सरस्वती। मा
स विस्मर गाङ्गेय!, गिरं गुरुसमीरिताम् ॥ १९३ ॥
अथ दुर्योधनोऽभ्येत्य, भीष्मं पप्रच्छ विस्मितः। कामेते खेचरास्तात!, स्मरयन्ति गुरोर्गिरम् ? ॥ १९४ ॥ अथ
गाङ्गायनिः प्राह, मातामहगृहे वसन्। चारणश्रमणान् बाल्ये, मात्रा सममनंसिषम् ॥ १९५ ॥ विशुद्धं साधुधर्मं च, श्राद्ध-
धर्मं च मे पुरः। व्याकुर्वन् कुरुराजेन्द्र!, मुनीन्द्रास्ते कृपालवः ॥ १९६ ॥ धर्मस्योपनिषत्तेभ्यो, बभूव हृदयंगमा। तथा
मम यथा कामं, कामोऽभून्नार्थकामयोः ॥१९७॥ ततः प्रभृति पश्यामि, भूतसंघातमात्मवत्। वाचं वाचंयम इव, ब्रुवे सत्य-
पवित्रिताम् ॥ १९८ ॥ परवित्तेषु मे चित्तं, सर्वथाऽभूत् पराङ्मुखम्। अजिह्मब्रह्ममनसः, सर्वं स्त्रैणं तृणं मम ॥ १९९ ॥

१ विशीर्णताम्।

अकार्यं प्रियमनोपः, परिग्रहविनिग्रहम् । किं नाम दुष्करं जैन-धर्मवासितचेतसाम् ? ॥ २०० ॥ इत्थंकारमनाचार-विमुखो धर्मसंमुखः । सर्वेभ्योऽप्याश्रवेभ्यः श्रुतकधीः ॥ २०१ ॥ अर्हत्पूजा-गुरूपास्ति-तपः-स्वाध्याय-संयमैः । दानेन न ग्रहन्कर्मा, सद्धर्माभ्यसमन्वहम् ॥ २०२ ॥ सर्वसङ्गपरित्याग-मङ्गीकर्तुमना अपि । कलाः पवनवेगेन, मातुलेनास्मि शिक्षितः ॥ २०३ ॥

एकदा तु त्रिकालज्ञं, मुनिचन्द्राभिधं मुनिम् । मातामहेन सहितो, गतवानस्मि वन्दितुम् ॥ २०४ ॥ आमाद्यावसरं मधः, कलयन् पुलकाङ्कुरान् । सर्वप्रत्यक्षमप्राक्षं, तं गुरुं रचिताञ्जलिः ॥ २०५ ॥ मुनीन्द्र ! परमानन्द-मूलकन्द ! कदा मम । मोहान्धकारसविता, भविता सर्वसंयमः ? ॥ २०६ ॥ सोऽप्याख्यद्भद्र ! या माता, नवचन्द्रोज्ज्वला गुणैः । सती सत्यवती नाम, भविष्यति यवीयसी ॥ २०७ ॥ तदात्मजानुरोधेन, स्थातासि सुचिरं गृहे । "परार्थ एव हि स्वार्थः, प्रथते पृथुचेतसाम्" ॥२०८॥ पितुः प्रीत्यर्थमाकालं, कलयन् ब्रह्मचारिताम् । देवव्रत इति ख्यातिं, गृहिधर्मेऽपि लप्स्यसे ॥२०९॥ वंशीयोमहिमा भूत्वा, क्रमाद्गोत्रपितामहः । आर्तस्य धार्तराष्ट्रस्य, रणेनानृण्यमीयिवान् ॥ २१० ॥ ममान्तेवासिनो भद्र-गुप्ताचार्यस्य संनिधौ । अथ श्रद्धालुरुद्धृत्य, भावशल्यानि सर्वतः ॥ २११ ॥ तां दशां द्रव्यशल्योत्थां, सहमानोऽतिदुःसहाम् । मासमात्रावशेषायुः, प्रयतः प्रव्रजिष्यसि ॥ २१२ ॥ (त्रिभिर्विशेषकम्) विधायाऽऽराधनां सम्य-क्साम्यनिर्मग्नमानसः । उपगन्तासि सर्वान्ते, सुखी स्वर्लोकमच्युतम् ॥ २१३ ॥ इत्याख्याय यथाख्यात-चरित्रोऽन्यत्र सोऽगमत् । अहमप्य-

१ गतमहिमा । २ विनाशिनः ।

न्वभूवं त-त्प्रतिपादितमादितः ॥२१४॥ ततोऽमी खेचरा वत्स !, धर्मसब्रह्मचारिणः। दक्षाः सवयसो दीक्षा-समयं स्मारयन्ति मे ॥ २१५ ॥ एवमावेदयन्नेव, पार्थीयैः[1] परिपूरितः। प्रतिरोम शरस्तोमै, रोमाञ्चनिचयैरिव ॥ २१६ ॥ कराद्गलितकोदण्डः, संमीलितविलोचनः। निष्पपात रथक्रोडे, मूर्च्छालस्तालकेतनः ॥ २१७ ॥ ( युग्मम् )

अवस्थादौस्थ्यमेतस्य, मन्ये वीक्षितुमक्षमः। विमुक्तवसुसर्वस्वः, प्रापद्द्वीपान्तरं रविः ॥ २१८ ॥ तमस्तोमनिरस्ताशौ, नक्षत्रोदयशालिनौ। कौरव्यश्च प्रदोषश्च, द्वावप्यभवतां तदा ॥ २१९ ॥ अवहारस्ततस्तात !, तातेति परिदेविभिः। शोकान्धकारविधुरै-श्चक्रे कौरव-पाण्डवैः ॥ २२० ॥ उत्पाद्य पुरतो भद्र-गुप्ताचार्यैरलंकृतम्। भीष्मो निन्ये विनीतैस्तै-रासन्नगिरिकन्दरम् ॥ २२१ ॥ तं वृत्तान्तमुपश्रुत्य, धृतराष्ट्रोऽपि संजयात्। तद्दत्तबाहुरुद्बाष्पो, भीष्मान्तिकमुपाययौ ॥ २२२ ॥ कौरवैः पाण्डवेयैश्च, साश्रुनेत्रैः पितामहः। तेन तेनोपचारेण, पुनः प्राप्यत चेतनाम् ॥ २२३ ॥ सुधारसमयीमेष, दृशं नप्तृमुखेषु च। न्यक्षीविशत्तुपारांशुः, कौमुदीं[2] कुमुदेष्विव ॥ २२४ ॥ तेषामुत्फुल्लनेत्राणि, तदानीं वदनानि च। भेजुरुद्भ्रान्तभृङ्गाणि, विकाशं कैरवाणि च ॥ २२५ ॥ मन्दं मन्दध्वनिर्नप्तृ-नथ प्राह पितामहः। वत्सा ! मे बाधते बाढं, निराधारा शिरोधरा ॥ २२६ ॥ ततः सुखनिधानानि, हंसतूलमयानि ते। उपादायोपधानानि, विनयादुपतस्थिरे ॥ २२७ ॥ निषिध्य मूर्द्धकम्पेन, तानक्षाय पितामहः। अर्जुनाभर्जुने दृष्टिं, न्यस्यति स्म स्मिताननः ॥ २२८ ॥ विज्ञाततदभिप्रायश्चापमारोप्य फाल्गुनः। कङ्कपत्रत्रयीं[3] तस्य, न्यधादधिशिरोधरम् ॥ २२९ ॥ अदृष्टे वैरिभिः पृष्टे, साधु साध्वित्युदीरयन्।

१ पृथापुत्रसंबन्धिभिः । २ उज्ज्वलाम् । ३ बाणत्रयम् ।

ज्याकृष्टिकृष्टिना सोऽथ, पार्थं पस्पर्श, पाणिना ॥ २३० ॥

पितामहं प्रणम्याथ, जजल्प तपसः सुतः। शल्यान्येतानि ते तात!, मनो दुन्वन्ति नो भृशम् ॥ २३१ ॥ तदादिश यथेमानि, नीरन्ध्राण्युद्धराम्यहम्। करोमि चोर्मिकाद्याभिः, सर्वाङ्गव्रणरोहणम् ॥ २३२ ऊर्मिकायाः पुरा ह्यस्याः, स्फूर्तिम्लानेन पाण्डुना। कीर्तिता मे मयाऽपीय-मीक्षांचक्रे च लक्षशः ॥ २३३ ॥ किं चाकृत्यकरैरेभिः, पुत्रैरिव पतत्रिभिः। मत्ते पार्थः स्वनामाङ्क-त्रपावामनमाननम् ॥ २३४ ॥ ततः प्रसीद सीदन्तं, धिनु तात! धनंजयम्। अनुज्ञामधुना देहि, शल्योद्धारविधौ मम ॥ २३५ ॥ अथ धर्मात्मजं भीष्मः, सप्रसादमभाषत। नैतानि वत्स! शल्यानि, व्यथयन्ति मनागपि ॥ २३६ ॥ अरुंतुदानि मे सन्ति, भावशल्यानि यानि तु। सुखमेवोद्धरिष्यन्ति, तान्येते गुरवोऽधुना ॥ २३७ ॥ देहमेवेदमात्मेति, मतिर्येषां व्यवस्थिता। तेषामेव भवेद्देहे, द्रव्यशल्यैरुपद्रवः ॥ २३८ ॥ ममामूनि पुनर्वत्स!, भिन्दानानि वक्षिविपुः। दुष्कर्ममर्मनिर्भेदे, भजन्ते सहकारिताम् ॥ २३९ ॥

विलम्ब्याथ क्षणं भीष्मः, पश्यतः कंसविद्विषः। श्लिष्यन्निव दृशाऽवादीत्, पुरः कौरव-पाण्डवान् ॥ २४० ॥ मामप्यन्यमिनोदन्या, वत्साः! क्रमयतेऽधिकम्। ततः पानीयमानीय, ममैतां हर्तुमर्हथ ॥ २४१ ॥ इत्याकर्ण्य सकर्णास्ते, स्वच्छं सुरभि शीतलम्। नीरमानाययामासु-र्मूर्तं मन इवात्मनः ॥ २४२ ॥ कृत्वा स्वर्णमये पात्रे, पुरस्तैरुपढौकितम्। दृष्ट्वा निवार्य तन्नारि, पुनरूचे पितामहः ॥ २४३ ॥ यत्तिर्यग्भिरनुच्छिष्ट-मस्पृष्टं च रवेः करैः। मच्चेतस्तत्पयः पातुं, वहति

१ शल्यसमाकर्षणपण्डितेन। २ सहायताम्। ३ पीडयति।

स्पृहयालुताम् ॥ २४४ ॥ ततस्ते चिन्तयामासु–रीदृगम्भोऽतिदुर्लभम् । यतस्तन्मानसा-[1]च्छोद–प्रभृतिष्वप्यसंभवि ॥ २४५ ॥
इति किंकार्यतामूढान्, बाढमालोक्य तांस्तदा । भीष्मोऽक्षिपद्दृशं पार्थ–मुखे पीयूषवर्षिणीम् ॥ २४६ ॥ विज्ञाय तदभिप्रायं,
सोऽपि शस्त्रास्त्रकोविदः । मण्डलीकृत्य कोदण्डं, संदधे वारुणं शरम् ॥ २४७ ॥ उद्यदानन्दगोविन्द–दृष्टिपातपवित्रितः ।
यदैवा[2]पातयत् पार्थ–स्तद्विच्छेदमधोमुखम् ॥ २४८ ॥ स्वच्छां तदैव तत्कीर्ति–त्रिस्रोतः[3]स्रोतसः सखीम् । सर्वेऽप्यैक्षन्त
निर्यान्तीं, वारिधारां धरातलात् ॥ २४९ ॥ (युग्मम्) पाण्डवानां कुरूणां च, दृष्टिपातैः सितासितैः । जाह्नवी-यमुना-
सङ्ग–भङ्गिमङ्गीचकार सा ॥ २५० ॥ ततस्तत्तोयमादाय, किरीटी भीष्ममभ्यगात् । सोऽपि नेत्रपुटैः पीत्वा, प्रीतः पार्थ-
मभाषत ॥ २५१ ॥ वारीदमानयन्नेव, तृष्णां त्वं वत्स ! मेऽच्छिदः । रोचिरुल्लासयन्नेव, कोकस्येव शुचं रविः ॥ २५२ ॥
तन्निषीद सुखं वत्स !, ज्यायसो भ्रातुरन्तिके । एभिश्च विजयी भूयाः, स्वगुणैर्भुवनातिगैः ॥ २५३ ॥
दुर्योधनमथोवाच, हितां वाचं पितामहः । पार्थाव[4]दानतस्तस्य, म्लानमुन्नमयन्मुखम् ॥ २५४ ॥ अस्मिन् कुरुकुले
जन्म, वत्स ! पुण्यैरवाप्यते । अनुत्तरेषु संभूति–र्न सम्यग्दर्शनं विना ॥ २५५ ॥ एतत्कुलोचिता एव, विस्फुरन्ति गुणा-
स्त्वयि । सुरसिन्धुसरोजानां, व्यभिचारि न सौरभम् ॥ २५६ ॥ तथापि वत्स ! वात्सल्या–दिदानीं किंचिदुच्यसे । विनयं
च नयं चापि, गुणावेतौ पुरस्कुरु ॥ २५७ ॥ विनयो विनयार्हेषु, कीर्तिमावहते पराम् । रामे नम्रस्य सौमित्रेः, पश्या-
द्यापि कियद्यशः ? ॥ २५८ ॥ क्रमानतिक्रमः कस्य, न स्यादुदयहेतवे ? । क्रमेण क्रामतां पश्य, ज्योतिषामुदयो

१ अच्छोदं–सरोविशेषः । २ 'वाप्रथयत्' प्रत्यन्तर० । ३ गङ्गाप्रवाहस्य । ४ अर्जुनपराक्रमात् ।

धुरः ॥ २५९ ॥ तत्त्वार्पयितुं न्याय्यं, राज्यं ज्येष्ठे युधिष्ठिरे । स्वयं पूर्वमिव स्थातु-मिन्द्रप्रस्थे तु युज्यते ॥ २६० ॥ उन्मार्गं परतः किंचि-ज्जनमामन्त्रवर्तिनम् । कौरवेश्वरमेकान्ते, गाङ्गेयः पुनरभ्यधात् ॥ २६१ ॥ वत्स ! षाड्गुण्यचिन्तायामपि संधिस्तवोचितः । विग्रहं हि निषिध्यन्ति, बुधाः सार्धं बलाधिकैः ॥ २६२ ॥ तेषु तेषु समीकेषु, शैशवात् प्रभृति त्वया । यत्कृत्वः समालोकि, बलं भीम-किरीटिनोः ॥ २६३ ॥ नीतिमान्नतिमानेव, संजायेत बलीयसि । धावमाने धुनीपूरे, नमन्नन्दति वेतसः ॥ २६४ ॥ व्याजेन दर्शितेदानीं, पार्थचापकला तव । ममोपधान-पानेच्छा, त्यक्तदेहस्य का पुनः ? ॥ २६५ ॥ तदद्यापि तपःसूनोः, श्रियं प्रत्यर्पय स्वयम् । रक्ष रक्ष विशेषज्ञ !, शेषराजन्यकक्षयम् ॥ २६६ ॥ इत्युक्तस्त्यक्तमर्यादः, गुर्दुर्बोधः सुयोधनः । वर्धमानमनःसादः, समादत्त शनैर्वचः ॥ २६७ ॥ अन्तरेण रणं तात !, पाण्डवेभ्यो ध्रुवं मम । मनो नखशिखामात्रा-मपि धात्रीं न दित्सति ॥ २६८ ॥ उच्छलन्मत्सरोत्सेक-पिच्छलामिति भारतीम् । श्रुत्वा दौर्योधनीं दूरं, दूयते स्म पितामहः ॥ २६९ ॥

अथासौ निश्वसन्नुच्चै-र्निभाल्य भवितव्यताम् । संभाष्य धृतराष्ट्रादि-ज्ञातिवर्गं पृथक्पृथक् ॥ २७० ॥ भरतार्धपतिभूर्त्वा, हरे ! शासनमार्हतम् । प्रभावयेः प्रकारैस्तै-स्तैरित्याशास्य केशवम् ॥ २७१ ॥ आलोच्य पापकर्माणि, स्वादयन् समतामृतम् । श्रीभद्रगुप्तसूरीणा-मन्तिके व्रतमाददे ॥ २७२ ॥ ( त्रिभिर्विशेषकम् ) ज्ञानचक्रेण मिथ्यात्व-दण्डनाथमथोन्मथन् । भिन्दानः समताशक्त्या, राग-द्वेषमतङ्गजौ ॥ २७३ ॥ ध्यानकुन्तेन दुर्दान्ता-निन्द्रियाश्वानुपद्रवन् । क्रोधादियोधसंघातं, निघ्नन् बाणैः श(क्ष)मादिभिः ॥ २७४ ॥ श्रद्धासंनद्धसर्वाङ्गो, गाङ्गायनिमुनिस्ततः । संग्रामयितुमारेभे, मोहराजेन

निर्भयः ॥ २७५ ॥ ( त्रिभिर्विशेषकम् )

मुनिमेकैकशो नत्वा, तत्त्वैकमनसं ततः । सास्राः सर्वे निजावासा-ञ्जग्मुः पाण्डव-कौरवाः ॥ २७६ ॥ प्रम्लानवदनं किंचि-च्चिन्तामुकुलितेक्षणम् । भारद्वाजस्तदाभ्येत्य, कौरवेश्वरमभ्यधात् ॥ २७७ ॥ राजन् ! का नाम ते सत्त्व-निषण्णस्य विषण्णता ? । चिन्ता च केयमाचान्त-स्वान्तशौण्डीर्यडम्बरा ? ॥ २७८ ॥ शोच्यं किमिव तस्यास्ति, शान्तनोस्तनुजन्मनः ? । येनैवमदवीयांसो, वीरलोका वितेनिरे ॥ २७९ ॥ न नाम वीरधौरेय-मन्यं मन्ये पितामहात् । बाह्येष्विवान्तरङ्गेषु, विक्रान्तं येन वैरिषु ॥ २८० ॥ रणे तु दक्षिणे सत्य-प्यस्मिन् वामधुरीणता । ममैवासीत्तदन्तः किं, चिन्तया परितप्यसे ? ॥ २८१ ॥ प्लवङ्गकेतुना राज-न्ननध्यासितसंनिधिम् । बद्ध्वा धर्मात्मजं नून-मर्पयिष्यामि ते युधि ॥ २८२ ॥ इति द्रोणगिरा चिन्ता-मुल्लूय मनसः[1] क्षणात् । धार्तराष्ट्रोऽवपत्तस्मिन्, सद्यः पल्लविनीर्मुदः ॥ २८३ ॥ तदैव सूत्रयामास, स द्रोणं पृतनापतिम् । दन्तीन्द्रस्यैव दन्तीन्द्र-व्यापारेऽलंभविष्णुता ॥ २८४ ॥ प्रातस्तद्विहितव्यूह-रचनारञ्जिताशयः । आयोधनधुरां[2] दुर्यो-धनः स्वैरमवातरत् ॥ ॥ २८५ ॥ कौन्तेया अपि गाङ्गेय-दुर्दशादुर्मनायिताः । जयाशासप्रमोदाश्च, समीकमुपतस्थिरे ॥ २८६ ॥

अथ व्यावल्गदाश्वीयः, सैन्ययोरुभयोरपि । उज्जजृम्भे ससंरम्भ-सिन्धुराधोरणो रणः ॥ २८७ ॥ नीरन्ध्रैरम्बरे पत्रैः, सूत्रयन्तोऽब्दडम्बरम् । मिथः संघट्टसंभूते-स्तन्वन्तस्तडितोऽग्निभिः ॥ २८८ ॥ अशीतकिरणस्यापि, प्रतापमसहिष्णवः ।

१ 'मनसः' प्रतिद्वय० । २ रणधुराम् ।

ऽप्यानामपि वीराणां, प्रेङ्खन्ति स्म शिलीमुखाः ॥ २८९ ॥ (युग्मम्) शरैः शिरसि लूनेऽपि, कयोरप्येकहेलया । कबन्धावप्ययुध्येतां, तथैव कुपितौ मिथः ॥ २९० ॥ समं निस्त्रिंशनिस्त्रिंश–घातोच्छलितसंगते । कयोश्चिच्छिरसी व्योम्नि, दन्तादन्ति वितेनतुः ॥ २९१ ॥ कश्चिन्मौलौ विलूनेऽपि, वैरिणा तरवारिणा । सकृपाणे पुनः पाणौ, पातिते व्यरमद्रणात् ॥ २९२ ॥ हते प्रगममात्मीय–कबन्धेन विरोधिनि । कस्याप्यहसदुत्फुल्ल–नेत्रमाल्हादतः शिरः ॥ २९३ ॥ केषांचिद्दूरमुद्धूतैः, पतितेभनिपातिभिः । । बभूवे मौलिभिः मर्म्यैः, क्रीडतामसिवर्मभिः ॥ २९४ ॥ प्रेङ्खिताभिः शरैर्व्योम्नि, पतन्तीभिरिभैः पुनः । प्रेङ्खयद्भिः करैर्मूर्ध्नि, गल्लिकाभिरदीव्यत ॥ २९५ ॥ पर्यणंसीत् करी कश्चित्, कस्मिन्नप्युद्भटे भटे । अन्येषामीपदारोहोऽपार्द्रिणिर्धिषिणाम् ॥ २९६ ॥ आतमाधिकां गुरुः पश्यन्, धनंजयधनुष्कलाम् । आचार्यान्तरसंस्कारं, भृशं तस्मिन्नशङ्कत ॥ २९७ ॥ अर्जुनोऽपि गुरोर्वीक्ष्य, चापविद्याऽनवद्यताम् । कलारोपमसाकल्यात्, क्षाममात्मन्यमन्यत ॥ २९८ ॥ शोणिताम्भोभिः शस्त्र–व्रणौघैरनुचक्रतुः । उभे अपि बले बाढं, फुल्लं कङ्केल्लिकाननम् ॥ २९९ ॥ अथ संध्या व्यतीतेऽह्नि, कौसुम्भाम्बरधारिणी । रिरंसुस्तत्र जेतारं, जयलक्ष्मीरिवागमत् ॥ ३०० ॥ अवहारं विधायाथ, वरूथिन्यावुभे अपि । जग्मतुः शिबिरं स्वस्व–मस्पन्दितमदं मिथः ॥ ३०१ ॥

अथ धर्मजगोप्तार, निशि कौरव्यशासनात् । संसप्तकाख्यास्त्रैगर्ता, भूभुजोऽभ्येयुरर्जुनम् ॥ ३०२ ॥ व्याहरन्ति स्म

१ 'मुमूर्तैः' प्रत्यन्तर० । २ कुनर्दी. । ३ 'चर्मभिः' प्रतिद्वय० । ४ "प्रेंखन्तीभि शरैर्व्योम्नः" प्रत्यन्त० । 'मूर्ध-भनि०' प्रत्यन्तरपाठः साधुः । ५ त्रिगर्ता नाम देशः ।

ते स्मेर-भुजाहंकारकोरकाः । त्वमेवं युध्यसे पार्थ !, किमु सामूहिकोऽन्यवत् ? ॥ ३०३ ॥ न खल्वपरशौण्डीर-डम्बरोड्डामरे रणे । तव त्रिजगदुल्लङ्घि, व्यज्यते भुजवैभवम् ॥ ३०४ ॥ तमःसर्वंकषोन्मेष-प्रदीपशतसंकुले । जृम्भते कौस्तुभस्यापि, किमहो महिमा क्वचित् ? ॥ ३०५ ॥ तत् प्रभाते पृथग्भूय, कुरुक्षेत्ररणक्षितेः । युध्यस्व क्षणमस्माभि-रर्जुनः कोऽपि यद्यसि ॥ ३०६ ॥ अथाभाषिष्ट बीभत्सु-र्नैतत् किंचिदसांप्रतम् । मा भूवन् वः पुनर्वाचो, रम्भास्तम्भस्य संनिभाः ॥ ३०७ ॥ मद्बाणाः सुभटप्राणा-नास्वाद्यातिपिपासिताः । कुरूनत्तुं क्षमिष्यन्ते, पीत्वा वः शोणितासवम् ॥ ३०८ ॥ एकाक्येव तदेतस्मात्, क्षेत्रादेष्याम्यहं बहिः । सर्वे संभूय यूयं तु, द्रुतमागच्छत प्रगे ॥ ३०९ ॥ इत्यर्जुनवचःस्फूर्ज-त्प्रमोदभरमेदुराः । आगच्छन्निजमावासं, ते संसप्तकभूभृतः ॥ ३१० ॥

द्रोणप्रतिश्रुतज्येष्ठ-बन्धुबन्धनकातरः । धृष्टद्युम्नं च भीमं च, नकुलादींश्च दोर्भृतः ॥ ३११ ॥ तस्य गोपायने कामं, नियुज्य स्फुरदूर्जितान् । जिष्णुः संसप्तकाञ्जेतुं, द्वादशेऽथ दिने ययौ ॥ ३१२ ॥ ( युग्मम् ) तदैव कौरवीया च, पाण्डवीया च वाहिनी । प्रभिन्नगजताभीमे, समीकमवतेरतुः ॥ ३१३ ॥ सद्यः प्रीणयितुं वीर-प्रियामिव जयश्रियम् । अहंपूर्विकया सर्वे, युध्यन्ते स्म भुजाभृतः ॥ ३१४ ॥ धृष्टद्युम्नादिवीराणां, निराकृत्य शरोत्करान् । करान् हिमकरादीना-महस्करकरा इव ॥ ३१५ ॥ दिग्मण्डलीमिवानेक-दिव्यानेकपमण्डिताम् । द्रोणबाणाः स्तृणन्ति स्म, पाण्डवेयपताकिनीम् ॥ ३१६ ॥ ( युग्मम् ) कौन्तेयवाहिनीं हेति-व्रातरौद्रो गुरुस्ततः । कान्तारीयां तरुश्रेणिं, दवानल इवाविशत् ॥ ३१७॥

१ प्रभिन्नो-मदोन्मत्तः । २ आच्छादयन्ति ।

सुप्रतीककरिस्कन्धो, भगदत्तक्षितीश्वरः । तमन्वविशदादित्य-मिवोद्योतो बलार्णवे ॥ ३१८ ॥ सेनान्तर्दिद्युते मुञ्चन्, विष्व-द्रीचः शरान् गुरुः । विवस्वानिव मध्याह्ने, तन्वन्मध्येऽम्बरं करान् ॥ ३१९ ॥

करेणाथ हठाक्रान्ता, भगदत्तस्य दन्तिना । वाहिनी सा नवोढेव, काममाकुलतामगात् ॥ ३२० ॥ जीवतोऽप्सरसां दातु-मिवाभिगगनाङ्गणम् । कांश्चनाप्यभिमुखान् वीरान्, स करेणोदलालयत् ॥ ३२१ ॥ नानाभटशवाकीर्णे, तस्य संचरतो रणे । कीकसौघकठोरागाः, कक्षानादान्निरासिरे ॥ ३२२ ॥ सर्पत्सर्पारिपक्षान्त-वातोद्धूतद्रुमोपमाः । गर्जितैः परितो नेशु-र्धारान्तरस्य सैन्धवाः ॥ ३२३ ॥ भजति प्रसभं तस्मिन्, भयादिव पलायितैः । उड्डीने रथकट्यानां, यातं दूरे ध्वजांशुकैः ॥ ३२४ ॥ तस्मिन्गीरवगम्भीर-धीरबृंहितशालिनि । केषांचित् करिणां चित्र-मशुष्यन् मदनिर्झराः ॥ ३२५ ॥ तेनाहतास्तथा केचि-च्चीत्कान्ति स्म दन्तिनः । जग्मुस्त्रासाद्ध्रुवं दूरां, यथाऽन्येऽवमताङ्कुशाः ॥ ३२६ ॥ तेन केचन दन्ताग्र-प्रोतोत्क्षिप्ताः करेणवः । रेजुरद्रीन्द्रशृङ्गस्था-स्तोयदा इव नूतनाः ॥ ३२७ ॥ द्विपत्कीर्तिश्रवन्तीना-मादिशैला इवामुना । पातयांचक्रिरे केचित्, सङ्कुलं छिन्ना रदैः ॥ ३२८ ॥

एवं पाण्डवसैन्यानां, तेन दुर्दान्तदन्तिना । शुश्राव मृद्यमानानां, दूरादाक्रन्दमर्जुनः ॥ ३२९ ॥ हतशेषान् परित्यज्य, ततः संसप्तकान् युधि । अन्धंभूष्णुः क्रुधा कामं, दधावे वानरध्वजः ॥ ३३० ॥ तं ततो निशितैर्बाणैः, समातङ्गमतल्लि-काम् । साग्रहः प्रतिजग्राह, जिष्णुः प्राग्ज्योतिषेश्वरम् ॥ ३३१ ॥ नवोन्मीलन्मदासार-पानैकस्पृहयालवः । तं महेभम-

१ 'करेणा०' प्रतिद्वय० । २ कक्षा-हस्तिबन्धनरज्जुः (शृङ्खला) तस्या नादान् । ३ रथानां समूहो रथकट्या ।

ते स्मेर-भुजाहंकारकोरकाः । त्वमेवं युध्यसे पार्थ !, किमु सामूहिकोऽन्यवत् ? ॥ ३०३ ॥ न खल्वपरशौण्डीर-डम्बरोड्डामरे
रणे । तव त्रिजगदुल्लङ्घि, व्यज्यते भुजवैभवम् ॥ ३०४ ॥ तमःसर्वंकषोन्मेष-प्रदीपशतसंकुले । जृम्भते कौस्तुभस्यापि, किमहो
महिमा क्वचित् ? ॥ ३०५ ॥ तत् प्रभाते पृथग्भूय, कुरुक्षेत्ररणक्षितेः । युध्यस्व क्षणमस्माभि-रर्जुनः कोऽपि यद्यसि
॥ ३०६ ॥ अथाभाषिष्ट बीभत्सु-र्नैतत् किंचिदसांप्रतम् । मा भूवन् वः पुनर्वाचो, रम्भास्तम्भस्य संनिभाः ॥ ३०७ ॥
मद्बाणाः सुभटप्राणा-नास्वाद्यातिपिपासिताः । कुरूनत्तुं क्षमिष्यन्ते, पीत्वा वः शोणितासवम् ॥ ३०८ ॥ एकाक्येव तदेत-
स्मात्, क्षेत्रादेष्याम्यहं बहिः । सर्वे संभूय यूयं तु, द्रुतमागच्छत प्रगे ॥ ३०९ ॥ इत्यर्जुनवचःस्फूर्ज-त्प्रमोदभरमेदुराः ।
आगच्छन्निजमावासं, ते संसप्तकभूभृतः ॥ ३१० ॥

द्रोणप्रतिश्रुतज्येष्ठ-बन्धुबन्धनकातरः । धृष्टद्युम्नं च भीमं च, नकुलादींश्च दोर्भृतः ॥ ३३१ ॥ तस्य गोपायने
कामं, नियुज्य स्फुरदूर्जितान् । जिष्णुः संसप्तकाञ्जेतुं, द्वादशेऽथ दिने ययौ ॥ ३१२ ॥ (युग्मम्) तदैव कौरवीया च,
पाण्डवीया च वाहिनी । प्रभिन्नगजताभीमे, समीकमवतेरतुः ॥ ३१३ ॥ सद्यः प्रीणयितुं वीर-प्रियामिव जयश्रियम् ।
अहंपूर्विकया सर्वे, युध्यन्ते स्म भुजाभृतः ॥ ३१४ ॥ धृष्टद्युम्नादिवीराणां, निराकृत्य शरोत्करान् । करान् हिमकरादीना-
महस्करकरा इव ॥ ३१५ ॥ दिग्मण्डलीमिवानेक-दिव्यानेकपमण्डिताम् । द्रोणबाणाः स्तृणन्ति स्म, पाण्डवेयपताकि-
नीम् ॥ ३१६ ॥ (युग्मम्) कौन्तेयवाहिनीं हेति-व्रातरौद्रो गुरुस्ततः । कान्तारीयां तरुश्रेणिं, दवानल इवाविशत् ॥ ३१७॥

१ प्रभिन्नो-मदोन्मत्तः । २ आच्छादयन्ति ।

मुग्धान् कम्पनिदश्चौप–महं गोविन्दसंसदि । प्रवेशं केवलं चक्र–व्यूहस्य न तु निर्गमम् ॥ ३४८ ॥ (युग्मम्) भाषते स्म ततो भीम–स्तन् कृतं शङ्कयाऽधुना । त्रैजर्त्तविजये प्रात–र्गतेऽपि प्लवगध्वजे ॥ ३४९ ॥ चत्वारोऽपि वयं सर्वा–न्निर्भिद्य प्रममं भटान् । मार्गमासूत्रयिष्यामो, निर्गमाय बलादपि ॥ ३५० ॥ (युग्मम्) इत्यालोच्य ततः सर्वे, पाण्डवाः सपरिच्छदाः । विश्रमाय रणश्रान्ताः, स्थानं जग्मुर्निजं निजम् ॥ ३५१ ॥ प्रातर्जिष्णुस्तपःसूनु–मभिमन्युं च रक्षितुम् । नियुज्य कामं भीमादीन्, संसप्तकजये ययौ ॥ ३५२ ॥

एत्य द्रोणो रणक्षेत्रं, धर्मसूनोर्जिघृक्षया । चक्रे संसारचक्राभं, चक्रव्यूहं दुरुत्तरम् ॥ ३५३ ॥ पाण्डवा अपि निःशेषैरभिमन्युपुरःसरैः । सार्धं धनुर्धरैर्युद्ध–धरित्रीमध्यशेरत ॥ ३५४ ॥ रक्तपाटलविस्फूर्ज–च्छिलीमुखकुलाकुलः । प्रवीरजीवनग्रीष्मः, समरः सैन्ययोरभूत् ॥ ३५५ ॥ अभिमन्युं पुरोधाय, चत्वारोऽप्यथ पाण्डवाः । सौष्ठवेनोदतिष्ठन्त, कल्पान्तमिव सागराः ॥ ३५६ ॥ ते यमा इव पञ्चापि, द्रोणं निर्जित्य कर्मवत् । दुर्भेदं विभिदुश्चक्र–व्यूहं संसारचक्रवत् ॥ ३५७ ॥ क्षान्त्यादिभिः फलोदग्रैः, कषायानिव संयमी । पाण्डवांश्चतुरोऽरौत्सीत्, कङ्कपत्रैर्जयद्रथः ॥ ३५८ ॥ समन्युरभिमन्युस्तु, निस्तुषोत्साहसाहसः । तं व्यूहमविशद्भीष्मं, पातालविवरोपमम् ॥ ३५९ ॥ निहन्ति स्म स एकोऽपि, कोटिशः सुभटान् रणे । उद्वेलो हि महाम्भोधिः, सर्वान् प्लावयते गिरीन् ॥ ३६० ॥ तस्यैकधन्विनो भूपाः, शरैर्विव्यथिरेऽधिकम् । अकालजलवाहस्य, सलिलैरिव शालयः ॥ ३६१ ॥ शल्य-कर्ण-कृप-द्रौणि–कृतवर्म-सुयोधनैः । स नासहत

१ जीवनं–प्राणः, पक्षे जलम् । २ यमाः–प्राणातिपातविरत्यादयः ।

नूत्वेलुः, फाल्गुनस्य शिलीमुखाः ॥ ३३२ ॥ निष्पुण्यक इवोत्तुङ्ग–मर्थं प्रति मनोरथम् । भगदत्तोऽपि तं नाग–मन्व-
र्जुनमनोदयत् ॥ ३३३ ॥ महातिमिरिवाम्भोधि–महोर्मिमतिभैरवम् । तमायान्तमिभं पार्थः, क्षुरप्रैर्विदधे द्विधा ॥ ३३४ ॥
दर्शयन् भगदत्तोऽथ, महामात्रकलां निजाम् । ऊरुभ्यां गाढमाक्रम्य, क्रमयामास तं बलात् ॥ ३३५ ॥ तथैव प्रथयन्
सैन्य–संमर्दसतिदुर्दमः । किरीटिनमनु क्रोधा–त्ततोऽधावत्स सिन्धुरः ॥ ३३६ ॥ तदा तेनावदानेन, सानन्दमनसोऽमुचन् ।
दिवौकसो दिवः पुष्प–वर्षं प्राग्ज्योतिषेश्वरे ॥ ३३७ ॥ तत्तस्मिन्नपतत् पश्चा–द्भगदत्ते महीपतौ । पूर्वमेवेषुवर्षं तु पतति
स किरीटिनः ॥ ३३८ ॥ ह्रियन्ते स्म क्षणात् प्राणा–स्तेन प्राग्ज्योतिषेशितुः । वारिविर्पेण कासार–स्येव राजीवराजयः
॥ ३३९ ॥ हते सकुञ्जरे तस्मि–ञ्जिष्णुना राजकुञ्जरे । कौरवीयबले राज्ञां, शृङ्गभङ्ग इवाभवत् ॥ ३४० ॥ दयालव इव
प्राणि–कदम्बकदने तदा । दिक्पुरंध्र्यः प्रणद्योच्चै–र्निन्युरस्तगिरौ रविम् ॥ ३४१ ॥

द्रोणोऽथ पाण्डवानीका–द्व्यावृत्य स्वबलं ययौ । सरित्प्रवाहतो वेला–जलौघ इव सागरम् ॥ ३४२ ॥ प्रतिषिद्धे ततो
युद्ध–संरम्भे वेत्रपाणिभिः । वरूथिन्यावुभे स्वं स्वं, स्कन्धावारमुपेयतुः ॥ ३४३ ॥ मध्यरात्रे ततः पाण्डु–पुत्राणां गूढ-
पूरुषाः । अभ्येत्य कौरवानीक–किंवदन्तीमचीकथन् ॥ ३४४ ॥ भगदत्तवधक्रुद्धो, भारद्वाजो गुरुः प्रगे । चक्रव्यूहं
तपःसूनु–मादातुं रचयिष्यति ॥ ३४५ ॥ चरवाचमिति श्रुत्वा, चक्रव्यूहभिदाविधिम् । सर्वैरालोचयांचक्रुः, पार्षदैः सह
पाण्डवाः ॥ ३४६ ॥ अभिमन्युरथावादी–दार्जुनिर्महिमोर्जितः। द्वारकायां पुरा तिष्ठन्, प्रवासे वः पुरान्निजात् ॥ ३४७ ॥

१ पराक्रमेण ।

मृगान कम्पनिदश्रौप-महं गोविन्दसंसदि । प्रवेशं केवलं चक्र-व्यूहस्य न तु निर्गमम् ॥ ३४८ ॥ (युग्मम्) भाषते स्म ततो भीम-स्तन् कृतं शङ्कयाऽधुना । त्रैगर्तविजये भ्रात-र्गतेऽपि प्लवगध्वजे ॥ ३४९ ॥ चत्वारोऽपि वयं सर्वा-न्निर्भिद्य प्रसभं भटान् । मार्गमासूत्रयिष्यामो, निर्गमाय बलादपि ॥ ३५० ॥ (युग्मम्) इत्यालोच्य ततः सर्वे, पाण्डवाः सपरिच्छदाः । विश्रमाय रणश्रान्ताः, स्थानं जग्मुर्निजं निजम् ॥ ३५१ ॥ प्रातर्जिष्णुस्तपःसूनु-मभिमन्युं च रक्षितुम् । नियुज्य कामं भीमादीन्, संसप्तकजये ययौ ॥ ३५२ ॥

एत्य द्रोणो रणक्षेत्रं, धर्मसूनोर्जिघृक्षया । चक्रे संसारचक्राभं, चक्रव्यूहं दुरुत्तरम् ॥ ३५३ ॥ पाण्डवा अपि निःशेषै-रभिमन्युपुरःसरैः । सार्धं धनुर्धरैर्युद्ध-धरित्रीमध्यशेरत ॥ ३५४ ॥ रक्तपाटलविस्फूर्ज-च्छिलीमुखकुलाकुलः । प्रवीरजीवन-ग्रीष्मः. समरः सैन्ययोरभूत् ॥ ३५५ ॥ अभिमन्युं पुरोधाय, चत्वारोऽप्यथ पाण्डवाः । सौष्ठवेनोदतिष्ठन्त, कल्पान्तमिव सागराः ॥ ३५६ ॥ ते यमा इव पञ्चापि, द्रोणं निर्जित्य कर्मवत् । दुर्भेदं विभिदुश्चक्र-व्यूहं संसारचक्रवत् ॥ ३५७ ॥ क्षान्त्यादिभिः फलोदग्रैः, कषायानिव संयमी । पाण्डवांश्चतुरोऽरौत्सीत्, कङ्कपत्रैर्जयद्रथः ॥ ३५८ ॥ समन्युरभिमन्युस्तु, निस्तुषोत्साहसाहसः । तं व्यूहमविशद्ग्रीष्मं, पातालविवरोपमम् ॥ ३५९ ॥ निहन्ति स्म स एकोऽपि, कोटिशः सुभटान् रणे । उद्वेलो हि महाम्भोधिः, सर्वान् प्लावयते गिरीन् ॥ ३६० ॥ तस्यैकधन्विनो भूपाः, शरैर्विव्यथिरेऽधिकम् । अकालजलवाहस्य, सलिलैरिव शालयः ॥ ३६१ ॥ शल्य-कर्ण-कृप-द्रौणि-कृतवर्म-सुयोधनैः । स नासहत

१ जीवनं-प्राणः, पक्षे जलम् । २ यमाः-प्राणातिपातविरत्यादयः ।

सस्यौघै-स्तीव्रताप इवानलः[1] ॥ ३६२ ॥ तान् विक्षिप्य क्षिणोति स्म, लक्ष्मणप्रभृतीनसौ । बहून् कुमारान् दुष्कर्म-महिमेव मनोरथान् ॥ ३६३ ॥ अथैनं दुर्जयं ज्ञात्वा, कौरवानीकनायकाः । तुल्यमावारिषुः सर्वे, कौलं[2] कौलेयका इव ॥ ३६४ ॥ तमेकमपि तेऽभूव-ञ्जेतुं विश्वेऽपि नेश्वराः । शृगाला इव शार्दूलं, तरणिं तारका इव ॥ ३६५ ॥ तस्यादलयदिष्वास-मङ्गेशः सारथिं कृपः । कृतवर्मा रथं सोऽथ, युयुधे खड्गचर्मभृत् ॥ ३६६ ॥ तस्य द्रौणिः क्षणात् कोप-हव्यवाहस्य दीव्यतः । धूमदण्डनिभं काण्डै-र्मण्डलाग्रमखण्डयत् ॥ ३६७ ॥ स्वकीर्तिकलमक्षेत्र-तृणस्तम्बोपमांस्ततः । चक्रेण राजचक्रस्य, मौलीन-भ्युद्दधार सः ॥ ३६८ ॥ इत्यनेकायुधैर्युद्धं, कुर्वन् कोपात् पिपेष सः । गदादम्भोलिना शैल-निभं दौःशासने[3] रथम् ॥ ३६९ ॥ युध्यमानस्ततस्तेन, दुःशासनसुतेन सः । प्रजहे ह्रियमुत्सृज्य, समं सर्वैर्महारथैः ॥ ३७० ॥ इति नानास्त्रसं-पात-जर्जरीकृतविग्रहः । पपात स भुवः पृष्ठे, छिन्नमूल इव द्रुमः ॥ ३७१ ॥ मृतमारणदौरात्म्यात्, स्वकीर्तिलतया समम् । ततो दौःशासनिस्तस्य, निस्त्रिंशेनाच्छिनच्छिरः ॥३७२॥ तत्तदानीं द्वयोः कर्म, पश्यतां नाकिनामभूत्। मुखेषु साधुवादस्य, हानादस्य च संकरः ॥ ३७३ ॥ तदानीं चार्जुनेः शौर्य-संतुष्टः पुष्पवृष्टये । पुष्पाणि रविरुच्चेतु-मिवास्ताद्रिवनं ययौ ॥ ३७४ ॥ अवहारे प्रतीहार-पूरुषैर्विहिते ततः । ते उभे अप्यनीकिन्यौ, स्वं स्वं शिबिरमीयतुः ॥ ३७५ ॥

त्रैगर्तान् स्वभुजावर्ते, कीर्तिशेषानथार्जुनः । निर्माय यावदागच्छ-च्छिबिरं तनयोत्सुकः ॥ ३७६ ॥ तावदैक्षिष्ट तत्सर्वं, निमग्नं शोकसागरे । मनःक्रदनमाक्रन्द-ध्वनिं चान्तःपुरेऽशृणोत् ॥ ३७७ ॥ न चापि क्वचिदश्रौषी-द्वीराणां रण-

१ 'इवानिलः' एकप्रतिपाठः साधुः । २ वराहम् । ३ दुःशासनपुत्रस्य ।

संकथाः । भटानां विकटाटोपां, वाचमाकर्णयन्न च ॥ ३७८ ॥ न चाश्वानां पुरः कीर्णं, ददर्श यवसोत्करम् । सिन्धुराणां पिण्डप्रदानादि न चैक्षत ॥ ३७९ ॥ शून्यारण्यनिभां लोक-संकुलामपि तां चमूम् । वीक्ष्यात्मजन्मनो मृत्यु-माशशङ्के कपिध्वजः ॥ ३८० ॥ नलादानन्दमुच्छेद्य, संसप्तकवधोद्भवम् । तस्यास्तोकः पदं शोकः, सूत्रयामास मानसे ॥ ३८१ ॥ प्रविश्य स नृपावासं, ततोऽपृच्छत्तपःसुतम् । सोऽप्येतस्मै यथावृत्तं, युद्धोदन्तं न्यवेदयत् ॥ ३८२ ॥ ततः शुद्धान्तमाविश्य, शोकशीर्णिमलिम्लुचैः । सुभद्रां वचनैस्तैस्तैः, सान्त्वयित्वा धनंजयः ॥ ३८३ ॥ अवोचदन्तर्वत्नीय-मुत्तराऽस्ति स्नुषा तव । तत्सुतो भवितेदानी-मावयोर्नयनोत्सवः ॥ ३८४ ॥ (युग्मम्) प्रत्यश्रौषीच्च चेत् भ्रात-रादिना-न्तापगद्भथम् । तत्पुत्रमृत्युहेतुं नो, हन्मि वह्निं विशामि तत् ॥ ३८५ ॥ अथौर्ध्वदेहिकं सूनो-स्ते समाप्य विशश्रमुः । शोच्याः किं नाम वीराणां, रणार्जितसुरश्रियः ॥ ३८६ ॥

प्रातर्द्रोणोऽथ विज्ञाय, तां प्रतिज्ञां किरीटिनः । विकीर्णहृदयस्तूर्ण-मागत्य समरावनौ ॥३८७॥ प्राणत्राणकृतेऽनेक-राजन्यकतिरोहितं । सैन्यचं शकटव्यूह-सूचीपाशे न्यवेशयत् ॥ ३८८ ॥ (युग्मम्) पाण्डवा अपि कोदण्ड-टंकारध्वनि-डम्बरैः । क्षोभयन्तो रिपुक्षौणं, रणक्षोणिमुपागमन् ॥ ३८९ ॥ अन्योन्यस्खलनादूर-मुच्छलन्तो नभस्तले । उभयेऽपि शरा-भेजुः, प्राक्सन्ध्या ज्वानिलाः ॥ ३९० ॥ अथ द्रोणस्य जिष्णोश्च, विजेतुमनसोरपि । व्याप्रियेतां करौ स्नेहा-न्न बाणे-ष्वनन्तरम् ॥ ३९१ ॥ द्रोणं प्रदक्षिणीकृत्य, ततो व्यूहं विवेश तम् । जिष्णुर्विन्ध्याद्रिकान्तार-मारण्यक इव द्विपः ॥३९२॥

१ पिण्ड-हस्तिभक्ष्यान्नम । २ गर्भिणी । ३ जयद्रथम् ।

सर्वेऽप्युर्वीभृतस्तस्य, सायकासारवर्षिणः। रयं[1] न सेहिरे कामं, वातूलस्येव शाखिनः॥ ३९३॥ सुतशोकाग्निसंताप-शमायेव किरीटिनः। वैरिणां प्राणवारीणि, भृशमाददिरे शरैः॥ ३९४॥ दध्मौ तत्रार्जुनः शङ्खं, देवदत्तं यथा यथा। जयाशा धर्मजादीनां, जागर्ति स्म तथा तथा॥ ३९५॥

अथ स्वबलमालोक्य, पार्थबाणैः कदर्थितम्। उत्तस्थे कुरुराजेन्दु-रुत्पात इव मूर्तिमान्॥ ३९६॥ द्विपयूथाधिपेनेव, विपिने गन्धहस्तिनः। तेन सार्धं चिरं घोरः, संगरोऽभूत् किरीटिनः॥ ३९७॥ तं विलङ्घ्य प्लवङ्गेन्द्र-केतुः सेतुविडम्बिनम्। नदीरय इव स्वैरं, प्रतस्थे पुरतो रणे॥ ३९८॥ चक्षुषा कोपदीप्रेण, दिधक्षन्निव तत्क्षणात्। कंसारिसारथिर्दूरादन्वियेष जयद्रथम्॥ ३९९॥ तं मोहमिव कामादीन्, भृशमावृत्य तिष्ठतः। तांस्तानात्मेव तेजस्वी, पार्थोऽमथ्नान्महारथान्॥ ४००॥ इतोऽपि रणवैयग्र्या-द्देवदत्तध्वनौ[2] स्थिते। किरीटिनि गते दूरं, शङ्कितोऽभूत्तपःसुतः॥ ४०१॥ तत्प्रवृत्तिमथ ज्ञातुं, सात्यकिं सत्यविक्रमम्। द्वैतीयीकमिवात्मानं, प्रजिघाय युधिष्ठिरः॥ ४०२॥ सोऽथ द्रोणं प्रणामेन, वञ्चयन्नधिकत्वरः। तद्व्यूहमविशत् पोत, इव स्रोतस्विनीपतिम्॥ ४०३॥ तटद्रुमानिव स्वैर-मीरयन् स महीभुजः। निम्नगापूरवत् सेतुं, भूरिश्रवसमासदत्॥ ४०४॥ वीरधौरेययोः कामं, वनशूकरयोरिव। अजृम्भत रणारम्भ-स्तयोर्विश्वभयंकरः॥ ४०५॥ तावन्योन्यमथो ध्वस्त-रथौ मथितसारथी। छिन्नेष्वासावयुध्येतां, खड्गखेटकधारिणौ॥ ४०६॥ आचार्योऽपि बहिर्व्यूहा-द्दीर्घिकामिव सेवधिम्[3]। तपस्तनयमादातु-मशुशोषयिषच्चमूम्॥ ४०७॥ मथ्नत्यमुष्मिन् वीरौघ-मम्भो-

१ वायुसमूहस्य रयम्। २ देवदत्तः-अर्जुनस्य शङ्खः। ३ निधिम्।

विशिख मन्दरे । कल्लोलानामिवोत्तस्थौ, लोकानां तुमुलो महान् ॥ ४०८ ॥ इतश्चाक्रम्य केशेषु, गृहीत्वा सात्यकेः शिरः ।
गर्जनाल्लुठन्मुच्छ-माने भूरिश्रवोभुजे ॥ ४०९ ॥ कैटभारिरभाषिष्ट, धनंजय ! धनंजय ! । म्रियते म्रियते हन्त, पश्य-
नव्या सात्यकिः ॥ ४१० ॥ छिन्धि छिन्धि शरैरेनं, तद्भूरिश्रवसो भुजम् । वीरमानिभिरात्मीय-स्त्रातव्यो हि यथा
तथा ॥ ४११ ॥ ( त्रिभिर्विशेषकम् ) तदानीमंशुमन्तं च, नमन्तं ददृशुः समम् । पार्थ-कौरवयोः कोक-कौशिका इव
सैनिकाः ॥ ४१२ ॥ तस्मिंश्च समये सव्य-साची प्राचीकृताननः । समं समापतत्कृत्य-व्यग्रत्वादित्यचिन्तयत् ॥ ४१३ ॥
द्रोणो गजान्तिके यान-मितः सिन्धुपतेर्वधः । इतोऽपि सात्यकेस्त्राण-मितश्चास्तोत्सुको रविः ॥ ४१४ ॥ इति चिन्ता-
तुरो भूयः, प्रणुन्नः शौरिणाऽर्जुनः । चिच्छेद भूरिश्रवसः, सकृपाणं शरैः करम् ॥ ४१५ ॥ अक्षत्रादक्षिणे छिन्ने, कर-
नामरते ततः । सकोपैर्वचनैस्तैस्तै-रुपालभ्य कपिध्वजम् ॥ ४१६ ॥ निष्कामयन्तमभ्यासा-द्ब्रह्मद्वारेण मारुतम् । भूरि-
श्रवसमुत्थाय, स्वैरं हन्ति स्म सात्यकिः ॥ ४१७ ॥ ( युग्मम् )

कर्णनाहमनारोढ-त्यर्जुने जलजध्वनौ । धर्मजन्मा पुनर्भीमं, प्राहिणोत्तत्प्रवृत्तये ॥ ४१८ ॥ विद्राणवाजिनं द्रोण-
रथमुत्क्षिप्य तत्क्षणात् । विवेश मारुतिर्व्यूहं, समूहन् भटमण्डलीम् ॥ ४१९ ॥ नवाम्बुवाहमायान्तं, प्रतिकूल इवानिलः ।
कर्णः कर्णान्तिकानीत-नाराचस्तमचिस्खलत् ॥ ४२० ॥ कुर्वाणौ रणमुत्सर्पि-मत्सरौ रेजतुस्तदा । सह्य-विन्ध्याविवोत्तुङ्ग-
सहकाश-पवनाहतौ ॥ ४२१ ॥ पौरुषं पुरुषस्येव, दुर्बुद्ध्या विमुखो विधिः । कर्णस्य गदया भीमो, निर्ममन्थ वरूथि-

१ मानि-त्रकम् । २ अन्यायात् । ३ प्राणवायुम् । ४ रथम ।

नम् ॥ ४२२ ॥ तदैव द्रुतमास्थाय, रथमङ्गेश्वरोऽपरम् । भुजौजोभिः सहाभाङ्क्षी-द्भीमस्यापि पताकिनम् ॥ ४२३ ॥ पत-
द्भिस्तच्छरासारै-रारासारसहोदरैः । निर्मीयते स्म दन्तीव, निरुच्छ्वासो वृकोदरः ॥ ४२४ ॥ कपिध्वजो मया वध्यः,
कुन्तीपुत्रेषु नापरः । इत्यात्मीयामनुस्मृत्य, प्रतिज्ञां प्राग्विनिर्मिताम् ॥ ४२५ ॥ जहार जीवितं नैव, कर्णः पवनज-
न्मनः । विपर्येति प्रतिज्ञा तु, कर्हिचिन्न महात्मनाम् ॥ ४२६ ॥ (युग्मम्)

इतश्च स्वप्रतिज्ञाब्धि-पारभूमीरुहं पुरः । कपिकेतुर्दिनस्यान्ते, पश्यति स्म जयद्रथम् ॥ ४२७ ॥ तमालोक्य बभौ
जिष्णोः, कोपकण्टकितं वपुः । सुतशोकाब्धिशैवाला-ङ्कुरैरिव करम्बितम् ॥ ४२८ ॥ ताम्राक्षिपुष्पस्तबकं, वेपमानौष्ठपल्ल-
वम् । सशोकमप्यशोकत्वं, निन्येऽमर्षस्तदाऽर्जुनम् ॥ ४२९ ॥ विश्वतेजस्विनामीशे, सैन्धवोऽपि कपिध्वजे । आदर्श इव
चण्डांशौ, दिदीपेऽभिमुखस्थिते ॥ ४३० ॥ सद्योमुकुलिताशान्तं, पलायितनभश्चरम् । वीराव्रतंसयोरासी-च्छराशरि तयोः
क्षणम् ॥ ४३१ ॥ तथाऽतिनिचितं तेने, किरीटी शरदुर्दिनम् । सैन्धवस्य यथा तस्मि-ञ्शराश्चैरुर्भियेव न ॥ ४३२ ॥ भृशमो-
जायमानस्या-प्यायुधैर्विविधैर्युधि । धात्रीशैस्त्रायमाणस्या-प्युच्चैर्दुर्योधनादिभिः ॥ ४३३ ॥ गदं[2]ग्रन्थि प्रतिज्ञायाः, स्तम्बं शौर्य-
[3]वरूथिनः । कीर्तिसिन्धोः स्थलं पार्थ-श्छिच्छेदास्य शरैः शिरः ॥ ४३४ ॥ (युग्मम्) गाण्डीवधन्वनः सार्धं, हर्षरोमाञ्च-
कोरकैः । जयद्रथशिरः कृत्तं, दूरमुच्छलति स्म तत् ॥ ४३५ ॥ गृहीतं नखरैर्गृध्र-श्रेणिभिर्लुलितालकम् । तदभूद्भ्रमदभ्ये-
ष्य-त्तमःसैन्यचरोपम् ॥ ४३६ ॥ सैन्धवस्य कबन्धोऽपि, शोणितः शोणितद्रवैः । भूमावभ्यधिकोन्मील-त्कोपताम्र इवापतत्

१ रथम् । २ रोगग्रन्थिम् । ३ शौर्यरथस्य ।

॥ ४३७ ॥ हन्ति हन्तायमद्यापि, बीभत्सुर्भूयसो भटान् । इतीव करुणाबन्धुः, संध्याऽथ त्वरितं ययौ ॥ ४३८ ॥ चतुर्दश दिनान्येवं, तन्वाना युद्धमुद्धतम् । कौरवाक्षौहिणीः सप्त, क्षपयन्ति स्म पाण्डवाः ॥ ४३९ ॥

चतुर्दशे दिने ज्यामि-न्मथिते सिन्धुपार्थिवे । आचार्यस्त्वपया रात्रि-युद्धाय बलमादिशत् ॥ ४४० ॥ पीवरेन्दुकपालाढ्या नागास्थिस्रग्गिणी ततः । क्षयाय क्ष्माभृतां रात्रिः, काली साक्षादिवागमत् ॥ ४४१ ॥ समीकाङ्कहतानेक-वीरासृक्पानलोलुपैः । नक्तंचरगलिच्छायै-स्तमोभिर्व्यानशेऽवनिः ॥ ४४२ ॥ अथान्योऽन्यास्त्रसंघट्ट-लब्धोल्लासैः कृशानुभिः । ववृतेऽन्तरितध्वान्तो, वीराणां दारुणो रणः ॥ ४४३ ॥ अवीक्ष्य लक्ष्यमुच्चण्डा-कृष्टमुक्तो धनुर्धरैः । सूत्कारव्यञ्जितापातो, निपपात शरोत्करः ॥ ४४४ ॥ दन्तेषु खड्गखात्कार-नादेनैव निषादिभिः । आगता अप्यलक्ष्यन्त, द्विपानां पुरतो भटाः ॥ ४४५ ॥ मिथो निजनिजस्वामि-नामभिः कीर्तितैर्मुहुः । विदांचक्रुः परात्मीय-विभागं सुभटास्तदा ॥ ४४६ ॥ रथश्वक्रत्कार-घण्टानादैर्गतव्रजः । भटोऽभिमुखमागच्छन्, क्ष्वेडाभिश्चाप्यलक्ष्यत ॥ ४४७ ॥ लोलकल्लोलकीलाल-कूलिनीमध्य पत्तिभिः । क्षेमे मरणमज्ञात-पातनिर्मज्य कैश्चन ॥ ४४८ ॥ धावन्तः शवगात्रेषु, स्खलनात् पतयालवः । स्वैरेव निपातिभिर्नैः, कृपाणैः केऽपि जघ्निरे ॥ ४४९ ॥ अर्धरात्रेऽथ मिथ्याशां, कुर्वन् कुरुवरूथिनीम् । ज्वलज्वलन-पाषाण-पादपादिभिर्भृशैः ॥ ४५० ॥ प्रदीपकलिकाताम्र-तारकाभीषणेक्षणः । दीपयन् वदनोल्काभि-रभितः संगराङ्गणम् ॥ ४५१ ॥ हिडम्बाकुक्षिमाणिक्यं, मरुत्तनयनन्दनः । रक्षसां पतिरुत्तस्थे, घोरकर्मा घटोत्कचः ॥ ४५२ ॥ ( त्रिभिर्विशेषकम् )

१ 'भग्नामास्तगिते' प्रत्य० । २ कीलालं–रुधिरम् ।

तन्वानस्य भृशं तस्य, मायायुद्धमनेकधा । तमोभिरिव दीपस्य, पुरस्ताद्विद्रुतं भटैः ॥ ४५३ ॥ रथान् पिपेष पाषाणै-र्जघान तरुभिर्गजान् । स वेगापातवातेन, भटकोटीरपातयत् ॥ ४५४ ॥ एकेनैव तदा तेन, सर्वाऽपि कुरुवाहिनी । तिरश्चक्रेतरां प्रावृड्-घनेनेव ग्रहावलिः ॥ ४५५ ॥ मु(मो)दस्तपःसुतादीनां, द्विषां जीवितसंशयः । कौतुकं प्रेक्षकाणां च, तस्मिन् युद्धोद्यतेऽभवत् ॥ ४५६ ॥

वानेयमिव[1] मातङ्गं, कौरवारण्यमाथिनम् । वारिगर्त[2] इवोदीर्णः, कर्णस्तमरुणत् क्षणात् ॥४५७॥ युध्येते स ततः क्रोध-बोधितोद्दामविक्रमौ । संपरायरसोदश्च-त्कचौ कर्ण-घटोत्कचौ ॥ ४५८ ॥ अश्मभिर्भैमिनिर्मुक्तैः, कर्णसायकचूर्णितैः । दिशोऽभूवन्नसृक्शान्त-रजसोऽपि रजस्वलाः ॥४५९॥ रक्षःक्षिप्तद्रुमच्छेदे-ऽप्यङ्गेशस्य शिलीमुखैः । न पर्याप्यत तत्पुष्पोड्डीनैस्त्वानशिरे[3] दिशः ॥ ४६० ॥ मोहयन् वाहिनीं सर्वां, स्फुरन् दिवि रथे भुवि । क्रीडयैव हिडम्बाभू-रारेभे योद्धुमाशुगैः ॥ ४६१ ॥ राधेयीयास्तदीयाश्च, मिथःसंवलिताः पथि । पत्रिणोऽपि रणक्रीडा-मिवाघातैर्वितेनिरे ॥ ४६२ ॥ समं दोर्दण्डशौण्डीर्य-सौष्ठवैरतिनिष्ठुराः । कर्णस्य मार्गणान् मार्गे, चिच्छिदुस्तस्य सायकाः ॥ ४६३ ॥ यावन्तः कालपृष्ठेन[4], निष्ठ्यूताः पत्रिणोऽभ्ययुः । तत्सहस्रगुणानेव, सुषुवे तस्य कार्मुकम् ॥ ४६४ ॥ कोदण्डे केतुदण्डे च, सारथौ च हयेषु च । निर्वर्ण्यन्ते स्म कर्णेन, पतन्तस्तच्छराः समम् ॥ ४६५ ॥ इत्याकुलीकृतस्तेन, दत्तां देवतया पुरा । देहिनीमिव विक्रान्तिं, मूर्तामिव जयश्रियम् ॥ ४६६ ॥ वधाय मध्यमस्यैव, पाण्डवेयस्य संभृताम् । एकवीरवधे शक्तां, शक्तिमङ्गेश्वरोऽग्रहीत्

१ वनसंबन्धिनम् । २ वारि-हस्तिबन्धनस्थानम् । ३ वृक्षपुष्पाणामुड्डयनैः । ४ कालपृष्ठ-कर्णधनुर्नाम ।

॥ ४६७ ॥ ( युग्मम् ) स क्रुधेव तया कामं, स्फुरद्वह्निस्फुलिङ्गया । समं पार्थप्रमोदेन, संजघान घटोत्कचम् ॥ ४६८ ॥
गेलति स्म तदा शोकः, पाण्डवानां बले मनाक् । पुनरुज्जीवितेवाभूत्, कौरवीया तु वाहिनी ॥ ४६९ ॥

तमस्यगणितात्मीय–परकीयभटे ततः । बद्धक्रोधमयुध्येता–मनीकिन्यावुभे अपि ॥ ४७० ॥ भटोपरि भटाः पेतु–स्तुरगास्तुरगोपरि । मातङ्गोपरि मातङ्गाः, स्यन्दनाः स्यन्दनोपरि ॥ ४७१ ॥ वीरशोणितमैरेयै[1]–र्वृद्धपानोत्सवेऽन्तके । उत्तालायितं तस्मिन्, समरेऽस्थिच्छिदारवैः ॥ ४७२ ॥ निरीक्ष्य चतुरो यामा–न्निशाऽप्येवं रणोत्सवम् । श्रान्तेव शान्तिमायासी–द्युध्यमानास्तु नो भटाः ॥ ४७३ ॥ सहानूरु[2]प्रकाशेन, विकसन् द्रोणविक्रमः । द्रुतमद्रावयत्तांस्तान्, कौशिकानिव भास्वान् ॥४७४॥ विश्वोपकारिणौ शश्वत्, सतां वल्लभतां गतौ । कीर्तिमल्लीनवामोद–मोदिताशेषविष्टपौ ॥४७५॥ तावुच्चापक्रियारौद्रौ, विराट–द्रुपदौ गुरुः । धर्मार्थाविव कंदर्पो, निहन्ति स्मैकहेलया ॥ ४७६ ॥ ( युग्मम् ) रात्रिमुल्लुप्य पूर्वस्यां, पतिर्भासामथोदगात् । उन्माहः श्रान्तिमुच्छिद्य, सेनयोश्च द्वयोरपि ॥ ४७७ ॥ उभयोरप्यनीकिन्योः, कङ्कपत्रपरम्पराः । अकम्पन्त करश्रेण्यः, प्रसमृर्गगनाङ्गणे ॥ ४७८ ॥ अन्वगुर्वीरचक्राङ्काः, कुरुक्षेत्रासृगापगाः । नदीरन्याः प्रफुल्लाब्जाः, प्रत्यग्रानपल्लोहिनीः ॥ ४७९ ॥ त्यज्यते स्म तदा चापै–रार्जवं सगुणैरपि । ध्रुवं तदङ्कुरा तेषा–मभूत् पर्वपरम्परा ॥ ४८० ॥ वितेने मण्डपः कैश्चि–त्काण्डे काण्डमण्डलैः । दीर्घनिद्रां सुखेनान्ये, तच्छायायां समासदन् ॥ ४८१ ॥ दत्तेऽपि धन्विभिर्लक्षे, मार्गणास्तं न तेऽत्यजन् । मन्ये तेनैव नारोहन्, पत्रिणस्तं गुणं पुनः ॥ ४८२ ॥ केषांचित् पतिताः श्वेत–खेटकेष्वसियष्टयः ।

१ मैरेयं–मद्यम् । २ अनूरुः–अरुणः ।

रेजिरे हरिणाङ्केषु, स्वर्भानुरसना इव ॥ ४८३ ॥ दन्तारूढोऽवलम्ब्यान्यः, कर्णं कृष्टासिधेनुकः । आदातुं मौक्तिकानीव, न्यशुम्भत् कुम्भयोरिभम् ॥ ४८४ ॥ यद्यप्याश्वेव केषांचि-न्मार्गणा गुणमत्यजन् । तथापि न क्वचित् प्रापुः, सपक्षत्वाद्विलक्षताम् ॥ ४८५ ॥ अन्येषां यदभूद्भूम्ना, करो निस्त्रिंशसंगमी । जघान ललनाः कीर्तीः, शङ्के तेनैव विद्विषाम् ॥ ४८६ ॥ उदस्थिताथ पार्थाना-मनीकिन्येकहेलया । पिपासुर्गुरुरब्धीना-मम्भांसीव घटोद्भवः ॥ ४८७ ॥ नूतनाम्भोदवत्तस्मि-ञ्शरासारं विमुञ्चति । हंसैस्तत्यजिरे सर्व-शौण्डीरतनुदीर्घिकाः ॥ ४८८ ॥ तस्यौपकर्णिकाः कर्णे-जपा इव पतत्रिणः । केषां नाम रणेऽभूव-न्न वीराणामरुंतुदाः ॥ ४८९ ॥ अभिचारकमन्त्राभं, दधानस्तत्तदायुधम् । बद्धमूर्त्तिरथर्वेव, दिदीपे सोऽधिकं तदा ॥ ४९० ॥ तस्मिन् वीरान् शरव्रात-जातवेदसि जुह्वति । स्फारैर्ष्विासविस्फारै-रभिचाराक्षरायितम् ॥ ४९१ ॥ क्ष्माभुजो वीक्ष्य कोदण्ड-दण्डधारिणमाहवे । सैन्यसंहारिणं विप्र-मूर्त्या तं मेनिरेऽन्तकम् ॥ ४९२ ॥ कल्पान्ताम्भोधिरुद्वेल, इव विश्वंभरातलम् । प्लावयन् पाण्डवानीकं, निजनाराचवीचिभिः ॥ ४९३ ॥ व्योमाङ्कचुम्बिभिस्तैस्तैः, सायकश्रेणिसेतुभिः । आचार्यः स्खलयांचक्रे, धृष्टद्युम्नेन तत्क्षणात् ॥ ४९४ ॥ (युग्मम्) तयोरथ मिथःक्षिप्त-गार्ध्रपक्षसहस्रयोः । तरङ्गिताप्सरोरङ्गः, संगरः समभूच्चिरम् ॥ ४९५ ॥ द्रोणबाणान् विलुप्यापि, धृष्टद्युम्नशरावलिः । क्षणं रेमे तपस्यान्ते, मिहिकेव रवेः करान् ॥ ४९६ ॥ ततः क्रमाद्विवर्धिष्णु-राचार्यीयः शरोत्करः । आतपोऽपरनैदाघ, इवाभूदतिदुःसहः ॥ ४९७ ॥ तदा-

१ राहुजिह्वाः । २ अच्छिनत् । ३ खड्गसगमवान् । ४ द्रोणाचार्यः । ५ अगस्तिमुनि । ६ पक्षे प्राणैः । ७ शौण्डीराः—वीराः । ८ अथर्ववेदः । ९ धनुष्टङ्कारैः । १० गृध्रपक्षनिर्मिताः बाणाः गार्ध्रपक्षाः । ११ हिमम् ।

-त्थाममनामैर, माल्वेश्वरकुञ्जरः । कालचक्रलसंहार-मावहन्नाहवे हतः ॥ ४९८ ॥ अश्वत्थामा हतः सोऽय-मभीक्ष्ण-
मिति वादिनाम् । गनिकानां समुत्तस्थौ, तदा कोलाहलो महान् ॥ ४९९ ॥ लोकवाक्ये गुरुस्तस्मिन्, कर्णमूलमुपेयुषि ।
अश्वत्थाम्नि निजे सूनौ, मृत्युशङ्कामधारयत् ॥५००॥ अनर्जुनैस्ततो भीम-कैटभारिपुरःसरैः। लम्भितो वचनैस्तैस्तै-
र्दाक्षिण्यसरिदःसरम् ॥ ५०१ ॥ नीचः कथंचिदव्यक्तं, व्याजहार युधिष्ठिरः । अश्वत्थामा हतो हन्त !, हतो हन्तेति
भारतीम ॥ ५०२ ॥ ( युग्मम् ) तामाकर्ण्य स्फुटत्कर्णं, गिरमाजातशात्रवीम् । तस्यामव्यभिचारित्व-प्रत्ययैकानिपण्णधीः
॥ ५०३ ॥ उन्मीलच्छुशोकोर्मि-परिप्लावितमानसः । । संन्यस्यति स्म तत्काल-माचार्यः सर्वमायुधम् ॥ ५०४ ॥ (युग्मम्)
तदा मुगजिराना, रथात् खगमिव द्रुमात् । द्विपन्नैष्पेपिकैर्वाणै-र्द्रौपदिस्तमपातयत् ॥ ५०५ ॥ हतोऽश्वत्थामनामायं,
गजो न तु तवात्मजः । नृपेण पुनरित्युक्ते, कुपितो गुरुरब्रवीत् ॥ ५०६ ॥ त्वया राजन्निदं सत्य-व्रतमाजन्म धारितम् ।
आगणस्यास्य युद्धस्य, केवलं मूल्यवे गुरोः ॥ ५०७ ॥ इत्याद्यन्यदपि क्रोधा-द्भारद्वाजेऽभिधातरि । उन्मीलति स्म
तस्यामिन, तत्कालमशरीरिणी ॥ ५०८ ॥ ब्रह्मन्! मुञ्च रुपं स्वाहि, शमामृतसरस्वति । अनैदंकालिकं रौद्र-ध्यानमेतत् परि-
त्यज ॥ ५०९ ॥ धर्म्यं तद्ध्यानमाधेहि, धीमन्! सांप्रतकालिकम् । आयुषः क्षय एवाय-मद्य मृत्युस्तवागमत् ॥ ५१० ॥
यत् पुरस्कृत्य निःशेष-मतारणमङ्गलम् । तदाध्यानं विलोकन्ते, ब्रह्मलोकसुखश्रियः ॥ ५११ ॥ इत्याकर्ण्य भवारण्य-भीप-
णानां विभावयन् । न्यकुर्वन् रनितातङ्कान्, रोपादीन् परिमोपिणः ॥ ५१२ ॥ स्मरन् पञ्चनमस्कार-मन्त्रं दुरितघातिनम् ।

१ युधिष्ठिरस्य सम्बन्धिनीम् ।

विश्वैकबान्धवानर्ह-न्मुखाञ्शरणमाश्रितः ॥ ५१३ ॥ परमात्मलयाराम-प्रवेशपरिनिर्वृतः । ब्रह्मद्वारविमुक्तात्मा, ब्रह्मलोकं गुरुर्ययौ ॥ ५१४ ॥ ( त्रिभिर्विशेषकम् ) केशेष्वाकृष्य नालेषु, शालिस्तम्बमिव क्षणात् । कृन्तति स्म कृपाणेन, धृष्टद्युम्नोऽथ तच्छिरः ॥ ५१५ ॥

हतेऽस्मिन् कौरवानीक-लोकाक्रन्दप्रतिस्वनैः । चक्रन्दुरिव कोदण्ड-विद्या अपि तिरोहिताः ॥ ५१६ ॥ मध्याह्नेऽपि तदा शोक-तिमिरोर्मिकरम्बिते । कौरवीयबले बाढं, निशीथ इव पप्रथे ॥ ५१७ ॥ व्योमेव पुष्पदन्ताभ्यां, लोचनाभ्यामिवाननम् । विमुक्तं न व्यभाद्भीष्म-द्रोणाभ्यां कौरवं बलम् ॥ ५१८ ॥ मध्यंदिनेऽपि कौन्तेय-पताकिन्यास्तु सर्वतः । नितान्तमुत्तरङ्गोऽभू-दानन्दक्षीरनीरधिः ॥५१९॥ द्रोणे शल्य इवोत्खाते, पाण्डवानां स विग्रहः । अरातिश्रियमादातु-मत्यन्तप्रगुणोऽभवत् ॥ ५२० ॥

निर्मथ्नन्नथ पार्थानां, मुदं कुमुदिनीमिव । द्रौणिः पितृवधक्रोधा-दधावदरुणद्युतिः ॥ ५२१ ॥ अथ पास्यन्निवाकाशं, भ्रंशयिष्यन्निवामरान् । क्षोदयिष्यन्निव क्षोणिं, चालयिष्यन्निवाचलान् ॥ ५२२ ॥ शोषयिष्यन्निवाम्भोधीन्, गिलिष्यन्निव भास्करम् । पेक्ष्यन्निव वैलक्षांशुं, निग्रहिष्यन्निव ग्रहान् ॥ ५२३ ॥ लम्भयिष्यन्निवाशेष-मपि गण्डूषतां रुषा । पाण्डवानामनीकं त-ज्जगाद गुरुनन्दनः ॥ ५२४ ॥ ( त्रिभिर्विशेषकम् ) ये चक्रुः कारयांचक्रु-र्ये च ये चान्वमन्यत । ये चालु-

( १ 'पुष्पदन्तौ पुष्पवन्ता-वेकोक्त्या शशिभास्करौ' । इति हैमः । अदन्तोऽप्ययं शब्दः । 'प्राक्प्रत्यग्धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्' । इत्याश्चर्यमञ्जर्यामदन्तत्वदर्शनादिति मुकुटोल्लेखात् ) । २ 'पा पाने' इति धातुः । ३ चन्द्रम् ।

लोकिरे ये चा- श्चौपुर्मृत्युं पितुर्मम ॥ ५२५ ॥ सर्वान् पश्यत तान् हुत्वा, क्रोधधूमध्वजे मम । पूर्णाहुतिममी वाणाः, प्रथयन्ति पृथासुनेः ॥ ५२६ ॥ इत्याक्षिप्य भटान् सर्वान्, दान्तदिग्दन्तिमण्डलैः । द्रोणायनिस्तनोति स्म, शरैरेकार्णवं नभः ॥ ५२७ ॥ सायकान् संदधत्येव, तस्मिन् वीरेऽधिकार्मुकम् । त्रस्तैरिव प्रहारेभ्यः, प्राणैर्मुमुचिरे द्विपः ॥ ५२८ ॥ कोऽभून् सोढुमलंभूष्णु-राश्वत्थामं शरोत्करम् । शैला अपि न सोढारः, कल्पान्तजलदाशनिम् ॥ ५२९ ॥ तत्कार्मुकविनिर्मुक्ताः, शराः सर्वारिभूभुजाम् । हृदयेषु विशन्ति स्म, सत्त्वसारमिवेक्षितुम् ॥ ५३० ॥ शोषयन् सैन्यवारीणि, नैदाघ इव भानुमान । रुरुधेऽम्भोधरेणेव, स कपीश्वरकेतुना ॥ ५३१ ॥ छिद्रितध्वजमुत्कृत्त-वरूथं छिन्नसारथि । संभ्रान्ततुरगं वाणैः, क्षणं युद्रमभूत्तयोः ॥ ५३२ ॥ शराः पार्थस्य निःस्थामा-माश्वत्थामामिषुक्रियाम् । क्रमाच्चक्रुरपाचीनां, हिमानीमिव रागाः ॥ ५३३ ॥ क्रोधेनाथ ज्वलन् सद्यो, दत्ताहुतिरिवानलः । नारायणीयमातेने, द्रोणभूरस्त्रमुद्भटम् ॥ ५३४ ॥ उन्मिमील्याथ तन्मील-त्सर्वशौण्डीरडम्बरम् । अम्बरं च दिगन्तांश्च, माद्यदग्नीनक्षत्रयत् ॥ ५३५ ॥ कालाग्निरुद्रः पातालात्, किं भित्त्वा भुवमुद्गतो[1] । किमुच्छोष्योदगात् सिन्धु-जलानि वडवानलः ? ॥ ५३६ ॥ माद्यत्यद्यैव किं वायं, स कल्पान्तहुताशनः ? । जज्ञिरेऽर्ककराः किं वा, ज्वालास्थूलंभविष्णवः ? ॥ ५३७ ॥ समं ज्वलितुमारेभे, सर्वैर्वा भुवनाग्निभिः ? । इत्याद्यनेकसस्तर्काः, सैनिकैस्तेनिरे तदा ॥ ५३८ ॥ (त्रिभिर्विशेषकम्) तैस्तैर्ज्वालावृतिव्राते-ग्रामीणमिव धैनुकम् । तस्मिन्नस्त्रे पृथासूनु-सैन्यमानिर्रीपति ॥ ५३९ ॥ लोकानां नश्यतां पाद-पांशुभिः पिहितोऽशुमान् । वंहीयोभिस्तदुद्भूते-र्धूमो

---

१ गरुडो-रथः । २ दक्षिणदिशासंबन्धिनीम् । ३ अस्त्रम् । ४ सुगन्धि तृणम् ।

धूमैरिवाभवत् ॥ ५४० ॥ ( युग्मम् )
ऊर्ध्वबाहुस्ततोऽवादीत्, सैन्यानुच्चैस्तरां हरिः । उज्झतोज्झत शस्त्राणि, रथान्मुञ्चत मुञ्चत ॥ ५४१ ॥ भक्तिनम्रीभव-
न्मौलि, नमस्यत नमस्यत । अस्त्रमेतद्यथा विश्वं–घस्मरं[1] शाम्यति क्षणात् ॥५४२॥ ( युग्मम् ) इति शौरेर्गिरा वेगा–दायुधानि
धनुर्धराः । संगराभिनिवेशेन, समं सर्वेऽपि तत्यजुः ॥ ५४३ ॥ किं चापत्रपया सार्धं–मुज्झांचक्रुर्वरूथिनः । नमन्ति स्म च
तन्मौलि–चूलचुम्बितभूतलाः ॥५४४॥ अहंकारकुलागार–मात्मजो मरुतः पुनः । शस्त्रत्यागादि तत् किंचि–न्न चकार कथंचन
॥ ५४५ ॥ जगाद च जगत् सर्वं, यस्यैतत्तृणमेव मे । सूर्याचन्द्रमसावेतौ, यस्य ग्रासार्धमेव मे ॥ ५४६ ॥ अगाधोऽप्यय-
मम्भोधि–र्यस्य मे गोष्पदायते । कुलभूमीभृतोऽप्येते, वामलूरन्ति[2] यस्य मे ॥ ५४७ ॥ योऽहमुद्धर्तुमिच्छामि, काश्यपीं
लेष्टुलीलया । तक्षकस्य जिघृक्षामि, क्षणाद्योऽहं फणामणिम् ॥ ५४८ ॥ केलिकन्दुकतां यान्ति, यस्य मे दिग्गजा अपि ।
यस्य मे पांसुदेशीयं, वासवीयं तदायुधम् ॥ ५४९ ॥ यस्य मे विश्वविश्वैक–माहात्म्यपरिमोषिणः । वितीर्णजनवित्रासे–
ऽप्यस्त्रेऽस्मिन् गणनैव का ? ॥५५०॥ ( पञ्चभिः कुलकम् ) इत्याद्युदीरयन्नेव, शेषानुत्सृज्य सैनिकान् । तेनास्त्रेण बकाराति–
रावरीतुं प्रचक्रमे ॥ ५५१ ॥ तूर्णमेवाथ धावित्वा, तार्क्ष्यध्वज–कपिध्वजौ । अवातीतरतां भीम–माकृष्य प्रसभं रथात्
॥ ५५२ ॥ आयुधानि च सर्वाणि, मोचयांचक्रतुर्बलात् । प्रमोदमखिलं सैन्यं, ग्राहयामासतुः पुनः ॥ ५५३ ॥ जगत्यस्ख-
लितः काल–प्रताप इव मूर्तिमान् । तदस्त्रं सैनिकातङ्कैः, साकं प्रशममागमत् ॥ ५५४ ॥ द्रोणपुत्रस्तु कोपेन, दिदीपे

१ विश्वनाशकम् । २ वल्मीकवदाचरन्ति ।

नितरां तदा । प्रज्वलन्तितरां वैरि-कृतारम्भा हि दोर्भृतः ॥ ५५५ ॥ नेत्राभ्यां रोपताम्राभ्यां, दत्तनासीरवैभवम् ।
गम्मगोऽश्यामम्मरद्रौणि-रत्नं कार्शानवं नवम् ॥ ५५६ ॥ भान्ति स्म ककुभो वह्नि-ज्वालापिञ्जरितास्ततः । दिग्दन्ता-
वलमिन्दूर-रजोभिरिव रूपिताः ॥ ५५७ ॥ प्रज्वलज्ज्वलनाः काम-मश्वेभभटकङ्कटाः । निरीक्षांचक्रिरे चञ्च-त्काञ्चनैरिव
निर्मिताः ॥ ५५८ ॥ दीप्तमप्तार्चिषः स्तम्बे-रमाः शुशुभिरेतराम् । ज्वलद्दावानलालीढाः, सर्वतः पर्वता इव ॥ ५५९ ॥
रथौघश्चाग्निः सदा लोले, हयौघे हैमवर्मणि । चिरेण विविदे दाहा-दुच्चकैरुच्छलत्यपि ॥ ५६० ॥ पताकिनीपता-
कासु, वेल्लितासु नभस्वता । कामं नृत्यन्निव प्रीत्या, लक्ष्यते स्माशुशुक्षणिः ॥ ५६१ ॥ समन्तादन्तयन्नाना-हेतिभिः
सुभटान् रणे । धनंजय इव स्वैरं, वल्गति स्म धनंजयः ॥ ५६२ ॥ इति प्लोपच्चमूमस्त्रं, वारुणेनास्त्रेण तज्जवात् ।
ध्यानेनेव मुनिः कर्म, शमं निन्ये कपिध्वजः ॥ ५६३ ॥ तेजसीवान्तरे साक्षा-दुत्साह इव देहिनि । अङ्गिनीव
रणे तस्मि-न्नप्यस्त्रे क्षयमीयुपि ॥ ५६४ ॥ ग्रहग्रस्त इवोपात्त-सर्वस्व इव दस्युभिः । अश्वत्थामा चिरं तस्थौ,
रौद्रमेदस्विमानगः ॥ ५६५ ॥ (युग्मम्) वीक्ष्य च स्फूर्तिलुण्टाकौ, कैटभारि-किरीटिनौ । ताम्यति स्माधिकं द्रौणिः,
कर्णागदमाम्बिकैः ॥ ५६६ ॥ ततः क्रोधेन धूमाय-मानमानसमाकुलम् । देवता काचिदाकाशे, तमवोचत्तिरोहिता
॥ ५६७ ॥ किमेवं खिद्यसे क्रोधा-दम्बभूष्णुर्द्विजोत्तम ! । देवा अपि तयोर्जिष्णु-कृष्णयोर्न प्रभूष्णवः ॥ ५६८ ॥
प्राग्जन्मन्यमूभ्यां हि, नेपे किमपि तत्तपः । येनाभूतामिमौ लोक-विजित्वरभुजोर्जितौ ॥ ५६९ ॥ देवतायास्तया वाचा,

१ आग्नेयम । २ अग्निः । ३ अग्निः । ४ "वारुणास्त्रेण" प्रत्यन्तर० ।

८१

द्रोणसूनुरजायत । फालभ्रष्टो यथा द्वीपी, यथा कृत्तकरः करी ॥ ५७० ॥ अथ द्रौणायनेरेना-मभिलक्ष्य विलक्ष्यताम् । देवो[1] भासामधीशानः, खेदेनेव तिरोदधे ॥ ५७१ ॥ ततो द्वादशयामेन, रणेनोच्चैः कृतश्रमे । उभे अपि बले स्वं स्वं, स्कन्धावारमुपेयतुः ॥ ५७२ ॥

अथ द्रोणे हते कर्ण-माशावल्लिमहीरुहम्। आधिपत्ये पताकिन्याः, कौरवेन्द्रोऽभ्यषिञ्चत ॥५७३॥ तथा स्नेहमयश्चक्रे-ऽभिषेकः कुरुभूभुजा । शौण्डीरिमानलस्तस्य, यथाऽभ्यधिकमज्वलत् ॥ ५७४ ॥ तेन वीरकिरीटेन, संगराय गमिष्यता । प्रवर्त्यन्ते स्म दानानि, याचकेभ्यो यथारुचि ॥ ५७५ ॥ कामं प्रवर्षत्येतस्मि-ञ्जीमूत इव नूतने । आश्चर्यमभवन्नर्थि-तडागाः कमलाकुलाः ॥ ५७६ ॥ शौण्डीरकुञ्जरे तस्मिं-स्तदानीं दानशालिनि । मदं सपदि के नाम, नात्यजन् परवारणाः[2] ॥ ५७७ ॥ वन्दिनश्च द्विजेन्द्राश्च, वर्णप्राधान्यशालिनः । तस्मिन् दातरि यान्ति स्म, द्राक्स्ववर्णप्रधानताम् ॥ ५७८ ॥ माहेन्द्रीव महासेन[3]-मेनमग्रे विधाय सा । कौरवीया चमूः प्रातः, संगरोत्सङ्गमागमत् ॥ ५७९ ॥ सरित्पूर इवाम्भोधौ, कर्णवैतालिकध्वनौ । निलीनात्मा रणातोद्य-नादः सन्नप्यसन्नभूत् ॥ ५८० ॥ वीरोत्तंसं पुरोधाय, तमेव द्रुपदात्मजम् । पाण्डवा अपि सानीकाः, समीकमुपतस्थिरे ॥ ५८१ ॥

युद्धान्तरं दिगन्तेषु, सूत्रयन्ति प्रतिस्वनैः । रणतूर्याण्यताड्यन्त, पताकिन्योर्द्वयोरपि ॥ ५८२ ॥ पूर्वापरमरुन्नुन्ना-स्तरङ्गा इव नीरधेः । उभयेऽपि भटाः स्वैरं, मिलन्ति स्म परस्परम् ॥ ५८३ ॥ भान्ति स्म खड्गाः केषांचि-द्विरोधिरुधिरा-

१ सूर्यः । २ पराक्रमाग्नि. । ३ कार्तिकस्वामिनम् ।

ह्निताः । लाञ्छिता इव वीरश्री–पादालक्तकबिन्दुभिः ॥ ५८४ ॥ कस्मिंश्चित् सुमनोवृष्टि–रप्सरोभिरमुच्यत । पपात पुनरन्य-
स्मिन्, समीरणसमीरिता ॥ ५८५ ॥ दन्तिदन्तप्रहारोत्थ–स्फुलिङ्गपटलच्छलात् । द्विट्प्रतापं भृशं पीतं, केषांचिदसयोऽमुचन्
॥ ५८६ ॥ रक्तकुट्टिमितां भूमिं, दन्तिनां दन्तमौक्तिकैः । केचिदानिन्यिरे तारा–सारसंध्यावरश्रियम् ॥ ५८७ ॥ कश्चिदाया-
तमुल्लूय, करीश्वरकरं रणे । कौतुकात् करवालस्य, कोशतामनयत् क्षणम् ॥ ५८८ ॥ खड्गाघातोच्छलदन्ति–मौक्तिकग्रहणा-
कुलाः । चकार सुचिरं कश्चि–द्व्योम्नि व्योमचरस्त्रियः ॥ ५८९ ॥

भृगिणो वीरसंहारं, सूत्रयन् पत्रिणां गणैः । राधेयो युद्धमाधत्त, धनुर्वेद इवाङ्गवान् ॥ ५९० ॥ दिवि कर्णस्य
काण्डानां, मण्डले मण्डपत्यपि । चित्रं विच्छायता वैरि–वीरेषु ददृशे भृशम् ॥ ५९१ ॥ कार्मुकस्य गुणो जज्ञे, कर्णकर्णान्त-
संगमी । लभन्ते स्म पुनः प्रौढ–पक्षा लक्षाणि मार्गणाः ॥ ५९२ ॥ संहर्तुमुद्यतेऽप्येवं, तस्मिन् विश्वं द्विपद्बलम् । दुःशासनो-
ऽप्यतोऽधावत्, वज्रवत्प्रलयाम्बुदे ॥ ५९३ ॥ सर्वतः सत्त्वसर्वस्वं, क्षुन्दानः स मदोद्धतः । जगाहे पाण्डवानीकं, नाकदन्तीव
मानसम् ॥ ५९४ ॥ खण्डितास्तस्य काण्डौघैः, शूरा अपि शरा अपि । संगरे चक्रिरे भूयो, न शरासनसंगमम् ॥ ५९५ ॥
चित्रं तस्य द्विपद्वर्ग–घायकैरपि सायकैः । द्विषां जागरयांचक्रे, भयोद्रेकः परो रणे ॥ ५९६ ॥ सैन्यं सर्वाङ्गमाक्रामन्,
निर्वेग इव क्षणात् । सैष जाङ्गलिकेनेव, रुद्धः किर्मीरवैरिणा[3] ॥ ५९७ ॥ धनुःकेंकारनिर्मग्न–ध्वजिनीतुमुलध्वनिः । तयो-
र्गान्धीजगद्दत्त–डमरः समरो महान् ॥ ५९८ ॥ कङ्कपत्रास्तयोश्चित्र–मपतन्नितरेतरम् । धर्मजं कौरवेन्द्रं च, किं तु विव्य-

१ छिन्ना । २ मण्डपवदाचरति मति । ३ भीमेन ।

थिरेतराम् ॥ ५९९ ॥ कृष्णाकेशांशुकाकृष्टि-स्मृतिघर्मर्तुनर्तनैः । कामं कल्लोलयांचक्रे, भीमक्रोधमहाम्बुधिः ॥ ६०० ॥ उत्तीर्याथ रथाद्भीमः, ऊर्जितेन समं भीमः, शरैरुन्मथ्य सारथिम् । दौःशासनमथाभाङ्क्षी-द्रथं सह मनोरथैः ॥ ६०१ ॥ अवोचत च रे कर्म-चण्डाल ! मलिम्रेपितासि रुषा पुरः । दुःशासनं समाक्रम्य, भुजाभ्यां भूमिमानयत् ॥ ६०२ ॥ अवोचत च रे कर्म-चण्डाल ! अकीर्तिकन्दलीमूल-नाशय!। दुरात्मन् ! कुरुभूपाल-गोत्रहालाहलद्रुम ! ॥ ६०३ ॥ अधर्मैकमय ! क्षत्र-जातिपूर्णेन्दुलाञ्छन !। अकीर्तिकन्दलीमूल-कन्द ! दुर्नयशेवधे ! ॥ ६०४ ॥ द्रौपदीप्रसभाकृष्टि-पांसुवृष्टिरजस्वल ! । स त्वदीयो भुजः कोऽयं, ननु संप्रति दर्शय ॥ ६०५ ॥ (त्रिभिर्विशेषकम्) इत्युदीर्य भुजेनाद्यं, वैरप्रसवशाखिनम् । दौःशासनं भुजं भीमः, समूलमुदमूलयत् ॥ ६०६ ॥ तन्मूलोत्थैरसृग्बिन्दु-संदोहैरङ्गसङ्गिभिः । निर्ववौ नितरां भीमो, जितलोहितचन्दनैः ॥ ६०७ ॥ रोषभीममुखे भीमे, दुःशासनमरुंतुदम् । खण्डीकुर्वति दत्तारं, प्रतिकारमिव द्विपे ॥ ६०८ ॥ सर्वस्मिन् विद्रुते त्रासात्, सैन्ये तत्पांशुवाससा । भियेव द्यौरपि छन्न-दिनेशवदनाऽभवत् ॥ ६०९ ॥ (युग्मम्) दिदीपे नितरां भीम-स्तीर्णसंगरसागरः । क्लेशाकूपारपारीण, इव योगीन्द्रपुंगवः ॥ ६१० ॥ शङ्के नाकिविमानानां, मिलितानां कुतूहलात् । प्रेरितः पौनरुक्त्येन, ययौ व्योमान्तमंशुमान् ॥ ६११ ॥ निषिद्धे रणसंरम्भे, ततोऽधिकृतपूरुषैः । वरूथिन्यावुभे स्वं स्वं, संनिवेशमगच्छताम् ॥ ६१२ ॥

दुःशासनवधाधान-सुभगंभावुकागमम् । नेत्राभ्यां द्रौपदी भीमं, दूरादायान्तमापपौ ॥ ६१३ ॥ भीमोऽप्यभ्येत्य पाञ्चाली-मालिङ्ग्य कबरीं स्पृशन् । दुःशासनवधोदन्त-मानन्देन न्यवेदयत् ॥ ६१४ ॥ साऽपि विज्ञातनिःशेष-वृत्ता-

१ पराक्रमेण ।

न्नाऽपि परिच्छदान् । शृण्वती वल्लभाद्भूयः, काम्याऽगादशां पराम् ॥ ६१५ ॥

राधेयोऽपि विभावर्यां, स्कन्धावारमुपेयिवान् । धार्तराष्ट्रमभाषिष्ट, कनिष्ठवधदुःखितम् ॥ ६१६ ॥ राजन्नर्जुन प्राणाग्नि, पाण्डवीये बले शिरः । छिन्ने तस्मिन्नशेषं तत्, लप्स्यते शवकल्पताम् ॥ ६१७ ॥ प्रथमैवाहुतिः सोऽपि, मामके बाणपावके । किं पुनः ? समरे सूत-मुखमालोकते जयः ॥ ६१८ ॥ पार्थस्य सर्वकर्माणः, स सारथिरुदारधीः । वर्तते मे पुनः कश्चित्, सारथिर्न तथाविधः ॥ ६१९ ॥ तन्मे मातलिना तुल्यं, शल्यमर्पय सारथिम् । हत्वाऽर्जुनं यथा बन्धु-शोकमुन्मूलयामि ते ॥ ६२० ॥ ततो मद्रेन्द्रमाहूय, गौरवात् कौरवाधिपः । सारथ्यमर्थयांचक्रे, चम्पेशस्य कृताञ्जलिः ॥ ६२१ ॥ शल्योऽप्योचत् किमौचित्य-वन्ध्यमित्यभिधीयते ? । क्व राजन्यकुलीनोऽहं ?, सूतसूतिरसौ क्व च ? ॥ ६२२ ॥ किं नाम न नृपं काम-मस्याहं सारथीभवन् ? । काकोले कलहंसस्य, दास्यं हास्यं न किं भवेत् ? ॥ ६२३ ॥ कौरवेन्द्र-स्ततोऽवादी-दिदं मद्रेश मा वद । आतुरे हि सुहृद्वाचा-मौचिती न विचार्यते ॥ ६२४ ॥ धीराः कार्ये हि मित्राणा-मकृत्यमपि कुर्वते । मित्रकार्यं विचारश्च, नैकत्र खलु खेलतः ॥ ६२५ ॥ तत्त्वमिच्छसि यद्यस्मिन्, संपराये जयं मम । तदूरीकुरु कर्णस्य, सारथ्यं समराजिरे ॥ ६२६ ॥ इति दाक्षिण्यमत्यन्त-मानीतः कुरुभूभुजा । स्मृतपूर्वी च माद्रेयौ, प्रत्यूरीकृत-मान्मनः ॥ ६२७ ॥ शल्योऽब्रवीत् करिष्येऽह-मेतत्तर्हि भवद्वचः । किं तु कर्णेन सोढव्यः, स्वैरजल्पो रणे मम ॥ ६२८ ॥ (युग्मम्) गिराऽथ कुरुनाथस्य, वचस्तन्मद्रभूपतेः । अङ्गीचक्रेऽङ्गभूपालः, कालज्ञा हि मनीषिणः ॥ ६२९ ॥ प्रतिजज्ञे

१ सारथिपुत्र । २ नकुलसहदेवौ ।

च चेत् प्रातः, काश्यपीमकपिध्वजाम् । न करोमि तदा नूनं, हव्यवाहं विशाम्यहम् ॥ ६३० ॥

अथोदगात् प्रगे भानु-स्तिमिरानीकमन्तयन् । तत्प्रहारव्रणोद्गीर्णैः, शोणितैरिव शोणितः ॥ ६३१ ॥ पुरो विधाय राधेयं, ततस्ते शल्यसारथिम् । आययुः सज्जितक्रूर-वारणं कौरवा रणम् ॥ ६३२ ॥ राजहंसकृतोत्तंसा, पुण्डरीकौघ-मण्डिता । समित्सीमां समागच्छत्, पाण्डवीयाऽपि वाहिनी ॥ ६३३ ॥ गम्भीरवीरसंरम्भ-संभ्रान्तभुवनत्रयः । वल्गति स ततो बाण-धोरणीभीषणो रणः ॥ ६३४ ॥ निष्क्रामन्ति स्म केषांचि-दिषवश्च शरासनात् । प्राणाश्च प्रतिवीराणां, स्पर्ध-येव शरीरतः ॥ ६३५ ॥ वितेरुः फलमस्मभ्यं, कर्मण्यविहितेऽप्यमी । इति प्रीता इवान्येषां, शराः किं किं न तेनिरे ॥ ६३६ ॥ दन्तान् दन्तावलेन्द्राणा-मसिना कश्चिदच्छिनत् । असावपि ततश्छिन्ने, निन्ये तानेव शस्त्रताम् ॥ ६३७ ॥ वीर-प्रहारमूर्च्छाल-चेतसः पतिता अपि । हुंचक्रिरे चिरं शून्य-क्षिप्तकौक्षेयकाः परे ॥ ६३८ ॥

क रे पार्थः ? क रे पार्थ ?, इति जल्पन्तमुच्चकैः । सधैर्यमथ राधेय-मभ्यधान्मद्रभूपतिः ॥६३९॥ मूर्ध्नि कर्ण ! न कर्णौ ते, हृदये न विवेकिता । नान्तरात्मनि चैतन्य-मिति मे मन्यते मतिः ॥ ६४० ॥ यत् प्रतिज्ञामकार्षीस्त्व-मात्मनीने-तरामिमाम् । यथा दोर्विक्रमैर्माद्य-न्नद्य वध्यो मयाऽर्जुनः ॥ ६४१ ॥ किं नाम सोऽपि कोऽप्यस्ति ?, येन जीयेत सोऽ-र्जुनः । नरकण्ठीरवे कुण्ठी-भवन्ति भुवनान्यपि ॥ ६४२ ॥ यत्त्वमप्याचरः क्रान्तः, शरैरेतस्य गोग्रहे । अनीपत्करम-त्यन्तं, तद्वकुमपि मादृशैः ॥ ६४३ ॥ त्वां विधूय युधि क्रोधा-द्गान्धारेयं बबन्ध यः । सोऽप्यस्मिन् विनयाद्वृत्ते,

१ शराग्रभागम् । २ खड्गे । ३ शून्यप्रदेशे क्षिप्तखड्गाः । ४ आत्मनोऽहिताम् ।

गन्धर्वेन्द्रोऽतिगर्वताम्[1] ॥ ६४४ ॥ तमद्याह्वयमानस्त्व-मर्जुनं किं न लज्जसे ? । " विपर्यस्यन्ति नेदीयो-मृत्यूनां[2] मतयोऽन्यथा " ॥ ६४५ ॥

अथ प्रादुर्भवत्कोप-कम्पश्चम्पेश्वरोऽब्रवीत् । मद्राणां म्लेच्छवृत्तीना-मनुरूपमिदं वचः ॥ ६४६ ॥ परमेतर्हि ते किंचि-दन्तरं दर्शयिष्यते । येन कुण्डलितकोदण्डः, पुरो वीक्षिष्यतेऽर्जुनः ॥ ६४७ ॥ शल्येनाभिदधे शीर्ष-च्छेदादर्वाक्किरीटिनम् । सम्यग् न गम्यसे कर्ण !, पश्य पश्य पुरस्ततः ॥ ६४८ ॥ पार्थः सोऽयं रथारूढः, कृष्णसूतः कपिध्वजः । अभ्येति निघ्नन् सैन्यानां, ध्वान्तवद्भिर्विनमाम् ॥ ६४९ ॥ इत्याकर्ण्य गिरं कर्णः, कीर्तितां मद्रभूभुजा । क्रोधधूमायितस्वान्तः, क्षणं तूष्णीकतामधात् ॥ ६५० ॥

शरैरपिनद्धवानेऽथ, राधेयोऽनु धनंजयम् । [3]विरोकैरनु भूलोकं, कल्पान्तद्युतिमानिव ॥ ६५१ ॥ मार्गे स मार्गणैर्वीमान्, संजहार सहस्रशः । नरस्नैर्नूतनप्रावृड्-नदीरय इव द्रुमान् ॥६५२॥ [4]प्रत्यैच्छदुरुमात्सर्यं, तमायान्तं तपःसुतः । सरिदोघमिवोर्मीभि-रापतन्तं महाह्रदः ॥ ६५३ ॥ निर्भरासृग्भरोद्गार-कातरीकृतखेचरः । आसीत्तयोः शरासार-व्याप्तव्योमाङ्गणो रणः ॥ ६५४ ॥ मा स्मान्योऽन्यमिमौ क्रुद्धौ, निरीक्षेतामिति ध्रुवम् । शराः शैलीभवन्ति स्म, छिन्नास्ताभ्यां मिथोऽन्तरे ॥ ६५५ ॥ मुष्टिरन्योऽन्यनिर्मुक्तैः, सायकैरिव कीलितः । एक एव तयोर्वीक्षां-चक्रे कर्णान्तमागतः ॥ ६५६ ॥ पत्रिभिस्त्वमितोऽप्यस्म-निश्चयेन विनिर्मितैः । गगनं च दिगन्ताश्च, तिरयांचक्रिरेतराम् ॥ ६५७ ॥ तयोर्बाणव्रणोद्गीर्णौ, रेजे रुधिर-

1 अतिनम्रताम् । 2 समीपस्थमृत्यूनाम् । 3 किरणैः । 4 अरुधत् ।

निर्भरः । निर्यन्नङ्गेष्वपर्याप्तः, कोपजन्मेव शोणिमा ॥ ६५८ ॥ युगान्ताशनिदेशीयैः, क्रमात् कर्णशिलीमुखैः । कामं लोक
इवाकारि, तपसःसूनुराकुलः ॥ ६५९ ॥ तूणादात्तं न संधातु-माक्रष्टुं च न संहतम् । न चाकृष्टं शरं मोक्तु-मीश्वरोऽभूद्यु-
धिष्ठिरः ॥ ६६० ॥ केवलं कर्णनिर्मुक्त-मार्गणव्रणशोणितैः । भीमाग्रजो बभाराङ्गं, जितपुष्पितकिंशुकम् ॥ ६६१ ॥
तं कर्णेन तथा मथ्य-मानमालोक्य केशवः । स्पष्टाक्षेपैरभाषिष्ट, वचोभिः कपिकेतनम् ॥ ६६२ ॥ धिक् ते
कोदण्डपाण्डित्यं, धिक् च दोर्दण्डचण्डताम् । धिग् धिक् शौण्डीरमानित्वं, धिग् धिक् ते पुरुषव्रतम् ॥ ६६३ ॥ अखण्डभुज-
दण्डस्य, पश्यतो यस्य वैरिभिः । ज्येष्ठबन्धुः किमप्येवं, प्राप्यते प्राणसंशयम् ॥ ६६४ ॥ न्यस्तपूर्वी धनुर्विद्या-मात्मनोऽप्य-
धिकां त्वयि । अद्येन्द्रसदसि द्रोणो, गुरुर्लज्जिष्यते ध्रुवम् ॥ ६६५ ॥ भृशं पश्चोत्तरे पौत्र-शतेऽपि त्वयि वत्सलः । अद्य
भीष्मस्त्रपामुच्चै-र्मुमुक्षुरपि वक्ष्यति ॥ ६६६ ॥ लोकेन समरालोक-विलीनहृदयस्य ते । सारथ्यं प्रथयन् पार्थ !, हसिष्येऽह-
मपि स्फुटम् ॥ ६६७ ॥ त्वत्पदे हन्त कुन्ती चेत्, कन्यां कांचिदसोष्यत । ततस्तस्याः पतिर्नून-मरक्षिष्यत्तपःसुतम्
॥ ६६८ ॥ इत्याद्यम्भोजनाभेन, तर्जितो मुहुरर्जुनः । धावति स्मानुराधेय-ममर्ष इव मूर्तिमान् ॥ ६६९ ॥ स धावन्
वृषसेनेन, राधेयतनुजन्मना । क्षणं मार्गद्रुमेणेव, सिन्धुरः प्रत्यरुध्यत ॥ ६७० ॥ अभिमन्युवधस्मृत्या, तरङ्गितरयो-
ऽर्जुनः । तूलशैलमिवाकृच्छ्रा-त्तं ममन्थ महाबलः ॥ ६७१ ॥ तदीयवधनिर्भिन्न-चेतास्त्यक्त्वा तपःसुतम् । राधासूनु-
रधाविष्ट, स्पष्टकोपोऽनु फाल्गुनम् ॥ ६७२ ॥ तस्मिन् विस्मापिताशेष-विश्वे दोःस्तम्भजृम्भितैः । आगच्छति जवाच्छौरि-

१ प्रलयाग्निसदृशैः ।

रयोनन् सव्यसाचिनम् ॥ ६७३ ॥ पार्थ ! नन्वेति राधेयः, श्वेताश्वः शल्यसारथिः । नागकक्षाध्वजः साक्षा-दिव वीरो रसः पुरः ॥ ६७४ ॥ आजन्मकार्मुकाभ्याम-तारतम्यं द्वयोरपि । इदानीं युवयोर्जन्य-दक्षयोर्लक्षयिष्यते ॥ ६७५ ॥ मा पुनः सिंहिकासूनु-क्रान्तस्येव विवस्वतः । कर्णरुद्धस्य तेजस्ते, समस्तमपि गात् क्वचित् ॥ ६७६ ॥

इत्युदीर्य मुकुन्देन, रचमा सव्यसाचिनः । नोदिताश्वो रथः कर्ण-रथं प्रत्यचलज्जवात् ॥ ६७७ ॥ संमुखीनौ तदाऽन्योऽन्यं, धन्विनौ तौ रुषाऽरुणौ । नामरादौ तुषारांशु-भास्कराविव रेजतुः ॥ ॥ ६७८ ॥ किंकिणीजालवाचालौ, विलोलध्वजपल्लवौ । आह्वामातामिवान्योऽन्यं, रथावपि तयोस्तदा ॥ ६७९ ॥ तावुभावनुरूपारि-लाभलम्भितसंमदौ । अभूतामुच्चरोमाञ्च-त्रुटत्कङ्कटबन्धनौ ॥ ६८० ॥

संरम्भरसोद्रेका-दुल्लसन्मौलिकुन्तलः । राधेयोऽथाभ्यधात् क्रोध-पाटलाक्षः किरीटिनम् ॥ ६८१ ॥ अर्जुन ! कुरुष्वेहि, मा स्म मन्थरतां गमः । ओजस्वी खलु वीराणां, कवीनां च पदक्रमः ॥ ६८२ ॥ अवीरानपरान्नित्यं, निघ्नतां ते फलद्विषाम् । अभ्यासोऽभूदियत्कालं, तत्फलैस्त्वद्य भाविता ॥ ६८३ ॥ त्वामहत्वा जगत्येक-वीरंमन्यमनारतम् । कपितानेऽर्जुनारोऽपि, न प्रीयेऽहं निजौजसा ॥ ६८४ ॥ निर्दग्धनिखिलक्षोणी-रुहपक्षोऽपि लक्षशः । को नाम दहनो हन्त, महीधरमनिर्दहन् ॥ ६८५ ॥ तदस्ति तव चेत् किंचि-दूर्जितं भुजदण्डयोः । तत् कुण्डलय कोदण्डं, नन्वेष न भविष्यसि ॥ ६८६ ॥ मार्गणानां गुरुं किं तु, मा स्म तं हन्त लज्जय । न्यासीचक्रे मुदा येन, कार्मुकोपनिपत्त्वयि ॥ ६८७ ॥ भग्नोर्वीशद्रुमौघस्य,

१ कक्षा-रज्जुः । २ युद्धदक्षयोः ।

वीरकुञ्जरमानिनः । शौण्डीर्यदन्तभङ्गाय, भवतोऽद्यास्मि भूमिभृत् ॥ ६८८ ॥ मत्प्रतापयुगान्तार्क–स्त्वद्बाहुमहिमार्णवम् । निपीयाद्य कुलं पाण्डो–र्विश्वं निर्दग्धुमीहते ॥ ६८९ ॥ महीतलमिदं पाण्डु–सुतानुत्पाट्य कण्टकान् । अद्य कौरवकीर्तीनां, सुसंचारं करोम्यहम् ॥ ६९० ॥

इत्यहंकारझंकारि–गिरमङ्गावनीश्वरम् । सौष्ठवोत्तिष्ठदुद्दाम–रोमाञ्चोऽवोचदर्जुनः ॥६९१॥ राधेय! वीरधौरेयः, को विना त्वां जगत्यपि । ऋते [1]मिहिरमन्योऽस्ति, यदि वा न दिवाकरः ॥६९२॥ किं तु नात्मगुणः सद्भि–रात्मनैव प्रकाश्यते । क्रियैव खलु कर्तव्या, गुणवैतालिकी जने ॥६९३॥ विष[3]प्रमोष एवोच्चै–र्वक्ति गारुत्मतं मणिम् । निगदत्युदयं ध्वान्त–ध्वंस एव विवस्वतः ॥ ६९४ ॥ तत्त्वया मद्वधायैव, जन्मप्रभृति संभृतम् । यज्जगत्त्रितयामोदि, कार्मुकाभ्यासपाटवम् ॥ ६९५ ॥ द्रुत-मिष्वासमाकृष्य, तदद्य प्रकटीकुरु । शौण्डीराणां हि शौण्डीर्यं, दोष्णोर्वसति नो गिरि ॥ ६९६ ॥ (युग्मम्) किं त्ववश्यं वचस्येव, पर्याप्तत्वात् पराक्रमः । भुजस्तम्भेषु वीराणां, स्वल्प एव विजृम्भते ॥ ६९७ ॥

इत्युदीरयति श्रेष्ठ–सौष्ठवं सव्यसाचिनि । कालपृष्ठे भटश्रेष्ठो, राधेयः संदधे शरम् ॥ ६९८ ॥ जृम्भमाणगुणः शश्व–द्विश्वकर्णान्तसीमनि । कृष्ट्वा चापगुणं कर्णः, स्वकर्णाभ्यर्णमानयत् ॥ ६९९ ॥ तदाकर्षभवत्क्रूर–क्रेंकारकपटादभूत् । साट्ट-हास इवेष्वासः, संगरोत्सवहर्षुलः ॥ ७०० ॥ कलयामास कर्णस्य, मुष्टिः कर्णान्तसंगतः । विकासविकलोत्तंस–सरसीरुहविभ्रमम् ॥ ७०१ ॥ नीरादिवोर्मयः सिन्धो–र्बिम्बादिव रवेः कराः । कार्मुकादथ कर्णस्य, क्रामन्ति स्म शिलीमुखाः

१ सूर्यम् । २ गुणप्रशंसाकरी । ३ विपनाशः । ४ 'ष्ववीरा०' प्रतित्रयपाठः । ५ विकलं–व्याप्तम् ।

॥ ७०२ ॥ अश्रान्तसंहिताशेष–संग्रामजयवासने । शरासने शनैः पार्थो–ऽप्यवन्ध्यं संदधे शरम् ॥ ७०३ ॥ जीवितव्याशया मार्व, समप्रकुरुभूभुजाम् । आचकर्ष जगज्जिष्णु–र्जिष्णुरिष्वासशिञ्जिनीम् ॥ ७०४ ॥ संमुखस्याप्यसौ युद्धे, जग्राह गुणमेव मे । पृथासूनोः सुवंशोत्थ–मितीव धनुरानमत् ॥ ७०५ ॥ एतेत त्रिजगल्लोकाः !, पश्यतार्जुनदोःकलाम् । इत्युवाचेव गाण्डीवं, स्फारविस्फारकैतवात् ॥ ७०६ ॥ कर्णोत्तंसीभवत्पाणि–पाणिजद्युतिकन्दलैः । कोदण्डमण्डनः प्राप–दिपुरेकोऽप्यनेकताम् ॥ ७०७ ॥ जिष्णोरुन्मुच्य नाराच–मूर्ध्वीभूताङ्गुलिः करः । विश्वविश्वैकधन्वित्व–कीर्तिहस्त इवाबभौ ॥ ७०८ ॥ क्वापि स्थेमानमन्यस्य, न व्यलोकि त्वया विना । इतीवास्फालयत् प्रीता, प्रकोष्ठं तस्य शिञ्जिनी ॥ ७०९ ॥ स्थेयसीमिव गौ मुष्टिं, विश्रतावपरामपि । अलक्ष्यग्रहसंधानौ, चित्रस्थाविव रेजतुः ॥ ७१० ॥ भुवनाद्वैतधन्वित्व–कीर्तिकोलाहलैरिव । आक्रम्यते स्म दिक्चक्रं, शिञ्जिनीशिञ्जितैस्तयोः ॥७११॥ विभाव्य रणसंरम्भं, मा स्म मूर्च्छन्निमाः स्त्रियः । इतीव तच्छरव्रातैः, परितस्तरिरे दिशः ॥ ७१२ ॥ कुर्वन्तः प्रतिपक्षेण, कृतस्य द्विगुणं क्षणात् । प्रथन्ते स्म मिथःस्पर्द्धा, गाथका इव तच्छराः । ७१३ ॥ अवदानेषु तन्मूर्ध्नि, विमुक्ताः स्वर्वधूगणैः । अन्योऽन्यस्य स्रजः काण्ड–मण्डपेन न सेहिरे ॥ ७१४ ॥ तावुभावप्यशोभेतां, शोणिताभ्यक्तविग्रहौ । स्फुटानुरागैर्वीरश्री–कटाक्षैश्छुरिताविव ॥ ७१५ ॥

भूयिष्ठभुजसंभार–दुःसहप्रसरास्ततः । तूणमौर्णविषुः कर्ण–मार्गणश्रेणयोऽम्बरम् ॥ ७१६ ॥ न रथ्या न रथो नापि, सारथिर्न च केतनः । न देहमपि पार्थस्य, ददृशे तत्तिरोहितम् ॥ ७१७ ॥ राधेयस्याथ तां बाण–धोरणीं धूमरीमिव ।

१ पाणिज.–नखः । २ 'परावपि' प्रतिद्वय० । ३ पराक्रमेषु । ४ सभारः–पराक्रमः ।

शराः करा इवोष्णांशो-र्मुष्णन्ति स्म किरीटिनः ॥ ७१८ ॥ फाल्गुने वल्गति स्वैरं, पत्रिपत्रौघशातिनि । बभूव च्छिदुर-
च्छायः, कामं कर्णमहीरुहः ॥ ७१९ ॥ मन्दीभूतेऽथ कर्णस्य, शरशैशिरमारुते । बाणदक्षिणवाते च, स्फूर्जत्यधिकमार्जुने
॥ ७२० ॥ कौरवाः परितः कुन्दा, इवासुमनसोऽभवन् । विकाशं चागमन्नुच्चै-श्चम्पका इव पाण्डवाः ॥ ७२१ ॥ (युग्मम्)
अन्धीभूष्णुरथो जिष्णु-मार्गणैरङ्गभूपतिः । अत्रस्नुरस्त्रमाहेयं, महीयः समजूहवत् ॥ ७२२ ॥ व्यधीयन्त तडिद्दण्ड-मण्डि-
ताब्दविडम्बिभिः । विषज्वालाकरालास्यै-र्दन्दशूकैर्दिशस्ततः ॥ ७२३ ॥ बभुर्व्यालच्छलात् सप्त-सप्तिसौप्तिकहेतवे । संभूयेवा-
गताः सर्व-शर्वरीतिमिरोर्मयः ॥ ७२४ ॥ भुजङ्गजलदैः सद्यः, पीते तपनतेजसि । तत्फणामणयो ज्योति-रिङ्गणा इव रेजिरे
॥ ७२५ ॥ सर्पसंतमसे तस्मिन्, द्यावाभूमिपिधायिनि । सुभद्राभर्तुरास्येन्दुः, शुशुभेऽभिनवोदयः ॥ ७२६ ॥ काद्रवेयैरु-
पद्रोतु-मनोभिरभितोऽर्जुनम् । संभ्रमादभ्रमि स्वैरं, साक्षादापद्भटैरिव ॥ ७२७ ॥ तान्मुरारातिरालोक्य, त्रैलोक्यैकभयंकरान् ।
गाण्डीवधन्विनो बन्ध-शङ्कातङ्काकुलोऽभवत् ॥ ७२८ ॥ अथाहेयास्त्रसंहार-हेतवे तार्क्ष्यदैवतम् । कार्मुके सायकं सद्यः,
संदधे च धनंजयः ॥ ७२९ ॥ जग्मुश्च क्वापि निर्नाम, ते भुजङ्गमपुंगवाः । दुर्नीतिहतवृत्तीना-मसाधूनामिवोदयाः
॥ ७३० ॥ राधेयस्य ततश्चेतः-प्रविष्ट इव विष्टपम् । उज्झामास तमस्तोमः, पाण्डवांश्च भयोदयः ॥ ७३१ ॥ साक्षादिव
जये तस्मि-न्नस्त्रे विलयमीयुषि । घटोत्कचवधादाप्त-वत्यां शक्तौ च रिक्तताम् ॥ ७३२ ॥ निश्चिकायात्मनः काय-व्ययं
कर्णः कपिध्वजात् । राज्यभङ्गं कुरूणां च, पाण्डवानां च संपदम् ॥ ७३३ ॥ (युग्मम्)

१ सार्पम् । २ सूर्येण सह रात्रियुद्धनिमित्तम् । ३ खद्योताः । ४ सर्पैः । ५ आपद एव भटास्तैः ।

अथ गर्वाभिमारेण, शराणामनणूर्जितः । मृत्युमेवोररीकृत्य, स योद्धुमुपचक्रमे ॥ ७३४ ॥ एकाश्रयमसंदेह–जयलक्ष्मीनिगीशिनः । बभूव भीमः समर–स्ततः कर्ण-किरीटिनोः ॥ ७३५ ॥ व्योम्नि वैमानिकैर्दिक्षु, दिग्गजैर्भुवि भूचरैः । उच्छलच्छरत्रान–भीत्या दूरेण दुद्रुवे ॥७३६॥ कल्पान्तचलितोदन्व–न्नीरनिर्घोषभीषणः । भयसंभ्रान्तयोरासी–द्राहिन्योस्तुमुलो महान् ॥ ७३७ ॥ योद्धीकैः कश्चिदास्फाल्य, कोलाहलपलायितैः । बभञ्जिरे रथाः साकं, रथिकानां मनोरथैः ॥७३८॥ नीचैर्मार्गैर्दुशाग्वाभिः, पर्यन्तकृथकेतनाः । इभाः प्रणेशुर्झम्पाभि–र्नश्यदाधोरणा रणात् ॥ ७३९ ॥ कर्ण–फाल्गुनयोरश्वान्, पुनर्भङ्क्त्वा–केशवौ । धारयांचक्रतुः सम्य–क्सारथ्यकलया बलात् ॥ ७४० ॥ सर्वस्मिन्नप्यनीकेऽथ, विद्रुते वीरकुञ्जरौ । रेजतुस्तौ रणासक्ता–वटव्यामिव कुञ्जरौ ॥ ७४१ ॥

अथैवं रणसंरम्भे, कर्णस्या चक्रनाभितः । मङ्क्षु धर्म इवानीतौ, निर्ममज्ज रथः क्षितौ ॥७४२॥ कलाकल्पेन शल्येन, प्रेरिता अपि वाजिनः । नेशते स्म तमुद्धर्तुं, विवेकमिव दुर्धियः ॥ ७४३ ॥ श्यामलिम्नाऽधिवक्त्रेन्दु, वैलक्ष्येणाधिमानसम् । मन्दिम्ना चाधिदोर्दण्ड, कर्णस्याक्रियतास्पदम् ॥ ७४४ ॥ सोऽथ स्वयमवातारी–दुद्दिधीर्पुर्वरूथिनम् । उच्चैरुत्साहमारोह–त्तदानीमर्जुनः पुनः ॥ ७४५ ॥

ततः पक्षवितप्राणं, बाणधोरणिवर्षिणम् । कर्णोऽभ्यधत्त बीभत्सु–मीषदैन्यकिरा गिरा ॥ ७४६ ॥ क्षत्रियक्षिप्तमक्षत्र–मिदमर्जुन ! मा कृथाः । "न खलवयुध्यमानेषु, प्रहारः सत्यशालिनाम्" ॥ ७४७ ॥ क्षात्रं धर्ममिमं वीर !, यदि त्वमपि

१ गालीकर्दमजरभो. । २ चक्रनाभिपर्यन्तम । ३ मन्दत्वेन । ४ क्षत्रियेणानङ्गीकृतम् । ५ 'मत्व०' प्रत्यन्तरपाठः साधुः ।

लुम्पसि । तदानीमपरित्राणः, कुत्रायमवतिष्ठताम् ? ॥ ७४८ ॥ तन्मुहूर्तं प्रतीक्षस्व, मा मुचः सुतरां शरान् । उद्धरामि धरा-
मग्न-महं यावदिमं रथम् ॥ ७४९ ॥

तमेवं कृपणालाप-मलपन्मद्रभूपतिः । राधेय ! न भवान् सूत-कुलं ह्रियमलम्भयत् ॥ ७५० ॥ क्षत्रियः क इव
प्राण-संदेहेऽपि महीयसि । वचस्त्वमिव शत्रूणां, पुरो दीनमुदीरयेत् ॥ ७५१ ॥ दुर्धीर्दुर्योधनो नूनं, येन भीरुशिरोमणौ ।
कृता गोमायुदेशीये[1], सिंहसंभावना त्वयि ॥ ७५२ ॥ न कौरव्यः स ते मित्रं, मन्ये मानैकमन्दिरम् । वदस्येवं गिरं दीनां,
यत् पुरः परिपन्थिनः ॥ ७५३ ॥

इति शल्यगिरा शल्य-तुल्यया गलितौजसम् । स्मितधौताधरोद्देशः, केशवः कर्णमब्रवीत् ॥ ७५४ ॥ राधेय ! धर्म-
सर्वस्वं, त्वां विना बत वेत्ति कः ? । शङ्के स्मृतिरहस्यानि, स्फायन्ते त्वयि संप्रति ॥ ७५५ ॥ अभिमन्युवधे किं तु,
विस्मृतान्येव तानि ते । सर्वैः संभूय युष्माभि-र्यदेकः स तदा हतः ॥ ७५६ ॥ यदि वात्मविपद्युच्चै-र्द्धर्मतत्त्वविदः खलाः ।
परापदि तु धर्मस्य, विसृजन्ति जलाञ्जलिम् ॥ ७५७ ॥ सोत्प्रासमित्युपालभ्य[2], राधेयं गरुडध्वजः । तद्गिरा मन्थरीभूत-
भुजमर्जुनमभ्यधात् ॥ ७५८ ॥ अर्जुनार्जुन ! किं नाम, नाराचान्न विमुञ्चसि ? । कृपा कौतुस्कुतीयं ते, द्विषत्यस्मिन्
सुतद्रुहि ? ॥ ७५९ ॥ भूयो हि रथमारूढः, सोऽयमत्यन्तदुर्जयः । जीयते केसरी केन, कन्दरान्तरसंचरः ? ॥ ७६० ॥ न
चाक्षत्रमिदं किंचि-त्तव धर्मव्यतिक्रमः । "विरोधी बलवान् रन्ध्रे, हन्तव्यो हि जयैषिभिः" ॥ ७६१ ॥ इति विष्णुगिरा

१ मृगसदृशे । २ सोपहासम् ।

जिष्णुः पुनरप्यात्तधन्वनः । क्षिप्रमेव क्षुरप्रेण, राधेयस्याहरच्छिरः ॥ ७६२ ॥

उन्मीलत्कुण्डलज्योति-र्जटालं तत् समुच्छलत् । बभौ चम्पापतेस्तेजः, पिण्डीभूतमिवान्तरम् ॥ ७६३ ॥ शिरोऽदीयत मित्राय, तत्तुभ्यश्च धरा मया । इति कर्णकबन्धेन, प्रीत्येव ननृते तदा ॥ ७६४ ॥ उदेति स्माभिकौन्तेय-बलमानन्दचन्द्रमाः । मीलति स्म च तत्कालं, कौरवाम्भोजकाननम् ॥ ७६५ ॥ पिण्डितैः पाण्डवानीक-हर्षकोलाहलोर्मिभिः । निपीयन्ते स्म कौरव्य-सैनिकाक्रन्दकन्दलाः ॥ ७६६ ॥ वियत्युत्पतितं वीक्ष्य, तच्चम्पाधिपतेः शिरः । राहुत्रस्त इवास्ताद्रि-कानने ऽविशदंशुमान् ॥ ७६७ ॥ कर्णस्य शिरसः कर्ण-कुण्डले भुवि पेतुषः । आदत्त मारुतिर्बिम्बे, भास्वतो भूगते इव ॥ ७६८ ॥ पूष्णि चास्तं गते कर्णे, नितरामन्धकारिताः । कौरवाः शिबिरं जग्मु-र्मन्दमन्दपदक्रमम् ॥ ७६९ ॥ पाण्डवाः पुनरन्यन्त-मुद्द्योतितवदनेन्दवः । स्कन्धावारं ययुः स्वैरं, संचारचतुराङ्घ्रयः ॥ ७७० ॥

कुण्डलाभ्यां तथैताभ्या-मभ्यर्च्य चरणद्वयीम् । ते राधेयवधप्रीताः, प्रणेमुस्तत्र मातरम् ॥ ७७१ ॥ ते निःसंदेहमानीते, प्रत्यभिज्ञाय कुण्डले । अकस्मान्मुहुरुष्णोष्णाः, सा ववर्षाश्रुविप्रुषः ॥ ७७२ ॥ तामवादीदजातारिः, कष्टमानन्दपर्वणि । मातः केयमकाण्डेऽपि, शोकसंकुलता तव ? ॥ ७७३ ॥ नन्वद्य फाल्गुनागस्त्य-ग्रस्ते कर्णमहार्णवे । जयद्वीपमभूदंब !, नन्वस्तेनैषदामदम् ॥ ७७४ ॥ तत्त्वयाऽकस्मिकीभिः किं, कष्टाभिर्बाष्पवृष्टिभिः । मुखाम्भोजविकाशश्री-रस्मा-कीयं विलुप्यते ? ७७५ ॥

१ पतितस्य । २ मौक्तिकेण प्राप्तम् ।

अथोवाच सुतान् कुन्ती, मन्युना गद्गदाक्षरम् । वत्साः किं नाम वोऽद्याहं, मन्दभाग्या निवेदये ? ॥ ७७६ ॥ कर्णो हि पाण्डुदेवस्य, तेजसामाद्यकन्दलः । सोदरो भवतां बन्धुः, सिन्धुरौर्जित्यवारिणः ॥ ७७७ ॥ किं तु हेतोः कुतोऽप्याशु, जातमात्रोऽप्यसौ मया । कुण्डलाभ्यां किलैताभ्यां, सनाथीकृत्य तत्यजे ॥ ७७८ ॥ हेतुर्मातः स को नाम ?, सुतं येनैनम-त्यजः । इति विस्मेरचेतोभिः, पाण्डुजन्मभिरीरिते ॥ ७७९ ॥ स्त्रीस्वभावभुवा कुन्त्यां, ह्रिया तूष्णीकताजुषि । वृत्तान्त-मखिलं कर्णे, कथयामास केशवः ॥ ७८० ॥ ( युग्मम् ) बन्धूच्छेदस्मरत्खेदाः, पाण्डवाः पुनरभ्यधुः । आः कृष्ण ! न त्वमप्येव-मियत्कालमचीकथः ॥ ७८१ ॥ कारिताः किं वयं हन्त, भ्रातृहत्यामिमां त्वया ? । क नाम पातकस्यास्य, विशु-द्धिर्भविताऽद्य नः ? ॥ ७८२ ॥ इत्यार्तहृदयान् बन्धु-हत्यया पाण्डुनन्दनान् । सभ्रूभङ्गममाषिष्ट, विस्पष्टं विष्टरश्रवाः ॥७८३॥ वृथा ताम्यथ किं नाम, कार्येऽमुष्मिन्नकल्मषे ? । जिघांसन्तं जिघांसीया-दिति धर्मो हि दोष्मताम् ॥७८४॥ किं च यातेन दूत्याय, तदानीं हास्तिने मया । किंचिदावेद्य वृत्तान्त-मेवं कर्णोऽभ्यधीयत ॥ ७८५ ॥ ततः कर्ण ! तवेदानीं, युक्ता सोदर्यसंगतिः । सेवितुं न तु युज्यन्ते, कुरवस्तद्विरोधिनः ॥ ७८६ ॥ सोऽप्यूचे तं हरे ! नाहं, मोक्तुमर्हामि कौरवम् । कर्णः कर्ण इति ख्यातिं, येन नीतोऽस्मि सर्वतः ॥ ७८७ ॥ पुरुषेषु न रेखाऽपि, साधुभिस्तस्य दीयते । यः स्निग्धमदवीयस्यां, मित्रमापदि मुञ्चति ॥ ७८८ ॥ पश्य मित्रं मरीचीना-मुपरागे विमुञ्चताम् । गीयते खलु विद्वद्भिः, पुंस्त्वमेव न केवलम् ॥ ७८९ ॥ कौरव्यस्य ततः कार्ये, त्याज्याः खलु मयाऽसवः । किं पुनः फाल्गुनादन्यं, हनिष्यामि

१ शोकेन । २ समीपस्थायाम् ।

न मन्युः ॥ ७९० ॥ इति वैरायमाणं तं, विनिश्चित्यार्जुने मया । वक्तुमिष्टोऽपि युष्मभ्य, नोदन्तोऽयमकथ्यत ॥ ७९१ ॥ आनेऽस्मिन्नर्जुनो मन्यु-स्नेहविक्रमतां गतः । यदि कर्णेन हन्येत, तद्भवेत् किं हि मङ्गलम् ? ॥ ७९२ ॥ इत्याकर्ण्य गिरं शार्ङ्ग-पाणेर्बाष्पाविलेक्षणाः । पाण्डवाश्चक्रिरे सर्वं, राधेयस्यौर्ध्वदेहिकम् ॥ ७९३ ॥

यावत्तिष्ठन्ति ते स्तोक-शान्तशोकभरास्तदा । तावत् प्रौढप्रभाजाल-क्षालितक्षणदामलान् ॥ ७९४ ॥ आतपत्रायित-स्फार-स्फटामण्डलमण्डितान् । कांश्चिदालोकयांचक्रु-र्दिव्यमूर्तिधरान् पुरः ॥ ७९५ ॥ (युग्मम्) पञ्चाङ्गचुम्बितक्षोणि-तलेऽतानम्य तेऽन्वनः । विज्ञापितस्तपःसूनुः, कुड्मलीकृतपाणिभिः ॥ ७९६ ॥ देव ! दिव्ये पुरा तस्मिन्, पन्नगेन्द्रसरोवरे । शिशिरं गोमिनेन त-स्ते वयं पवनाशनाः ॥ ७९७ ॥ तदा साहायकं यावत्, कर्णयुद्धे किरीटिनः । रुषा वारितनान् द्वार-मस्माकमुग्रप्रभुः ॥ ७९८ ॥ तदद्य कृतमस्माभिः, माहात्म्यं स्मितवाजिनः । मज्जयद्भिः क्षितौ चक्र-द्वयं कर्णवरूथिनः ॥ ७९९ ॥ हता च सपरीवार, कौरवेन्द्रमसंशयम् । यूयं भविष्यथ प्रातः, पारीणाः प्रधनाम्बुधेः ॥ ८०० ॥ तदादिश यमेनं नो, जयोदन्तसुधारसम् । उपायनमुपादाय, पश्यामः पन्नगेश्वरम् ॥ ८०१ ॥ धर्मजोऽपि यथौचित्यं, रचितस्वागत-क्रियः । श्रीनार्थगदराकृष्टा-नाभाष्य विससर्ज तान् ॥ ८०२ ॥

इतश्च कौरवः कर्णं, कर्णधारं रणार्णवे । शोचन्शिविरमागत्य, पल्यङ्केऽवाङ्मुखोऽपतत् ॥ ८०३ ॥ विलीन इव मूर्च्छान्तः, इव वायुरिवाथ सः । न ददर्श न शुश्राव, न विवेद च किंचन ॥ ८०४ ॥ तस्मिन्शोकनिपीतेऽभूत्, कामं शोकमयी

१ सर्पाः । २ युद्धसमुद्रस्य ।

चमूः । तमःकवलिते ह्यर्के, किं मही न तमोमयी ? ॥ ८०५ ॥ मुमूर्च्छ क्षणमुच्छ्वास–विकलो मुकुलेक्षणः । सोरस्ताडं क्षणं मुक्त–कण्ठमुच्चै रुरोद च ॥ ८०६ ॥ नामग्राहं च हा कर्ण !, कर्णेति व्यलपत् क्षणम् । क्षणं तस्थौ च तूष्णीक–स्तदा दुर्योधनः शुचा ॥ ८०७ ॥ (युग्मम्) इत्थं नवनवोत्थास्नु–शोकोर्मिविवशीकृतम् । वेगादागत्य साक्षेपं, द्रौणिर्वाणीं तमब्रवीत् ॥ ८०८ ॥ महाराज ! स निर्व्याज–शौण्डीरिमगुणः क्व ते ? । क्व ते सत्त्वं च तद्वीर !, वज्रविस्फूर्तिजित्वरम् ? ॥ ८०९ ॥ सोऽवधीरितधात्रीध्र–गरिमा गरिमा क्व ते ? । क्व ते गाम्भीर्यमम्भोधि–गर्वसर्वंकषं च तत् ? ॥८१०॥ यदेवमबलेव त्व–मुच्चकैरार्चितः शुचा । मुहुर्मूर्च्छस्यतिक्रन्द–स्यत्यन्तं परिदेवसे ॥ ८११ ॥ त्वादृशानपि शोकोऽय–माक्रमिष्यति चेद्बलात् । चलयिष्यति शैलेन्द्रं, बालस्तन्मलयानिलः ॥ ८१२ ॥ महानथ सहायो मे, कर्णोऽभूदिति शोचसि । तव त्रैलोक्यमल्लस्य, तदप्येतत्रपाकरम् ॥ ८१३ ॥ यच्चापकर्षणे वामं, सहायीकुरुते करम् । तेनापि त्रपते कामं, शूराणां दक्षिणः करः ॥ ८१४ ॥ अद्यापि त्वयि संग्राम–सीमानमधितस्थुषि । रवौ दिवमिव ध्वान्ताः, पाण्डवेया न दुर्जयाः ॥ ८१५ ॥ आस्तां तावद्भवान् शल्यो–ऽप्यतुल्यभुजवैभवः । खण्डने पाण्डुपुत्राणां, जन्यमूर्द्धन्यलंतमाम् ॥ ८१६ ॥ प्रक्षाल्य परितः शोकातङ्कपङ्कमिमं ततः । राजन् ! मद्रेन्द्रमेवैनं, सेनान्यं कर्तुमर्हसि ॥ ८१७ ॥ इति द्रौणेर्गिरा सद्यो, रुचेव रविसारथेः । मुमोच स शुचं किंचि–ज्जीवलोक इव क्षपाम् ॥ ८१८ ॥ तं च सेनान्यमातेने, मद्रचन्द्रं जयेच्छया । आशा हि दूरं दूर्वेव, विलूनाऽपि प्ररोहति ॥ ८१९ ॥

१ धात्रीध्रा–राजानः । २ व्याप्तः । ३ रणमूर्धनि ।

कृतवर्म-कृप-द्रौणि-सौबलादिबलान्वितः। अग्रे कृत्वा प्रगे शल्यं, कौरवो रणमागमत् ॥ ८२० ॥ उन्मूल्य शल्यमुल्लाघ-माधातुं जयमात्मनः। क्षेत्रक्षोणिमुपागच्छ-द्धर्मजोऽपि महाभुजः ॥ ८२१ ॥ त्रुटत्सुभटकण्ठास्थि-च्छात्कार-मुरजध्वनिः। कबन्धताण्डवोच्चण्ड-स्ततोऽभूत् संगरोत्सवः ॥ ८२२ ॥ प्राणोपदंशमापीय, रिपूणां शोणितासवम्। क्षीबा इव लुठन्ति स्म, क्षितौ तत्र पतत्रिणः ॥ ८२३ ॥ गत्वरैरसुभिः क्रीतं, कल्पस्थास्तु मया यशः। इति प्रीत्येव कस्यापि, कबन्धोऽनृत्यदद्भुतम् ॥ ८२४ ॥ उज्जृम्भमाणपुंनाग-संतानरसपायिनः। उल्लसत्पक्षझात्काराः, खेलन्ति स्म शिलीमुखाः ॥ ८२५ ॥ नूतनानगसंभूक्त-निर्झराम्बुविडम्बिभिः। दुर्वारै रुधिरोद्गारैः, केऽपि भान्ति स्म भूभृतः ॥ ८२६ ॥ निरस्तनिखिलाराति-कुलोऽथ नकुलो रणे। तत्कालं कवलीचक्रे, वैरिनागाननेकशः ॥ ८२७ ॥ विशन्तो हृदयं सद्यो, नकुलस्य शिलीमुखाः। द्विषां मुखपद्मानि, मुकुलीचक्रिरेऽद्भुतम् ॥ ८२८ ॥ नकुलस्य शराः कामं, सेहिरे न विरोधिभिः। सारङ्गवैरिणः पाणि-जन्मान इव कुञ्जरैः ॥ ८२९ ॥ तीव्रपातैरिपुव्रातै-र्नाकुलैराकुलीकृताम्। चमूमालोक्य मद्रेशः, क्रोधावेशादधावत ॥ ८३० ॥ अभ्युद्रैः शरैस्तस्य, तरङ्गैरिव नीरधेः। निम्नगेव चमूश्चक्रे, पाण्डवीया पराङ्मुखी ॥ ८३१ ॥

क्षुन्दति क्षत्रियव्यूहं, ततस्तस्मिन्निरङ्कुशे। भ्रुकुटीभङ्गभीमास्यो, हरिरूचे तपःसुतम् ॥ ८३२ ॥ युधिष्ठिर! समीचीन-मुच्यसे त्वं युधिष्ठिरः। यदेवं रिपुणा सैन्यं, हन्यमानमुपेक्षसे ॥ ८३३ ॥ पुंसः स्थेमा[3] हि सौस्थित्ये, गुणत्वमवलम्बते। प्रत्यर्थिन्युत्थिते किं तु, गुणश्चापाय चापलम् ॥ ८३४ ॥ सिन्धुरेन्द्राः परे यूथं, यूथपस्येव पश्यतः। पिंषन्ति यद्द्विपः सैन्यं,

१ सिक्त। २ नताः। ३ स्थिरता।

नन्वियं ते त्रपा परा ॥ ८३५ ॥ क्वास्मि ते सुतं शल्यो-दरादिति गिरं निजाम् । एवं तिष्ठन् सुदेष्णाग्रे, कथं सत्यां करिष्यसि ? ॥ ८३६ ॥ वधोत्सुकोऽपि बीभत्सु-स्त्वत्संगरमनुसरन् । क्षुन्दानेऽपि चमूं शल्ये, बाणश्रेणीं न मुञ्चति ॥ ८३७ ॥ तत् झगित्युत्सृज स्थैर्य-मौर्जित्यमुररीकुरु । लम्भय प्रसभं शल्य-मेनं कीनाशदासताम् ॥ ८३८ ॥

इत्यच्युतवचष्टङ्को-ल्लिखितात्मा तपःसुतः । प्रतिज्ञां मद्रभूभर्तु-रामध्याह्लाद्वधे व्यधात् ॥ ८३९ ॥ उत्कल्लोलं ततः शल्यं, धर्मभूर्भुजवैभवात् । नर्मदायाः परीवाहं, कार्तवीर्य इवारुधत् ॥ ८४० ॥ उच्छलद्बाणनिर्वाण[1]-गीर्वाणनयनस्ततः । अभूत् कृतजगड्डिम्ब[2]-डम्बरः समरस्तयोः ॥ ८४१ ॥ विश्वसंहारिभिः काली-कटाक्षैरिव तत्क्षणात् । व्यानशे निशितैर्व्योम, तत्कलम्ब[3]कदम्बकैः ॥ ८४२ ॥ स्तृणोति स क्षणं बाणै-र्लाघवोल्लाघमुक्तिभिः[4] । सरथ्यं सरथं धर्म-नन्दनं मद्रभूपतिः ॥ ८४३ ॥ मुमूर्च्छाथ क्रमाच्छिन्द-ञ्शल्यबाणमयं तमः । प्रगेतन इवोद्द्योतो, युधिष्ठिरशरोत्करः ॥ ८४४ ॥ शल्यत्राणकृते दूरा-द्धावन्तोऽन्यधराधवाः । भाग्यैरिव विपत्पूगाः[6], फाल्गुनाद्यैर्ममन्थिरे ॥ ८४५ ॥ मध्यंदिनदिनाधीशः, पश्यंस्तत्समरोत्सवम् । लक्ष्यते स्म तदा व्योम्नि, मन्दमन्दमिवोच्चलन् ॥ ८४६ ॥ युध्यमानं ततो यत्ना-द्द्रुतं बाणैरजेयताम् । निहन्ति स्म तपःसूनुः, शक्त्या शल्यममोघया ॥ ८४७ ॥ व्यालदन्तावलेनेव, क्रोधादन्धंभविष्णुना । मरुद्भुवाऽप्यभिघ्नन्त, भूयांसो युधि कौरवाः ॥ ८४८ ॥ उद्यत्पार्थप्रतापाख्य-बालार्केणेव शोणिताः । प्रावर्तन्ताभितः कुंभि[7]-द्वयस्यो

१ निर्वाणं-निमीलितं निश्चलं वा । २ डिम्बः-कलकलध्वनिः । ३ कलम्बः-बाणः । ४ लाघवेन शुद्धं मोचनं येषां तैः । ५ ववृधे । ६ आपत्समूहाः । ७ गजप्रमाणाः ।

रुधिरापगाः ॥ ८४९ ॥ कचित्करैः कचित्पादैः, कचिदङ्गैः कचिन्मुखैः । आकीर्णाङ्गा विधेः कर्म-शालेव रणभूरभूत् ॥ ८५० ॥ शङ्कु नखां विशन् रौद्रां, सोऽप्यभैषीत्तदान्तकः । क्षमन्ति स्म चिरं केचि-द्यदरातिहता अपि ॥ ८५१ ॥ शस्त्राघातोच्छलन्मूर्च्छा-नभिषिञ्चन्नभितोऽम्बुभिः । भूयोऽपि प्रगुणीकुर्वन्, कांश्चित्समरकेलये ॥ ८५२ ॥ पाययंश्च पयः कांश्चि-च्छुष्कतालून् पिपासया । इक्षुद्राक्षादिभिस्त्यक्त-तापान् कांश्चिच्च सूत्रयन् ॥ ८५३ ॥ निर्भर्त्स्याभिमुखीकुर्वन्, कांश्चिद्भीत्या पराङ्मुखान् । रणे बभ्राम निर्भीकः, सर्वतः सुभटीजनः ॥ ८५४ ॥ ( त्रिभिर्विशेषकम् )

अथारोपनृपैः सार्धं, सबलैः सौबलादिभिः । उत्तस्थे मांगलस्थामा, कौरवाणामधीश्वरः ॥ ८५५ ॥ पाण्डवीयाः क्षणं प्रौढ-कटका अपि भूभृतः । संहारमारुतस्येव, तस्य वेगं न सेहिरे ॥ ८५६ ॥ आसन्नान्तस्तदा सोऽभूत्, पाण्डवैरपि दुःसहः । तापो ह्यपरनैदाघः, सोढुं कैर्नाम शक्यते ? ॥ ८५७ ॥ तन्वन्नकालकल्पान्त-भ्रान्तिं त्रिजगदङ्गिनाम् । संगरोऽभून्महाघोरः, सैन्ययोरुभयोस्ततः ॥ ८५८ ॥ शकुनिः कुरुभूभर्तुः, कूटनाटकसूत्रभृत् । सहदेवमथारौत्सी-न्महेभः कलभं यथा ॥ ८५९ ॥ सुनागगुप्तिसंक्रान्त्या, तापितानिव वह्निना । माद्रेयमभितो रौद्रान्, स ववर्ष शिलीमुखान् ॥ ८६० ॥ एधोभिरिव नैस्त्रिंशैः, मार्गणैः स्वैरपातिभिः । दिदीपे सहदेवस्य, नितरामूर्जितानलः ॥ ८६१ ॥ माद्रेयस्तस्य नाराचैः, काण्डश्रेणीरखण्डयत् । अम्भोधर इवाम्भोभि-र्ज्वाला दवहनिर्भुजः ॥ ८६२ ॥ समं दोःस्तम्भसंरम्भैः, साकं कपटपाटवैः । क्षयमीयुः क्षणात्क्षणा, गान्धाराणामधीशितुः ॥ ८६३ ॥ दीव्यन्तं समरद्यूते, ततः प्राणैः पणीकृतैः । माद्रेयोऽक्षैरिव क्षिप्रं, क्षुरप्रैर्ज-

१ श्यामवर्णप्रभागा । २ दावानलस्य ।

यति स्म तम् ॥ ८६४ ॥ क्षुण्णोऽथ शकुनौ साक्षा-च्चेतसीव कुरुप्रभुः। उच्छ्वसन्नपि भस्त्रेव, चैतन्यविकलोऽभवत् ॥ ८६५ ॥
वीक्ष्यानीकमथात्मीय-मेयिंवद्विशरारुताम् । गान्धारेयो गतस्थामा, जगामाकुलतां ततः ॥ ८६६ ॥ अथ सैन्यरथो-
द्धूतैः, सोऽन्धकारपटोपमैः । तिरोहितवपुः पांशु-पूरैः स्वैरमपासरत् ॥ ८६७ ॥ न नाम शुशुभे शेष-द्वित्रशौण्डीरमौक्तिकम्।
तदा मौक्तिकदामेव, तदनीकमनायकम् ॥ ८६८ ॥ कृपश्च कृतवर्मा च, द्रोणभूश्च त्रयोऽप्यमी । धार्तराष्ट्रमपश्यन्तः,
कोका इव दिवाकरम् ॥ ८६९ ॥ बिभ्रतः कान्दिशीकत्वं, विच्छायवदनश्रियः । कामं गवेषयामासु-र्विषण्णास्तमितस्ततः
॥८७०॥ ( युग्मम् ) भ्राम्यन्तो ददृशुस्तेऽथ, गान्धारेयपदावलीम्। सरो व्याससरो नाम, ययुस्तदनुसारतः ॥८७१॥ अम्भः
संस्तभ्य संविष्टं, तत्र निश्चित्य कौरवम् । भर्तृभक्त्या क्षणं तस्थु-स्तस्य ते सरसस्तटे ॥ ८७२ ॥ अथावलोक्य धूलीभि-स्तैः
कदम्बितमम्बरम् । कौरवानुपदी पार्थ-बलराशिरशङ्कयत ॥ ८७३ ॥ दृष्ट्वा नोऽत्र स्थितं पार्था, ज्ञासिषुर्मा स्म
कौरवम् । इत्यालोच्य तिरोऽभूवन् , क्वापि ते तरुगह्वरे ॥ ८७४ ॥ तस्मिन् सरसि विज्ञाय, वनेचरगिरा ततः । प्रविष्टं
कौरवाधीश-मन्वगुः पाण्डुसूनवः ॥ ८७५ ॥ तदैकाक्षौहिणीशेष-बलसंभारभासुराः । तिष्ठन्ति स्म सुताः पाण्डो-
श्चिरमावृत्य तत्सरः ॥ ८७६ ॥
तन्नीरस्य ततस्तीर-मधिष्ठाय युधिष्ठिरः । स्पष्टमामृष्टमर्माणं, वाणीमिति समाददे ॥ ८७७ ॥ दुर्योधन ! मुधा
वीरं, त्वां स्म मन्यावहे वयम् । मृगेन्द्रमतिरस्माकं, फेरवे स्फुटमस्फुरत् ॥ ८७८ ॥ निष्कलङ्के कलङ्कोऽभू-स्त्वमेवास्मत्कुले-

१ प्रासम् । २ शृगाले ।

ऽखिले। न्यैन कलुषं तात-धूनराष्ट्रमहः कृतम् ॥ ८७९ ॥ घातयित्वा समित्येव, सुहृ-त्संबन्धि-बान्धवान्। यदिदानीं निजप्राण-त्राणायाम्भसि मज्जसि ॥ ८८० ॥ मग्नस्यापि जले किं तु, जीवितव्यं न ते क्वचित्। मुहूर्तोऽपि गमी नैतत्, सरः शोषयिता हि नः ॥ ८८१ ॥ क्वाद्य ते स भुजादर्प-स्तृणीकृतजगत्रयः ?। येनावमत्य नः सर्वा-स्त्वं महीं भोक्तुमैहथाः ॥ ८८२ ॥ यद्येतावदनात्मज्ञ !, त्वमासीर्मृत्युकातरः। तत्संधित्सून् पुरा किं न, गोत्रवृद्धानमानयः ॥ ८८३ ॥ संधिमाद-धतं किं न, पञ्चग्राम्याऽपि शार्ङ्गिणम्। निराकृत्य तदा किं त्व-मात्मनीनमसूत्रयः ? ॥ ८८४ ॥ तत्तेऽद्य स्फुटमायात, एव मृत्युर्यथा तथा। जीवितं यतिदुर्लभ-माप्तवाक्यविलङ्घिनाम् ॥ ८८५ ॥ अत्यन्तानुचितां क्षत्र-व्रतस्य च कुलस्य च। कृष्णाकेशा-म्बराकृष्टिं, तदा कारयतस्तव ॥८८६॥ यंहीयो यदभूदंहे-स्तस्यास्माभिर्बलादपि। अद्य प्राणप्रहारेण, प्रायश्चित्तं विधास्यते ॥ ८८७ ॥ (युग्मम्) तन्निर्गत्याम्भसो भूत्वा, शौण्डीरश्चेद्विपद्यसे। तदात्मभुजयोर्लज्जां, कुलस्य च विलुम्पसि ॥ ८८८ ॥ निर्यास्यसि न चेत्तर्हि, संहितः सव्यसाचिना। क्षणादाग्नेयबाणोऽसौ, शोषयिष्यत्यदः सरः ॥ ८८९ ॥ अथैको निखिलैर्नास्म-स्त्वं यो द्धृभिर्योद्धुमीशिषे। तद्येन रोचते तुभ्यं, तेन युद्धं विधीयताम् ॥ ८९० ॥ एकस्मिन्नप्यहो तस्मि-ञ्जितेऽधिप्रधनं त्वया। जिता एव वयं सर्वे, भुञ्जीथाः पृथिवीमिमाम् ॥ ८९१ ॥ श्रुत्वेति श्रवणक्रोड-विपवृष्टिसहोदराम्। भारतीं तपसः सूनो-रमर्षकथिताशयः ॥ ८९२ ॥ गदायुद्धं विनिर्णीय, समं पवनजन्मना। कौरवो निरगान्नीरा-दभ्रादिव दिवाकरः ॥ ८९३ ॥ (युग्मम्)

१ मयि स्तुति... । २ पापम्। ३ युद्धे।

ततः परिसरं मत्त–मातङ्गेन्द्रमिवारिकाः । पाण्डवेयास्तमावृत्य, रणक्षेत्रमुपानयन् ॥ ८९४ ॥ भीम–कौरव्ययोस्तत्र,
चरणायुधयोरिव । धर्मजाद्या दधुर्योद्धु–कामयोः पारिषद्यताम् ॥ ८९५ ॥ इन्द्रनीलामलं व्योम, व्याप्तं गीर्वाण–खेचरैः ।
भाति स्म भूमिलल्लोक–प्रतिविम्बैरिवाङ्कितम् ॥ ८९६ ॥ द्वैमातुरीयसैन्यस्य, यादवीयबलस्य च । द्राग्दिदृक्षारसाक्षिप्ताः,
संगच्छन्ते स्म सैनिकाः ॥ ८९७ ॥ गदायुद्धरहस्यैक–भाष्यकारभुजोर्जितः । बलभद्रोऽपि तत्रागा–द्विलोकनकुतूहली
॥ ८९८ ॥ रणरङ्गाङ्गणे लोकैः, परितः परिवेष्टितौ । [2]अङ्काराविवास्थातां, गान्धारेय-वृकोदरौ ॥ ८९९ ॥ केऽपि प्राणा-
धिको धार्त–राष्ट्रो न तु वृकोदरः । केचिच्च बलवान् भीमो, न नाम धृतराष्ट्रभूः ॥ ९०० ॥ अन्ये तु मांसलाभ्यासी,
मारुतिर्न कुरूद्वहः । अपरे पुनरभ्यासी, कौरवो नैव पावनिः ॥ ९०१ ॥ केचित्तु मन्महे नान्यं, मानिनं कौरवं विना।
इयत्यपि गते यस्य, सर्वान् वा हन्मि विद्विपः ॥ ९०२ ॥ मृत्युना सह संग्रामे, केलिलीलाः करोमि वा । रिपुभ्यो न पुन-
र्दीनं, वचो वच्मीति गीःक्रमः ॥ ९०३ ॥ अन्ये तु धिग्धियं धिक् च, मानितां धिक् च मत्सरम् । यदुपज्ञमसौ जज्ञे, कौरव-
स्य कुलक्षयः ॥ ९०४ ॥ इत्येतान् वहुशो जल्पा–[3]ञ्जल्पयन्तः परस्परम् । युद्धकौतुकिनस्तस्थुः, सुर-खेचर-मानवाः ॥९०५॥
( षड्भिः कुलकम् )

कौरव्य–मारुती वेगा–दृश्यमानां सहस्रधा । अथाभ्रमयतां भीमा–मात्मानं परितो गदाम् ॥ ९०६ ॥ सानुमन्ता-
विवोत्क्षिप्तौ, कल्पान्ते मण्डलानिलैः । गदाङ्किपं दधानौ तौ, चेरतुश्चित्रमण्डलम् ॥ ९०७ ॥ राजति स्म तयोरङ्गं, शौर्यरो-

१ कुर्कुटयो. । ( २ अङ्कशब्दोऽत्रापराधार्थः । ) ३ 'जल्पान्, कल्प०' प्रतिद्वयपाठः ।

माश्रकोरकैः । अन्तर्ज्वलितकोपाग्नि-निर्यद्धूमलवैरिव ॥ ९०८ ॥ कदाचित्तौ विनिर्मुक्त-क्ष्वेडारावौ प्रसस्रतुः । पादमाकृष्य न मेरुं, कदाचिदपगम्मतुः ॥ ९०९ ॥ भुजशौण्डीरिमोद्रेका-द्भावमानोऽतिदुःसहम् । अत्याजयत् कदाप्यन्यः, स्वां महीमितरं बलात् ॥ ९१० ॥ त्रिजगत्कौतुकास्थानं, स्थानमाविश्य तौ ततः । प्रहारोदस्तहस्ताग्रा-वत्यासन्नीबभूवतुः ॥ ९११ ॥ प्रक्षिप्य युग्मः पाद-मेकस्मिन्नभिहन्तरि । कृष्टाङ्घ्रिमङ्गनाशेन, प्रहारमपरोऽत्यजत् ॥९१२॥ कदाचिचेलतुः प्रेङ्ख-त्करावभ्यागपाटवान् । तावन्योऽन्यगदाघात, गदयैव ररक्षतुः ॥ ९१३ ॥ तदीयगदयोर्नादै-रन्योन्यास्फालनोद्भवैः । शङ्कन्ते स्म जगत्कोश-स्फोटमाकालिकं जनाः ॥ ९१४ ॥ तयोरित्थमतिक्रोधा-दुद्धतं युध्यमानयोः । जयश्रीः सुचिरं तस्था-वात्तया वरमालया ॥ ९१५ ॥ कौरवोऽथ चिराद्दृष्टिं, वञ्चयित्वा कथंचन । निबिडं ताडयामास, मौलिदेशे मरुत्सुतम् ॥ ९१६ ॥ तत्प्रहारव्यथाभार-निर्भरभ्रमितेक्षणः । मारुतिः क्षोणिमद्राक्षी-द्भ्रमदद्रि-वन-द्रुमाम् ॥ ९१७ ॥ सत्त्वोत्कर्षादथात्मानं, संस्थाप्य न कथंचन । क्रोधप्रगुणितप्राणः, प्रजह्रे हृदि कौरवम् ॥ ९१८ ॥ तेन दुःखासिकामात्र-मनुभूय सुयोधनः । निहन्ति स्म पुनर्मूर्ध्नि, कोपाटोपाद्वृकोदरम् ॥ ९१९ ॥ तत्पीडाभिरभूदन्धं-भविष्णुनयनद्वयः । निकामं निःसहीभूत-सर्वाङ्गः पवनात्मजः ॥ ९२० ॥

तथाभूतं तमालोक्य, मलीमसमुखद्युतिः । ससंभ्रममभाषिष्ट, किरीटी कैटभद्विषम् ॥ ९२१ ॥ हन्त गोविन्द ! गोविन्द !, किमन्यायमुपस्थितम् ? । उत्तीर्य पाथसां नाथ-मिदं गोष्पदमज्जनम् ॥ ९२२ ॥ जिते भीष्मे क्षिते द्रोणे,

१ 'कदाचिन्न तमुपेन्द्र०' प्रतिद्वयपाठः ।

सूदिते सूतनन्दने । शल्ये निर्मूलिते सिन्धु-राजादिषु हतेषु च ॥ ९२३ ॥ पश्यतामेव नः सोऽयं, सर्वेषामपि जीवितम् । धृष्टेन धार्तराष्ट्रेण, मारुतिर्यन्निहन्यते ॥ ९२४ ॥ (युग्मम्) इत्यर्जुनोक्तमाकर्ण्य, कंसविध्वंसनोऽवदत् । पार्थ ! भीमेन कौरव्यः, सत्यमेवाऽस्ति दुर्जयः ॥ ९२५ ॥ अयं हि खुरलीरङ्गे, कुर्वाणो गदया श्रमम् । निश्यं लोहमयं भीमं, भस्मसादकरोत् पुरा ॥ ९२६ ॥ तदेतस्य पुरो वैरि-कुले कालानलन्नपि[1] । शङ्के न खलु बंहीयान्, भीमोऽपि भुजसंपदा ॥ ९२७ ॥ किं तु चेत् प्रहरत्येन-मूरुदेशे वृकोदरः । तदानीं नातिदुर्लम्भं, जयं संभावयामि वः ॥ ९२८ ॥

भारतीमित्युपश्रुत्य, फाल्गुनो वनमालिनः । कौरव्योरुप्रहाराय, मारुतिं समकेतयत् ॥ ९२९ ॥ तं संकेतं विदामास, कोविदः कौरवाग्रणीः । रणसंरम्भसंभ्राम्य-दम्बको[2] न बकान्तकः ॥ ९३० ॥ कुरूणामग्रणीरूरु-घातं वञ्चयितुं ततः । मनागुच्छलति स्मोर्ध्वं, मण्डूक इव भूतलात् ॥ ९३१ ॥ पूर्वाङ्ग एव निर्मुक्तः, प्रहारस्तु बकारिणा । तस्याभाङ्क्षीदुभावूरू, न धीर्दैवाद्बलीयसी ॥ ९३२ ॥ उत्फालः शैलशृङ्गान्तात्, कण्ठीरव इवावनौ । भग्नोरुः क्रोधधूमाय-मानो दुर्योधनोऽपतत् ॥ ९३३ ॥ असावथ व्यथापूर-पूरितोऽपि क्रुधा मुहुः । फणीन्द्रवत् फटाघातान्, गदाघातानमुञ्चत ॥ ९३४ ॥ तदवस्थेऽप्यनिर्वाण-रणारम्भे च कौरवे । भीमे च जयिनि प्रीताः, पुष्पाणि ववृषुः सुराः ॥ ९३५ ॥ कौरव्यग्रामणीः पीडा-निमीलितविलोचनः । क्षेपं क्षेपं गदां शून्यं, क्रमान्निःसहतामगात् ॥ ९३६ ॥

अथाभ्येत्य मुहुर्भीमः, पविसब्रह्मचारिणा[3] । पादेन दलयांचक्रे, कोटीरं कुरुभूपतेः ॥ ९३७ ॥ बलभद्रस्तदालोक्य,

१ कालाग्निसदृशोऽपि । २ अम्बकं-नेत्रम् । ३ वज्रसदृशेन ।

पदा मुकुटकोणम् । रोषोन्मेषारुणीभूत–सर्वाङ्गद्युतिरभ्यधात् ॥ ९३८ ॥ धिग्धिग्वतेदमक्षत्रं, न म्लेच्छेष्वपि वर्तते । रिपोरपि किरीटो यत्, पेतुषः पिष्यते पदा ॥ ९३९ ॥ कदाचिदपि कस्यापि, नैवान्यायमहं सहे । मादृग्विधा हि सर्वेषा–मनाचारचिकित्सकाः ॥ ९४० ॥ ममैतन्मुसलं कोपा–दन्यायस्यास्य यत् फलम् । पञ्चानां पाण्डुपुत्राणां, तत् सद्योऽदर्शयिष्यत ॥ ९४१ ॥ नाभविष्यदिदं हन्त, यदि ज्ञातेयमन्तरा । तथापि मुखमीक्षिष्ये, नाहमेषामतः परम् ॥ ९४२ ॥ (युग्मम्) इति संकर्षणो रोष–कलुषः परुषाक्षरम् । उदीर्य निजमावासं, त्वरितं त्वरितं ययौ ॥९४३॥ रौहिणेयानुवृत्त्येव, कर्मसाक्ष्यपि तत्क्षणात् । रोषावेशवशात्ताम्रः, क्वापि द्वीपान्तरेऽगमत् ॥ ९४४ ॥ तथैव पतिते कामं, वेदनाविमनीकृते । कोपादुज्झति कौरव्ये, निश्वासानाग्निकंधमान् ॥ ९४५ ॥ मुरारातिरथाकृष्य, साकूतः पाण्डुनन्दनान् । ज्यायांसं भ्रातरं मान्य–मनुनेतुमचालयत् ॥ ९४६ ॥ (युग्मम्) दक्षौ शिबिररक्षायै, धृष्टद्युम्न–शिखण्डिनौ । आदिश्य सह कृष्णेन, पाण्डवेयाः प्रतस्थिरे ॥ ९४७ ॥ आयोधनाध्वजङ्घालैः, पाञ्चालैः समलंकृतम् । आदाय सैन्यमावासा–ञ्जग्मतुर्द्रुपदात्मजौ ॥ ९४८ ॥

ततो दिङ्मुखकस्तूरी–पत्रभङ्गा इवोदगुः । कौरवेश्वरनिश्वास–धूमसान्द्रास्तमश्छटाः ॥ ९४९ ॥ सहस्रगुणितध्वान्ता, मूर्च्छाभिः कौरवेशितुः । साकं तैस्तैर्मनोदुःखैः, प्रससार तमस्विनी ॥ ९५० ॥ अथाभ्येत्य तथासंस्थ–मूचिरे मन्युगद्गदम् । कृतवर्म–कृप–द्रोण–सूनवः कुरुपुङ्गवम् ॥ ९५१ ॥ महाराज ! त्वमेवासि, मानिनामधिदैवतम् । ईदृशेऽपि स्थिते येन, दैन्यं चक्रे न वैरिषु ॥ ९५२ ॥ वयं तु कर्मचाण्डालाः, कृतघ्नैकधुरंधराः । शत्रुभिः पश्यतां येषां, लम्भितोऽसि दशा-

१ ज्ञातिमध्यंगः । २ युद्धमार्गपथिकैः ।

मिमाम् ॥ ९५३ ॥ किं त्विदानीमधोऽस्माभिः, स्थितैर्न्यग्रोधभूरुहः । वनेऽस्मिन् महती दृष्टा, युक्तिः प्रत्यर्थिमन्थने ॥ ९५४ ॥ तत्र हि क्षणदादक्ष-चक्षुषाऽभ्येत्य तत्क्षणात् । काकानीकमुलूकेन, सर्वं सुप्तमहन्यत ॥ ९५५ ॥ तद्दृष्ट्वा तुष्ट-चेतोभि-रित्यस्माभिरचिन्त्यत । यदेकोऽप्यखिलान् हन्ति, कालमालम्ब्य शात्रवान् ॥ ९५६ ॥ अस्माभिरपि तन्नून-मिदानीं निशि पाण्डवाः । रणोत्तीर्णतया स्वैरं-स्वपना नातिदुर्जयाः ॥ ९५७ ॥ इत्यालोच्य वयं रात्रि-संगरे कृतसं-गराः । भवदादेशमादातु-मिहागच्छाम संप्रति ॥ ९५८ ॥ जीवतस्ते बलाच्छित्त्वा, पाण्डुपुत्रशिरांसि चेत् । दर्शयेमहि तत् किंचि-दानृण्यं त्वयि नो भवेत् ॥ ९५९ ॥

इत्येतैर्वचनैस्तेषां, पीयूषरसवर्षिभिः । विस्मृत्य वेदनावेग-माकृष्याश्लिष्यति स्म तान् ॥ ९६० ॥ वक्ति स्म च महा-वीरा !, जल्पतेदं पुनः पुनः । यच्छिरांसि द्विषां छित्त्वा, दर्शयिष्यामहे तव ॥ ९६१ ॥ न तत् किमपि युष्मासु, यन्न संभा-व्यते खलु । किंचिन्नास्त्येव यच्चिन्ता-रत्नस्यापि दवीयसि ॥ ९६२ ॥ तज्जवाद्गच्छत च्छित्त्वा, मौलीन् दर्शयत द्विषाम् । मदीयैर्न खलु प्राणैः, स्थातुमीशिष्यते चिरम् ॥ ९६३ ॥ अश्वत्थामन्! गुरोस्तस्य, तनयोऽसि त्वमौरसः । मानसोऽहं पुनस्तेन, महज्ज्ञातेयमावयोः ॥ ९६४ ॥ तद्विधृत्य मयि प्रीति-माविःकृत्याप्यनुग्रहम् । मूर्ध्नः पाण्डुभुवां कृत्तान्, यदि दर्शयसि क्षणात् ॥ ९६५ ॥ प्रस्थितस्य तदेदानीं, वर्तनीं[3] पारलौकिकीम् । ममानन्दमयं दत्तं, पाथेयं भवता भवेत् ॥ ९६६ ॥ (युग्मम्) अजेयोऽसि त्वमेकोऽपि, शात्रवाणां शतैरपि । कृतवर्म-कृपाचार्य-संगतस्तु किमुच्यते ? ॥ ९६७ ॥ इत्यादि

१ सुखसुप्ताः । २ कृतप्रतिज्ञाः । ३ मार्गम् ।

द्रौणिमामाप्य, कृतवर्म-कृपान्वितम् । वधाय पाण्डुपुत्राणां, प्राहिणोद्धृतराष्ट्रभूः ॥ ९६८ ॥

ते त्रयोऽपि ततोऽनेक-भटश्रेणिविसंकटम् । अक्षाय पाण्डवेयानां, स्कन्धावारमुपागमन् ॥ ९६९ ॥ रे कौन्तेयचमूसैन्याः [1], सत्वरं कुरुतायुधम् । क्रुद्धो युष्मासु नन्वश्व-त्थामनामा यमोऽधुना ॥ ९७० ॥ इति द्रौणिगिरं श्रुत्वा, स्फूर्जद्भुस्फूर्जितापकम् । चापारोपनिनादं च, त्रयाणामपि दोर्भृताम् ॥ ९९१ ॥ द्रवन्निद्रासुखं काम-मुच्छलत्तुमुलारवम् । क्षुभ्यति स्म क्षणात् सर्वं, शिबिरं पाण्डुजन्मनाम् ॥ ९७२ ॥ (त्रिभिर्विशेषकम्) त्रयाणामपि निःशेषं, तेषां विशिखपङ्क्तिभिः । कल्पान्ताशनिकल्पाभिः, पाण्डवानीकमानशे ॥ ९७३ ॥ कोदण्डमधिमौर्वीकं, कुर्वाणौ रभसात्ततः । धृष्टद्युम्नः शिखण्डी च, धावतः स्म महाभुजौ ॥ ९७४ ॥ ततस्ताभ्यां भृशं दुष्ट-ग्रहाभ्यामिव सर्वतः । क्रियते स्म कृपादीनां, बाणवृष्टेरवग्रहः ॥ ९७५ ॥ पराक्रमम‍र्यां कांचि-दिष्टिमिश्रां भटाहुतिम् । तौ क्षणाच्छम्भितौ शान्ति-मश्वत्थामादिभिस्ततः ॥ ९७६ ॥ मृदितौ निर्निकृन्तद्भि-र्धृष्टद्युम्न-शिखण्डिनोः । वैरनिर्यातनं काम-मकारि द्रोण-भीष्मयोः ॥ ९७७ ॥ तयोर्निहतयोर्देप-गणयोरिव तैः क्षणात् । कर्मानीकमिवानेशत्, पार्थीयमखिलं बलम् ॥ ९७८ ॥

पश्चानां पाण्डवेयानां, द्वितीया इव मूर्तयः । पाञ्चालीकुक्षिकासार-पुण्डरीकास्ततो जवात् ॥ ९७९ ॥ विशिखा इव पञ्चापो-र्जगद्भिरपि दुर्जयाः । क्रुद्धाः पञ्चापि पाञ्चाला, भजन्ते स्माभ्यमित्रताम् ॥ ९८० ॥ (युग्मम्) पाण्डवेयभ्रमाद्रात्रौ, द्रौणिप्रभृतयोऽपि ते । धावन्ति स्माधिकक्रोध-गरिष्ठभुजसौष्ठवाः ॥ ९८१ ॥ अथाभूदुभयेपाम-प्यमीपामितरेतरम् । विमुक्तैः

[1] रयश्वनिनाशकरीम् ।

पत्रिभिः प्राण–प्रयाणप्रवणो रणः ॥ ९८२ ॥ प्रतिपक्षोदयाः सम्य–ग्मत्राङ्गैरिव पञ्चभिः । काष्णर्यैर्न्यक्रियन्ते स्म, द्रौणि-मुख्यास्त्रयोऽपि ते ॥ ९८३ ॥ तैरथोज्ञागरूकाभि–र्लज्जाभिरतितर्जितैः । सारसर्वाभिसारेण, प्रहर्तुमुपचक्रमे ॥ ९८४ ॥ पाञ्चालविशिखान् बाण–श्रेणिर्द्रौणेरशोषयत् । नैदाघस्य रवेरुस्र[1]–मण्डलीव जलाशयान् ॥ ९८५ ॥ पञ्चताशालिनीं शश्व–द्विभ्रेतामभिधामपि । काष्णर्यानां ततश्चक्रे, पञ्चतैव तदाशुगैः ॥ ९८६ ॥ तच्छिरांसि क्षणाच्छित्त्वा, पाण्डवेयधियैव तैः । अश्वत्थामादिभिः प्रीतै–र्निन्यिरे कौरवान्तिकम् ॥ ९८७ ॥

वेदनातिशयान्मूर्च्छ–न्मूर्च्छामुकुलितेक्षणः । तत्र तैर्ददृशे श्वास–मात्रशेषः सुयोधनः ॥ ९८८ ॥ सरःसलिलसेकेन, प्रत्याहृत्याथ चेतनाम् । सानन्दस्य पुरस्तस्य, मुञ्चन्ति स्म शिरांसि ते ॥ ९८९ ॥ क्षणाच्चारणिकाष्ठानि, ते निर्मथ्य पृथूर्जिताः । रचयांचक्रुरुद्द्योतं, द्योतिताखिलभूतलम् ॥ ९९० ॥ अभ्यधुश्च धराधीश !, छिन्नान् पश्याप्यमून् पुरः । पाण्डवानां क्षणं मौली–नालोक्य भव निर्वृतः ॥ ९९१ ॥ इत्येतया गिरा तेषां, मनागुन्मथितव्यथः । पूर्वाङ्गं[3]त्यक्तभूमिस्तान्, सम्यग्मौलीन्व्यलोकयत् ॥ ९९२ ॥ तानुद्वीक्ष्य स वैलक्ष्य–श्यामीकृतमुखद्युतिः । दीर्घं निश्वस्य भूयोऽपि, पपात सहसा भुवि ॥ ९९३ ॥ जल्पति स्म च धिग्मूर्खाः !, कोऽयं युष्मत्पराक्रमः ? । पाञ्चालाः खलु युष्माभि–र्जघ्निरेऽमी स्तनंधयाः ॥ ९९४ ॥ सन्ति दुष्टास्तु ते स्पष्ट–मखण्डा एव पाण्डवाः । क वा भाग्यानि मे तानि ?, यैः पश्येयं हतानमून् ॥ ९९५ ॥ इति मन्दं वदन्नेवा–तुच्छमूर्च्छाभराकुलः । क्रौर्यत्रस्तैरिव प्राणै–स्त्यज्यते स्म सुयोधनः ॥ ९९६ ॥ ( त्रिभिर्विशेषकम् )[2]

१ किरणसमूहः । २ 'भ्रतां नवतामपि' प्रतिद्वयपाठः, तत्र नवतां-यौवनम् । ३ भूमेः किञ्चिदुत्थायेत्यर्थः ।

ते ऽथ किंकार्यतामूढ-बुद्धयो बद्धभीतयः । परित्यज्य तथासंस्थ-मेव कौरवपुङ्गवम् ॥ ९९७ ॥ अश्वत्थामादयः काम-मन्योऽन्यस्यापि लज्जिताः । विपण्णमनसो जग्मुः, क्वापि क्वापि पृथक्पृथक् ॥ ९९८ ॥ (युग्मम्) समस्तमथ वृत्तान्त-मेनं विज्ञाय कोविदः । उपेत्याख्यत् सदारस्य, धृतराष्ट्रस्य संजयः ॥ ९९९ ॥ तन्निशम्य श्रुतिक्रोड-पविपातविडम्बनम् । गान्धारी धृतराष्ट्रश्च, सहसैव मुमूर्च्छतुः ॥ १००० ॥ शोकाग्निदह्यमानास्थि-त्रटत्कार इवोच्चकैः । तत्पर्श्वनारलोकाना-माक्रन्दध्वनिरुद्ययौ ॥ १००१ ॥ तौ मरुद्भिर्निशाशीतै-श्चिरादासाद्य चेतनाम् । एवं परिदिदेवाते, बद्धबाष्पाम्बुपल्वलौ ॥ १००२ ॥

हा ! वत्स ! धीरधौरेय !, हा ! मानैकनिकेतन ! । हा ! गुणोर्वीरुहाराम !, हा ! यशःक्षीरनीरधे ! ॥ १००३ ॥ हा ! कौरवकुलोत्तंस !, हा ! गुरुष्वेकवत्सल ! । हा ! निःसामान्यसौजन्य !, हा ! दुराक्रमविक्रम ! ॥ १००४ ॥ हा ! कृपाणपयःपूर-प्लावितारातिमण्डल ! । हा ! नताखिलभूपाल-मौलिमालाञ्चितक्रम ! ॥ १००५ ॥ हा ! दुर्योधन ! कुत्रावां, विहाय गतवानसि ? । किं नामाभूद्विरोधिभ्य-स्तवापीदममङ्गलम् ? ॥ १००६ ॥ बभूव पुरतो यस्य, वासवोऽपि कृपाऽऽस्पदम् । दैवात्कृत ! तस्यापि, का तवेयं दशाऽभवत् ? ॥ १००७ ॥ भवन्तं हरता वीर !, मृत्युनाऽद्य दुरात्मना । आकृष्टा यष्टिरेवेय-मन्धयोरावयोः करात् ॥ १००८ ॥ वीर ! यातेऽद्य विश्वाना-मेकचन्द्रमसि त्वयि । को धिनोतु निराधारा-वनुजीविचकोरकान् ? ॥ १००९ ॥ त्वां विना जगदप्येत-दद्य शून्यं बभूव नौ । शोकान्धयोर्ध्रुवं चेयं, शाश्वती भविता तमी ॥ १०१० ॥

१ रात्रिः ।

धृतराष्ट्र-विलापः। कृष्णेन कृतं पाण्डवानां सान्त्वनम्॥

इत्थं विलपतोस्तारं, क्रन्दतोर्बहुमूर्च्छतोः । निर्घृणं निघ्नतोर्वक्षः, क्ष्मापृष्ठे लुठतोर्मुहुः ॥ १०११ ॥ हालाहलमयं वह्नि-मयं
मृत्युमयं जगत् । तदाऽभूत् सुतशोकेन, गान्धारी-धृतराष्ट्रयोः ॥ १०१२ ॥ ( युग्मम् )

इतश्च पाण्डवाः क्रुद्धं, प्रसाद्य शितिवाससम् । यावदुच्चेलुरात्मीयां, प्रमोदात् पृतनां प्रति ॥ १०१३ ॥ तावदुद्वेपथु-
भीत्या, वेगादागत्य सात्यकिः । पाञ्चालादिवधोदन्त-मादितस्समचीकथत् ॥ १०१४ ॥ तूर्णमाकर्ण्य तं कर्ण-क्रोडक्रक-
चकर्कशम् । शोचतः पाण्डवान् कामं, मुरारातिरवोचत ॥ १०१५ ॥ वीराः ! किमिव युष्माक-मप्यदः स्फुरितं
शुचाम् ? । काञ्चनस्याप्यसौ किंचि-न्मन्ये मालिन्यसंभवः ॥ १०१६ ॥ ज्ञातसंसारतत्त्वाश्चे-द्यूयमप्यास्पदं शुचः । भविष्यति
ततो नून-मादित्योऽपि तमःपदम् ॥ १०१७ ॥ संभाव्य द्रौणिमुख्याना-मिदमापाति सौप्तिकम् । स्वानीकमानयं युष्मान्,
बलानुनयहेतवे ॥ १०१८ ॥ पितृ-स्वामिवधक्रोधा-दयं हि द्रोणनन्दनः । श्रान्तसुप्तान् ध्रुवं हन्या-द्युष्मानेव चमूस्थितान्
॥ १०१९ ॥ तदेतावान् समस्तोऽय-मारम्भो विफलीभवेत् । पुत्रास्तु सत्सु युष्मासु, नातिदुर्लभसंभवाः ॥ १०२० ॥ तद्वि-
मुच्य शुचं वेगात्, प्रतिष्ठध्वं चमूं प्रति । सान्त्वयामो यथा कृष्णां, पुत्र-भ्रातृवधार्दिताम् ॥ १०२१ ॥ इत्यच्युतगिरा
शोकं, शिथिलीकृत्य पाण्डवाः । स्थानस्थानोद्यदाक्रन्दं, निजं शिबिरमागमन् ॥ १०२२ ॥

तत्र भूलुठनव्यग्रा-मग्रतो लुलितालकाम् । क्रन्दन्तीं तारतारं ते, ददृशुर्द्रुपदात्मजाम् ॥ १०२३ ॥ हा ! वत्सा ! हा !

---

१ रात्रियुद्धम् । ( २ 'स्वानीकं प्रति संचेलुः सुप्रसन्नमुखश्रियः' इति भवेदिति गद्यपाण्डवचरिताज्ज्ञायते ) इयं टिप्पनिका समीचीना न भाति । त्रयोदशस्य श्लोकस्योत्तरार्धश्चेत् साधुः इति मे मतम् ।

महावीरा !, हा ! जनन्येकचेतमः ! । क नाम यूयं याताः स्थ, मन्दभाग्यां विमुच्य माम् ? ॥ १०२४ ॥ इत्याद्यनेकधाक्रन्द-परिदेवननिष्ठुराम् । सान्त्वयामास कंसारि- रिति द्रुपदनन्दिनीम् ॥ १०२५ ॥ कल्याणि ! वीरपत्नीनां, न खल्वेष विधिः क्वचित् । शोकेन परिभूयन्ते, गल्पीयस्यः पुरंध्रयः ॥ १०२६ ॥ प्रणष्टैरात्मजैराजौ, लज्जन्ते वीरयोषितः । मोदन्ते तु श्रितैः मृत्यु-मूर्घ्नीभूतैर्विजित्य वा ॥ १०२७ ॥ बान्धवौ तव तौ धन्यौ, धन्यास्ते च तनूद्भवाः । कुलैकतिलकैः प्राणान्, यैस्त्य-जद्भिर्निजान् रणे ॥ १०२८ ॥ दीयते स्म चिरं तुभ्य-मवैधव्यमखण्डितम् । चक्रे च कीर्तिरात्मीया, लोकालोकावलोकिनी ॥ १०२९ ॥ (युग्मम्) रक्षिता अपि हि प्राणा, यास्यन्त्येव कदाऽप्यमी । ते तु कस्मिंश्चिदप्यर्थे, यान्ति चेत्तत् फलं महत् ॥ १०३० ॥ बान्धवा अपि हन्यन्तां, म्रियन्तां तनया अपि । नन्दन्ति दयितानां तु, कुशलेन पतिव्रताः ॥ १०३१ ॥ तन्मुञ्च शुचमात्मानं, संस्थापय विसंस्थुलम् । द्रुपदस्य तनूजाऽसि, श्रीपाण्डोश्च वधूरसि ॥ १०३२ ॥ इत्याद्यैर्मुरजिद्वाक्यैः, पाण्डवैश्चानुमोदितैः । मुञ्चति स्म शनैः शोक-श्यामिकां द्रुपदात्मजा ॥ १०३३ ॥

अथ प्रभातकल्पायां, क्षपायां शौरि-पाण्डवाः । धृतराष्ट्रं सपत्नीक-मपशोकयितुं ययुः ॥ १०३४ ॥ तत्राभ्येत्य भृशं मग्नौ, शोकनाम्नि महार्णवे । गान्धारीं धृतराष्ट्रं च, नमस्यन्ति स्म पाण्डवाः ॥ १०३५ ॥ भक्तिप्रह्वतरं तेषु, नमस्कुर्वत्सु गेपणौ । पुनः पीनोच्छलच्छोकौ, तौ पराञ्चौ बभूवतुः ॥ १०३६ ॥ पाण्डवेष्वथ तत्पाद-तले लुलितमौलिषु । वाग्मिनामग्रणीरेवं, गदति स्म गदाग्रजः ॥ १०३७ ॥ राजन्नमी न किं पाण्डु-स्तनवस्तव सूनवः ? । न क्वचिद्भक्तिरप्येषां, पाण्डुवत्त्वयि हीयते ॥ १०३८ ॥ पूज्यां हृदि पृथातोऽपि, गान्धारीं धारयन्त्यमी । कुरवोऽपि तपःसूनो-र्भीमादि-

भ्योऽपि वल्लभाः ॥ १०३९ ॥ यत्तु दूरमनाख्येय-मभूदेतदमङ्गलम् । तत्र मन्ये दुरात्माऽयं, विधिरेवापराध्यति ॥ १०४० ॥
पञ्चग्राम्याऽप्यमी पाण्डु-सुताः संधित्सवस्तदा[1] । कौरवेण निरस्ता य-द्दैवदौरात्म्यमेव तत् ॥ १०४१ ॥ यन्निराचक्रिरे
तेन, गिरो युष्मादृशामपि । हेतुस्तत्रापि जागर्ति, केवलं भवितव्यता ॥ १०४२ ॥ किं च बन्धुभिरप्यात्तां, पाण्डवेया
यथा तथा । त्यजेयुर्यदि धात्रीं त-ल्लज्जयेयुर्न ते कुलम् ? ॥ १०४३ ॥ कुर्वता पुनरन्याय-मयौष्माककुलोचितम्[2] । यदि जानासि
तत् कामं, कौरवेणासि लज्जितः ॥ १०४४ ॥ सुता अपि सतां द्वेष्याः, शत्रुवत् कलितानयाः । न्यायिनस्तु परेऽप्युच्चै-र्वल्लभा
एव पुत्रवत् ॥ १०४५ ॥ अमी तु पाण्डवाः स्फीत-नयाश्च तनयाश्च ते । तदेतेषु विशेषेण, प्रसत्तिं गन्तुमर्हसि ॥ १०४६ ॥
क्रमावनतमूर्द्धानो, गान्धार्यां त्वयि चान्वहम् । भक्तिं चैते करिष्यन्ति, कौरवेभ्योऽधिकां ध्रुवम् ॥ १०४७ ॥ तत् प्रसन्नं
मनः कृत्वा, विस्मृत्य च रुषं मनाक् । उभावपि युवां दत्तं, पृष्ठेऽमीषां करं मुदा ॥ १०४८ ॥ सर्वथाऽप्यस्य विश्वस्य, कलय[3]
त्वमनित्यताम् । पीडयेत् पुत्रशोकोऽपि, कं हि नाम विवेकिनम् ? ॥ १०४९ ॥ इति मन्दीकृतामर्षौ, गिरा दामोदरीयया ।
तौ पृष्ठे पाण्डवेयानां, कृच्छ्रेण ददतुः करम् ॥ १०५० ॥ दैवस्यैवापराधोऽयं, न वो नास्मत्तनूरुहाम् । इत्युत्थाप्य क्रमा-
नम्रा-नमूनालिङ्गतः स्म तौ ॥ १०५१ ॥

व्याजहाराथ गान्धारी, वत्सा ! मद्बालकाः स्थ चेत् । तन्मां संग्रामसीमान-मिदानीं नयत द्रुतम् ॥ १०५२ ॥ यथा
विशेषितासूनां, सर्वेषामात्मजन्मनाम् । करोमि मन्दभाग्याऽह-मन्त्यमाननदर्शनम् ॥ १०५३ ॥ ततस्तिग्मद्युतौ पूर्व-शैलशृङ्गा-

१ संधिं कर्तुमिच्छवः । २ युष्माकं कुलस्यानुचितम् । ३ 'कलयतमनि०' प्रतिद्वयपाठः ।

कृष्णेन कृतं धृतराष्ट्रस्य सान्त्वनम् ॥

नागश्रिणि । नमनस्थाप्य तत्रैव, धृतराष्ट्रं कथंचन ॥ १०५४ ॥ पाण्डवेयाः स्वयं भक्त्या, दत्तहस्तावलम्बनाम् । उदश्रु-
नयनां निन्यु-र्गान्धारीं समराजिरम् ॥ १०५५ ॥ (युग्मम्) देवरीभिः समं सर्व-राजन्यानां च यौवतैः । श्वश्रूमन्वचल-
न्ननु-र्भर्त्री दुर्योधनप्रिया ॥ १०५६ ॥ तामनेकमहावीर-करङ्कनिकराङ्किताम् । वीक्ष्य युद्धक्षितिं तासां, हृदयानि विदु-
द्रुवुः ॥ १०५७ ॥ तासां युगपदाक्रन्द-प्रतिध्वनिभिरुद्धतैः । क्रन्दन्त्य इव भान्ति स्म, दिशस्तच्छोकविक्लवाः ॥ १०५८ ॥
गदाप्रहारभग्नोरुं, परिच्छदनिवेदितम् । गान्धारी स्नुषया सार्धं, कौरवेश्वरमभ्यगात् ॥ १०५९ ॥ शोणितोक्षितसर्वाङ्गा-
नन्या अपि मृगीदृशः । उपलक्ष्योपलक्ष्य स्वान्, वल्लभानभिशिश्रियुः ॥ १०६० ॥

पृथक् पृथक् परिभ्रष्टा-नश्राविलविलोचना । शरीरावयवान् पत्युः, काऽपि कृच्छादमीलयत् ॥ १०६१ ॥ वक्षःपीठेऽन्ति-
माश्लेष-लग्नैः स्वस्तनकुङ्कुमैः । काऽप्युपालक्षयत् पत्युः, कबन्धं न पुनः शिरः ॥ १०६२ ॥ अन्त्यचुम्बनसंक्रान्तात्, कस्तू-
रीतिलकाश्रिजान् । प्रत्यभ्यजानात् कान्तस्य, काऽप्यास्यं न पुनर्वपुः ॥ १०६३ ॥ काऽप्यन्त्यचुम्बनव्याजा-दभिज्ञानं
प्रियानने । निजौष्ठयावकैः क्लृप्तं, नापश्यद्रुधिरैस्तदा ॥ १०६४ ॥ स्वकान्तवदने मौग्ध्या-दन्यस्याङ्गे नियोजिते । चिरं
भर्तृविवादोऽभूत्, कस्याश्चित्तस्य कान्तया ॥ १०६५ ॥ काऽपि सर्वाङ्गसंसक्तै, रक्तैरव्यक्ततां गतम् । स्वप्राणेशभ्रमादन्य-
मप्यालिङ्गत् पुनः पुनः ॥ १०६६ ॥ मानात् काऽप्यन्तिमाश्लेषे, निराकृत्य प्रियं पुरा । मृतं तु सस्वजे स्वागः, शोचन्ती
तत् पुनस्तमाम् ॥ १०६७ ॥ भर्तुरादाय मूर्द्धानं, करे कायगवेषिणी । काऽपि क्षेत्रक्षितिं सर्वां, काली साक्षादिवाभ्रमत्

१ युवतिसमूहैः । २ करङ्क-शीर्षम् ।

॥ १०६८ ॥ सापत्न्यार्ता पुरा पत्युः, पञ्चतामप्यचिन्तयत् । तदानीं तु मृते तस्मि-न्नशोचत् काचिदुच्चकैः ॥ १०६९ ॥ प्राप्य पत्युर्मुखं कान्तमङ्के गतप्राणं, चिकीर्षन्त्योर्निजे निजे । तदानीमप्यभूदुच्चैः, सपत्न्योः कलहो महान् ॥ १०७० ॥ प्राप्य पत्युर्मुखं काचि-च्चुम्बति स्म पुनः पुनः । अपरा वपुरासाद्य, परिरेभे मुहुर्मुहुः ॥ १०७१ ॥ अन्यासक्तं पतिं काचित्, प्रागप्राप्तोप-गूहना । तदानीं तु गतस्पन्दं, स्वच्छन्दं परिषस्वजे ॥ १०७२ ॥

अङ्कमारोप्य गान्धारी, ततो दुर्योधनं सुतम् । चक्रन्द तारपूत्कारं, सदैन्यमिति भाषिणी ॥ १०७३ ॥ हा ! वत्स ! हा ! महोत्साह !, हा ! शौण्डीरशिरोमणे ! । हा ! वीररसकासार !, हा ! कुलाम्बरभास्कर ! ॥ १०७४ ॥ मदेकहृदयो भूत्वा, पूर्वमुर्वीपुरंदर ! । असंस्तुत इवेदानीं, नेक्षसे किं दृशाऽपि माम् ? ॥ १०७५ ॥ पूर्वमाज्ञाप्य भूपालान्, तत्तत्कृत्येष्वनारतम् । क्षित्यवेक्षणमाकाङ्क्षन्, प्राङ्निद्रां न कदाऽप्यगाः । किमेकहेलयेदानीं, दीर्घनिद्रां निषेवसे ? ॥ १०७७ ॥ वत्सलस्यैव ते वत्स !, कोपः क इव मातरि ? । क्रन्दन्त्यामपि येनोच्चै-र्नोत्तरं मयि दीयते ॥ १०७८ ॥

कामं किमसि तूष्णीको, वाचंयम इवाधुना ? ॥ १०७६ ॥

विलपन्त्यामिति स्वैरं, गान्धार्यां भानुमत्यपि । प्रियाङ्घ्री शिरसि न्यस्य, रुदन्तीत्यवदन्मुहुः ॥ १०७९ ॥ हा ! नाथ ! हा ! रिपून्माथ !, हा ! मानैकनिकेतन ! । हा ! सौभाग्यामृताम्भोधे !, हा ! रूपप्लपितस्मर ! ॥ १०८० ॥ हा ! कल्पपादपौदार्य !, हा ! सुधामयवाङ्मय ! । हा ! विश्वकमलादित्य !, हा ! नेत्रतुहिनद्युते ॥ १०८१ ॥ मांसलेऽपि

१ अप्राप्तमालिङ्गनं यया सा ।

व्यलीकं प्राण, नासंभाषं मयि व्यधाः । निर्व्यलीकामपीदानीं, मां न संभाषसे कथम् ? ॥ १०८२ मदीयं यदि वा किंचि-
द्व्यलीकमपि मन्यसे । तदाविष्कुरु येन त्वां, सद्यः प्रत्याययाम्यहम् ॥ १०८३ ॥ चेत् प्रसन्नमना एव, वर्तसे यदि वा मयि ।
तन्निर्नर्मां निशिश्वस्व, विलोकनसुधारसैः ॥ १०८४ ॥ मां विहाय पुरा नाथ !, नैव लीलावनेऽप्यगाः । किमद्य परलोकाय,
प्रस्थितोऽसि मया विना ? ॥ १०८५ ॥ स्वामिन् ! विश्वस्य विश्वस्य, नित्यमास्थाय नाथताम् । प्रयातास्म्यहमप्यद्य, त्वां
विना नन्वनाथताम् ॥ १०८६ ॥ ममाभूत्त्वद्विमुक्तायाः, पूषाऽप्येष तमोमयः । जाताश्चैते दवप्रायाः, स्वामिन् प्राभातिका-
निलाः ॥ १०८७ ॥ पतत्रिण इव ध्वस्ते, कुलायजगतीरुहे । किं विपन्ने त्वयीदानीं, श्रयेयुरनुजीविनः ? ॥ १०८८ ॥
भानुमत्यामिति स्फार, क्रन्दन्त्यां करुणैः स्वरैः । दुःशल्याऽप्यथ गान्धारी-धृतराष्ट्रतनूद्भवा ॥ १०८९ ॥
दुर्योधनस्वसा प्राण-प्रियं समरशायिनम् । आसाद्य सिन्धुभूपालं, रुदती पर्यदेवत ॥ १०९० ॥ (युग्मम्) हाऽभिराम-
गुणग्राम-मरालकुलमानस ! । हा ! सिन्धुवनितानेत्र-कैरवाकरचन्द्रमः ! ॥ १०९१ ॥ न नामास्ति ममानृण्यं, प्राणेश !
प्रणयेऽपि ते । मद्भ्रातुर्यैर्न पुनः प्राणान्, स्वानदास्तत्र किं ब्रुवे ? ॥१०९२॥ हा ! ममास्तमिते तुल्यं, पितृ-श्वशुरयोः कुले ।
मण्डले दर्शगामिन्यां, सूर्याचन्द्रमसोरिव ॥ १०९३ ॥ यैर्नाज्ञायि पुरा काचित्, कथाऽपि परिपन्थिनाम् । त्वां विना ते महा-
वीर !, किं भविष्यन्ति सिन्धवः ? ॥ १०९४ ॥ मित्रकृत्यमयप्राणे, स्वामिन्नस्तं गते त्वयि । स्वच्छन्दमद्य मोदन्तां,
त्वन्निशाचरागतयः ॥ १०९५ ॥ इतोऽप्याप्य करं पत्यु-रङ्गुलीयोपलक्षितम् । इति भूरिश्रवःपत्न्य-स्तारं परिदिदे-

१ नीरजे ।

,,

गान्धार्यादीनां विलापः। मृतानां संस्कारः॥

विरे ॥ १०९६ ॥ सैष नः स्तनकार्कश्य–सुहृज्जघनबान्धवः। नाभीदुर्ललितो नीवी–मोक्षकेलिकरः करः ॥ १०९७ ॥ सैष ज्याकर्षणाक्राम्य–दङ्गुलीवलयोज्ज्वलः। क्रुष्टदुष्टारिवामाक्षी–शिरःकेशोत्करः करः ॥ १०९८ ॥ सैष नम्रारिभूपाल–पृष्ठविश्रामनैष्ठिकः। समस्तार्थिचमूदत्त–हिरण्यनिकरः करः ॥ १०९९ ॥ एकच्छत्रामिमां धात्रीं, यस्य स्वैरं वितन्वतः। कुर्वन्ति स्म शराः पूर्वं, वंशच्छेदं महीभृताम् ॥ ११०० ॥ हा ! नाथ ! मथितानेक–वीरकिर्मीरिते रणे। सोऽपि त्वमधुना पाणि–मात्रगात्रो विलोक्यसे ॥ ११०१ ॥ (युग्मम्) त्वामद्य हरता वीर !, वेधसा मन्दमेधसा। शृङ्गारश्च विलासश्च, रतिश्च ह्रियते स्म नः ॥ ॥११०२॥ इत्याद्यन्या अपि प्राप्य, प्राणनाथं निजं निजम्। विलापतुमुलाः कामं, क्रन्दन्तीर्मृगचक्षुषः ॥११०३॥ संसारभङ्गुरीभाव–भावितैरमृतोपमैः। तैस्तैः संबोधयांचक्रे, वचोभिस्तपसः सुतः ॥ ११०४ ॥ (युग्मम्)

अथादेशादजातारे–र्भूभुजां प्लवगध्वजः। आग्नेयास्त्रेण सर्वेषा–मग्निसंस्कारमादधे ॥ ११०५ ॥ स्कन्धावारं ततोऽभ्येत्य, भ्रातॄणामौर्ध्वदेहिकम्। सहैव धृतराष्ट्रेण, पाण्डवेया वितेनिरे ॥ ११०६ ॥ ताभिस्ताभिः क्रियाभिश्च, शोकमाक्षिप्य तत्क्षणात्। वितीर्णविनयादेशं, सहायीकृत्य सात्यकिम् ॥ ११०७ ॥ धृतराष्ट्रं समं ताभिः, समस्ताभिः पुरंध्रिभिः। प्रेषयामास नगरं, धर्मभूर्नागसाह्वयम् ॥ ११०८ ॥ (युग्मम्) अवेक्षणीयाः स्वयमेव तावत्, प्रजाः प्रतीक्षैः प्रयतैरजस्रम्। यावज्जरासन्धवधं विधाय, हरेर्निदेशादहमभ्युपैमि ॥ ११०९ ॥ विज्ञप्तिमेवं चरणप्रणाम–पूर्वं जयोदन्तपुरःसरं च। प्रयास्यता सात्यकिना तदानीं, तपःसुतः कारयति स्म पाण्डोः ॥ १११० ॥ (युग्मम्)

१ 'पुरंदरपुरीदरम्' प्रतिद्वय०। २ किर्मीरितं–विचित्रम्।

इत्थं क्रोधाद्विधाय प्रधनभुवि रिपुव्रातकल्पान्तमन्तः,
प्रीतिं तां तां वहन्तः पुनरवनिपरीभोगलाभप्रसूताम् ।
तुष्टिं पुष्टामरिष्टद्विपति रचयितुं मागधक्षोणिभर्तुः,
संहारेणाथ तस्थुः किसलयितमहस्ताण्डवाः पाण्डवेयाः ॥ ११११ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये पाण्डव-कौरवयुद्धवर्णनो नाम त्रयोदशः सर्गः ॥ १३ ॥

# अथ चतुर्दशः सर्गः ।

दुर्योधनाधकृद्द-मगधेशनिदेशतः । दूतः समेत्य वाक्पूतः, कंसारातिमथाभ्यधात् ॥ १ ॥ समाप्य कौरवान्
द्यपः, कृष्ण ! मा स्म मनागपि । त्रिखण्डाखण्डलो याव-द्वियजी मगधेश्वरः ॥ २ ॥ प्रियं जामातरं कंसं, सुहृदं च
सुयोधनम् । अत्युत्सुकोऽयमाक्रष्टुं, द्वावप्येतौ तवोदरात् ॥ ३ ॥ किं तु त्वां व्याहरत्येषं, पिच्छिला शोणितोर्मिभिः । अने-
काक्षौहिणीरुण्डै-र्भूरियं स्वंपुटापि च ॥ ४ ॥ ततस्त्यक्त्वा कुरुक्षेत्रं, संपरायक्षमक्षमे । सनपल्ल्याह्वये ग्रामे, संग्रामोऽस्त्वा-

१ नरामन्त्रः । २ विषमापि अस्तीत्यर्थः ।

वयोरयम् ॥ ५ ॥ विस्फुरच्छफरीनेत्रा, तत्रापि रणसाक्षिणी । अस्ति ज्योत्स्नासपत्नाम्बु-रियमेव सरस्वती ॥ ६ ॥ इत्युक्त्वा विरते दूते, सावज्ञं केशवोऽब्रवीत् । बुभुक्षितानामस्माक-मामन्त्रणमिदं वचः[1] ॥ ७ ॥ जज्ञे नाद्यापि मद्बाहोः, सौहित्यं[2] कंस-कौरवैः । विधास्यति जरासन्धः, पुनस्तदधुना ध्रुवम् ॥ ८ ॥ तत्रैते वयमायाता, एव सोऽप्येतु सत्वरम् । एवमाख्याय तं दूतं, विससर्ज जनार्दनः ॥ ९ ॥ दूतोऽप्येत्य जरासन्धं, धराधीशं व्यजिज्ञपत् । सर्वो देव ! तवादेशः, केशवाय निवेदितः ॥ १० ॥

ततोऽप्य(भ्य)धत्त भूपालः, किंचित् सोमक ! पृच्छ्यसे । ब्रूहि गोपः स किंरूपः?, किंबलः? किंनयोऽपि वा ? ॥११॥ वक्तुं प्रचक्रमे सोऽथ, यथादृष्टं निगद्यते । विदध्यान्मयि देवश्चे-न्नाप्रसादस्पृशो दृशः ॥ १२ ॥ वपुष्मदिव शौण्डीर्य-मुत्साहो देहवानिव । संगताङ्ग[3] इवानङ्गः, स गोपो देव ! रूपतः ॥ १३ ॥ तद्दर्शनादरीणां च, नारीणां च पदे पदे । आत्मविस्मारकः कोऽपि, वेपथुः प्रथतेतमाम् ॥ १४ ॥ न देवस्य समः कश्चित्, सेनया चतुरङ्गया । किं तु शूराः सगोत्राश्च, सर्वेऽप्यत्यल्पेऽपि तद्बले ॥ १५ ॥ योऽस्य बन्धुः कनिष्ठोऽस्ति, समुद्रविजयात्मजः । अरिष्टनेमिर्भगवान्, सोऽरिष्टं द्विष्टभूभुजाम् ॥ १६ ॥ किं ब्रूमो विक्रमं तस्य, स्वकीये लीलयैव यः । दोर्दण्डशिखरे धात्रीं, छत्रीकर्तुमपि क्षमः ॥ १७ ॥ यस्तु ज्यायांस्तयोर्बन्धु-र्बलदेव इति श्रुतः । अपूर्वः[4] पूर्वनष्टानां, वैरिणां शरणं रणे ॥ १८ ॥ ततो वैरिवरूथिन्या-मेतेऽतिरथयस्त्रयः । तदीयतनुजन्मानः, कोटिशस्तु महारथाः ॥ १९ ॥ कृतज्ञास्तनयाः पाण्डो-रुड्डामरतरौजसः । प्राणैरपि प्रियं कर्तुं, समीहन्तेऽधुना

१ 'तव' प्रतिद्वय० । २ तृप्तिः । ३ प्राप्तशरीरः । ४ 'अपूर्वपूर्व०' प्रतित्रय० ।

जरासन्धदूतेन कृष्णस्य युद्धनिमंत्रणं कृतम् । तस्य च वर्णनं जरासन्धसमीपे कृतम् ॥

हरेः ॥ २० ॥ तारकैरिव नः सैन्यैः, सूर्या-चन्द्रमसाविव । तेजस्विनौ सहिष्येते, कथं भीमा-र्जुनौ युधि ? ॥ २१ ॥
उत्पातपवनेनेव, रणे कीचकवैरिणा । क्षिप्ताः पांशुचयक्षेपं, प्रेक्षिताः कैर्न कौरवाः ? ॥ २२ ॥ आस्माकीनध्वजिन्यां तु,
न्यग्रोधोऽतिरथिः परम् । येऽप्यन्ये सन्ति राजन्या-स्तेऽपि नैव निजास्तव ॥ २३ ॥ सहोदय-व्ययाः पत्र-पुष्पप्रायास्तरो-
रिवाः । भृत्यास्तु बहिरायाताः, स्वलोभेनैव सेवकाः ॥ २४ ॥ विष्णोः षाड्गुण्यनैपुण्यं, देवो वेद स्वयं पुरा । पलायामास
यत् कंसं, हत्वा जामातरं तव ॥ २५ ॥ तदा हि वाहिनीसिन्धो-र्देवस्याभिमुखोऽभवत् । विष्णुर्निर्नाम निर्मज्जन्, केन रक्ष्येत
संयुगे ? ॥ २६ ॥ त्वां विज्ञाय बलीयांस-मात्मानमबलं पुनः । विष्णुरात्मपरित्राणं, पलायनममन्यत ॥ २७ ॥ पारावारो-
पकण्ठे च, नव्यां द्वारवतीं पुरीम् । प्राप्य देवकृतां देव-मज्ञासीदानुकूलिकम् ॥ २८ ॥ इदानीं तु समासाद्य, कोटिशः सुभ-
टान् गुणान् । बान्धवं नेमिनाथं च, सोऽप्यागात् सांयुगीनताम् ॥ २९ ॥ तदस्याधिक्यमसमत्तो, बलेन च नयेन च ।
भरतार्धप्रमोदर्क-स्त्वस्मान्नाय्यमुपक्रमः ॥ ३० ॥ स्वामिन्नसाधुरारम्भा-द्विमृश्याऽऽशु विरम्यताम् । मा भूदभूतपूर्वस्ते, चिरा-
दानी पराजयः ॥ ३१ ॥

निशम्य सोमकस्यैनां, गिरं गीतारिविक्रमाम् । अभ्यधान्मगधाधीशः, क्रोधारुणविलोचनः ॥ ३२ ॥ आः सोमक !
त्वमप्येवं, जिह्वां नालोच्य जल्पसि । भरतार्धपतिः क्वाहं ?, क्व च गोपोऽब्धिकच्छपः ? ॥ ३३ ॥ किं लज्जितोऽसि नोत्कर्ष-
न्मृगेन्द्रान्मृगधूर्तकम् ? । अयमुन्मूल्य गोपालं, कुर्वे निष्कण्टकां महीम् ॥ ३४ ॥ इत्याक्षिप्य तमुत्तालः, कालः प्रत्यवनी-

१ भीमेन । २ भजान । ३ युद्धकुशलताम । ४ 'भारतार्ध०' प्रतित्रय० ।

भुजाम्। आदिदेश विशामीशः, प्रयाणाय पताकिनीम् ॥ ३५ ॥

अथानीतद्विपदैन्यात्, सैन्यान्मगधभूपतेः। एत्याप्तचेतसश्चाराः, शशंसुः कंसविद्विषम् ॥ ३६ ॥ देव ! दर्पात्तवारातिः, स्फीतबाहुबलैर्बलैः। सनपल्लीसमीपस्था-मुपतस्थे सरस्वतीम् ॥ ३७ ॥ किं तु धातुर्विपर्यास, इव तस्यावसीयते। प्रतीपः[1] सांप्रतं येन, मान्यानप्यवमन्यते ॥ ३८ ॥ हितमप्यहितं मित्र-मप्यमित्रं[2]स्तव द्विपः। भागधेयविपर्यासात्, संप्रति प्रतिभासते ॥ ३९ ॥ सनपल्लीं ततो गत्वा, देव ! गृह्णातु कार्मुकम्। मगधानामधीशोऽयं, यातु जामातुरन्तिकम् ॥ ४० ॥ तदाकर्ण्य मुकुन्दोऽपि, कुन्दोज्ज्वलमुखाम्बुजः। प्रतिष्ठते स्म देवक्या, कृतप्रस्थानमङ्गलः ॥ ४१ ॥ जरासन्धेन योद्धव्य-मिदानीं कृष्णवैरिणा। इति प्रसृमरोत्साहाः, प्रचेलुः पाण्डुसूनवः ॥ ४२ ॥ औदासीन्यादसंपूर्ण-कौतुकाः कौरवाहवे। पुरो बभूवुरौत्सुक्यात्, कुमारा मुरविद्विषः ॥ ४३ ॥ उपाजगाम संग्राम-महोत्सवसमुत्सुका। सनपल्लीवनान्तेषु, जनार्दनपताकिनी ॥ ४४ ॥ आकर्ण्य मगधेशेन, चक्रव्यूहं प्रकल्पितम् ॥ निबिडं गरुडव्यूहं, कारयामास केशवः ॥ ४५ ॥

ये पुरा वसुदेवेन, वैताढ्ये संचरिष्णुना। सहस्रैरुपकाराणां, मित्रतामुपनिन्यिरे ॥ ४६ ॥ तेऽथ साहाय्यमाधातु-माहवक्षमबाहवः। समुद्रविजयं भूप-मुपाजग्मुर्नभश्चराः ॥ ४७ ॥ (युग्मम्) ते प्रणम्य सुखासीना, यदुराजं व्यजिज्ञपन्। सन्ति विद्याधराः केचि-देव ! त्वदरिपाक्षिकाः ॥ ४८ ॥ संप्रत्यप्रतिमल्लास्ते, समस्तध्वजिनीयुताः। जरासन्धमुपस्थातुं, निजस्थानात् प्रतस्थिरे ॥ ४९ ॥ दन्तावलघटाभीष्मै-र्भविता मगधेश्वरः। मिलितैस्तैस्तमःस्तोम-स्तोयदैरिव दुर्जयः

१ प्रतिकूलः सन् २ 'मित्रं तव' प्रत्यन्तर०।

॥ ५० ॥ तद्वैव ! वसुदेवस्तान्, प्रेष्यतां रोद्धुमुद्धतान् । पक्षच्छेदो विपक्षस्य, नीतेरुपनिषत् परा ॥ ५१ ॥ धृत्वा विज्ञापनामेनां, हृदि यादववासवः । वैताढ्ये विक्रमेणाढ्यं, प्रैषीदानकदुन्दुभिम् ॥ ५२ ॥ सुतौ प्रद्युम्न–साम्बौ च, समस्तांस्तांश्च खेचरान् । प्रस्थितेन समं तेन, जयाय विससर्ज सः ॥ ५३ ॥ या नितान्तमरातीना–मायुधौघविघातिनी । मेरौ[2] जन्ममहे वाहौ, बद्धपूर्वा सुपर्वभिः ॥ ५४ ॥ सा भुजे वसुदेवस्य, प्रस्थितस्य महौषधी । अबध्यत स्वहस्तेन, हृष्टेनारिष्टनेमिना ॥ ५५ ॥ ( युग्मम् )

याते विजययात्रायां, वेगादानकदुन्दुभौ । महेन्द्रसारथिर्नेमि–मेत्य मातलिरब्रवीत् ॥ ५६ ॥ स्वामिन्नूचेऽहमाहूय, मघोना ननु मातले ! । बान्धवार्थेऽस्ति युद्धार्थी, नेमिर्द्वाविंशतीर्थकृत् ॥ ५७ ॥ दिव्यशस्त्रौघसंपूर्णं, भग्नवैरिमनोरथम् । रथं मदीयसंनाहं, गृहीत्वा त्वं व्रज द्रुतम् ॥ ५८ ॥ तदारोहत्विमं स्वामी, गुणमाणिक्यरोहणः । इति विज्ञापनां तस्य, कृतार्थीकृतवान् प्रभुः ॥ ५९ ॥

गभुजास्फोटसुभटौ, गर्जदूर्जस्विकुञ्जरौ । उद्धतौ योद्धुमन्योन्यं, व्यूहौ तावथ चेलतुः ॥ ६० ॥ पीवरा हयहेषाभिर्जिता गजगर्जितैः । नभो बधिरयांचक्रु–श्चमूनिस्वाननिस्वनाः ॥ ६१ ॥ रणतूर्यनिनादेन, द्विगुणोत्साहसंपदाम् । शूराणां सन्नाह–संधयः शतधा ययुः ॥ ६२ ॥ पाञ्चजन्यो मुकुन्देन, देवदत्तः किरीटिना । कीर्ति-वैतालिकौ शङ्खौ, दध्माते मधुरध्वनी ॥ ६३ ॥ उभयव्यूहवर्तिन्यो–रन्योन्यं स्पर्धमानयोः । संग्रामोऽग्रपताकिन्योः, प्रावर्तत भयंकरः ॥ ६४ ॥ सर्वतः

१ मघोनिना । २ 'मेरुजन्म' प्रतिद्वय०, 'मेरोर्जन्म०' प्रत्यन्तर० ।

परिपीतार्क–व्यूहयोरुभयोरपि । शरैः प्रसृमरैर्विश्व–मेकच्छत्रमजायत ॥ ६५ ॥ मगधेश्वरशौण्डीरै–र्गोविन्दस्याग्रसैनिकाः । ऊर्जस्विभिरभज्यन्त, गजैः प्रतिगजा इव ॥ ६६ ॥ ते पलाय्य स्फुरल्लज्जाः, केशवं शरणं ययुः । तान् सोऽप्याश्वासयामास, त्रिपताकेन[1] पाणिना ॥ ६७ ॥

अथोच्चै रोहिणीसूनु–र्निजगाद गदाग्रजम् । इतरैरेष दुर्भेद–श्चक्रव्यूहश्चिरादपि ॥ ६८ ॥ ततो दक्षिणतो नेमि–र्वामतः कपिकेतनः । मुखे पुनरनाधृष्टि–र्भिन्दन्त्वेनं[2] महौजसः ॥ ६९ ॥ एवमुक्तेन कृष्णेन, न्ययुज्यन्त त्रयोऽपि ते । प्रावर्तन्त तथा कर्तु–मेतेऽपि तपनद्युतः[3] ॥ ७० ॥ अरसन्धिषु नेमौ च, सर्वं निर्जित्य राजकम् । चक्रव्यूहं द्विधा चक्रुः, समं तेऽरिमनोरथैः ॥ ७१ ॥ तेषामनुपदं तत्र, सैन्यानि विविशुः क्षणात् । पृष्ठतो यूथनाथानां, यूथानीव वनान्तरे ॥ ७२ ॥ ऊर्जस्वलभुजौर्जित्यै–स्तैर्मागधमहीपतेः । बलं विलोडयांचक्रे, गजैरिव महासरः ॥ ७३ ॥

समं नेमिजिनेन्द्रेण, गजेन्द्रेणेव कुकुरः । कुरङ्ग इव सिंहेन, रुक्मी योद्धुमढौकत ॥ ७४ ॥ विक्रमोपक्रमस्तस्य, जिने विफलतां ययौ । खद्योतस्येव मार्तण्ड–मण्डले द्युतिडम्बरः ॥ ७५ ॥ गुरुः कोदण्डटंकारः, सलीलं नेमिनिर्मितः । रुक्मिणः कर्णमभ्येत्य, पलायनमुपादिशत् ॥ ७६ ॥ अपरेऽपि परोलक्षाः, क्षोणिपाला बलोद्धताः । सममेवोदतिष्ठन्त, जिनं योधयितुं मदात् ॥ ७७ ॥ अविधित्सुर्वधं तेषां, देवः कारुण्यसागरः । दिव्यमापूरयामास, शङ्खं विख्यातविक्रमः ॥ ७८ ॥ तेन शङ्खनिनादेन, कर्णजाहोपगूहिना[4] । द्विषां पाणितलात् पेतु–रायुधान्यखिलान्यपि ॥ ७९ ॥ ते समुज्झितशौण्डीर्य–व्यापाराः

१ सरलाङ्गुलित्रयेण । २ चक्रव्यूहम् । ३ सूर्यसदृशतेजसः । ४ कर्णमूलप्राप्तेन ।

पृग्नः प्रभोः । निर्निमेषदृशस्तस्थु–रालेख्यलिखिता इव ॥ ८० ॥

हिरण्यनाभमुख्यानां, पेटुं निद्दिष्टभूभुजाम् । अनाधृष्टिरधाविष्ट, करिणामिव केसरी ॥ ८१ ॥ तदा युयुधिरे तेऽपि, सर्वे सर्वात्मना तथा । भाले रामानुजस्यापि, स्वेदः प्रादुरभूद्यथा ॥ ८२ ॥ अश्वीयसंकटे तस्मिन्, सिंहिरोऽपि महाहवे । शरप्रहारसैन्येन, पांशुवर्मान्नतोऽभवत् ॥ ८३ ॥ छिन्नप्रोच्छलितैर्दूरं, चामीकरमयैर्ध्वजैः । अजायत तदानीं द्यौ–रुल्काभिरिव संकुला ॥ ८४ ॥ रुधिरामवमौहित्य–मार्गणाः पार्थमार्गणाः । कृपणे रिपुभिर्नष्टै–र्न नीताः कृतकृत्यताम् ॥ ८५ ॥ पार्थस्य गुरुलीलामात्र–मभवत् कौरवाहवः । वाह्नोरिष्टमपूरिष्ट, जरासन्धरणः पुनः ॥ ८६ ॥ संधाना-कृष्टि-विच्छेद–विषये तस्य लाघवम् । दृष्ट्वा सुमनसो व्योम्नि, सत्यं सुमनसोऽभवन् ॥ ८७ ॥ असह्यस्तावदेकोऽपि, रिपुभिः कपिकेतनः । पौरुषोष्मलदोर्दण्डः, किं पुनर्बन्धुभिर्युतः ? ॥ ८८ ॥ गदया दलयामास, भीमः प्रत्यर्थिपार्थिवान् । पक्षोच्छिद्रबलानिन्द्रः, पविना पर्वतानिव ॥ ८९ ॥ अथोत्थिते रणव्योम–द्युमणौ धर्मनन्दने । परैर्ध्वान्तायितं कैश्चित्, कैश्चित्तारागणायितम् ॥ ९० ॥ जरासन्धस्य राजन्या–अन्ये हिंसन्नहीनिव । प्रगस्यदर्शनश्चक्रे, नकुलः स्वकुलोचितम् ॥ ९१ ॥ दिदेव सहदेवोऽपि, संग्रामफलकं तदा । रुन्धन् शारिनिवारातीन्, वश्यैरक्षैरिवेषुभिः ॥ ९२ ॥ इत्थं पाण्डुसुतैश्चण्ड–भुजदण्डपराक्रमैः । लम्भिताः शत्रवः केचि–दाशु कीनाशदासताम् ॥ ९३ ॥ केचिच्च निशितैर्वाणै–र्गमिता दक्षिणेर्मताम् । अवनीशयनीयेषु, शोणितार्द्रेषु शायिताः ॥ ९४ ॥ ( युग्मम् )

१ ननाशे । २ मूर्धः । ३ खुरली–धनुर्विद्याऽभ्यासः । ४ देवाः । ५ संतुष्टाः । ६ 'शारीः' इति स्यात् ।

शेषास्तु मुषितोत्साहाः, प्रापिताः प्राणसंशयम् । हिरण्यनाभं शरणं, सेनान्यं समुपाययुः ॥ ९५ ॥ तानवस्थाप्य दुर्वार–शौण्डीर्यः स्थैर्यमन्दरः । सोऽथ यादवयादांसि, ममर्द समराम्बुधौ ॥ ९६ ॥ यदुसेनापरिवृढैः[1], सोढः प्रौढबलैरपि । न तस्य समरारम्भः, सिंहस्येव मतङ्गजैः ॥ ९७ ॥ केचि–न्नेमिजिनाधीशं, केऽप्यनाधृष्टिमञ्जसा । हिरण्यनाभतो भीताः, शरणाय रणाद्ययुः ॥ ९८ ॥ यादवेन्द्रचमूं वीक्ष्य, प्रतिपक्षभयाकुलाम् । हिरण्यनाभमभ्येत्य, धीरं भीमोऽभ्यधाद्वचः ॥ ९९ ॥ जरासन्धचमूनाथ !, किं मथ्नासि वृथा बलम् ? । मामेहि येन दोर्दण्ड–कण्डूमपनयामि ते ॥ १०० ॥ इत्याहूतः स भीमेन, मैनाक इव वेगतः । प्राविशत् पक्षरक्षार्थी, वेगात् संगरसागरम् ॥ १०१ ॥ प्रावर्तत तयोः पूर्वं, महाबाह्वोः शराशरि । निष्ठितायुधयोरासी–न्मुष्टामुष्टि ततः परम् ॥ १०२ ॥ जरासन्धस्य सेनान्यं, भीमस्तामनयद्दशाम् । लम्भितौ हरि-रामाभ्यां, यां प्राक् चाणूर-मौष्टिकौ ॥ १०३ ॥ पुरा दुःशासनेनापि, न ह्यसह्यन्त हन्त याः । कथं हिरण्यनाभोर्ण–नाभो मुष्टीः सहेत ताः ॥ १०४ ॥ मागधक्ष्मापतेस्तस्मिन्, पतिते पृतनापतौ । अनीककाननं दग्धं, यादवैस्तद्वैरिव ॥ १०५ ॥ यादवध्वजिनीशानां, स्वदोर्दर्पस्पृशामपि । पौरुषोत्कर्षसानन्दाः, पेतुर्भीमे दृशस्तदा ॥ १०६ ॥ किमस्ति क्वचिदन्योऽपि, कोऽपि भीमोपमो भटः ? । इतीवालोकितुं भानुः, प्रापद्वीपान्तरं तदा ॥ १०७ ॥ विहाय समरारम्भ–मुभयोरप्यनीकयोः । स्वाम्यादेशेन भूपालाः, प्रदोषे शिबिरं ययुः ॥ १०८ ॥

एकच्छत्रं मुदामासीत्, स्कन्धावारे मुरद्विषः । जरासन्धस्य तु शुचा–महो विलसितं विधेः ॥ १०९ ॥ अनाधृष्टि-

[1] यदुसेनाप्रभुभिः ।

समाख्यान–बाहुपौरुषसंपदः । प्रीतेनाभिसभं राज्ञा, समालिङ्ग्यन्त पाण्डवाः ॥ ११० ॥ हते हिरण्यनाभेऽथ, प्रभ्रश्यद्धैर्यसैन्यतः । शुशोच मगधाधीशः, सहायाः खलु दुर्लभाः ॥ १११ ॥

ततः प्रातः पुनः प्राप्त–धीरिमा मगधेश्वरः । शिशुपालमहीपालं, सेनानीत्वेऽभ्यषिञ्चत ॥ ११२ ॥ स्वयमेवात्तसंनाहः, संयुगोत्साहदुःसहः । उद्दामरथमारूढः, स्यन्दनं साम्परायिकम् ॥ ११३ ॥ अद्य स्यादजरासन्ध–मकृष्णं वा महीतलम् । इत्थं संधाऽनुसंधान–ग्रहिलीकृतमानसः ॥ ११४ ॥ कीनाशाऽऽत्राससंवास–प्रतिभूमिः पदे पदे । यमदूतैरिवोल्लण्ठै–र्दुर्निमित्तैरुरीकृतः ॥ ११५ ॥ क रे कृष्णः ? क रे कृष्ण ?, इत्युच्चैर्व्याहरन्मुहुः । उद्धतो मगधस्वामी, वेगात् संयुगमाययौ ॥ ११६ ॥ (चतुर्भिः कलापकम्) विरचय्य पुनश्चक्र–व्यूहमव्याहतोर्जितः । बभञ्ज यादवोद्यानं, मदान्धश्चेदिपद्विपः ॥ ११७ ॥ ततो यादवसेनानी–र्मृन्दं–श्चेदिपतेश्चमूम् । विदधद्धनुराकृष्टि–मनाधृष्टिरधावत ॥ ११८ ॥ नृपा दश सहस्राणि, ये चेदिपसमीपगाः । रुरोधताननाधृष्टिः, कुञ्जरानिव केसरी ॥ ११९ ॥ तद्वधव्यग्रमालोक्य, यदुराजचमूपतिम् । उत्तालः शिशुपालस्तु, तत्रागाद्यत्र केशवः ॥ १२० ॥ अभ्यधाच्च तमित्युच्चैः, कृष्ण ! निष्णोऽसि संयुगे । तत् किंचिदायुधं धत्स्व, यत्ते त्राणाय जायते ॥ १२१ ॥ हसन्नुवाच गोविन्दो, माद्रीमातस्त्वेदृशीः । दुःसहा अपि सोढास्मि, कामं वाग्विप्रुषः ॥ १२२ ॥ अपराधशतेनापि, न क्रोधं देवि ! ते सुते । कर्तास्मीति मया यस्मात्, प्रतिपन्नं पितृष्वसुः ॥ १२३ ॥ परःशतापराधं त्वा–मिदानीं तु समापयन् । मनागपि भविष्यामि, नोपालभ्यः पितृष्वसुः ॥ १२४ ॥ इति

१ माद्री माता यस्य तत्संबोधनम् ।

कृष्णे वदत्येव, निस्त्रपश्चेदिपस्तदा । विततार शरैरेव, प्रत्युत्तरमनुत्तरैः ॥ १२५ ॥ तस्य बाणावलीं छित्त्वा, बिसच्छेदं जनार्दनः । चिच्छेद धनुषो जीवां, जीवातुमिव तेजसाम् ॥ १२६ ॥ उपादाय परं चाप-मसौ यावदयुध्यत । तावत् कृष्णोऽस्य राज्यश्री-निकेतं केतुमच्छिदत् ॥ १२७ ॥ ममन्थ सारथिं रथ्यान्, रथं चैतस्य केशवः । "बलिना स्पर्धमानस्य, न्यक्कारो हि पदे पदे" ॥ १२८ ॥ असिखेटकहस्तेन, भूयस्तेनोत्थितं रणे । कंसविध्वंसनोऽप्येनं, नन्दकेनाभ्यपद्यत ॥ १२९ ॥ अभूत् कुतूहलोत्थास्नु-दिविषत्परिषत्तयोः । परस्परदृढाघात-भग्नप्रहरणो रणः ॥ १३० ॥ हरिं जघान निःशङ्क-मानसो दमघोषजः । तं पुनर्ज्ञातिसंबन्ध-बद्धापेक्षमधोक्षजः ॥ १३१ ॥ तमथारिष्टमथनो, निष्पिष्टमुकुटं व्यधात् । आचकाङ्क्ष शिरश्छेत्तुं, तस्य चेदिपतिः पुनः ॥ १३२ ॥ शिर्षच्छेद्योऽयमित्यात्त-निश्चयश्चैद्यमच्युतः । खड्गदूतमुखाच्चक्रे, कंसस्य परिचारकम् ॥ १३३ ॥

शिशुपालवधालोक-कल्लोलितरुषा ततः । अगस्तीयितुमारेभे, युद्धाब्धौ प्रतिविष्णुना ॥१३४॥ संनद्धः संमुखीभूय, भूयःक्षितिपसंकुलाम् । दृष्ट्वा यदुचमूं सोऽथ, दूतं पप्रच्छ सोमकम् ॥ १३५ ॥ दूत्येन गतवानेता-नुर्वीशान् दृष्टपूर्व्यसि । नामग्राहममूंस्तन्मे, सर्वानाख्यातुमर्हसि ॥ १३६ ॥ अथाख्यत् सोमकः स्वामिन्, सैन्यनाभौ नृपः पुरः । समुद्रविजयः स्वर्ण-वर्णाश्वोऽयं हरिध्वजः ॥ १३७ ॥ अस्य सूनुर्जगन्मान्यो, निःसीमभुजविक्रमः । अयं तु शुकवर्णाश्वो-ऽरिष्टनेमिर्वृषध्वजः ॥ १३८ ॥ सेनाऽग्रे धवलैरश्वैः, कृष्णोऽयं गरुडध्वजः । नवीन इव जीमूतो, बलाकाभिरलंकृतः ॥ १३९ ॥

१ तन्नाम्ना खड्गेन ।

अस्य दक्षिणपक्षस्थो-ऽरिष्टवर्णैस्तुरङ्गमैः । रामस्तालध्वजः सोऽयं, हिमवानिव जङ्गमः ॥ १४० ॥ नीलाश्वेन रथेनैष, पाण्डुसनुर्युधिष्ठिरः । धनंजयः पुनरयं, रथेन श्वेतवाजिना ॥ १४१ ॥ नीलोत्पलदलाभाश्व-रथस्त्वेष वृकोदरः । कृष्णाश्वेन रथेनाय-मनाधृष्टिर्गजध्वजः ॥ १४२ ॥ अयं च शबलैरश्वै-रक्रूरः कदलीध्वजः । महानेमिकुमारोऽयं, कुमुदाभैस्तुरङ्गमैः ॥ १४३ ॥ उग्रसेनः पुनरयं, शुकतुण्डप्रभैर्हयैः । एष तित्तिरकल्माषैः, सात्यकिस्तु तुरङ्गमैः ॥ १४४ ॥ जराकुमारः कनक-पृष्ठाश्वोऽयं मृगध्वजः । मेरुः कपिलरक्ताश्वः, शिशुमारध्वजस्त्वसौ ॥ १४५ ॥ काम्बोजैर्वाजिभिश्चायं, सिंहलः श्लक्ष्णरोमभः । पद्माभैर्वाजिभिश्चैव, राजा पद्मरथः पुरः ॥ १४६ ॥ पञ्चपुण्ड्रैर्हयैरेष, कुम्भकेतुर्विदूरथः । पारापतप्रभाश्वोऽयं, सारणः पुष्करध्वजः ॥ १४७ ॥ बहवो यदवोऽन्येऽपि, नानारथहयध्वजाः । सन्त्येते न तु शक्यन्ते, सर्वेऽप्याख्यातुमाख्यया ॥ १४८ ॥

तदाकर्ण्य जरासन्धः, प्रवृद्धोत्साहसाहसः । मन्यमानस्तृणायैता-नमृद्नाद्यादवीं चमूम् ॥ १४९ ॥ बभार भारतार्धेश-क्रोधिनं यादवं बलम् । मत्तमातङ्गनिर्लून-नलिनीवनविभ्रमम् ॥ १५० ॥ हतस्तम्बेरमस्तोम-मस्तंनीततुरङ्गमम् । भग्नस्यन्दनसंदोह-दुरासदपदक्रमम् ॥१५१॥ प्रहारप्रोषितप्राण-सुभटस्थपुटक्षिति । नव्यनिर्यदसृक्कुल्या-सिक्तमागधसंमदम् ॥१५२॥ पराजयनितान्तार्त-क्षुधार्तवसुधाधिपम् ॥ मानमर्दनसंपन्न-समरावेशकेशवम् ॥ १५३ ॥ नृत्यत्कबन्धनिध्यान-तद्ध्यानत्रिदशाङ्गनम् । अरिष्टनेमिरैक्षिष्ट, स्वसैन्यं सान्द्रया दृशा ॥ १५४ ॥ ( चतुर्भिः कलापकम् )

१ स्थपुटं-विषमम् । २ निध्यानं-दर्शनम् ।

व्याजहार कुमारं तं, प्राञ्जलिर्मातलिस्ततः । पश्य देव ! त्वमेवासि, संयुगेऽस्मिन्न गंजितः ॥ १५५ ॥ इदं निर्मथितं नाथ !, सैन्यं ते परिपन्थिना । तदेवं देव ! किं युक्तं, निजं पक्षमुपेक्षितुम् ? ॥ १५६ ॥ भवेद्यद्यपि सावद्यं, कर्मेदं निर्ममस्य ते । रथं तथापि वृत्रारेः, किंचिदेनं कृतार्थय ॥ १५७ ॥ इति मातलिविज्ञप्तः, कुमारोऽप्यकुतोभयः । आखण्डलकराकल्प–मधिज्यं धन्व निर्ममे ॥ १५८ ॥ कृष्टद्विषदहंकार–टंकारस्तस्य धन्वनः । व्यानशे रोदसी काल–महिषध्वनिभीषणः ॥ १५९ ॥ शङ्खं चापूरयन्नेमि–र्दिक्कुक्षिंभरिनिस्वनम् । यच्छन्मूर्छालतां सोऽभू–दैत्यानामपि दुःसहः ॥ १६० ॥ लक्षं विपक्षक्षितिपा, योद्धारस्तत्र येऽभवन् । स्तम्भितास्तेऽभितस्तेन, ध्वनिना धन्व–शङ्खयोः ॥ १६१ ॥ अथाह मातलिर्नेमिं, विस्मितः सस्मितस्तदा । लीलयैव त्वया देव !, जिग्ये वैरिचमूरियम् ॥ १६२ ॥ एनं पुनर्जरासन्धं, मदान्धं स्वभुजौजसा । यादवक्षोदनिक्षोभं, क्षमोऽपि किमुपेक्षसे ? ॥ १६३ ॥ ततो बिभेद वाङ्मुद्रां, समुद्रविजयाङ्गजः । असौ राजन्यरोधोऽपि, नोचितः सूत ! मादृशाम् ॥ १६४ ॥ किं तु बन्धूपरोधेन, नीतोऽस्मि रणधुर्यताम् । किं नामैता न बाधन्ते, दुर्धरा मोहवीचयः ? ॥ १६५ ॥ किं चायं शाश्वतो भावः, सदा सर्वत्र निश्चितः । संयुगे यन्निहन्तव्या, विष्णुभिः प्रतिविष्णवः ॥ १६६ ॥ अचिरेणैव सोऽप्यर्थो, भविता पश्यतस्तव । इति नेमिर्ब्रुवन्नेवं, स्वां संस्थापितवांश्चमूम् ॥ १६७ ॥ ततस्तथेरयांचक्रे, शक्रसारथिना रथः । यथा सोऽरिवरूथिन्यां, पुरः सर्वैरवैक्ष्यत ॥ १६८ ॥

अथालोक्य जरासन्धो, यवनादिसुतक्षयम् । विकटभ्रुकुटीबन्धः, कैटभारातिमभ्यगात् ॥ १६९ ॥ दृसैरेकोनसप्तत्या, जरासन्धसुतैरथ । पितुरग्रेसरैर्भूत्वा, रुध्यते स जनार्दनः ॥ १७० ॥ शोणदृष्टिपुटैरष्टा–विंशत्या तु हलायुधः । संग्रामयि-

तुमारेभे, शरभैः सिंहकैरिव ॥ १७१ ॥ सावहेलमुदस्तेन, हलेन मुसलेन च । अमून्मशकनिष्पेषं, निष्पिपेषाग्रजो हरेः ॥ १७२ ॥ तद्घोच्छलितक्रोध-प्रबोधो मगधेश्वरः । निर्दयो गदया रामं, ताडयामास वक्षसि ॥ १७३ ॥ तत्प्रहारव्यथा-क्षोभ्या-दसृक्कल्लोलमाकुलः । भृशं ववाम रामोऽपि, हाहारावं च वाहिनी ॥ १७४ ॥ प्रजिहीर्षुं पुना रामे, निस्त्रिंशं मागधं नृपम् । चण्डगाण्डीवपाण्डित्यात्, खलयामास फाल्गुनः ॥ १७५ ॥ अर्जुनस्य शितैर्बाणै-र्बाधितो मागधस्तदा । तदेकोपक्रममजागीत्, कौरवाऽऽरामसंक्षयम् ॥ १७६ ॥ गदाप्रहारवैधुर्यं, पश्यन् रामस्य केशवः । सर्वास्तानन्तयांचक्रे, तनूजान्मगधशितुः ॥ १७७ ॥

तन्निशुम्भनसंभूत-प्रभूताक्षेपदुःसहम् । माधवं मगधाधीशः, समेत्य सविधेऽभ्यधात् ॥ १७८ ॥ रे गोपाल ! भुवं कालः, कृतक्रोधोदयोऽधुना । आकर्षति जरासन्धः, कंसमुख्यांस्तवोदरात् ॥ १७९ ॥ समादत्स्व किमप्यस्त्र-मात्मत्राणैककारणम् । अनायुधमसंनाहं, नाहमाहन्मि जातुचित् ॥ १८० ॥ दृष्टभर्तृवधा दृष्ट्वा, वधं तद्वधकस्य ते । सुता जीवयशा मेऽस्तु, प्रतिज्ञापारदृश्वरी ॥ १८१ ॥ विब्रुवन्तमिति क्रोधा-द्विरोधिनमनेकधा । मनागप्यकृतक्षोभ-स्तं जगाद जनार्दनः ॥ १८२ ॥ राजन् ! यदात्थ तत्तथ्यं, सत्यैव दुहितुस्तव । प्रतिज्ञा भविता किं तु, ज्वलद्वह्निप्रवेशनात् ॥ १८३ ॥ इति तं व्याहरन्नेव, प्रेरितः शकुनैः शुभैः । हरिः सरभसोऽभ्येत्य, प्रतिजग्राह मार्गणैः ॥ १८४ ॥ जरासन्धो धनुर्दण्डा-दथ प्रसृमरैः शरैः । भयं यदूनां विदधे, पिदधे चार्कमण्डलम् ॥ १८५ ॥ चित्रांस्तान् पत्रिणः शत्रो-र्मूर्तानिव मनोरथान् । निरुद्धरोदसीरन्ध्रान्,

१ अष्टापदः । २ निशुम्भनं-वधः । ३ 'क्रोधः' इति प्रतिद्वय० । ४ 'जरासन्धधनु०' प्रतित्रय० ।

खण्डयामास केशवः ॥ १८६ ॥ राम-रावणसंग्राम-दृश्वनां स्वर्निवासिनाम् । अजायत तयोर्युद्धे, तादृगेव रसः पुनः
॥ १८७ ॥ शस्त्रं यद्यज्जरासन्धो, मोक्तुमैच्छदधोक्षजे । मार्गणैस्तत्तदप्राप्त-मोक्षं चिच्छेद स क्षणात् ॥ १८८ ॥ अपूर्व-
संयुगालोक-कौतुकाकुलमानसैः । खेचरै रचयांचक्रे, कलः कलकलो दिवि ॥ १८९ ॥ मुरारेः प्रतिपक्षास्त्रै-रस्त्राणि मगधे-
शितुः । विधीयन्ते स्म वन्ध्यानि, ध्वान्तानीव रवेः करैः ॥ १९० ॥ केतुच्छेद-शरच्छेद-जीवाच्छेदैर्विलक्ष्यताम् । नीतः
पीतद्विषचक्रं, चक्रं ससार मागधः ॥ १९१ ॥ देवताऽधिष्ठितं तस्य, क्रोधारुणदृशस्तदा । कराम्भोजमलंचक्रे, तदप्यागत्य
वेगतः ॥ १९२ ॥

रे ! गोप ! न भवस्येष, इति जल्पन्मुहुर्मुहुः । चक्रं चिक्षेप साक्षेप-मानसो मगधाधिपः ॥ १९३ ॥ तच्च स्वच्छन्दमाग-
च्छत्, समुद्रविजयादिभिः । यादवैर्ददृशे व्योम्नि, हाहारवपुरःसरम् ॥ १९४ ॥ इतस्ततः परिभ्रेमुः, संभ्रमेण नभश्चराः ।
स्वर्गौकसोऽपि तन्मार्गा-द्विमानान्यपनिन्यिरे ॥१९५॥ तदस्त्रैस्ताडयामास, चक्रमर्धपथे हरिः । मुहुर्मुसल-सीराभ्यां, सीर-
पाणिश्च निश्चलः ॥ १९६ ॥ रुष्टोऽत्यन्तमनाधृष्टिः, परिघेण जघान तत् । शस्त्रैः समस्तैर्निस्तन्द्रः, समुद्रविजयः पुनः
॥ १९७ ॥ शक्तिं च तत्प्रहाणाय, प्राहिणोद्धर्मनन्दनः । गदां पुनर्जगज्जैत्री-मादरेण वृकोदरः ॥ १९८ ॥ रुरोध कौरव-
जयो-र्ज्वलैरर्जुनः शरैः । कुन्तेनारिकृतान्तेन, प्रयत्नान्नकुलः पुनः ॥ १९९ ॥ संरोद्धुं सहदेवोऽस्त्रै-स्तच्चक्रमुपचक्रमे ।
सर्वात्मनाऽपि विक्रान्तं, पञ्चभिस्तत्र पाण्डवैः ॥२००॥ अन्येऽपि यादवाः सर्वे, विविधैरायुधैर्निजैः । युगपत्तदपाचक्रु-श्चक्र-
मुद्दामविक्रमाः ॥ २०१ ॥ केनाप्यस्खलितं भूरि-स्फुलिङ्गोद्गारि तत्तदा । मार्तण्डमण्डलनिभं, नभस्यायाति वेगतः ॥ २०२ ॥

ततो मनसि मन्वाना, जातं विश्वमकेशवम् । यादवाः समजायन्त, सद्यःश्यामलाऽऽननाः ॥ २०३ ॥ जरासन्धपताकिन्यां, किंचिदानन्दचेतसि । अहो ! किमद्य भावीति, सोत्प्रेक्षे प्रेक्षके जने ॥ २०४ ॥ समुद्रविजयादीनां, दीनान्तःकरणस्पृशाम् । पश्यतामेव तुम्बेन, जवादाहत्य वक्षसि ॥ २०५ ॥ उपसर्गेऽपि तादृक्षे, निःक्षोभमनसो हरेः । अन्तेवासीव पादान्तं, तच्चक्रं समशिश्रियत् ॥ २०६ ॥ ( त्रिभिर्विशेषकम् )

सानन्दे यादवानीके, प्रत्यनीके विषादिनि । हेलयैव हरिः किंचि-न्नीचैर्भूय तदाददे ॥ २०७ ॥ दम्भोलिनेव जम्भारिः, प्रभामण्डलशालिना । पाणिप्रणयिना तेन, केशवः शुशुभेतमाम् ॥ २०८ ॥ अम्भोजमिव तच्चक्र-मुपादाय प्रतोलयन् । गिराः कंसविध्वंसी, मगधाधिपमभ्यधात् ॥ २०९ ॥ भो ! भूपालशिरोरत्न !, न यतः संयुगाय ते । सांप्रतं सांप्रतं येन, दैवं नैवानुकूलिकम् ॥ २१० ॥ आत्मीयमप्यनात्मीयं, शस्त्रं स्यात् कथमन्यथा । तद्गच्छ मागधान् स्वेच्छं, विलसस्व ममाज्ञया ॥ २११ ॥ नष्टं न किंचिदद्यापि, मेदिनीश ! विमृश्यताम् । श्रुतं किं न त्वया ? जीव-न्नरो भद्राणि पश्यति ॥ २१२ ॥ इत्युक्तः सोऽपि साटोपं, कैटभारिमभाषत । अरे ! गोपाल ! वाचालः, सुतरामसि संप्रति ॥ २१३ ॥ संप्राप्तेनामुना गर्वं, लोहखण्डेन मायसि । "अमेयः सारमेयस्य, गर्वोऽस्थिशकलादपि" ॥ २१४ ॥ इति संतक्ष्य तीक्ष्णेन, वचसा सहसा हरिम् । स शरैस्ताडयामास, व्योमेवाब्देस्तपात्यये ॥ २१५ ॥ स्वचक्रेणैव नेतव्याः, प्राणान्तं प्रतिविष्णवः । इत्यागमरहस्यानि, नान्यथेति विचिन्तयन् ॥ २१६ ॥ शीर्षच्छेद्यस्य तस्याशु, शिरश्छेदाय केशवः । प्रसृत्वरप्रभाचक्रं, चक्रं चिक्षेप लीलया ॥ २१७ ॥ ( युग्मम् ) तेन ज्वालाजटालेन, सकिरीटं सकुण्डलम् । एतस्य प्रसभमम्भोज-च्छेदमच्छेदि

तच्छिरः ॥ २१८ ॥ निर्व्यूढस्वामिकार्यत्वा-दाढर्यंभावुकतेजसा । चक्रेण तेनालंचक्रे, पुनरेव हरेः करः ॥ २१९ ॥ जगच्चेतश्चमत्कारि-कंसारिबलदश्वनाम् । आनन्दनिर्यदश्रूणां, प्रससुः स्वर्गिणां गिरः ॥ २२० ॥ नवमोऽनवमस्फूर्ति-विस्फुरत्कीर्तिसौरभः । स एष द्विषदुच्छेद-च्छेकोऽजनि जनार्दनः ॥ २२१ ॥ कंसध्वंसः पुरीन्यासो, जरासंधवधोऽप्ययम् । जन्मतोऽपि किमेतस्य, चरित्रं ? यन्न चित्रकृत् ॥ २२२ ॥ इत्यन्योन्यकृतालापा-स्त्रिविष्टपसदस्तदा । गोविन्दे निजमानन्दं, विवव्रुः पुष्पवर्षतः ॥ २२३ ॥ भूर्भुवःस्वस्त्रयीलोके, शंसद्भिः केशवोदयम् । ते मुदा दुन्दुभिध्वानैः, शब्दाद्वैतं वितेनिरे ॥ २२४ ॥

अथ लक्षमपि क्षोणे-रधिपाः स्वावरोधतः । अरिष्टनेमिना मुक्ताः, सिंहेन हरिणा इव ॥ २२५ ॥ ते तदोत्साहितोत्साह-मुच्छन्नास्त्रपरिग्रहम् । आत्मानं वीक्ष्य दधिरे, त्रपामलिनमाननम् ॥ २२६ ॥ जरासन्धवधं ज्ञात्वा, नृपाः प्राञ्जलयस्तदा । विज्ञा विज्ञापयामासुः, समुद्रविजयात्मजम् ॥ २२७ ॥ वैकुण्ठे कुण्ठशौण्डीर्या, मा भूवन् रिपवः कथम् ? । विपक्षकक्षदावाग्नि-र्यस्य त्वमसि बान्धवः ॥ २२८ ॥ राजन्यमृत्यौ जन्येऽस्मि-न्नजीविष्याम किं वयम् ? । कृपया त्रिजगत्रात-रेवमत्रास्यथा न चेत् ॥ २२९ ॥ किं तु श्रीभ्रमरीकुन्दा-न्मुकुन्दात्रातुमर्हसि । अन्यथा कुपिते तस्मि-न्नस्माकं क्व नु जीवितम् ? ॥ २३० ॥ तथेत्येषां प्रतिश्रुत्य, प्रार्थनां पृथिवीभुजाम् । उपतस्थे समेतस्तै-र्नेमिः कंसनिषूदनम् ॥ २३१ ॥ संमुखं प्रसरन्तीव, श्लिष्यन्तीव मुहुस्तदा । संभापन्त इवान्योन्य-मेतयोर्मिलिता दृशः ॥ २३२ ॥ स्यातां राका-मृगाङ्कौ चेत्,

१ श्रेष्ठस्फूर्तिः ।

संमुखीनावुभौ दिवि । तदा तदास्ययोर्नून-मुपमासंभवो भवेत् ॥ २३३ ॥ उभौ तापिच्छगुच्छाभौ, श्रीवत्साङ्कावुभावपि । तावन्योन्यं कृताश्लेषौ, सत्यमेकत्वमापतुः ॥ २३४ ॥ प्रावर्तन्त ततः स्वैर-मवार्यभुजवीर्ययोः । संग्रामसंकथास्तास्ता-स्तयोः शात्रवजित्वरयोः ॥ २३५ ॥ आगाद्यावसरं तेषां, लक्षस्यापि क्षमाभृताम् । नेमिः प्रसाद्य गोविन्दं, पृष्ठे हस्तमदापयत् ॥ २३६ ॥

अत्रान्तरे महामात्या, जरासन्धतनूद्भवम् । सहदेवं नये निष्णाः, कृष्णस्याङ्के निचिक्षिपुः ॥ २३७ ॥ माधवस्तं निदधे स्म, मगधेषु पुनर्नृपम् । "प्रणिपातावसानो हि, कोपो विपुलचेतसाम्" ॥२३८॥ तेन तेनोग्रसंग्राम-कर्मणा दक्षिणेर्मणाम् । सुभटानामनावृष्टिश्चक्रे व्रणचिकित्सितम् ॥२३९॥ संपराये परासूनां, समुद्रविजयाज्ञया । स करोति स्म संस्कार-माग्नेया-स्त्र कालवित् ॥ २४० ॥ विसृज्य सहदेवाद्यान्, पार्थिवानथ केशवः । कुलवृद्धाभिरारब्ध-शिवं शिविरमभ्यगात् ॥ २४१ ॥ समुद्रविजयः पुत्रैः, पौत्रैश्च रिपुजित्वरैः । अनुयातः पथि प्राप, कामप्यनुपमां श्रियम् ॥ २४२ ॥ अमन्यत गरीयोभि-र्लघीयोभिश्च यादवैः । प्रभुत्वोत्कर्षविश्रान्ति-र्बल-केशव-नेमिषु ॥ २४३ ॥ यथास्वं मातरस्तेषां, मङ्गलानि वितेनिरे । क्षिप्तजयोऽवदानं हि, क्षत्रियाणामनुत्तरम् ॥ २४४ ॥ ययौ नेमिमनुज्ञाप्य, मुदितो मातलिर्दिवम् । आख्यच्च तच्चरित्राणि, शक्राय पुलकं वहन् ॥ २४५ ॥

आस्थानीमास्थितेऽन्येद्युः, समुद्रविजये नृपे । उच्चैस्तूर्यरवं सर्वे, शुश्रुवुर्दिवि यादवाः ॥ २४६ ॥ परोलक्षाणि चाद्रा-क्षु-रुत्पतमाणः क्षणेन ते । स्थगितार्कविमानानि, विमानानि नभोऽङ्गणे ॥ २४७ ॥ समं प्रद्युम्न-साम्बाभ्या-मथोत्तीर्य

१ 'परिवारिनः' एकप्रतिपाठः । २ पराक्रमः ।

विमानतः । वसुदेवः प्रणौति स्म, समुद्रविजयक्रमौ ॥ २४८ ॥ बलदेवादयः सर्वे, वसुदेवमनंसिषुः । वृद्धान् प्रद्युम्न-साम्बौ च, ववन्दाते यथाक्रमम् ॥ २४९ ॥ यथास्थानं यथानाम, प्रद्युम्नेन निवेदिताः । समुद्रविजयं नत्वा, प्रणेमुः खेचरा हरिम् ॥ २५० ॥ व्यजिज्ञपंश्च ते पित्रा, शौर्यरूपादिभिर्गुणैः । जिग्ये जगत्रयं येन, पुरस्तात्तस्य के वयम् ? ॥२५१॥ तवाऽऽज्ञास्रग्विणो मूर्ध्नि, विद्धि नस्तदतः परम् । नवमोऽसि हृषीकेश-स्तन्नः शाधि यदृच्छया ॥ २५२ ॥ इत्युदित्वा नवादित्य-प्रभं ते कैटभद्विपम् । अपास्तकौस्तुभमदै, रत्नपुञ्जैरपूजयन् ॥ २५३ ॥ सोऽपि संमानयांचक्रे, वचसा क्रिययाऽपि तान् । " उदात्तचेतसां क्वापि, न ह्यौचित्यव्यतिक्रमः " ॥ २५४ ॥ संपरायप्रमीतानां, स्ववीराणां नरायणः । क्रियाऽभिज्ञः क्रियास्तास्ता, विदधावौर्ध्वदेहिकीः ॥ २५५ ॥ निर्वापं सहदेवोऽपि, व्यधत्त विधिवत् पितुः । अन्येऽपि प्रेतकार्याणि, स्वस्वसंबन्धिनां व्यधुः ॥ २५६ ॥ साऽपि जीवयशाः साक्षा-द्वीक्ष्याखिलकुलक्षयम् । पितुः पत्युश्च युगप-न्निर्लज्जाऽदाज्जलाञ्जलिम् ॥ २५७ ॥ कूर्दित्वा यादवैस्तत्र, स्वानन्दो यत् प्रदर्शितः । कृष्णोपज्ञं ततोऽन्वर्थ-मानन्दपुरमित्यभूत् ॥ २५८ ॥

भारतस्य हरिस्त्रीणि, खण्डान्याखण्डलोपमः । प्रतस्थेऽथ वशीकर्तुं, केशवानां क्रमो ह्ययम् ॥ २५९ ॥ कांश्चिदुत्थापयन् कांश्चि-दुत्खातप्रतिरोपितान् । कुर्वन्नुर्वीपतीनुर्वीं, साधयामास माधवः ॥ २६० ॥ हरिः प्राप प्रदेशं तं, वसुधासाधनक्रमात् । शिला कोटिशिला नाम, यत्रास्ति गिरिसोदरा ॥ २६१ ॥ उच्चत्व-विस्तरा-यामै-र्विदुर्यामेकयोजनाम् । यया च वासुदेवस्य, बलं बाह्वोः परीक्ष्यते ॥ २६२ ॥ ( युग्मम् ) पश्यतां सर्वभूपानां, भूतलाच्चतुरङ्गुलीम् । मुकुन्दः कन्दुकोत्क्षेप-

१ युद्धे मृतानाम् । २ पितृतर्पणादिक्रियाम् ।

गृहिवेश कोन नाम् ॥ २६३ ॥ ततो जयजयध्वान-पूर्वं गीर्वाणखेचराः । प्रहृष्टाः सुमनोवृष्टिं, कृष्णोपरि निचिक्षिपुः
॥ २६४ ॥ भरतार्धमतोदेवं पदभि-र्मासैराकृत्य दिग्जयम् । अखिलैः सह भूपालै-र्वलति स्म बलानुजः ॥ २६५ ॥
एव क्रमेण वर्धिष्णु-भरतार्धमहर्द्धिभिः । सोऽविशद्द्वारकां द्वार-द्वारप्रारब्धमङ्गलाम् ॥ २६६ ॥ ततो राज्याभिषेकाय,
विष्णोरुत्कण्ठितैर्जनैः । तीर्थानां मागधादीनां, जलान्यानिन्यिरे सुरैः ॥ २६७ ॥ समुद्रविजयो राजा, स्वयमानक-
दुन्दुभिः । बलभद्रस्तथानु-भीमसेनार्जुनौ यमौ ॥ २६८ ॥ अनाधृष्टिमुखाश्चान्ये, कुमाराः स्वजना अपि ।
गजानोऽपि महाऽऽयाना-स्ते सहस्राणि षोडश ॥ २६९ ॥ अर्धभारतवास्तव्या-स्त्रिविष्टपसदस्तथा । सर्वे व्योमचरास्ते च,
समुद्रविजयादयः ॥ २७० ॥ हिरण्मयै रत्नमयै-स्तीर्थाम्भःपूरितोदरैः । कलशैर्मुखविन्यस्तो-दारमन्दारपल्लवैः ॥ २७१ ॥
सानन्दाः सुमारब्ध-वारिधाराभिरुक्तयः । वैकुण्ठमुच्चपीठस्थ-मभ्यषिञ्चन्नमी क्रमात् ॥ २७२ ॥ (पञ्चभिः कुलकम्)
मातरोऽस्य शिवादेवी-रोहिणी-देवकीमुखाः । सुवासिन्यश्च कुन्त्याद्या, मङ्गलानि मुहुर्जगुः ॥ २७३ ॥ हयाः कैश्चि-
द्गजाः कैश्चित्, कैश्चिन्माणिक्यराशयः । कन्याः कैश्चित्तदा भूपै-रुपदीचक्रिरे हरेः ॥ २७४ ॥ वृत्ते प्रतिपुरं तस्मि-न्नभिषेक-
महोत्सवे । सत्कृत्य व्यसृजद्विष्णु-र्नृपान् भूचरखेचरान् ॥ २७५ ॥
युधिष्ठिरप्रतिष्ठार्थं, नृपैः कतिपयैर्वृतः । अन्येद्युः सोऽचलत् साश्व-हास्तिको हस्तिनापुरम् ॥ २७६ ॥ रामो नेमि-
रनाधृष्टिः, पाण्डवेयानुरोधतः । प्रद्युम्नाद्याः कुमाराश्च, सह तेन प्रतस्थिरे ॥ २७७ ॥ मैत्रीं मञ्जरयद्भिश्च, मित्रैश्चित्रा-

१ 'नोदयः' प्रतिद्वय० ।

ङ्गदादिभिः । चेले व्योमचरैः कैश्चि–त्तदा साकं किरीटिना ॥ २७८ ॥ कुन्त्या सह शिवादेवी, रोहिणी देवकी तथा । सौजन्यमनुरुन्धत्य–श्चेलुः सस्नेहचेतसः ॥ २७९ ॥ यास्यामः कथमानृण्यं, विष्णोर्वयमहो इति । संकथाः पाण्डवेयानां, पथि पप्रथिरे मिथः ॥ २८० ॥ प्रागेत्य केशवादेशात्, पुत्रोत्कण्ठाकनीयसः । पाण्डवागमनं पाण्डो–रावेद्यत नभश्चरैः ॥ २८१ ॥ प्रत्युद्ययौ तदाकर्ण्य, सपौरः पाण्डुरात्मजान् । तेषामालोक्य च स्फीतिं, पुपोष पुलकोत्करम् ॥ २८२ ॥ उपेयुषी समं पत्या, सुतानुद्वीक्ष्य तत्क्षणात् । माद्री हर्षाश्रुवर्षेण, प्रावृषं नूतनां व्यधात् ॥ २८३ ॥ विहाय वाहनान्याशु, विकासिवदनाम्बुजाः । व्यक्तानन्दमवन्दन्त, पितरौ पाण्डवा अपि ॥ २८४ ॥ उन्निद्रप्रणया माद्री, गाढाश्लेषपुरःसरम् । पद्मोत्फुल्लदृशः कुन्त्याः, पाणिभ्यामग्रहीत्क्रमौ ॥२८५॥ सरोमाञ्चा च पाञ्चाली, पञ्चाङ्गीचुम्बितावनिः । क्रमात् पाण्डोश्च माद्र्याश्च, प्राणमच्चरणाम्बुजम् ॥ २८६ ॥ अन्यैरपि यथौचित्यं, प्रणीते प्रणतिक्रमे । पीयूषमयमानन्द–मयं तेषामभूज्जगत् ॥ २८७ ॥ आमुक्तमौक्तिकोच्चूलाः, स्वर्विमानजितस्ततः । जगत्या इव रोमाञ्चा, मञ्चा निर्ममिरे पुरे ॥ २८८ ॥ प्रतिवेश्म व्यरच्यन्त, चेलोत्क्षेपपुरःसरम् । साक्षादिव मुदो मुक्ता–स्वस्तिकास्तोरणानि च ॥ २८९ ॥ प्रतिरथ्यमदीयन्त, पिष्टातकपरागिणः । मूर्ता इव मनोरङ्गा, विकटाः कुङ्कुमच्छटाः ॥ २९० ॥ असृज्यत भ्रमद्भृङ्गी–संगीतसुभगोदयः । कुसुमप्रकरो जानुदघ्नो घण्टापथक्षितौ ॥ २९१ ॥ सबन्धोरप्यजातारेः[1], प्रवेशाय प्रसाधनम् । पाण्डुः प्रमोदनीरन्ध्रः, सैरंध्रीभिरकारयत् ॥ २९२ ॥ यशःसंभारसौरभ्य–सुरभेर्धर्मजन्मनः । चन्दनाद्यङ्गरागोऽङ्गे, पुपोष पुनरुक्तताम् ॥ २९३ ॥ सदैवापरदुष्प्राप–

१ 'संबन्धोर०' प्रतित्रयपाठो न सम्यक् ।

गुणालंकारधारिणः । तस्याभूवन्नलंकाराः, पित्रोर्नेत्रोत्सवः परम् ॥ २९४ ॥ गङ्गोर्मिनिर्मले तस्य, वसानस्याच्छवाससी । लवणोत्तारणं चक्रे, रोमाङ्कुरपृथुः पृथा ॥ २९५ ॥

सोऽथ तत्कालमुन्मील-द्दानमैरावणोपमम् । महेन्द्र इव गर्जन्त-मारोहज्जयकुञ्जरम् ॥ २९६ ॥ तेन साकं पुरः पाण्डुः, पार्श्वतः केशवादयः । भीमाद्या बान्धवाः पृष्ठे, गजारूढाः प्रतस्थिरे ॥ २९७ ॥ श्वेतच्छत्रापदेशेन, सेव्यमानो नृपश्रिया । नाम्बाराङ्गनावर्गैः, सलीलोद्धूतचामरः ॥ २९८ ॥ चिरायोपचितोत्कण्ठाः, श्लिष्यन्निव वदन्निव । दृशा पीयूषवर्षिण्या-नुगृह्णन्नभितः प्रजाः ॥ २९९ ॥ उद्गच्छदुत्तरोमाञ्च-मञ्चलोत्तारणोत्तरम् । प्रजानां लाजनिक्षेपं, प्रतिगृह्णन् समन्ततः ॥ ३०० ॥ प्रमोदोत्फुल्लनेत्राणां, नागराणां पदे पदे । अनुरागगिरस्तास्ताः, शृण्वन्नाशीःपुरःसराः ॥ ३०१ ॥ परित्यक्तान्यकृत्याभिः, प्रेङ्खोलत्प्रीतिनीचिभिः । गवाक्षग्रहिताक्षीभि-र्मृगाक्षीभिर्निरीक्षितः ॥ ३०२ ॥ चत्वरे चत्वरे सोऽथ, मञ्चे मञ्चे गृहे गृहे । गृह्णन्माङ्गलिकान्युच्चैः, प्राविशन्नागसाह्वयम् ॥ ३०३ ॥ ( पड्भिः कुलकम् )

तस्याध्यासितसौधस्य, दधिदूर्वाक्षतादिभिः । प्रसृतोल्लुलकल्लोलं, कुन्ती मङ्गलमादधे ॥ ३०४ ॥ श्रिया नूतनया राजन्, राजसिंहासने पुनः । स तदा स्थापयांचक्रे, पाण्डुना विष्णुनाऽपि च ॥ ३०५ ॥ उपदायामुपेताना-मिभानां बृंहितैर्मुहुः । तदा मङ्गलतूर्याणां, निनादो मेदुरीकृतः ॥ ३०६ ॥ कुङ्कुमस्थासके रता-कल्पैश्चाश्वीयसंकटे । उपदा वाजिनस्तत्रा-निरे व्यानशिरे तदा ॥ ३०७ ॥ महीपालकिरीटोऽसौ, किरीटं कैटभारिणा । पारावारार्पितै रत्नैः, पर्युप्तं पर्यधाप्यत ॥ ३०८ ॥ अजातारेस्ततो जाते, क्षितिपानामुपायने । अतिप्रीतिपराः पौरा, मङ्गलानि वितेनिरे ॥ ३०९ ॥ उपेत्योपेत्य

कृष्णस्य हस्तिनापुरे प्रवेशः । युधिष्ठिरस्य राज्याभिषेकः॥

वृन्देन, पौरपण्याङ्गनागणः । संगीतं सूत्रयामास, तूर्यत्रिकविचक्षणः ॥ ३१० ॥ जाते स्वामिन्यजातारौ, प्रजाः पूर्णोपया-
चिताः । पुरमुज्जागरं चक्रु-र्देवेभ्यस्तूर्यजागरैः ॥ ३११ ॥ वीक्ष्य धर्मात्मजे गाढं, नागराननुरागिणः । अश्लाघत पृथां
तादृ-क्पुत्रप्रसविनीं हरिः ॥ ३१२ ॥ व्यधत्त धर्मसूर्नित्यं, कुन्त्याः पाण्डोश्च यादृशीम् । वितेने तादृशीं भक्तिं,
गान्धारी-धृतराष्ट्रयोः ॥ ३१३ ॥ पञ्चमूर्तिकमात्मानं, स पश्यन्नतिवत्सलः । चक्रेऽर्धचक्रिणोऽध्यक्षं, बन्धून् सर्वा-
धिकारिणः ॥ ३१४ ॥

आपृच्छमानमन्येद्यु-र्गमनाय जनार्दनम् । सभायामञ्जलिं बद्ध्वा, धर्मजन्मा व्यजिज्ञपत् ॥ ३१५ ॥ दामोदर !
तवैवेद-मनुभावविजृम्भितम् । भूयोऽभूवन् यदेता मे, हस्तिनापुरसंपदः ॥ ३१६ ॥ सरस्येतद्विराटेषु, गूढवासकदर्थितान् ।
आदराद्द्वारकां नीत्वा, तथाऽस्मान् सत्करिष्यसि ॥ ३१७ ॥ किं चास्मिंश्चण्डशौण्डीरे, किं जयेयं रणाजिरे ? । सुमेधाः सह-
योद्धा चे-न्न त्वमेकमना भवेः ॥ ३१८ ॥ राज्यलक्ष्मीस्तवैवेय-मिमे प्राणास्तवैव च । किमन्यदस्ति ? येन त्वां, विष्णो !
सत्कुर्महे वयम् ॥ ३१९ ॥ तथापि पृथुचित्तेन, निर्निमित्तोपकारिणा । पदातिलवसंख्याया-मयं चिन्त्यो जनस्त्वया ॥ ३२० ॥
इति विज्ञेन विज्ञाप्य, विष्णवे पाण्डुजन्मना । स्वर्ण-रत्न-गजा-श्वादि-सर्वस्वमुपदीकृतम् ॥ ३२१ ॥ त्वयेदानीं ममैवेदं,
सर्वं वस्तु समर्पितम् । निर्बन्धं तदलं कृत्वा, विजयेथाश्चिरं भुवि ॥ ३२२ ॥
इति संबोध्य कौन्तेयं, तेनार्चितपरिच्छदः । वैकुण्ठोऽचलदुत्कण्ठा-वतीं द्वारवतीं प्रति ॥ ३२३ ॥ ( युग्मम् ) धर्म-
जस्तमनुव्रज्य, पुरं कृच्छ्रान्न्यवर्तत । पृथासूनुकथानिष्णः, कृष्णोऽपि स्वपुरीं ययौ ॥ ३२४ ॥ समभ्यर्च्य यथौचित्यं,

नेऽपि निवाङ्गदादयः । प्रीतैः पाण्डुसुतैः मंत्रं, विसृज्यन्ते स खेचराः ॥ ३२५ ॥ कौन्तेयोऽथ पुरे सर्व-व्यसनानि
न्यवारयत । "एकस्याप्यपराधे हि, नातिहन्तिच्छ्यते ध्रुवम्" ॥ ३२६ ॥ अमारिपटहैश्चापि, धर्ममुन्निद्रमादधे । "कृपा हि
सर्वनीतिषु, पर धर्मस्य जीवितम्" ॥ ३२७ ॥ स भोजनाय दीनाना-मनोदीनवमानसः । नानाभोज्यविचित्राणि, सत्रागा-
राण्यकारयत् ॥ ३२८ ॥ यात्रां स कारयामास, समस्तजिनवेश्मसु । "सर्वद्वारमुदारा हि, यतन्ते सुकृतार्जने" ॥ ३२९ ॥
तस्य एव नासिक्ये, स श्रीचन्द्रप्रभप्रभोः । अचीकरत् सदाचार-पूतः पूजामहोत्सवम् ॥ ३३० ॥

इति सुचरितैस्तैस्तैः सिक्त्वा सुधा इव बान्धवैः,
परमुपचयं पाण्डोः सूनुर्निनाय नयद्रुमम् ।
स च निरुपमानन्दस्यन्दि क्षणात् सुपुवेतमा-
मखिलनृपतिश्लाघ्यं पुण्यं यशश्च फलद्वयम् ॥ ३३१ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये जरासन्धवधवर्णनो
नाम चतुर्दशः सर्गः ॥ १४ ॥

---

१ न आर्जवो-शोषो गर्भिणस्तनादीनवम ।

युधिष्ठिरस्य गाङ्गेयमुनि-समीपे गमनम् ॥

# अथ पञ्चदशः सर्गः ।

दीक्षाप्रपन्नमन्येद्यु-रुद्यद्भक्ति पितामहम् । नन्तुं यियासुरादिक्षत्, सपौरान् बान्धवान्नृपः ॥ १ ॥ ते तदैव समारूढाः, प्रौढेषु तुरगादिषु । कॢप्ताकल्पा[1] नृपद्वार-मभ्युपेत्यावतस्थिरे ॥ २ ॥ अगण्यदेवमण्यादि[2]-वरेण्यावर्तवाजिनम्[3] । वाजिनं पञ्च-कल्याण-मारुरोह महीपतिः ॥ ३ ॥ मुनिर्यत्रास्ति गाङ्गेयः, प्रतस्थे तत्र पार्थिवः । ऋक्षेशमिव ऋक्षाणां, गणो लोकस्तमन्व-गात् ॥ ४ ॥ मुनिवन्दारुगीर्वाण-विमानैः स्थगिते रवौ । राजन्यानां पथि व्यर्थै-र्जातमातपवारणैः ॥ ५ ॥ सपौरस्तं भुवो भर्ता, देशमादेशवान् क्रमात् । भीष्मालंकृतशैलान्ते, स्वसैन्यं स न्यवेशयत् ॥ ६ ॥ ततश्चरणचारेण, गच्छन्नरपतिः पुरः । शयानं शरशय्याया-मात्मध्यानपरायणम् ॥ ७ ॥ गीतार्थैर्मुनिभिर्लीन-परिचर्याविचक्षणैः । संवाह्यमानसर्वाङ्गं, करैः कमलकोमलैः ॥ ८ ॥ आचार्यभद्रगुप्तेन, दीयमानानुशासनम् । देहतो देहिनो भेद-निश्चयैकाग्रचेतसम् ॥ ९ ॥ देह-दक्षिणभागस्थं, भवभङ्गैकमुद्गरम् । धारयन्तं मनोहारि, रजोहरणमन्तिके ॥ १० ॥ अहंपूर्विकयोपेतै-रमरैरथ खेचरैः । वर्द्धमानाधिकश्रद्धै-राबद्धपरिमण्डलम् ॥ ११ ॥ नराणां खेचराणां च, स्त्रीभिः स्वर्वासिनामपि । प्रारब्धरासकोत्ताल-ताल वाचालसंनिधिम् ॥ १२ ॥ आनन्दमग्नं नासाग्र-न्यस्तनिश्चललोचनम् । गाङ्गेयमुनिमद्राक्षी-च्चारित्रमिव मूर्तिमत् ॥ १३ ॥ (सप्तभिः कुलकम्)

---

१ रचिताभरणाः । २ देवमणिः-अश्वगलस्थलोमावर्तविशेषः । ३ वाजी-वेगवान् ।

पितामहं तथा प्रेक्ष्य, पाण्डवानां दृशस्तदा । आसन्नानन्दशोकाभ्यां, शीतलोष्णजलाविलाः ॥ १४ ॥ किरीटं
पादुके छत्रं, कृपाणं चामराणि च । दूरादुर्वीपतिर्मुञ्चन्, पञ्चधाऽभिगमं व्यधात् ॥ १५॥ अष्टमीन्दुनिभे कुर्वं-ल्ललाटे करकुड्म-
लम् । ययौ नैषेधिकीपूर्व-मुर्वीशस्तदवग्रहम् ॥ १६ ॥ तत्र कृत्वोत्तरासङ्गं, निःसङ्गैकशिरोमणेः । स त्रिः प्रदक्षिणीकृत्य,
पादयोरपतन्मुनेः ॥ १७ ॥ प्रत्येकं तस्य वात्सल्यं, स्मरन्तस्तत्तदद्भुतम् । नमारोऽन्येऽपि चत्वार-श्चरणौ मूर्द्धनि न्यधुः ॥१८॥
नेत्रनम्रमश्रुधाराभिः, क्रमावक्षपयन्मुनेः । भेजिरे चिरजीभावं, भक्तिग्रह्वाः स्वयं पुनः ॥ १९ ॥ धर्मलाभमयीस्तेषा-माशिषो-
ऽदान्मुनिः शनैः । तेऽप्युपेत्य प्रमोदेन, न्यषीदंस्तन्मुखाग्रतः ॥२०॥ मुनिराकृष्य नासाग्रा-त्तेषु चिक्षेप चक्षुषी । "महान्तो
हि परार्थाय, स्वार्थेषु शिथिलादराः" ॥ २१ ॥ आजन्मचापसंपर्क-कर्कशं मुनिपुंगवः । पाणिं व्यापारयामास, तेषां पृष्ठे
पुनः पुनः ॥ २२ ॥

शुभाशयजलासारिण्या, गाङ्गायनिमुनेर्दृशा । सिक्तस्त्यक्तमनस्तापः, पार्थिवस्तं व्यजिज्ञपत् ॥ २३ ॥ प्रभो! प्रभूतसंभूत-
पापपङ्केन पङ्किलः । निर्मलोऽस्तु ममाऽऽत्माऽयं, त्वदुपास्तिसुधाऽम्बुधौ ॥२४॥ विवेकाऽऽख्यं निधिं तात !, तृष्णाऽमुष्णान्म-
मानिशम् । राज्याय बान्धवध्वंस-मकार्षं कथमन्यथा ? ॥ २५ ॥ ज्ञातिसंतापनोपन्न-कल्मषैकमलीमसाः । व्योकोशकोश-
कुम्भश्च-सम्पुरा अपि धिग् श्रियः ॥ २६ ॥ इन्दु कुन्दद्युतिं कीर्तिं, धर्मं च द्वयमप्यदः । दुःखाकृत्योदयन्ते याः, संपदस्ता
न संपदः ॥ २७ ॥ तात! द्रोणगुरोः पितो-र्गान्धारी-धृतराष्ट्रयोः । अदायि यन्मया दुःखं, तत्तु वाचामगोचरः ॥ २८ ॥

१ संग्रामं-मारणम । २ व्याकोशं-प्रफुल्लम ।

प्रसीदान्त्योपदेशेन, केनाप्यनुगृहाण माम् ॥ २९ ॥ येनास्मान्नरकक्रोड–वास-
तत्पथप्रस्थितस्तात !, सांप्रतं पारलौकिके । पुराऽप्यदायि यो मह्यं, राजधर्मोचितस्त्वया ।
प्रतिभुवोऽधुना । मुच्येयं बान्धवध्वंस–निदानात् खलु पाप्मनः ॥ ३० ॥ सर्वैर्नृपगुणैर्युक्ताः, सुवृत्ताः प्राज्यवंशजाः । भूमेर्भूषणतां यान्ति,
उपदेशः स हृद्यस्ति, वास्तव्योऽद्यापि तद्यथा ॥ ३१ ॥ पार्थिवानामलंकारः, प्रजानामेव पालनम् । किरीट-कटको-ष्णीषै–र्भूष्यन्ते केवलं नटाः ॥ ३३ ॥
हारा इव नरेश्वराः ॥३२॥ अप्रतार्यश्च धूर्तानां, भुवं भुङ्क्तेऽब्धिमेखलाम् ॥ ३४ ॥ सेवा गुरौ तदादिष्टे,
विशेषज्ञः कृतज्ञश्च, गुरौ देवे च भक्तिमान् । आपन्नस्यार्तिहरणं, शरणागतरक्षणम् । त्यागः
ग्रहः पुरुषसंग्रहः । शौर्यं धर्मश्च पञ्चामी, राज्यलक्ष्मीलताम्बुदाः ॥ ३५ ॥ गणकोपः क्षयो राज्ञां, विजयो
प्रजानुरागश्च, श्रीतरीनांगरा अमी ॥ ३६ ॥ दानेन क्षमया शक्त्या, गणं राजाऽनुपालयेत् । आददीत ततो लोक–पीडयाऽर्थं न पार्थिवः ॥ ३८ ॥
गणसंग्रहः ॥ ३७ ॥ शपन्ते कृपणाऽऽक्रन्द–च्छद्मना क्षितिपं श्रियः । भोगान्न च न च
आशां न विफलां कुर्या–न्नृपः कल्पद्रुमोऽर्थिनाम् । आशापाशसमं नास्ति, हृदयाऽऽकर्षणं नृणाम् ॥ ३९ ॥ क्षमाभुजां क्षिप्यते लक्ष्मी–र्धूर्तैर्मधुरवादिभिः ।
त्यागा–न्न चाधेर्न च रोगतः । प्रजासंतापशापात्तु, क्षीयन्ते क्षितिपश्रियः ॥४०॥ इन्द्रियैरिव कायस्थैः, कायस्थैः, क्षपिता
अतिप्रवर्धितैर्भृत्यै–र्वल्लभैश्च निरङ्कुशैः ॥ ४१ ॥ समग्रविषयग्राम–सर्वस्वस्वादलालसैः । प्रागित्युपादिशः
नृपाः ॥४२॥ चण्डदण्डमगोप्तारं, क्षितिपं नेच्छति क्षितिः । निष्कलं कलहक्रूरं, लुब्धं पतिमिवाङ्गना ॥ ४३ ॥
सम्य–ग्यथा मे हृदयंगमम् । अधुनाऽपि प्रभो ! पथ्यं, तथोपदिश किंचन ॥ ४४ ॥

१ 'तथ्यं' प्रत्यन्तर० । २ राज्याधिकारिविशेषैः ।

इति विज्ञापनां राज्ञो, निशम्य मुनिपुंगवः। दृशौ व्यापारयंस्तस्मिन्, सानन्दे मन्दमभ्यधात् ॥ ४५ ॥ पुरा राज्योचितं नैश्वर्यं, पुरुषार्थमचीकथम्। पुष्टोऽर्थः पार्थिवानां हि, सर्वोपक्रमसिद्धये ॥ ४६ ॥ ऋषीणां त्विदमाख्यातुं, राजन्नर्हति नोचितम्। ततो धर्मं च मोक्षं च, समाचक्षे तवाधुना ॥ ४७ ॥ दानं शीलं तपो भाव-श्चेति धर्मश्चतुर्विधः। चतुर्णामपि वर्णानां, जायते यः शिवंकरः ॥ ४८ ॥ स्वर्गापवर्गयोर्बीजं, तत्र दानं भवेत्त्रिधा। गृहस्थैरपि मार्गस्थै-र्भवाब्धिर्येन तीर्यते ॥ ४९ ॥ प्राणिनां प्रीणनं मृत्यो-र्भीतानामभयेन यत्। कर्मनिर्मूलनं सर्व-ज्येष्ठं दानं तदादिमम् ॥ ५० ॥ जन्तुं धिनोति नोदार्य-दत्ता रत्नावलिस्तथा। सर्वतोऽप्यभयं तुभ्य-मिति वर्णावलिर्यथा ॥ ५१ ॥ आगमादिसमीचीन-ग्रन्थतत्त्वार्थसिद्धिषु। दानं साधुसाहाय्यं, ज्ञानदानमुदाहृतम् ॥ ५२ ॥ धन्यैर्ज्ञानप्रदीपेन, निस्तुषज्योतिषाधिकम्। अन्तरङ्गं तमस्काण्ड-मखेटमपि गण्यते ॥ ५३ ॥ वस्तुना येन दत्तेन, साधोः सिध्यति संयमः। तृतीयं तदुपष्टम्भ-दानमाम्नातमर्हता ॥ ५४ ॥ शीतक्षुत्तृषरोगाद्याः, कर्मक्षयकृते शमी। वस्तु कल्प्यं सुपात्राय, ददीत विगतस्पृहः ॥ ५५ ॥ काले दानं सुपात्रेभ्यः, सद्गुरूणां समागमः। भवाब्धौ बोधिलाभश्च, भाग्यलभ्यमिदं त्रयम् ॥ ५६ ॥ चित्तं वित्तं च पात्रं च, त्रयमेकत्र संगतम्। दुर्लभं लभ्यते येन, जन्म तस्य फलेग्रहि ॥ ५७ ॥ लक्ष्मीः सौभाग्यमारोग्य-मानैश्वर्यं गुणोन्नतिः। आदेयता च कौन्तेय!, दानकल्पद्रुमाङ्कुराः ॥ ५८ ॥ देशतः सर्वतो वाऽपि, विरतिः शीलमुच्यते। यतः संसारपारीणाः, त्रियोऽप्यासन्ननेकशः ॥ ५९ ॥ दानमानन्यते पाप-धीवरैरपि पामरैः। न तु पालयितुं शीलं, शक्यते येन केनचित् ॥ ६० ॥ बाह्यमुक्तं तपः षोढा,

१ रत्नं, रत्नां, रत्ना, इति प्रत्यन्तराणां पाठः।

पोढा चाभ्यन्तरं बुधैः। कर्ममर्मच्छिदा कर्म-च्छेकमेकं यदुच्यते ॥ ६१ ॥ इहापि स्यान्महीयस्यै, तपोऽभीष्टार्थसिद्धये। स्वयमेव त्वया दृष्टो, दृष्टान्तोऽत्र जयद्रथः ॥ ६२ ॥

द्रौपदीहरणे ह्येप, तदा प्राप्य पराभवम्। दुष्टः कष्टं तपस्तेपे, युष्मद्वधविधित्सया ॥ ६३ ॥ तुष्टा च तपसा तेन, काचिदभ्येत्य देवता। वरं वत्स! वृणीष्वेति, निजगाद जयद्रथम् ॥ ६४ ॥ सोऽथ मे दुस्तपस्यास्य, यद्यस्ति तपसः फलम्। ततो वधाय पाण्डूनां, स्यामित्येतामयाचत ॥ ६५ ॥ साऽप्यवोचदवाच्यैव, वाचोयुक्तिरियं त्वया। संविधातुं वधं वत्स!, नैपामाखण्डलोऽप्यलम् ॥ ६६ ॥ आयुश्चरमदेहाना-मेषां हि निरुपक्रमम्। यदेते व्रतमादाय, तीर्थे सेत्स्यन्ति नेमिनः ॥ ६७ ॥ तदेतेषां वधे मा स्म, कृथा मिथ्या मनोरथान्। केवलं दुष्करस्यैत-द्भावि ते तपसः फलम् ॥ ६८ ॥ यद्भवान् पाण्डवानेतान्, कुरुव्यूहे विविक्षतः। दिनमेकं रणच्छेको, लीलया स्खलयिष्यति ॥ ६९ ॥ इति तस्मै समाख्याय, देवता सा तिरोदधे। कृतं युष्मासु तेनापि, यत्किंचिद्वित्थ तत् स्वयम् ॥ ७० ॥

तदेतत्तव कौन्तेय!, तपोमाहात्म्यमीरितम्। भावोऽधुना सर्वधर्म-धुर्यस्तुर्यो निशम्यताम् ॥ ७१ ॥ सर्वदैवातिदुर्लम्भो, भावः सिद्धरसोपमः। दानादयोऽपि जायन्ते, येन कल्याणमूर्तयः ॥ ७२ ॥ एतस्मादेव कौन्तेय!, सच्चारित्रपचेलिमान्। मोक्षोऽपि कर्मनिर्मोक्ष-लक्षणस्तत्क्षणाद्भवेत् ॥ ७३ ॥ चारित्रावाप्तिसंपन्न-तत्त्वज्ञानेन ते मया। पुमर्थावुत्तमावेतौ, धर्ममोक्षावुदाहृतौ ॥ ७४ ॥ कौन्तेय! विधिवन्नित्य-मुपासीथास्त्वमप्यमू। समग्रसमरारम्भ-पाप्मनो येन मुच्यसे ॥ ७५ ॥ एवमाकर्ण्य पर्जन्य-गर्जिवन्मुनिदेशनाम्। शिखण्डीव कृतानन्द-ताण्डवोऽभूद्युधिष्ठिरः ॥ ७६ ॥ अभ्यधाच्च प्रभो! साधु,

साधु संवेगितोऽस्म्यहम् । तत्रामुना प्रमादेन, नीतश्च कृतकृत्यताम् ॥ ७७ ॥
आचार्यं भद्रगुप्तोऽथ, मुनिं भीष्ममभाषत । प्रत्यासन्नो महाभाग !, पर्यन्तसमयस्तव ॥ ७८ ॥ अनुतिष्ठ कुरुश्रेष्ठ !, भूयोऽप्याराधनां ततः । योगो निरन्तराभ्यासात्, सौरभ्यं लभतेऽधिकम् ॥ ७९ ॥ एवं गुरुभिरादिष्ट-स्तुष्टुवे तान्मुनीश्वरः । पुनर्विभिन्दाघन, मूलादाराधनामिति ॥ ८० ॥
ज्ञानाचारेऽष्टभेदेऽभू-द्योऽतीचारः कथंचन । समस्तमपि निन्दामि, तं त्रेधा शुद्धमानसः ॥ ८१ ॥ अष्टधा दर्शनाचारे, चारे निःशङ्कितादिमे । जन्मतोऽहमतीचारं, सर्वं गर्हे समाहितः ॥ ८२ ॥ ख्याताः समितयः पञ्च, तिस्रस्तु किल गुप्तयः । अष्टाभिताः समेता याः, प्रोक्ताः शासनमातरः ॥ ८३ ॥ तदेकात्मनि चारित्रा-चारेऽतीचारमागतम् । अन्तिमाराधनां सम्य-विराधितमुर्युत्सृजाम्यहम् ॥ ८४ ॥ ( युग्मम् ) षोढा बाह्यं तपः षोढा, वदन्त्याभ्यन्तरं तथा । तत्रातीचारमायातं, निन्दामि प्रयतोऽमुना ॥ ८५ ॥ धर्मानुष्ठानेषु यद्धस्य-द्वै(द्वै)र्यो वीर्यमगोपयम् । तत्त्रिधा त्रिविधेनाहं, गर्हे दौरात्म्यमात्मनः ॥ ८६ ॥ सूक्ष्मबादरभेदेषु, स्थावरेषु त्रसेषु च । प्राणातिपातमाजन्म, कृतं निन्दाम्यहं त्रिधा ॥ ८७ ॥ हास्यलोभभयक्रोधैः, पीडाकारि परस्य यत् । अजल्पिषं मृषा किंचि-त्तत्सर्वं व्युत्सृजाम्यहम् ॥ ८८ ॥ अल्पमल्पेतरं वा यत्, परकीयं मया क्वचित् । अद-त्तमादानमालस्या-त्तं निन्दामि पुनः पुनः ॥ ८९ ॥ तैरश्चं मानुषं दिव्यं, यदब्रह्म निषेवितम् । त्रिविधेन त्रिधा तत्र, मिथ्या-दुष्कृतमस्तु मे ॥ ९० ॥ समस्तवास्तु-धान्यादौ, द्विपदेऽथ चतुष्पदे । यदकार्षमहं मूर्च्छां, तन्निन्दामि मुहुर्मुहुः ॥ ९१ ॥ समृद्धिगर्धिना पूर्व-माहारश्च चतुर्विधः । अभुज्यत मया नक्तं, विविक्तस्तं त्यजाम्यहम् ॥ ९२ ॥ महाव्रतानि चत्वारि,

पोढा चाभ्यन्तरं बुधैः। कर्ममर्मच्छिदा कर्म-च्छेकमेकं यदुच्यते ॥ ६१ ॥ इहापि स्यान्महीयस्यै, तपोऽभीष्टार्थसिद्धये। स्वयमेव त्वया दृष्टो, दृष्टान्तोऽत्र जयद्रथः ॥ ६२ ॥

द्रौपदीहरणे ह्येष, तदा प्राप्य पराभवम्। दुष्टः कष्टं तपस्तेपे, युष्मद्वधविधित्सया ॥ ६३ ॥ तुष्टा च तपसा तेन, काचिदभ्येत्य देवता। वरं वत्स! वृणीष्वेति, निजगाद जयद्रथम् ॥ ६४ ॥ सोऽथ मे दुस्तपस्यास्य, यद्यस्ति तपसः फलम्। ततो वधाय पाण्डूनां, स्यामित्येतामयाचत ॥ ६५ ॥ साऽप्यत्रोचदत्राच्यैव, वाचोयुक्तिरियं त्वया। संविधातुं वधं वत्स!, नैषामाखण्डलोऽप्यलम् ॥ ६६ ॥ आयुश्चरमदेहाना-मेषां हि निरुपक्रमम्। यदेते व्रतमादाय, तीर्थे सेत्स्यन्ति नेमिनः ॥ ६७ ॥ तदेतेषां वधे मा स्म, कृथा मिथ्या मनोरथान्। केवलं दुष्करस्यैत-द्भावि ते तपसः फलम् ॥ ६८ ॥ यद्भवान् पाण्डवानेतान्, कुरुव्यूहे विविक्षतः। दिनमेकं रणच्छेको, लीलया स्खलयिष्यति ॥ ६९ ॥ इति तस्मै समाख्याय, देवता सा तिरोदधे। कृतं युष्मासु तेनापि, यत्किंचिद्वित्थ तत् स्वयम् ॥ ७० ॥

तदेतत्तव कौन्तेय!, तपोमाहात्म्यमीरितम्। भावोऽधुना सर्वधर्म-धुर्यस्तुर्यो निशम्यताम् ॥ ७१ ॥ सर्वदैवातिदुर्लम्भो, भावः सिद्धरसोपमः। दानादयोऽपि जायन्ते, येन कल्याणमूर्तयः ॥ ७२ ॥ एतस्मादेव कौन्तेय!, सच्चारित्रपचेलिमान्। मोक्षोऽपि कर्मनिर्मोक्ष-लक्षणस्तत्क्षणाद्भवेत् ॥ ७३ ॥ चारित्रावाप्तिसंपन्न-तत्त्वज्ञानेन ते मया। पुमर्थावुत्तमावेतौ, धर्ममोक्षावुदाहृतौ ॥ ७४ ॥ कौन्तेय! विधिवन्नित्य-मुपासीथास्त्वमप्यमू। समग्रसमरारम्भ-पाप्मनो येन मुच्यसे ॥ ७५ ॥ एवमाकर्ण्य पर्जन्य-गर्जिवन्मुनिदेशनाम्। शिखण्डीव कृतानन्द-ताण्डवोऽभूद्युधिष्ठिरः ॥ ७६ ॥ अभ्यधाच्च प्रभो! साधु,

गाङ्गेय-
मुनिना
कृता
देशना
युधिष्ठि-
रस्य ॥

गाप् संतोषितोऽस्म्यहम् । तवामुना प्रसादेन, नीतश्च कृतकृत्यताम् ॥ ७७ ॥

आचार्यभद्रगुप्तोऽथ, मुनिं भीष्ममभाषत । प्रत्यासन्नो महाभाग !, पर्यन्तसमयस्तव ॥ ७८ ॥ अनुतिष्ठ कुरुश्रेष्ठ !, भूयोऽप्याराधनां ततः । योगी निरन्तराभ्यासात्, सौरभ्यं लभतेऽधिकम् ॥ ७९ ॥ एवं गुरुभिरादिष्ट-स्तुष्टुवे तान्मुनीश्वरः । पूर्वोदितादपथत्त, मूलादाराधनामिति ॥ ८० ॥

ज्ञानाचारेऽष्टभेदेऽभू-द्योऽतीचारः कथंचन । समस्तमपि निन्दामि, तं त्रेधा शुद्धमानसः ॥ ८१ ॥ अष्टधा दर्शनाचारे, यातं निःशङ्कितादिभिः । जन्मतोऽद्यमतीचारं, सर्वं गर्हे समाहितः ॥ ८२ ॥ ख्याताः समितयः पञ्च, तिस्रस्तु किल गुप्तयः । अष्टावेताः समेता याः, प्रोक्ताः शासनमातरः ॥ ८३ ॥ तदेकात्मनि चारित्रा-चारेऽतीचारमागतम् । अन्तिमाराधनां सम्य-गिच्छन्नुत्सृजाम्यहम् ॥ ८४ ॥ ( युग्मम् ) षोढा बाह्यं तपः षोढा, वदन्त्याभ्यन्तरं तथा । तत्रातीचारमायातं, निन्दामि प्रयतोऽधुना ॥ ८५ ॥ स्यानुष्ठानेषु यद्धस्य-द्वै(द्वै)र्यो वीर्यमगोपयम् । तत्त्रिधा त्रिविधेनाहं, गर्हे दौरात्म्यमात्मनः ॥ ८६ ॥ सूक्ष्मबादरभेदेषु, स्थावरेषु त्रसेषु च । प्राणातिपातमाजन्म, कृतं निन्दाम्यहं त्रिधा ॥ ८७॥ हास्यलोभभयक्रोधैः, पीडाकारि परस्य यत् । अजल्पितं मृषा किंचि-त्तत्सर्वं व्युत्सृजाम्यहम् ॥ ८८ ॥ अल्पमल्पेतरं वा यत्, परकीयं मया क्वचित् । अदत्तमादायाल्पा-त्तं निन्दामि पुनः पुनः ॥ ८९ ॥ तैरश्चं मानुषं दिव्यं, यदब्रह्म निषेवितम् । त्रिविधेन त्रिधा तत्र, मिथ्यादुष्कृतमस्तु मे ॥ ९० ॥ समस्तवास्तु-धान्यादौ, द्विपदेऽथ चतुष्पदे । यदकार्षमहं मूर्च्छा, तन्निन्दामि मुहुर्मुहुः ॥ ९१ ॥ समृद्धिगर्धिना पूर्वं-माहारश्च चतुर्विधः । अभुज्यत मया नक्तं, त्रिविक्तस्तं त्यजाम्यहम् ॥ ९२ ॥ महाव्रतानि चत्वारि,

सूत्रतोऽप्यर्थतोऽपि च । परावर्त्य तदेकाग्रः, पुनरुज्ज्वलतां नये ॥ ९३ ॥ दुर्वाक्यादपकाराद्वा, यद्वा द्रव्यापहारतः । यो मया लम्भितः पीडां, स मे क्षाम्यतु संप्रति ॥९४॥ देवत्वे ये मया देवा, नारकत्वे च नारकाः । तिर्यक्त्वेऽपि च तिर्यञ्चो, मानुषत्वे च मानुषाः ॥ ९५ ॥ स्थापयांचक्रिरे दुःखे, सर्वे क्षाम्यन्तु ते मयि । उपेतः समतां सर्वे, तेषामहमपि क्षमे ॥९६॥ (युग्मम्) लक्ष्मी रूपं प्रियैर्योगो, जीवितं यौवनं बलम् । वातोद्धूताब्धिकल्लोल-चञ्चलं सकलं खलु ॥ ९७ ॥ रोग-मृत्यु-जरा-जन्म-दुःस्थानामिह देहिनाम् । धर्ममेकं विना जैनं, न कोऽपि शरणं भवेत् ॥ ९८ ॥ जन्तवः स्वजनाः सर्वे, जाताः परजनाश्च ये । विवेकी तेषु कुर्वीत, को ममत्वं मनागपि ? ॥ ९९ ॥ एकस्यैव भवे जन्म, स्यादेकस्यैव पञ्चता । एकस्यैवाङ्गभाजः स्यु-र्दुःखानि च सुखानि च ॥ १०० ॥ वपुरन्यदिदं जीवा-दन्यद्वान्यधनादिकम् । जीवोऽन्यः पुनरेतेभ्यः, कथं मुह्यन्ति बालिशाः ? ॥ १०१ ॥ वसा-शोणित-वि-ण्मूत्र-यकृ-न्मांसा-स्थिसंभृते । अशुचिप्रचिते देहे, को हि मुह्यति कोविदः ? ॥ १०२ ॥ अवक्रयकुटीतुल्यं, यत्नाल्लालितपालितम् । अचिरादपि मोक्तव्यं, विनश्वरमिदं वपुः ॥ १०३ ॥ धीरस्य कातरस्यापि, मृत्युरेत्येव देहिनः । तन्म्रियेत तथा धीमा-न्न म्रियेत यथा पुनः ॥ १०४ ॥ अर्हन्तो निखिलाः सिद्धाः, साधवः स्वगुणोन्नताः । अर्हद्धर्मश्च शरणं, भवन्त्वशरणस्य मे ॥ १०५ ॥ साधवो बान्धवाः सर्वे, धर्मः स्वामी गुरुः पिता । नात्मीयं मे परं किंचित्, कर्मबन्धनिबन्धनम् ॥ १०६ ॥ सङ्घोऽथ भूत-भाविभ्य-स्तरण्डेभ्यो भवार्णवे । शाश्वतेभ्यश्च मे शश्व-दर्हद्भ्योऽस्तु नमो नमः ॥ १०७ ॥ कर्मकक्षे क्षणाद्येषां, ध्यानेन दहनायितम् । तेभ्यो भवतु सिद्धेभ्य-स्त्रिविधेन नमो नमः ॥१०८॥ पञ्चधाऽऽचारधारिभ्यो, भानुभ्यः शासनेऽर्हताम् । कृतभव्याब्जबोधेभ्य, आचार्येभ्यो नमो नमः ॥ १०९ ॥ एत्या-

न्ते रागिणो नित्यं, येभ्यः श्रुतमधीयते । उपाध्यायपदस्थेभ्य-स्तेभ्यो मेऽस्तु नमो नमः ॥ ११० ॥ असहायसहायेभ्यः, साधुभ्योऽस्तु नमो नमः । चारित्रयानपात्रे ये, दधते कर्णधारताम् ॥ १११ ॥ बाह्याभ्यन्तरमुपधिं, धर्मस्यानुपकारकम् । सावद्ययोगमित्थं-स्त्रिविधं व्युत्सृजाम्यहम् ॥ ११२ ॥ चतुःप्रकारमाहारं, प्रत्याख्यामि समाधिना । चरमोच्छ्वासवेलायां, तनुमेतां त्यजामि च ॥ ११३ ॥

एवमाराधनां कृत्वा, मुनिः शान्तमनास्तदा । स्वगुरून् क्षमयामास, साधून् साध्वीश्च तत्परः ॥ ११४ ॥ पाण्डवा निष्पन्नकार्य-मुत्थायविनयादथ । निपत्य पादयोर्भीष्मं, मुनिराजं व्यजिज्ञपन् ॥ ११५ ॥ तात ! त्वया वयं बाल-स्माला इव लालिताः । यदिमेनावतीगन्य-दुर्लभामलभामहि ॥ ११६ ॥ कृत्वा द्रोणमविद्राण-गरिमाणं गुरुं पुरा । कलाकलापमखिलं, त्वयैवाध्यापिता वयम् ॥ ११७ ॥ युवत्ते पुनरस्माभि-र्व्यलीकान्येव तेनिरे । अयं तु रणसंरम्भो, व्यलीकस्यापि वल्लिका ॥ ११८ ॥ ततः किं बहुना ? तात !, सर्वं नः क्षन्तुमर्हसि । गुरूणां नैव कोपाय, डिम्भानां दुर्नयोऽपि हि ॥ ११९ ॥ क्षमस्वेति गाङ्गेयं, स्थितेष्वपरबन्धुषु । एको भूयोऽपि निर्व्याजं, व्याजहार धनंजयः ॥ १२० ॥ एते त्वदङ्गसंगत्या, मद्बाणाग्राः पतत्रिणः । दुष्कर्मतर्जनीकल्पा-स्तात ! मां तर्जयन्त्यलम् ॥ १२१ ॥ समरं संस्मरन्नेवं, तात ! खिद्ये पदे पदे । संप्रत्येनां ततोऽवज्ञा-मविज्ञस्य क्षमस्व मे ॥ १२२ ॥ एवं विज्ञापितः सर्वैः, पाण्डवैर्मुनिपुंगवः । प्रसादपिशुनं तेषां, प्रदत्तवान् कृपाद्भुतम् ॥ १२३ ॥

---

१ नाभिगम्योऽयम् । २ अप्रियाणि । ३ प्रमादसूचकम् ।

शुक्लं[1] ध्यायन्नथ ध्यानं, सुसमाहितमानसः । सद्यो विदन्निवाऽऽत्मानं, संसारार्णवपारगम् ॥ १२४ ॥ आनयन्नात्मतादात्म्यं, पश्चापि परमेष्ठिनः । मासिकानशनो मृत्वा, गाङ्गेयः प्रापदच्युतम् ॥ १२५ ॥ सुरैर्नभश्चरैः पाण्डु–नन्दनैरपि साश्रुभिः । अकारि देहसंस्कार–स्तस्य गोशीर्षचन्दनैः ॥ १२६ ॥ पाण्डवानथ संबोध्य, श्रीभद्रगुप्तसूरयः । अन्यत्र सूत्रयामासु–र्विहारं हारिसंयमाः[2] ॥ १२७ ॥ गायन्तश्च सरोमाञ्चं, मुनेस्तस्य गुणान्मुदा । खेचरा-मर-गन्धर्वा, ययुः सर्वे यथागतम् ॥ १२८ ॥

तद्ब्रह्मव्रतमद्भुतं निरुपमां तां प्राणिवर्गे कृपां
तच्छौण्डीर्यमनन्यतुल्यमतुलां सर्वत्र तामास्तताम् ।
गाङ्गेयस्य मुनेः परैरसुलभां तां चापि निःसङ्गतां
[3]व्याख्यान्तः पथि पाण्डवा अपि ततो जग्मुः पुरं हास्तिनम् ॥ १२९ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये गाङ्गेयस्वर्गमनवर्णनो नाम पञ्चदशः सर्गः ॥ १५ ॥

---

१ चक्षुः । २ मनोहरसयमाः शुद्धचारित्रवन्त इत्यऽर्थः । ३ कथयन्तः ।

# अथ षोडशः सर्गः ।



गोविन्दराजकल्पद्रु-कोरकः कोरकोऽन्यदा । अध्यूषिवांससास्थान-मुपतस्थे युधिष्ठिरम् ॥ १ ॥ प्रणम्यासन्नमासीन-मुर्वीशः पूर्वमस्तुवत् । तमभ्यागमने हेतु-मन्वयुङ्क्त प्रियोक्तिभिः ॥ २ ॥ सोऽप्यूचे प्राप्य वः पूजां, तदानीमीयिवानितः । ...का...पुरीजिष्णुं, विष्णुः स्वामविशत् पुरीम् ॥ ३ ॥ कंसध्वंसी जरासन्ध-दण्डभृत् पाण्डवप्रियः । इत्यादिविरुदा-...श्रीमि-र्वन्दिवृन्दैः स गीयते ॥ ४ ॥ दलितारातिना तेन, राजन्वत्यां सुरद्विषा । द्वारवत्यां निरातङ्काः, स्वैरं क्रीडन्ति यादवाः ॥ ५ ॥ निर्वेदः केचिदुद्याने, वापीषु व्यलसन् परे । क्रीडाद्रौ केऽपि चिक्रीडु-र्नवोढदयिताऽन्विताः ॥ ६ ॥ श्रीमन्नेमिकुमारस्तु, गुणैर्विश्वविलक्षणः । शान्तचेताः क्वचिन्नैव, रमतेऽन्यकुमारवत् ॥ ७ ॥

अलौकिकं तमालोक्य, विषयेभ्यः पराङ्मुखम् । खेदादूचे शिवादेवी, समुद्रविजयं ततः ॥ ८ ॥ धन्यास्ता मातरः ...भिः खेलतः सुतान् । पश्यन्त्यो याः सुधामैत्रीं, सूत्रयन्ति स्वनेत्रयोः ॥ ९ ॥ एकैवाहमधन्याऽस्मि, जगत्यद्यापि ... या । न पश्यामि स्वपुत्रस्य, वधूटीवदनाम्बुजम् ॥ १० ॥ तदार्यपुत्र ! संबोध्य, तनूजः परिणाय्यताम् । स्यां नृत्यन्ती ... यथा पूर्णमनोरथा ॥ ११ ॥ ततोऽन्वितः शिवादेव्या, समुद्रविजयः स्वयम् । आहूय रहसि प्रीत्या, जगाद निजनन्दनम् ॥ १२ ॥ वत्स ! त्वमेव सर्वस्व-मावयोस्त्वं च जीवितम् । भाग्य-सौभाग्य-रूपैश्च, त्वं त्रिलोकीविलक्षणः ॥ १३ ॥ त्वं पुराऽप्युत्सवागासि, नेत्रयोरधुना पुनः । विधेहि नौ नवोढः स-न्नुत्सवादुत्सवान्तरम् ॥ १४ ॥ कुमारोऽपि

हसन्नाह, नाहमुद्राहभङ्गुरः । किं त्वद्याप्यनुरूपाऽस्ति, न काऽपि वनिता क्वचित् ॥ १५ ॥ ततोऽवादीच्छिवादेवी, वत्स ! ते किमिदं वचः । नन्विहैवास्ति वास्तव्या, रूपनिर्लोडिताप्सराः ॥ १६ ॥ कन्या राजीमतीत्युग्र–सेनभूपालनन्दिनी । गुणैरप्यनुरूपैव, सा तेऽतस्तां विवाहय ॥ १७ ॥ (युग्मम्) नेमिरूचे न रोचन्ते, मायाचतुरचेतसः । दुःखैकखानयस्तुच्छा–श्छेकेभ्यस्तादृशः स्त्रियः ॥ १८ ॥ यास्तु निस्तुपसौहार्दाः, सर्वकामनिकेतनम् । सदानन्दसुधानद्यः, सन्ति मे हृदयंगमाः ॥ १९ ॥ परिणेष्ये समस्तास्ताः, समये युष्मदाज्ञया । कियानप्युचितः काल–स्तत्प्रतीक्ष्यैः प्रतीक्ष्यताम् ॥ २० ॥ गम्भीरं पितरावेव–मावर्ज्य स्फूर्जदार्जवौ । सतामाचरणैः कंचित्, कालं नेमिरजीगमत् ॥ २१ ॥

अन्यदा राजकाकीर्णा–मास्थानीमास्थिते हरौ । उज्जिहीते स्म निःशेष–ध्वनिपिण्ड इव ध्वनिः ॥ २२ ॥ प्रासादशिखरश्रेणि–स्रंसनस्वनमूर्च्छितः । हाकारैर्बृंहितः सोऽभू–द्द्यावाभूम्युदरंभरिः ॥ २३ ॥ लीलयाऽऽलानमुन्मील्य, महेभाः परिबभ्रमुः । मन्दुरान्तस्तुरङ्गाश्च, त्रेसुस्त्रोटितबन्धनाः ॥ २४ ॥ कम्प्रं द्वारवतीवप्रं, चिरमैत्र्यादिवाम्बुधिः । आलिलिङ्ग भृशं क्षोभ–लोलैः कल्लोलबाहुभिः ॥ २५ ॥ पश्यत्येवातिसंभ्रान्ते, रामे रामानुजेऽपि च । निखिलोऽप्युच्छलन्मूर्च्छः, पपात परिपज्जनः ॥ २६ ॥ क्षोभाच्च विस्मयाच्चाथ, चिन्तयामास केशवः । किमसौ स्फूर्जथुः ? किं वा, प्रलयाम्भोधरध्वनिः ? ॥ २७ ॥ किं चासौ पाञ्चजन्यस्य, जन्यव्योमविधो ध्वनिः । तदयुक्तं यतो नाय–मगोविन्देन वाद्यते ॥ २८ ॥

इत्यूहव्याकुले कृष्णे, चारुकृष्णाभिधः क्षणात् । एत्याऽऽयुधगृहारक्ष–स्तं प्रणम्य व्यजिज्ञपत् ॥ २९ ॥ देव ! नेमिः कुमाराणां, गणेन परिवारितः । त्वदीये त्वमिवेदानीं, विवेशाऽऽयुधवेश्मनि ॥ ३० ॥ दृशं सुदर्शने शार्ङ्गे, गदायामथ

नन्दके । न व्यापारं निचिक्षेप, पाञ्चजन्ये पुनः पुनः ॥ ३१ ॥ तत्पूरणे कृताऽऽकूतो, जिघृक्षुः सोऽक्षिपत् करम् । अहं च
ऽस्यागुणस्य, तमेत्यावोचदुग्रकः ॥ ३२ ॥ किं कुमार ! प्रयासेन, निष्फलेन तवामुना ? । जायते यो न हासाय, स एवोद-
ध्माने मरः ॥ ३३ ॥ आदातुमप्यलंभूष्णु-र्विष्णुरेनं हि नापरः । मुखमारुतपूरेण, दूरे पूरयितुं पुनः ॥ ३४ ॥ मयैवं वार्य-
माणोऽपि, तं करेण करेणुवत् । नेमिर्भुजोष्मणा चण्डः, पुण्डरीकमिवाग्रहीत् ॥ ३५ ॥ नेमिना स्थापितः सोऽथ, बन्धूकस-
भृङ्गभरं । रक्तोत्पलदले मिलन्, कलहंस इवाबभौ ॥ ३६ ॥ हेलोत्फुल्लकपोलेन, नेनासौ पूरितस्तथा । यथा मूर्च्छामग-
न्नाग, यं नरेऽपि यामिकाः ॥ ३७ ॥ क्रमादथाप्तचैतन्य-स्त्वदन्तिकमुपागमम् । इत्याख्याय गते तस्मि-न्मुदा हरि-
रचिन्तयत् ॥ ३८ ॥

नेमिरस्मत्कुले रम्ये, चक्रवर्त्युदपद्यत । पाञ्चजन्ये मयाऽऽध्माते, नादो नेदृक्कदाऽप्यभूत् ॥ ३९ ॥ उत्तंसः सर्ववंशानां,
हरिवंशः परं भुवि । यस्मिञ्जन्मिभिरीदृशै-र्नररत्नैरलंकृतः ॥ ४० ॥ इत्यालोचयति प्रीतया, हरौ विश्वमनोहरः । अनुत्सुको
निरुत्सुकः, सभामेताय नेम्यपि ॥ ४१ ॥

सभामागानशौरी च, प्रकृत्या प्रियबान्धवः । कुमारमनुयुङ्क्ते स्म, प्रश्रयेण नरायणः ॥ ४२ ॥ भ्रातर्विश्वंभराभोग-संभ्रम-
भ्रमिकारणम् । किमिद् दुर्नाम्निनिर्घोषः, शङ्खोऽयं पूरितस्त्वया ? ॥ ४३ ॥ तं शिरःकम्पनेनैव, दत्तप्रत्युत्तरं हरिः । प्रत्यस्त-
मूर्च्छितनभूल-पुलकः पुनरब्रवीत् ॥ ४४ ॥ दूरेऽन्यभूभुजो भ्रातः !, शङ्खे ध्माते त्वयाऽधुना । असंस्तुतचरः क्षोभो, राम-
स्यापि मनस्यभूत् ॥ ४५ ॥ तदस्मि तव दोःस्थाम-विलोकनकुतूहली । मुहूर्त्तमावयोरेव, नियुद्धं जायतां ततः ॥ ४६ ॥

तथेति निर्विकारेण, कुमारेण प्रतिश्रुते । तं प्रहृष्टो हरिर्बाहौ, गृहीत्वा खुरलीं ययौ ॥ ४७ ॥ उभयाभिमते रामे, सभाभर्तरि तस्थुपि । चाणूरचूरणो मल्ल-युद्धाय समनह्यत ॥ ४८ ॥ दृष्ट्वा तथाऽध्यवस्यन्त-मन्तकं केशि-कंसयोः । अस्ताघबलदोःस्तम्भो, नेमिर्गम्भीरमभ्यधात् ॥ ४९ ॥ भरतार्धपते ! युद्ध-मेतन्नीचजनोचितम् । किं वृथा पृथिवीपांशु--पांशुरा क्रियते तनुः ? ॥ ५० ॥ तन्मुरारे ! भुजस्तम्भ-वालनेनैव केवलम् । अन्योऽन्यमावयोरस्तु, सारसर्वस्ववीक्षणम् ॥ ५१ ॥ इत्यूरीकृत्य गोविन्दः, श्रीवशालानमञ्जुलम् । त्रिखण्डरक्षापरिघं, भुजं तिर्यगधारयत् ॥ ५२ ॥ तं नेमिर्बालनलिनी-तन्तुचालमचालयत् । स्वं च प्रसारयांचक्रे, भूधरेन्द्रनिभं भुजम् ॥ ५३ ॥ पूर्वं करेण सावज्ञं, करीन्द्र इव केशवः । स्थानाच्चालयितुं नेमे-रारेभे भुजवल्लरीम् ॥ ५४ ॥ आकुञ्च्य चरणौ पश्चात्, सारसर्वाभिसारतः । ललम्बे नेमिदोःस्तम्भे, कृष्णः कपिरिव द्रुमे ॥ ५५ ॥ न च नेमिभुजस्तम्भः, सूत्रमात्रमपि क्वचित् । स्थानाच्चचाल किं मेरो-श्चूला चलति वात्यया ? ॥ ५६ ॥ गुणगृह्यो मुदा भ्रातु-रोजोऽतिशयजन्मना । विमुच्य दोर्लतां नेमि-मालिलिङ्ग हरिर्मुहुः ॥ ५७ ॥ अवदच्च लसच्चेताः, श्लाघ्यं बन्धो ! कुलं हि नः । पवित्रे यत्र जातोऽसि, त्वमसामान्यविक्रमः ॥ ५८ ॥ मामकीनेन दोःस्थाम्ना, यथा रामः प्रमोदते । तथाऽहं तावकीनेन, त्रैलोक्योपरिवर्तिना ॥ ५९ ॥

श्लाघामित्यावहन्नेमिं, विसृज्याऽऽलयमीयिवान् । मनसो विश्रमारामं, रामं पप्रच्छ केशवः ॥ ६० ॥ दृष्टमार्य ! त्वयाऽऽश्चर्यं, नेमिनो मेऽनुजन्मनः ? । योऽमुष्य विक्रमः सोऽस्ति, न शक्रस्य न चक्रिणः ॥ ६१ ॥ तदसौ निजशौर्येण, विश्वविश्वातिशायिना । कथं न साधयत्येतां, षट्खण्डामपि मेदिनीम् ? ॥ ६२ ॥ सीरपाणिरथाभाणी-न्मुरारे ! मे सर-

त्वदः। यदा देव्याः शिवादेव्या, गर्भे नेमिरवातरत् ॥ ६३ ॥ चतुर्दश महास्वप्ना–स्तदा ददृशिरे तया। एतैर्नैमित्तिकैः नरै-रित्थं च व्याचचक्षिरे ॥ ६४ ॥ शुभैरेभिर्महास्वप्नै–र्जेता बाह्यान्तरद्विषाम्। चक्री वा धर्मचक्री वा, सुतो देव्या भविष्यति ॥ ६५ ॥ एतयोदात्तया मूर्त्या, निर्विकारतया तया। कृपालुत्वेन चानेन, मन्ये तव् सैष तीर्थकृत् ॥ ६६ ॥

अत्रान्तरेऽजनि व्योम्नि, श्राव्यवर्णा सरस्वती। कृतमेतैरनल्पैर्वा, विकल्पै राम-केशवौ ! ॥ ६७ ॥ नमिः पूर्वं जिनो हरिं, संसदि प्रत्यपीपदत्। नेमिस्तीर्थंकरो भावी, द्वाविंशोऽत्रैव भारते ॥ ६८ ॥ समस्तमपि स स्त्रैणं, तृणवच्चिन्तयिष्यति। राज्यं प्राज्यभुजोष्माऽपि, निरीहो न ग्रहीष्यति ॥ ६९ ॥ एतज्जिनोक्तमाख्याय, तस्यामुपरमस्पृशि। तं तं नेमेर्गुणग्राम–मस्मारत हरिर्मुदा ॥ ७० ॥

क्षणेन राममापृच्छ्य, सोऽन्तःपुरमुपेयिवान्। नेमेश्चरित्रमाचख्यौ, शुद्धान्तसुदृशां पुरः ॥ ७१ ॥ तत्रोत्कमानसो नेमिं, हरिः स्नेहादजूहवत्। ततो रत्नासनासीनः, स्नाति स्म सह नेमिना ॥ ७२ ॥ शुद्धया गन्धकाषाय्या, समुन्मृज्य वपुस्तयोः। कर्पूरागरुमिश्रेण, चन्दनेन व्यलिप्यत ॥ ७३ ॥ तैस्तैः स्वादुरसैर्भोज्यै–रभुञ्जातामुभावपि। मध्याह्नं चात्यवर्तेतां, संकथामन्थरौ मिथः ॥ ७४ ॥ लीलावनेषु वापीषु, क्रीडाद्रौ सरसीषु च। समं नेमिकुमारेण, रेमे सान्तःपुरो हरिः ॥७५॥ इति प्रतिदिनं गेलं–स्तैस्तैः केलिभिरच्युतः। न विना नेमिना चक्रे, चक्रभृत् कामपि क्रियाम् ॥ ७६ ॥

एकदा सौविदल्लांश्च, द्वारपालांश्च सर्वतः। निखिलानङ्गरक्षांश्च, समादिक्षदधोक्षजः ॥ ७७ ॥ हंहो ! नेमिकुमारो मे, प्राणेभ्योऽप्यतिवल्लभः। न कदापि न कुत्रापि, स्खलनीयस्ततो ह्ययम् ॥ ७८ ॥ प्रियाश्च सत्यभामाऽऽद्याः, कैटभाराति-

रादिशत् । युष्माभिर्देवरो नेमिः, खेलनीयोऽपशङ्कितम् ॥ ७९ ॥ हरेरन्तःपुरे नेमि–रेकाक्यपि ययौ ततः । " धीरा विकारहेतौ हि, व्याप्रियन्ते विशेषतः " ॥ ८० ॥ नर्मणः प्रतिनर्माणि, निर्विकारेण कुर्वता । नित्यं सर्वाः प्रजावत्यः, पर्यतोष्यन्त नेमिना ॥ ८१ ॥

अथ दामोदरो नेमे–र्दारस्वीकारहेतवे । अनोद्यत शिवादेवी–समुद्रविजयादिभिः ॥ ८२ ॥ सोऽप्यभाणीद्भृशं भामा–रुक्मिणीप्रमुखाः प्रियाः । कार्ये प्रायः प्रगल्भन्ते, तादृशे हि मृगीदृशः ॥ ८३ ॥ ततस्ताः प्रार्थयामासु–रुपयामाय नेमिनम् । सोऽपि प्रतारयामास, च्छेकैः प्रत्युत्तरैरिमाः ॥ ८४ ॥ तासां नेमेर्वचोलक्षै–र्विलक्षमनसामथ । साहायकमिवाधातुं, वसन्तर्तुरवातरत् ॥ ८५ ॥ ततश्चूतालिमत्तालि–वाग्मिनो दक्षिणानिलाः । आश्लिष्यन्नेमिमारब्ध–विवाहप्रार्थना इव ॥ ८६ ॥ दिनैः सार्धमवर्धन्त, वनपादपसंपदः । सहैव च हिमानीभिः, क्षीयन्ते स्म क्षपास्तदा ॥ ८७ ॥ ततः पौरान्वितः सार्ध–मवरोधेन माधवः । रन्तुं रैवतकोद्यान–मगमन्नेमिना समम् ॥ ८८ ॥ परिपीताऽऽसवाः स्वैरं, चिक्रीडुस्तत्र यादवाः । नव्यैः केचिदलंचक्रुः, कुसुमाभरणैः प्रियाः ॥ ८९ ॥ प्रेयसीनां प्रियं चक्रुः, केऽपि पल्लवहस्तकैः । चेतश्चालोभयन् केचि–न्नवैः कुसुमकन्दुकैः ॥ ९० ॥ रेवती–सत्यभामाद्याः, पुनरिद्धप्रसाधनाः । राम–केशवयो रामा, रेमिरे नेमिना सह ॥ ९१ ॥ तत्र काचिन्निजाश्लेष–भवैः कुरुबकैर्नवैः । पृष्ठन्यस्तस्तनी नेमे–श्चक्रे धम्मिल्लबन्धनम् ॥ ९२ ॥ काऽपि स्वमुखगण्डूष–पुष्यत्केसरसौरभात् । दूराभ्यधिकसौरभ्यं, नेमेः श्वासानिलं पपौ ॥ ९३ ॥ काऽपि स्वाङ्घ्रिप्रहारोत्थैः, कङ्केल्लिकुसुमैः कृताम् । अक्षिपन्नेमिनः कण्ठे, श्लथनीविर्नवस्रजम् ॥ ९४ ॥ आविर्भावितदोर्मूला, काचिदुच्चपयोधरा । स्व-

कटाक्षोऽर्द्धनेमे-र्मत्तानं निलकैव्यधात् ॥ ९५ ॥ प्रजावतीनां नाभञ्जि, यदृच्छा काऽपि नेमिना । वशिनामिन्द्रियार्था हि, समाप्नि न किंचन ॥ ९६ ॥ इति श्रीनेमिना सार्धं, पौरैरन्तःपुरेण च । चिक्रीड प्रत्यहं क्रीडा-वने विष्णुर्नवे नवे ॥ ९७ ॥ नेमिं कामाधातु-मनीश्वरतयाऽऽत्मनः । लज्जयेवातिचक्राम, वसन्तर्तुरतिद्रुतम् ॥ ९८ ॥

शिरीषमिषतः शस्त्रं, शस्त्राभ्यस्य इवार्पयन् । कामस्य जेतुकामस्य, नेमिं ग्रीष्मस्ततोऽभ्यगात् ॥ ९९ ॥ कोपादिव निदाघेन, पाटलाक्षेण पीडिताः । व्यलीकमूलमप्याशु, मानिन्यो मानमत्यजन् ॥ १०० ॥ ग्रीष्मे भीष्मरुचिर्भानु-रभूद्दिष्टप्रतापकृत् । यतः कालवशान्मित्रे-ऽप्यमित्रत्वमुदञ्चति ॥ १०१ ॥ मर्माविद्घर्मसंतप्ते-र्विष्णुरन्तःपुरैर्युतः । ययौ रैवतकोद्यान-वापीषु नलकूलगे ॥ १०२ ॥ भ्रातुर्जायाभिराकृष्य, समं नेम्यप्यनीयत । स्वकृत्यस्यानरोधेन, सन्तः सर्वानुरोधिनः ॥ १०३ ॥ वेगादागतं श्रीन्या, नीरं दागतांपनौ । दीर्घिकाऽर्घमिव प्रादा-दम्भोजाञ्चितवीचिभिः ॥ १०४ ॥ अम्भोरुहवनभ्राम्य-न्मधुव्रतव्याकुलान् । नापी व्यागतिकेवाभू-द्रुक्मिणीरमणं प्रति ॥ १०५ ॥ गोविन्दायोपदीचक्रुः, समेत्यारामिकाः पुरः । कुसुमर्तुसमयोत्पन्नान, पुष्पाकल्पाननेकशः ॥ १०६ ॥ तेषु काम्यतमं पूर्वं, रुक्मिण्याद्याः प्रिया हरेः । देवरं देवरम्यात्, नेमिनं पर्यधापयन् ॥ १०७ ॥ गन्धलुब्धभ्रमद्भृङ्ग-भयव्याकुलदोर्लताः । प्रदत्तांस्तानुपेन्द्रेण, ततस्ताः पर्यधुः स्वयम् । १०८ ॥ सखीभिः समं ताभि-र्नेमिनं धारयन् करे । केशवोऽवातरद्वाप्यां, लीलया कलहंसवत् ॥ १०९ ॥ स्मरसौगिकणाकल्प-स्वनभृत्करपाणयः । वीतक्री(व्री)डा जलक्रीडां, तेनिरे ते परस्परम् ॥ ११० ॥ शार्ङ्गिणा शृङ्गिकाम्भोभि-र्भामा भृशमताड्यत । अपरासां तु सर्वासां, व्यथाऽभवदरुंतुदा ॥ १११ ॥ आहन्यत स्तनोत्सङ्गे, रुक्मिणी चक्रपा-

णिना । अपराभिः कृताक्षेपै-र्दृष्टिक्षेपैरयं पुनः ॥ ११२ ॥ सुपर्णकेतुसंकेतात्, ताः समं नेमिनं प्रति । उदस्य जलभृङ्गाणि, सशृङ्गारं डुढौकिरे ॥ ११३ ॥ जितमारः कुमारोऽपि, प्रत्यैच्छत्तं जलप्लवम् । "दक्षाणामपि दुर्लक्षा-स्तादृशानां प्रवृत्तयः" ॥ ११४ ॥ नीव्यां नेमिजलाघात-शिथिलायामपि क्षणम् । सखीभिरिव भामायाः, क्षौममद्भिरधार्यत ॥ ११५ ॥ नेमिनीराहतिक्षोभ-त्रुटत्कञ्चुकबन्धना । लज्जमाना ययौ वापी-तीरदेशाय रुक्मिणी ॥ ११६ ॥ कपोलफलके काचित्, काचिद्वक्षोजकुट्टिमे । आरोहपुलिने काचि-न्नेमिना सिषिचे जलैः ॥ ११७ ॥ जलकेलिभरे तत्र, तास्तांस्तानथ विभ्रमान् । प्रादुश्चक्रुः कुमारस्य, स्मरजागरहेतवे ॥ ११८ ॥ यान्त्येव जलसंमर्गा-द्गुणिनोऽपि विपर्ययम् । मन्ये निवसनैस्तासां, तेन स्वार्थोऽप्यमुच्यत ॥ ११९ ॥ तथापि मदनो नेमे-र्नोन्मिमील मनागपि । सर्वथा भाविनं तस्मा-दात्मोच्छेदं विदन्निव ॥ १२० ॥

मुदा जाम्बवतीदत्त-करालम्बः शनैः शनैः । उत्ततार कुमारोऽथ, पुष्करिण्यास्तटीभुवि ॥ १२१ ॥ तस्यानुपदमुत्तेरु-र्दामोदरकृशोदराः । वमन्त्य इव लावण्यं, चेलैश्च्योतज्जलच्छलात् ॥ १२२ ॥ निर्मितानि तुषारांशु-किरणौघैरिव क्षणात् । उपानैषीद्दुकूलानि, नेमेरन्यानि रुक्मिणी ॥ १२३ ॥

भद्रासने निवेश्याथ, नेमेः काचित् प्रजावती । केशानुत्थाप्य कुसुमै-र्बबन्ध कबरीं नवाम् ॥ १२४ ॥ काऽपि स्वर्णसवर्णाङ्गी, स्फुरद्घर्मोदबिन्दुकम् । निर्व्याजं वीजयामास, कुमारं सिचयाञ्चलैः ॥ १२५ ॥ अथ नेमेः क्रमाम्भोज-

१ आरोहः-नितम्बः । २ वस्त्रात् क्षरतो जलस्य मिषात् । ३ 'नुद्धाप्य' प्रतिद्वय० ।

गंगादनपुरःसरम् । सत्यभामामुखेनैता, वकुमारेभिरे पुरः ॥ १२६ ॥ अयं कुमार ! संसारः, सारवान् दारसंग्रहात् । श्रीमानपि पुमान् रेणु-रन्तरेण सधर्मिणीम् ॥ १२७ ॥ महेन्द्र-चन्द्रमुख्याना-मिन्द्राणी-रोहिणीमुखाः । पत्न्यः सन्ति जगत्ख्याताः, कोऽस्ति यो गृहिणीं विना ॥ १२८ ॥ तवेदमीदृक्सौभाग्य-मिदं रूपमिदं वयः । गुणोदारान् विना दारान्, सर्वं जानीहि निष्फलम् ॥ १२९ ॥ धर्मश्चार्थश्च कामश्च, पुरुषार्थास्त्रयोऽप्यमी । पुंसां सधर्मचारिण्या-मेव देव ! व्यवस्थिताः ॥ १३० ॥ पुण्यैकपात्रं पुत्रोऽपि, कलत्रादेव जायते । यः पितुस्त्वमिव ख्याति, त्रिलोक्यां तनुतेतमाम् ॥ १३१ ॥ विषया अपि शब्दाद्याः, प्रकामं हृदयंगमाः । भवन्ति स्त्रीजनेनैव, लवणेन रसा इव ॥ १३२ ॥ किं च पाणिग्रहे कामं-स्त्वत्तामधिको भवेत् । पितरौ भ्रातरश्चैते, यद्धरत्यमितां मुदम् ॥ १३३ ॥ विवाहोत्साहविषये, तदेवर ! वरोऽस्तु नः । समुद्रविजयः शिवादेव्या, मनोरथरथेऽस्तु च ॥ १३४ ॥ इति प्रार्थयमानासु, तासु नेमिं जनार्दनः । द्रुतमेत्याभ्यधाद्भ्रातः !, कुरु प्रीताः प्रजावतीः ॥ १३५ ॥ अथ तीर्थकरोऽस्मीति, नेमेऽस्मानवमन्यसे । नाभेयाद्यैर्न किं पूर्वं, बभूवे गृहमेधिभिः ? ॥ १३६ ॥

इति राजनता नीते, कुमारे मुकुमारनाम । आजग्मतुः शिवादेवी-समुद्रविजयौ जवात् ॥ १३७ ॥ अवादीच्च शिवादेवी, वत्स नेत्रानन्दनोऽस्मन्न । त्रिलोके तव रूपस्य, जीव कल्पशतानि च ॥ १३८ ॥ सकलाभिः कलाभिश्च, ज्ञानेन च नयेन च । मन्तुल्यः नागो नास्ति, कोऽपि कापि भुवस्तले ॥ १३९ ॥ तात ! मातरमात्मीयां, प्रार्थनाभङ्गदुर्मुखीम् । मा कृथाः शिवादेव्याऽसि-मान्तोऽसि भुञ्जेऽधुना ॥ १४० ॥ इत्युक्त्वा लम्बिते नाहो, तया नेमिरचिन्तयत् । पश्याहो संकटं

कीदृ-ग्जातमस्मादृशामपि ? ॥ १४१ ॥ एकतः कुरुते माता, मम पाणिग्रहाग्रहम् । तीर्थप्रवर्तनं कार्य-मनूढेन मयाऽन्यतः ॥ १४२ ॥ यो वा केवलिभिर्दृष्टः, सोऽर्थोऽवश्यं भविष्यति । अनतिक्रमणीया तु, मातुराज्ञा मनस्विनाम् ॥ १४३ ॥ इत्यालोच्य वचो मातु-र्नेमिश्च प्रत्यपद्यत । सानन्दः सपरीवारः, केशवश्चाविशत् पुरीम् ॥ १४४ ॥

योग्यां राजीमतीं नेमेः, सोऽथ सर्वाभिसंमताम् । प्रहित्य चतुरामात्य-मुग्रसेनमयाचत ॥ १४५ ॥ प्राचीनजन्मसंबन्धा-द्गुणौघश्रवणादपि । दर्शनाच्च कचिन्नेमेः, पूर्वमप्यनुरागिणी ॥ १४६ ॥ ददौ सोऽपि कुमाराय, कुमारीं तां प्रहर्षुलः । अमूदृशाय जामात्रे, सचेताः स्पृहयेन्न कः ? ॥ १४७ ॥ ( युग्मम् ) अथ कंसारिणा लग्नं, पृष्टः क्रोष्टुकिरभ्यधात् । उत्तालजलदः कालः, प्रवृत्तो देव ! संप्रति ॥ १४८ ॥ कुशलैरत्र कार्याणि, न कार्याण्यपराण्यपि । किं पुनः पुण्यपात्राणां, पाणिग्रहमहोत्सवः ? ॥ १४९ ॥ तन्मरालचमूकालः, प्रावृट्कालो विलम्ब्यताम् । इत्युक्ते तेन सौत्सुक्यं, समुद्रविजयोऽवदत् ॥ १५० ॥ समर्थो न ह्यसावर्थः, कालक्षेपे विचक्षण ! । नेमिः कथंचिदुद्वाह-स्वीकारं कारितोऽस्ति यत् ॥ १५१ ॥ इत्यालोक्य तदौत्सुक्यं, ध्यात्वा क्रोष्टुकिरब्रवीत् । श्रावणस्य सिता षष्ठी, तर्हि तिष्ठत्यगर्हिता ॥ १५२ ॥ तेनेति दत्तमासन्नं, दिनं विज्ञाय तज्जवात् । आमन्त्रणाय मां विष्णुः, प्राहिणोद्युष्मदन्तिके ॥ १५३ ॥ इत्युक्त्वा मृगनाभ्यङ्कां !, कोरकः कुङ्कुमाक्षराम् । आर्पयत्तपस्सःसूनोः, करे कुङ्कुमपत्रिकाम् ॥ १५४ ॥ घनसाररसाकीर्णां, स्नेहचूर्णाङ्किताामिव । तामुद्वेष्य प्रहृष्टात्मा, सभायां सोऽप्यवाचयत् ॥ १५५ ॥

स्वस्ति द्वारवतीपुर्याः, केशवो नागसाह्वये । धर्मनन्दनमालिङ्ग्य, वार्ताभिरभिनन्दति ॥ १५६ ॥ मत्वा कुशल-

मस्माकं, विधेयं गुनिमन्मनः । स्वयमानन्दनीयाश्च, निजाभ्युदयवार्तया ॥ १५७ ॥ कार्यं चेदमिहास्माभि-र्मुमुक्षुर्विजितेन्द्रियः । विवाहाय बलात्नेमि-रङ्गीकारमकार्यत ॥ १५८ ॥ तदमामान्यसौजन्यैः, सदारैः सानुजन्मभिः । लग्नस्योपरि युष्माभि-रुपस्थातव्यमञ्जसा ॥ १५९ ॥ किं चान्यद्भ्रातृजोद्वाह-कार्याणामधिकारिणीम् । ममैवात्मना देवीं कुन्तीमानेतुमर्हथ ॥ १६० ॥

श्रीगांगुशीनलात्तस्मा-न्नारायणनिमन्त्रणात् । सदैव विशदैस्तेषां, मनोभिः कुमुदायितम् ॥ १६१ ॥ राज्यभारं समर्प्याथ, पितुः सत्कृत्य कोरकम् । आबद्धतोरणश्रेणीं, मञ्चाञ्चितचतुष्पथाम् ॥ १६२ ॥ हृषीकेशसमाहूत-महीपतिशताकुलाम् । उत्तुङ्गकदलीस्तम्भ-परिवारितगोपुराम् ॥ १६३ ॥ प्रतिमन्दिरमारब्ध-वधूवरगुणस्तुतिम् । हरेः पुरीमुपेयाय, सकुटुम्बो युधिष्ठिरः ॥ १६४ ॥ (त्रिभिर्विशेषकम्) विष्वक्सेनः ससेनोऽथ, प्रत्युद्याय सगौरवम् । वैवाहिकक्रियारम्भ-संरम्भिरमणीजनम् ॥ १६५ ॥ उद्दामगलगान-वाचालाखिलभूमिकम् । नवीनामुक्तनिर्णिक्त-मुक्तोच्चूलजटालितम् ॥ १६६ ॥ शिवादेवीसमादेश-समुत्सुकपरिच्छदम् । रम्भास्तम्भादिमाङ्गल्य-मण्डितोद्वाहमण्डपम् ॥ १६७ ॥ वेगाटनत्रुटच्चेटी-हारतारकितोदरम् । श्रीसमा नितं सौध-मानैषीद्धर्मनन्दनम् ॥ १६८ ॥ (चतुर्भिः कलापकम्)

गुरुजनानां यथौचित्य-मन्योऽन्यप्रणतिक्रमे । पादोपगूढमानम्य, शिवा कुन्तीमभाषत ॥ १६९ ॥ असौ देवि ! त्वदीयाखी-र्यदपादपपङ्कजः । यदीदृशस्य पुत्रस्य, मातृशब्दं वहाम्यहम् ॥ १७० ॥ निजभ्रातृतनूजस्य, वृद्धिर्येयं तवैव सा ।

१ गिरिरा- शोभितम ।

कुरु सर्वाण्यतः कृत्या–न्युचितानि पितृष्वसुः ॥ १७१ ॥ वचनेनामुना तस्याः, पीयूषेणेव वल्लरी । जननी पाण्डवेयानां, विशेषोच्छ्वसिताऽभवत् ॥ १७२ ॥ नेदीयसि ततो लग्ने, प्रीत्यालिङ्गितचेतसाम् । समुद्रविजयादीनां, दशार्हाणां निदेशतः ॥ १७३ ॥ देवी कुन्ती शिवादेवी, देवकी रोहिणी तथा । कृतमाङ्गल्यवेषाश्च, समेताः सर्वमातरः ॥ १७४ ॥ रेवती-रुक्मिणी-भामा–प्रमुखाः प्रहसन्मुखाः । प्राणेशपुत्रवत्यश्च, प्रजावत्योऽखिला अपि ॥ १७५ ॥ विवाहदीक्षाविधये, संस्थाप्य प्राङ्मुखं वरम् । मङ्गलोद्गारमुखराः, स्नपयामासुरादरात् ॥ १७६ ॥ ( चतुर्भिः कलापकम् ) पाणावर्पितनाराचं, बद्धप्रतिसरं वरम् । शिवायाः प्रेक्षमाणाया–स्तृप्तिरासीन्न नेत्रयोः ॥ १७७ ॥ वध्वाः प्रसाधनकृते, शिवा-कुन्त्यादयस्ततः । बहलोल्लूलकल्लोल–मुग्रसेनगृहं ययुः ॥ १७८ ॥ तत्र साभ्यङ्गनेपथ्यां, तां करोपात्तसायकाम् । वृद्धाः सिद्धार्थमूर्द्धानं, स्त्रियः कन्यामसिस्नपन् ॥ १७९ ॥ धवलक्षौमवसनां, बद्धाश्यामशिरोरुहाम् । प्रसाधनाय सैरंध्य–स्तां चतुष्के न्यवेशयन् ॥ १८० ॥ नैसर्गिकवधूरूप–पानैकरसमानसा । प्रसाधनविलम्बाय, सस्पृहाऽभूत् क्षणं शिवा ॥ १८१ ॥ कुन्त्याश्च दर्शयामास, वध्वाः स्वाभाविकीं श्रियम् । देवि ! पश्यालिकालिम्ना, स्पर्द्धतेऽस्याः कचोच्चयः ॥ १८२ ॥ अष्टमीशशिनः शोभा, भालेन परिभूयते । कर्णान्तेवासिनी नेत्रे, विभ्रमाभ्यासशालिनी ॥१८३॥ दृक्सुधादीर्घिकातीर–वल्लीलीलाभृतौ भ्रुवौ । जगद्दृष्टिमृगीपाशौ, कर्णपाशौ न संशयः ॥ १८४ ॥ नयनोत्पलनालश्री–र्नासावंशो विलोक्यताम् । कपोलफलकावेतौ, स्फारकाविव मान्मथौ ॥ १८५ ॥ ग्रीवा रतिपतेर्जैत्र–यात्राकम्बुविडम्बिनी । मृणालकन्दलीलक्ष्मी–लुण्टाकललितौ भुजौ ॥ १८६ ॥ वक्षोऽवनेस्तु

१ सुवर्णबुद्बुदौ । २ 'वक्षोवनेऽस्तु' प्रत्यन्त० ।

किं नाम, जगत्यौपम्यमश्नति? । मुष्टिग्राह्यस्य मध्यस्य, माने मन्येऽतिभूयसी ॥ १८७ ॥ दत्ता तद्भङ्गभीत्येव, रोमाली लोहपट्टिका । कीर्तिस्तम्भोपमावूरू, मद्वधूस्तशिल्पिनः ॥ १८८ ॥ जङ्घे लङ्घयतः सर्व-मुपमागोचरीकृतम् । पादौ च हसतः पद्मानां लक्ष्मीं नखांशुभिः ॥ १८९ ॥ न विश्वसिमि भाग्याना-मियत्यपि गते परम् । वधूरेतादृशी गेहं, यन्ममालंकरिष्यति ॥ १९० ॥ नाऽथ नीभिः शिवादेशा-दलंकर्तुं विभूषणैः । समारभ्यत वर्षाभिः, कुसुमैरिव मालती ॥ १९१ ॥ सर्वाङ्गालंकृता कामं, रेजे राजीमती तदा । सरसीव नवोत्फुल्ल-कैरवाराममण्डिता ॥ १९२ ॥ आकल्पैः पीवरश्रीकं, सा मुहुर्वीक्ष्य दर्पणे । रोनिष्यमाणमात्मानं, नेमये समभावयत् ॥ १९३ ॥ ततोऽन्तर्मातृकागार-मवस्थाप्य वधूं मुदा । शिवादयः प्रमोदेन, स्थानिकमुपाययुः ॥ १९४ ॥

स्नातश्चन्दनलिप्ताङ्गो, मुक्ताभरणभूषितः । वरः प्रीणितनेत्राणि, पारिणेत्राणि पर्यधात् ॥ १९५ ॥ मौलौ धृतसितच्छत्रो, धारणीधूतचामरः । परिणेतुं प्रतस्थेऽथ, स्थितो रथवरे वरः ॥ १९६ ॥ केऽपि स्तम्बेरमान् केऽपि, रथान् केऽपि तुरङ्गमान् । आरूढाः प्रौढलक्ष्मीकाः, कुमाराः पुरतोऽचलन् ॥ १९७ ॥ अन्ये प्रचेलुराकल्प-पराजितविडौजसः । आरुह्यैरावणनिभा-निभानुभयतो नृपाः ॥ १९८ ॥ राम-कृष्णौ दशार्हाश्च, वर्षीयांसस्तथाऽपरे । आरुह्य कुञ्जरश्रेष्ठान्, पृष्ठतस्तु प्रतस्थिरे ॥ १९९ ॥ प्रास्थायि स्वैरमास्थाय, शिबिकाः स्यूतमौक्तिकाः । कुन्ती शिवादिभिस्तेषां, पश्चाद्वैवाहिनीजनैः ॥ २०० ॥ इभबृंहितमन्वीय-हेषा तुरङ्गवा अपि । नमन्ततोऽप्यथीयन्त, तासां मङ्गलगीतिभिः ॥ २०१ ॥ तानि तान्यवदातानि,

१ परिणेतृमण्डनीनि अलंकारादीनि । २ पराक्रमान ।

गुणैर्जितसितद्युतेः । पेठुर्नेमिकुमारस्य, प्रीता वैतालिकाः पुरः ॥ २०२ ॥ नेत्राम्भोजैश्च लाजैश्च, कीर्यमाणः पदे पदे । श्लाघ्यमानचरित्रश्च, दूरं पौराङ्गनाजनैः ॥ २०३ ॥ स्फारं प्रत्यापणद्वारं, प्रतीच्छन्मङ्गलं मुहुः । उग्रसेनगृहाभ्यर्ण-भूमिमभ्याययौ वरः ॥ २०४ ॥ ( युग्मम् । )

तदभ्यागमसंभूतै-स्तैस्तैः कलकलैः कलैः । मुदं राजीमती प्राप, केकिनीवाब्दशब्दितैः ॥ २०५ ॥ सृज्यतां चिररात्राय, नेत्रयोः सखि ! पारणम् । इत्यालप्य वयस्यास्तां, मार्गवातायनेऽनयन् ॥ २०६ ॥ तमष्टभवभर्तारं, कुमारं वीक्ष्य सस्पृहा । सा तदापदनिर्वाच्या-मानन्दास्यन्दिनीं दशाम् ॥ २०७ ॥ सस्तम्भं सहरोमाञ्चं, सस्वेदं सहवेपथु । नव्यनव्योल्लसद्भावं, बिभरामास सा वपुः ॥ २०८ ॥ क्षणादथ वितीर्णौष्ठ-वैवर्ण्याः क्लमितस्रजः । प्रसरन्ति स्म निःश्वासा, राजीमत्या मुखाम्बुजात् ॥ २०९ ॥ तमाकस्मिकमुत्पातं, विलोक्यात्यन्तमाकुलाः । श्यामीभवन्मुखाः सख्यः, पप्रच्छुस्तां समुत्सुकाः ॥ २१० ॥ हहा ! सखि ! किमेतत्ते, दुर्निमित्तमुपस्थितम् ? । निषसाद विषादोऽयं, यदानन्दपदे तव ॥ २११ ॥ सा जल्पति स्म सख्यः ! किं, निर्भाग्या कथयामि वः ? । स्पन्दते दक्षिणं चक्षु-रूरुः स्फुरति दक्षिणः ॥ २१२ ॥ सख्योऽवोचन् वचस्ते धिक्, सखि ! शान्तममङ्गलम् । सर्वतोऽपि करिष्यन्ति, कुशलं कुलदेवताः ॥ २१३ ॥ मुञ्चान्यदभिषिञ्च स्वं, स्वभर्तुर्दर्शनामृतैः । संतापस्य तवास्य स्ता-दिदमेव महौषधम् ॥ २१४ ॥

इति प्रह्वीकृता यावत्, सखीभिः सा विलोकते । लोकारब्धस्तवस्ताव-द्वरो हड्मार्गमभ्यगात् ॥ २१५ ॥ स च गच्छन् पुरोऽश्रौषी-द्विक्लवं तुमुलस्वरम् । इत्थमार्तध्वनिः कोऽय-मित्यप्राक्षीच्च सारथिम् ॥ २१६ ॥ जानतोऽपि कुमारस्य, सूतस्त-

ग्गमनीकथन्। नन्वेते सर्वजातीया, जन्तवः सन्त्युपाहृताः ॥ २१७ ॥ एते हि तव वीवाहे, यादवानामनेकशः। मांसपाकगौरवं कर्तुं, भोजेनानिन्यिरे मुदा ॥ २१८ ॥ अथाऽऽह स्म वहन्नेमिः, कृपाकण्टकितं वपुः। हहा! धिगेष संसारः, सागरः गरीयसमनाम् ॥ २१९ ॥ तदेते यत्र तत्रायं, नीयतां सारथे! रथः। स्वच्छन्दचारिता भूयो-ऽप्यमीभिरनुभूयताम् ॥२२०॥ ततः सपदि सूतेन, तदादेशात्तथा कृते। चिक्षेप चक्षुषी नेमि-स्तमभि प्राणिवाटकम् ॥ २२१ ॥ तत्र कांश्चिद्गले बद्धान्, पदे पदांश्च कांश्चन। कांश्चित्र पञ्जरे क्षिप्तान्, दीनवक्त्रान् ददर्श सः ॥ २२२ ॥ नेमिमालोक्य ते विश्व-प्रियंभावुकदर्शनम्। पाहि पाहीति पूत्कुः, सर्वेऽपि स्वस्वभाषया ॥ २२३ ॥ जीवांस्तान् मोचयामास, नेमिः कारुणिकाग्रणीः। न्यवर्तयत निर्दयात, स्यन्दनं सदनं प्रति ॥ २२४ ॥

समुद्रविजयः कृष्णः, सीरपाणिः परेऽपि च। शिवाद्याश्च स्त्रियस्त्यक्त-यानास्तत्पुरतोऽभवन् ॥ २२५ ॥ ततः समं शिवादेव्या, समुद्रविजयोऽवदत्। कस्मादकस्मादेवास्मा-द्विमुखोऽभूस्त्वमुत्सवात् ॥ २२६ ॥ नेमिर्जगाद तातामून्, प्राणिनो बन्धवेष्टितान्। दृष्ट्वाऽद्राक्षं निपक्षौघै-रात्मानमपि वेष्टितम् ॥२२७॥ स्वमुद्वेष्टयितुं तेभ्यो, यतिष्ये तदतः परम्। विपक्षाक्रान्तमात्मानं, सुधीर्ननु सहेत कः? ॥२२८॥ क नु ते रिपवस्तात!, प्रलप्यालमिदं ततः। एवमाभाषितस्ताभ्यां, नेमिः पुनरभाषत ॥ २२९ ॥ अस्मि वैरिभिरष्टाभि-र्वेष्टितः कर्मनामभिः। येषां जितान्यशौण्डीरः, शौण्डीरोऽपि न किंचन ॥२३०॥ गुप्तिपालैरिवामीभिः, पुरा नरककारके। क्षिप्त्वाऽहं छेदभेदाद्या, लम्भितो भूयसीर्व्यथाः ॥ २३१ ॥ बन्दिकारैरिवामीभि-

१ 'कारणं' प्रतिद्वय०। २ 'बन्दकारै' प्रतिद्वय०।

४८

नीत्वा तिर्यग्भवाटवीम्। शीतातपादिभिः क्लेशै–र्योजितोऽस्मि सहस्रशः ॥२३२॥ अहमेभिर्मनुष्यः स–न्नृपद्वारि विडम्बितः। मज्जितश्च पयोराशौ, मुषितश्च स्थलाध्वनि ॥ २३३ ॥ क्रूरैरेतैरपत्यानि, हतानि मम पश्यतः। सर्वदाऽप्यहितैरेभिः, किं किं नापकृतं मम ? ॥ २३४ ॥ एतैर्दत्वा कुदेवत्वं, पारवश्यभवानि मे। पराभवसहस्राणि, व्यश्राण्यन्त दुरात्मभिः ॥ २३५ ॥ इत्यनेकां सरंस्तेषा–मपकारपरम्पराम्। एष संवर्मयिष्यामि, मूलोच्छेदाय वैरिणाम् ॥ २३६ ॥ आरुह्य समितिश्लाध्य–मुच्चैः संयमवाजिनम्। तपःशस्त्रेण तीक्ष्णेन, क्षपयिष्याम्यरीनमून् ॥ २३७ ॥

इत्यूर्जस्विनि वाग्वज्रे, कर्णकोटरखेलिनि। शिवा-समुद्रविजया–वातुरौ द्वौ मुमूर्च्छतुः ॥२३८॥ तौ समाश्वास्य कंसारि–र्नेमिं व्याहरदादरात्। दयालुर्हृदयालुश्च, कुमार! त्वत्परोऽस्ति कः? ॥२३९॥ अमी दुःखादमोच्यन्त, जन्तवः कृपया त्वया। दुःखोदन्वति पात्येते, सुतरां पितरौ कथम्? ॥२४०॥ पितरौ दुष्प्रतीकारा–विति सर्वविदो विदुः। तत्रापि विमुखश्चेत्त्वं, तत् कः पान्थोऽस्तु सत्पथे? ॥२४१॥ यस्मिन्नस्माकमानन्दो, यत्र पित्रोर्मुदः पराः। वधू राजीमती यत्र, तत् स्वीकुरु तमुत्सवम् ॥२४२॥ हसन्नेमिकुमारोऽथ, निजगाद जनार्दनम्। किमानन्दपदे पित्रोः, शोकशङ्कुमुदाहरः? ॥२४३॥ यमजिह्वोपमस्फूर्ज–ज्ज्वालाजालात् प्रदीपनात्। निर्गच्छति सुते पित्रोः, किमानन्दो न जायते ? ॥ २४४ ॥ निर्यन्नपारसंसार–प्रज्वलज्ज्वलनोदरात्। ततोऽहं किमु न प्रीत्यै, पित्रोर्मत्सुखकाङ्क्षिणोः ? ॥ २४५ ॥ यदि भागहरौ स्यातां, पितरौ मम कर्मणाम्। ध्रुवं तदा तदादेशात्, स्वीकुर्यां कार्यमीदृशम् ॥ २४६ ॥ परं न कोऽपि कस्यापि, भागहृत् कर्मणां भवेत्। आ रङ्कशक्रतः सर्वैः, कर्म

१ " आतुरौ पितरौ नेमे–र्मूर्च्छेत्खेदौ मुमूर्च्छतुः " ॥ प्रतित्रयपाठः ।

स्वं स्वं तु भुज्यते ॥ २४७ ॥ कषाय-विषयाहूतै-रेतैर्हन्मर्मभेदिभिः । ढौक्यन्ते यानि दुःखानि, तेभ्यो विभ्यत्तपः श्रये ॥ २४८ ॥ निःशेषमदनुष्ठान-ज्यायसस्तपसः खलु । तिमिरारेस्तमांसीव, नश्यन्त्येतानि दूरतः ॥ २४९ ॥

अथ माता शिवादेवी, पर्यश्रुर्नेमिमभ्यधात् । सुकुमारः कथं वत्स !, सोढासि क्लेशमीदृशम् ? ॥ २५० ॥ आतपोऽनातपत्रस्य, वपुर्नाधिष्यते तव । हहा ! शीतं च हेमन्ते, तादृगावरणं विना ॥ २५१ ॥ काननेष्वनगारेण, प्रत्यूहो देहवानिव । सहनीयस्त्वया वत्स !, वर्षावारिभरः कथम् ? ॥ २५२ ॥ याश्चानाराचदुष्प्रेक्षां, परीषहमहाचमूम् । कथं त्वमभिधान्तीं-ममग्रायः सहिष्यसे ? ॥ २५३ ॥ केशहस्तं मया हस्तै-र्निजैः संवर्धितं स्वयम् । कथं भ्रमरसंकाश-मेनमुत्पाटयिष्यसि ? ॥ २५४ ॥ अथोचे जननीं नेमि-र्मातः सत्यमसन्त्यपि । दुःखानि पुत्रभाण्डानां, प्रीतिर्वो दर्शयत्यसौ ॥ २५५ ॥ जीवोऽयं यो पराधीनः, सहते दुःखसंहतिम् । तामेतामात्मतन्त्रश्चेत्, किं न मुच्येत बन्धनात् ? ॥ २५६ ॥ संतोषायत्तचित्तानां, यत्तु संयमिनां सुखम् । लोभलम्पटयोस्तन्न, मानवेन्द्र-सुरेन्द्रयोः ॥ २५७ ॥ चिन्ताज्वालाढ्यनिर्याय, गृहवासदवानलात् । कोऽन्यसंयमाराप्या-मात्मनिर्वापणं सुधीः ॥ २५८ ॥ समतानिम्नगापूरे, दूरमुल्लसिते सति । अभितो विषयग्रामः, समग्रोऽपि निश्यति ॥ २५९ ॥ प्रेयसी समता यस्य, सर्वदेवानुकूलिकी । विरमेत् परमानन्द-स्तस्य नैव कदाचन ॥ २६० ॥ उपक्रम्ये प्रियां कर्तुं, मातस्त्वामेव तद्ध्रुवम् । आनन्दकमयीं ग्रीष्मे, चन्द्रिकां को न सेवते ? ॥ २६१ ॥ इति सर्वेऽप्युपश्रुत्य, वाचोयुक्तिमनुत्तराम् । नेमेर्निःसंगतागूढं, चेतो निश्चिक्यिरेतराम् ॥ २६२ ॥ ततो मुक्त्वा पुरो मार्गं, शोकावेशविसंस्थुलाः ।

१ नि.भङ्गोय यांगी त्वाम । २ आरब्धे ।

मूर्च्छन्ति स्म रुदन्ति स्म, खिद्यन्ते स्म च ते भृशम् ॥ २६३ ॥ सारथिप्रेरितरथो, मथ्नन् मोहवरूथिनीम् । भटश्चारित्रराजस्य, नेमिरागान्निकेतनम् ॥ २६४ ॥

ततः सारस्वतादित्य–प्रमुखास्त्रिदिवौकसः । समयाख्याननिष्णाताः, कुमारान्तिकमाययुः ॥ २६५ ॥ कल्पोऽयमिति ते नेमे–र्जानतोऽपि व्यजिज्ञपन् । सर्वजगज्जीवहितं, प्रभो ! तीर्थं प्रवर्तय ॥ २६६ ॥ सांवत्सरिकदानाय, स्वामिनोऽथ नरामरैः । स्वर्णोत्करा व्यधीयन्त, द्वारकात्रिकचत्वरे ॥२६७॥ प्रावर्तत ततो दानं, यावदिच्छमहर्दिवम् । अहो ! लोकोत्तरः कश्चित्, पन्थास्तीर्थकृतामयम् ॥२६८॥ कुन्ती दृष्ट्वा शिवादुःखं, निनिन्दागमनं निजम् । राजीमतीमभाग्येति, शुशोच द्रौपदी पुनः ॥ २६९ ॥ नानासांसारिकक्लेश–साक्षात्कारकदर्थिताः । गृहत्यागोन्मुखं नेमिं, पाण्डवास्तुष्टुवुर्मुहुः ॥ २७० ॥

प्रत्यावृत्ते वरे तस्मिन्, सानुरागे तपःश्रियाम् । लतेव परशुच्छिन्ना, राजीमत्यपतद्भुवि ॥ २७१ ॥ सखीशीतोपचारेण, सा पुनः प्राप्य चेतनाम् । विलापांस्तुमुलांश्चक्रे, कृतं हा दैव ! किं त्वया ? ॥ २७२ ॥ भोगेभ्यो विमुखी मन्ये, दातुं दुःखमिदं त्वया । दर्शयित्वा वरं नेमिं, कृताऽहं भोगसंमुखी ॥ २७३ ॥ प्रागप्येतन्मया ज्ञात, नायं मे भविता वरः । आरोहति कटुस्तुम्बी, किमु कल्पमहीरुहम् ? ॥ २७४ ॥ आत्मैकशरणं स्वामिन् !, मामादृत्यात्यजः कथम् ? । जहाति जातु नाङ्कस्थं, शशमप्यादृतं शशी ॥ २७५ ॥ भूर्भुवःस्वस्त्रयेऽप्येक–स्त्वमासीत् कल्पपादपः । मां तु प्रत्यन्यथाकारं, कथंकारमभूः प्रभो ! ? ॥ २७६ ॥ अरण्यमालतीपुष्प–त्पुष्पसब्रह्मचारिभिः । नाथ ! त्वया विमुक्तायाः, किमेभिर्मम भूषणैः ? ॥ २७७ ॥ स्वामिन् ! मनोहरेणापि, हारेण किमनेन मे ? । कन्दर्पकलहे येन, कण्ठे पाशायितं न ते ॥ २७८ ॥ इमे

स्वमये स्वामिन्!, कुण्डले मे विडम्बना । न मे स्पृसि सोल्लुण्ठे, लुलिते त्वत्कपोलयोः ॥ २७९ ॥ एषा संप्रति दुःखाय, मे नव्या मेखला खलु । नैव या स्पृसि स्पृष्टा, पाणिना प्रणयात्त्वया ॥ २८० ॥ एतौ वहुद्युती वाहो–र्मम रत्नाङ्गदौ गदौ । निमग्नतुरश्लेषं, न यौ ते कण्ठकन्दले ॥ २८१ ॥ इति नेमिं प्रति प्रेम्णा, व्याहरन्ती मुहुर्मुहुः । तत्याज सर्वमाकल्प–जातं राजीमती तदा ॥ २८२ ॥ मुहुर्लुलोठ भूपीठे, वक्षोऽभीक्ष्णमताडयत् । चक्रन्द पुनरुक्तं च, साऽथ नेमिवियोगिनी ॥ २८३ ॥ इत्थं विसंस्थुलास्तास्ताः, प्राणेशविरहोचिताः । सर्वतः कुर्वतीं चेष्टाः, सख्यस्तामेवमभ्यधुः ॥ २८४ ॥ सखि ! प्रक्षीणदाक्षिण्ये, नीरसेऽस्मिन्नलौकिके । प्रदत्तदेहसंदेहः, स्नेहः कोऽयं वरे तव ? ॥ २८५ ॥ अन्येऽपि सन्ति रूपेण, विक्रमेण क्रमेण च । ख्याताः अवकुलोत्तंसाः, कुमारास्तदनेन किम् ? ॥ २८६ ॥ कुरु तत् सखि ! मा खेद–मनुरूपेण केनचित् । वरेण योजयिष्यामस्त्वां चन्द्रेणेव रोहिणीम् ॥ २८७ ॥ अन्येन वृतपूर्वाऽपि, कन्याऽर्हति वरान्तरम् । केनापि हेतुना याव–न्नास्याः पाणिर्न पीड्यते ॥ २८८ ॥ अथ भोजात्मजा वक्र–भीमभ्रुकुटिरभ्यधात् । सख्यः ! संप्रति वः केय–मविमृश्य वचस्विता ॥ २८९ ॥ देवेभ्यः प्रियं नेमि–मनारतमयाचिषम् । सोऽपि पित्रनुरोधेन, मामुद्वोढुं प्रपन्नवान् ॥ २९० ॥ सकृच्च कन्या दीयते, ततः कुलकलङ्किनीम् । नेमेरन्यो वरस्तेऽस्तु, वाचमेवं न वः क्षमे ॥ २९१ ॥ नाभूत्तावत् स्मराचार्यो, नेमिः सख्यः ! करोमि किम् ? । भूयोभिः सुकृतैर्भूया–द्व्रताचार्यः स एव मे ॥ २९२ ॥ भूयोऽप्यनल्पजल्पाकीः, प्रतिषिध्य सखीः कृपा । प्रतीक्षामास सा दीक्षा–कालमुत्तालमानसा ॥ २९३ ॥

१ रोगी । २ अलङ्कारसमूहम् ।

दत्त्वा नेमिकुमारोऽपि, दानं वार्षिकमद्भुतम् । भवाब्धियानपात्राय, चारित्रायोत्सुकोऽभवत् ॥ २९४ ॥ एत्य दीक्षाभिषेकादि, विधाय विधिवत्सुराः । शिबिकामुत्तरकुरुं, नाम्नाऽध्यारोपयन् जिनम् ॥ २९५ ॥ शक्रेशानौ जिनेशाग्रे, दधतुस्तत्र चामरे । छत्रं सनत्कुमारोऽपि, माहेन्द्रः खड्गमद्भुतम् ॥ २९६ ॥ ब्रह्मेन्द्रो दर्पणं पूर्ण-कलशं लान्तकेश्वरः । शुक्रेशः स्वस्तिकं रम्यं, सहस्रारः शरासनम् ॥ २९७ ॥ श्रीवत्सं प्राणताधीशो, नन्द्यावर्तं तथाऽच्युतः । शस्त्राण्यधारयन्नाशु, शेषेन्द्राश्चमरादयः ॥ २९८ ॥ समुद्रविजयेनाथ, राम-केशव-पाण्डवैः । देवक्या शिवया कुन्त्या, चानुयातोऽचलज्जिनः ॥ २९९ ॥ परमङ्गलगीतानि, शिवाद्याः साश्रुलोचनाः । विवाहवजगुर्नाहो !, मोहस्याज्ञा महीयसी ॥ ३०० ॥ गृहाभ्यर्णमुपेतस्य, नेमिनाथस्य दर्शनात् । राजीमत्यास्तदा बाढं, पुनर्जागरिताः शुचः ॥ ३०१ ॥ तद्भोजदुहितुर्दुःखं, ज्ञानादपि जनादपि । जानन्नपि जिनो राग-वैरिणा नाभ्यभूयत ॥३०२॥ ततो रैवतकोत्तंसे, सहस्राम्रवणे प्रभुः । नरा-मरेन्द्रवाह्यायाः, शिबिकाया अवातरत् ॥ ३०३ ॥ प्रतीक्ष्य भूषणश्रेणिं, प्रभोस्तत्र विमुञ्चतः । अदादिन्द्रो मुकुन्दाय, योजितोभयपाणये ॥ ३०४ ॥ अथ वर्षत्रिशत्यायुः, पूर्वाह्णे त्वाष्ट्रे[1] विधौ । सितायां नभसः[2] षष्ठ्यां, कृतषष्ठः शिवात्मजः ॥ ३०५ ॥ स्वयमुत्पाटयामास, मुष्टिभिः पञ्चभिः कचान् । प्रतीयेष[3] हरिस्तांश्च, दूष्यं चांसे प्रभोर्न्यधात् ॥ ३०६ ॥ ( युग्मम् ) केशान् क्षीराम्बुधौ क्षिप्त्वा, क्षिप्रं शक्रः समेत्य च । न्यषेधत्तुमुलं तस्थौ, स्वामी सामायिके ततः ॥३०७॥ मनःपर्ययसंज्ञं च, ज्ञानं प्रादुरभूत् प्रभोः । सुखमप्राप्तपूर्वं च, नारकाणामपि क्षणम् ॥ ३०८ ॥ अनुप्राव्राजिषुर्नेमिं, सहस्रं वसुधाधिपाः । नत्वा

१ चित्रानक्षत्रगते चन्द्रे । २ श्रावणस्य । ३ जग्राह ।

नेमिं ययुर्धाम, शक्र-गोविन्द-पाण्डवाः ॥ ३०९ ॥

द्वितीयेऽथ दिने नाथः, संपदां धाम्नि गोकुले । वरदत्तगृहे चक्रे, परमान्नेन पारणम् ॥ ३१० ॥ पुष्प-गन्धाम्बु-रत्नानां वर्षं दुन्दुभिनादनम् । चेलोत्क्षेपं च विदधु-स्त्रिदशास्तस्य वेश्मनि ॥ ३११ ॥ ततो विश्वप्रभुर्घातं, निर्मातुं घातिकर्मणाम् । विजहार महीं दारः, पुर-ग्रामाकुलामिलाम् ॥ ३१२ ॥ द्वारवत्यामथाऽऽयाताः, पाण्डवाः सह शार्ङ्गिणा । गतं नाज्ञासिषुः काल-मानन्दैकवशंवदाः ॥ ३१३ ॥

विहृत्य नेमिनाथोऽपि, चतुष्पञ्चाशतं दिनान् । उपाजगाम तत्रैव, सहस्राम्रवणे पुनः ॥ ३१४ ॥ तत्राष्टमतपःस्थस्य, रैवतकाद्रौ प्रभोः । आश्विने दर्शपूर्वाह्णे, चित्रास्वजनि केवलम् ॥ ३१५ ॥ सद्यः सुरेश्वरास्तस्मि-न्नुपेत्याऽऽसनकम्पतः । चक्रुः समवसरणं, वप्रत्रितयभूषितम् ॥ ३१६ ॥ प्राग्द्वारेण प्रविश्याथ, विंशधन्वशतोच्छ्रयम् । तत्र प्रदक्षिणीकृत्य, विधिवच्चैत्यपादपम् ॥ ३१७ ॥ तीर्थंकरः सोऽथ नम-स्तीर्थायेत्युक्तिपूर्वकम् । प्राच्यां सिंहासने प्राची-संमुखः समुपाविशत् ॥ ३१८ ॥ (युग्मम्) त्रिषु सिंहासनेष्वन्ये-ष्वन्यत्रापि दिशां त्रये । अमरा व्यन्तरा नेतुः, प्रतिरूपाणि चक्रिरे ॥ ३१९ ॥ ततश्चतुर्विधा देवा, देव्यश्च स्वामिसंमुखाः । उपाविशन् यथाभूमि, कृताञ्जलीकृतपाणयः ॥ ३२० ॥

तदा रैवतकोद्यान-पालकाः कृपाणये । प्रभोर्ज्ञानोत्सवोदन्तं, वेगादेत्य न्यवेदयन् ॥ ३२१ ॥ कोटीर्द्वादश रूप्यस्य, सार्धास्तेभ्यो ददौ हरिः । उपवासिभमारुह्य, भक्त्युत्तालश्चचाल च ॥ ३२२ ॥ समं पित्रा पितृव्यैश्च, मातृ-भ्रातृ-सुतैस्तथा ।

१ कौशिकस्य । २ पद्मगजम् ।

पृथक्स्तम्बेरमारूढै-रन्वितः पाण्डवैरपि ॥ ३२३ ॥ समग्रेणावरोधेन, पौरलोकैश्च संयुतः । द्वारवत्याः पतिः प्राप, ज्ञानोत्सव-
भुवं विभोः ॥ ३२४ ॥ वन्दारुः प्रभुपादाब्जं, राजीमत्यपि तां महीम् । श्रद्धालुर्मालतीगन्धं, भृङ्गीवागात् समुत्सुका
॥ ३२५ ॥ गजादुत्तीर्य साम्राज्य-लक्षणानि विमुच्य च । प्रविवेशोत्तरद्वारा, हरिः प्रभुसभां मुदा ॥ ३२६ ॥ स त्रिः प्रद-
क्षिणापूर्वं, नम्रो नाथमवन्दत । अनुशक्रं न्यषीदच्च, यथास्थानं परेऽपि च ॥ ३२७ ॥

अथोद्धर्तुमना जन्तून्, भवकूपोदरात् प्रभुः। देशनां रज्जुदेशीया-माततान कृपार्णवः ॥३२८॥ आयुर्वायुचलाम्भोज-पत्र-
शो-पगमाः प्रियसंगमाः ॥३३०॥ वपुर्वपुष्मतां प्रायो, विपदेकनिकेतनम् । पुत्र-मित्र-कलत्राद्याः, प्रदत्तविविधाधयः ॥३३१॥
मित्राम्बुसोदरम्। शैलशैवलिनीवेग-गर्वसर्वंकषाः श्रियः ॥३२९॥ यौवनं सर्वसत्त्वानां, धृतसंध्याभ्रविभ्रमम्। वितीर्णदुस्तरक्ले-
संसारस्तदसौ सार-वस्तुशून्यो न संशयः। सारं तु ज्ञान-सम्यक्त्व-चारित्राण्येव केवलम् ॥ ३३२ ॥ जीवा-जीवादितत्त्वानां,
सम्यग्ज्ञानाद्विचक्षणः । हित्वा हेयमुपादेय-मुपादाय विमुच्यते ॥३३३॥ सुलभाः प्राणिनां प्राय-स्त्रिदशाधिपसंपदः । सेवधिः
सिद्धिसौख्यानां, सम्यक्त्वं त्वतिदुर्लभम् ॥ ३३४ ॥ भूयिष्ठे कर्मणि क्षीणे, कैश्चिच्चारित्रमाप्यते । सुखैकहेतोर्यस्याग्रे, चिन्ता-
रत्नं न किंचन ॥ ३३५ ॥ भवदावानलज्वाला-निर्वापणनवाम्बुदः । विवेकिनो मनःकेकि-मुदे स्यात् सर्वसंयमः ॥ ३३६ ॥

निशम्य देशनामेना-मेनोघ्नीं स्वामिनो मुखात् । उत्थाय प्रार्थयांचक्रे, वरदत्तनृपो व्रतम् ॥ ३३७ ॥ अथ तं दीक्ष-
यामास, करुणाम्भोनिधिः प्रभुः । अनुप्रव्रजितास्तं च, द्वे सहस्रे नरेश्वराः ॥ ३३८ ॥ वरदत्तादिकांस्तेषु, महोत्सवपुरः-

१ मित्रम्-स्नेहलम् । २ निधिः ।

नमम् । अध्यापयत् प्रभुः प्राज्ञा-नेकादश गणेश्वरान् ॥ ३३९ ॥ जिनेन्द्रात् त्रिपदीं श्रुत्वा, ध्रौव्योत्पादव्ययात्मिकाम् । ते जनिप्रभृतच्छ्रुता- द्वादशाङ्गान्यसूत्रयन् ॥ ३४० ॥ भूरिकन्यान्वितां राज-पुत्रीं प्रव्राज्य यक्षिणीम् । न्यधत्त विधिवद्धर्म-चक्रवर्ती प्रवर्तिनीम् ॥ ३४१ ॥ स्वाम्येकदत्तनयनां, व्रतबद्धमनोरथाम् । वीक्ष्य राजीमतीं दक्षः, प्रभुं पप्रच्छ केशवः ॥ ३४२ ॥ प्रभो ! प्रीतिनिरतिस्फीता, कस्य जागर्ति न त्वयि ?। राजीमत्यास्तु काऽप्येषा, किं तु वाङ्मनसातिगा ॥ ३४३ ॥ आजन्मनन्यसामान्यं, राजीमत्यास्ततोऽखिलम् । भवाष्टकभवं प्रेम, व्याजहार जिनेश्वरः ॥ ३४४ ॥ तस्याः प्रभुर्ददद्दीक्षा-मकरोत् प्रेमनिष्क्रयम् । " महात्मस्वनुरागोऽपि, भवत्येव शुभायतिः " ॥ ३४५ ॥ दशार्हैरुग्रसेनाद्यै-र्नरेशैः केशवेन च । प्रद्युम्नाद्यैः कुमारैश्च, श्राद्धधर्मोऽभ्यपद्यत ॥ ३४६ ॥ रोहिणी-देवकी-भामा-रुक्मिणीप्रमुखाः स्त्रियः । श्रावकत्वं रोहिण्यः, प्रभोः पार्श्वे प्रपेदिरे ॥ ३४७ ॥ एवं समायामाद्यायां, सङ्घः श्लाघ्यः प्रभोरभूत् । चतुर्विधश्चतसृणां, प्रतिरोध-भमो दिनाम् ॥ ३४८ ॥ नत्वा नाथं जगामाथ, दिवं दिविषदां पतिः । हरिश्च पाण्डवैः सार्धं, भवन्धुद्वारिकां पुरीम् ॥ ३४९ ॥ प्रावृषं शरदं चापि, व्यतीत्य भगवानपि । भव्याब्जखण्डमार्तण्डो, विजहार वसुंधराम् ॥ ३५० ॥

अथ कथमपि तेऽपि प्रीतमापृच्छ्य कृष्णं, त्रिभुवनगुरुवाचां सौरभं भावयन्तः ।
त्वरिततरमवापुश्चारुकॢप्तोपचारां, मुदितमुदितपौरां स्वां पुरीं पाण्डवेयाः ॥ ३५१ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये श्रीनेमिविवाहोपक्रमव्रतकेवलज्ञान-वर्णनो नाम षोडशः सर्गः ॥ १६ ॥

# अथ सप्तदशः सर्गः ।

हस्तिनापुरसाम्राज्य-सरोजवनखेलिनः । दिनानि निन्युर्भूयांसि, राजहंसाः पृथासुताः ॥ १ ॥ सम्यगाराधितन्याय-चिन्तारत्नोपनीतयोः । नैवार्थकामयोरर्थे, प्रयत्नस्तैर्व्यधीयत ॥ २ ॥ धर्मे च बहुधा कल्प-पादपादिविजित्वरे । ते सरन्तः प्रभोर्वाच-मयतन्त निरन्तरम् ॥ ३ ॥ तथा नित्यं नयाम्भोभि-स्तेऽसिञ्चन् धर्मशाखिनम् । यथैतदभवत् सर्वं, सच्छायम-वनीतलम् ॥ ४ ॥ ते तैस्तैर्विधिभिर्धर्म-शालिक्षेत्रमवर्धयन् । कामार्थाभ्यां पुनस्तस्मि-न्नन्तस्तामरसायितम् ॥ ५ ॥ अन्वहं ते वितन्वन्तो, नव्या नव्याः प्रभावनाः । सर्वतोऽप्यार्हतं धर्म-मेकच्छत्रमखूत्रयन् ॥ ६ ॥ समीहांचक्रिरे ते च, जगदा-नन्दिनः प्रभोः । नेमेरागमनं प्रीताः, पयोदस्येव केकिनः ॥ ७ ॥

विज्ञाय तन्मनोवृत्ति-मन्येद्युर्भगवानपि । क्रमेण विहरन् सर्वा-मुर्वी तत्पुरमागमत् ॥ ८ ॥ बाह्योद्यानभुवं वायु-कुमाराः प्रीतचेतसः । तदानीमात्मना सार्ध-ममृजन्नेकयोजनम् ॥ ९ ॥ पुण्यानि पुण्यबीजानि, वप्तुकामा इवात्मनि । तां मुदा सिषिचुर्मेघ-कुमारा गन्धवारिभिः ॥ १० ॥ क्षिपन्तः कर्मणां बन्ध-मात्मनो व्यन्तरामराः । बबन्धुरखिलं रत्न-शिलाभि-स्तन्महीतलम् ॥ ११ ॥ तस्मिंश्चतुर्दिशं रत्न-द्युतिविद्योतिताम्बराम् । ते चतुस्तोरणीं चक्रु-र्ध्वज-च्छत्रैरलंकृताम् ॥ १२ ॥ प्रांशुज्योतिःशिखाकीर्ण-कपिशीर्षककैतवात् । तस्मिन्नभ्यन्तरे रत्न-वप्रं वैमानिका व्यधुः ॥ १३ ॥ मध्यमं मधुरं नाना-

१ 'योजनाम्' प्रतिद्वय० ।

नेमि-
नाथस्य
हस्तिनापुरे
गमनं, तत्र
च समव-
सरणम् ॥

माणिक्यकपिशीर्षकैः । प्राकारं ज्योतिषामीशा–स्तन्वते स्म हिरण्मयम् ॥ १४ ॥ पिण्डिताभिरिव ज्योत्स्ना–वीचिभिः परिनिर्मितम् । कलधौतं बहिःशालं, वितेनुर्भवनाधिपाः ॥ १५ ॥ माणिक्यशालभञ्जीभि–र्भूषितानि समन्ततः । चत्वारि गोपुराण्यत्र, [illegible] ॥ १६ ॥ बहिर्वप्रचतुर्द्वारी–पुरस्ताद्विकचाम्बुजाः । चतस्रो दीर्घिकाः काम्या, विचक्रुर्व्यन्तरामराः ॥ १७ ॥ मध्यवप्रान्तरे पूर्वो–त्तरस्यां दिशि सुन्दरम् । देवच्छन्दं वितेनुस्ते, विश्रामाय जिनेशितुः ॥ १८ ॥ मध्येमाणिक्यवप्रं ते, चैत्यद्रुमविराजितम् । रत्नसिंहासनं रत्न–पीठे प्राङ्मुखमादधुः ॥ १९ ॥ त एव स्वामिनो विश्व–त्रयसाम्राज्यचिह्नताम् । तस्योपरिष्टादातेनु–रातपत्रत्रयीं सिताम् ॥ २० ॥ समण्डलमिवायातं, रविमात्मपुपूषया । तत्पुरस्ताद्विचक्रुस्ते, धर्मचक्रमधिश्रुति ॥ २१ ॥ जगदङ्केनतां नेतु–राख्यातुमिव सर्वतः । ते माणिक्यमयं तस्य, पुरो धर्मध्वजं न्यधुः ॥ २२ ॥ देशनोर्व्यां ततस्तस्या–मधोनिक्षिप्तबन्धनाम् । पुष्पवृष्टिं किरन्ति स्म, जानुदघ्नीं दिवौकसः ॥ २३ ॥

पदानि नाथ न्यस्यन्, सुवर्णजलजन्मसु । एत्य प्रदक्षिणीकृत्य, चैत्यधात्रीरुहं च तम् ॥ २४ ॥ तीर्थाय नम इत्युच्चैर्भाषी सुरासुरः [illegible] । तस्मिन सिंहासने दिव्ये, श्रीमान्नेमिरुपाविशत् ॥ २५ ॥ ( युग्मम् ) मार्तण्डमण्डलज्योति–स्तिरस्कारोपमद्युति । अनुमौलि क्षणादासि–न्भामण्डलं विभोः ॥ २६ ॥

अत्रान्तरे समभ्येत्य, उद्यानपालकः । प्रभोरागमनं धर्म–सूनवेऽथ व्यजिज्ञपत् ॥ २७ ॥ तस्मै च सपदि प्रीतमानसस्तापसः सूनुः । द्वादशार्धयुता लक्षाः, कलधौतस्य दत्तवान् ॥ २८ ॥ गजस्थैरथ भीमाद्यै–र्बान्धवैः परिवारितः ।

१ सुवर्णकमलेषु । २ 'समग्गै०' प्रतिद्वय० ।

सेवामिलितसामन्त–बलव्रातैरलंकृतः ॥ २९ ॥ सैन्धवोद्धूतधूलीभि–र्व्यामलीकृतभास्करः । प्रेक्षद्भिः करिसिन्दूरै–र्दत्तसंध्याभ्रविभ्रमः ॥ ३० ॥ पितृवर्गं पुरस्कृत्य, दिव्यमारुह्य कुञ्जरम् । नमस्कर्तुं जगन्नाथं, तत्कालमचलन्नृपः ॥ ३१ ॥ त्रिभिर्विशेषकम् । अनेकामन्त्रितैः पौर–लोकैरालोकितो मुदा । स्वामिनो देशनावेश्म, मेदिनीपतिरासदत् ॥ ३२ ॥ चामरादीनि संत्यज्य, राज्यचिह्नानि दूरतः । विस्मयस्मेरितस्तस्मि–न्नाविवेश विशांपतिः ॥ ३३ ॥ सुरा-सुर-नरव्रात–चातकश्रेणिसेवितम् । निःशेषमुपकुर्वाणं, भुवनं देशनामृतैः ॥ ३४ ॥ भवघर्मर्तुसंताप–निर्वापणसुधाम्बुदम् । पश्यति स तपःसूनुः, स्वामिनं मुदितः पुरः ॥ ३५ ॥ त्रिश्च प्रदक्षिणीकृत्य, प्रीतिपर्यश्रुलोचनः । मीलिताञ्जलिरारेभे, स्तोतुमेवं महीपतिः ॥ ३६ ॥

जय दुस्तरसंसार–प्रान्तर[1]प्रान्तपादप ! । जयान्तरतमःस्तोम–निस्तक्षणनभोमणे ! ॥ ३७ ॥ समस्तत्रिजगत्संप–त्संपादनपटीयसी । नृणां त्वच्चरणाम्भोज–भक्तिः कल्पलतायते ॥ ३८ ॥ त्वत्पादपादपच्छायां, क्लान्तिच्छिदमुपेयुषाम् । आधि–व्याधिभवस्तापः, प्रलयं याति जन्मिनाम् ॥ ३९ ॥ भवदावानलज्वाला–प्रतप्तस्य मम प्रभो ! । भवन्मूर्तिः सुधावर्ति[2]–र्दिष्ट्या दृष्टिपथं गता ॥४०॥ त्वन्नाममन्त्रमश्रान्तं, स्मरेयुर्जन्मिनो यदि । संभोगः संपदां सद्यः, स्वादुः प्रादुर्भवेत्ततः ॥४१॥ त्वत्पदाम्भोरुहद्वन्द्व–सेवाहेवाकशालिनीम् । जगन्नाथ ! मनोवृत्तिं, नित्यमीहे निजामहम् ॥४२॥ त्वन्मूर्तिर्यदि जागर्ति, रोगार्तिहरणक्षमा । मम चित्ते जगन्नाथ ! प्रार्थये किमतः परम् ॥४३॥ कार्यं मे प्रभुभिर्लब्धे, त्वयि नेतरि नेतरैः । कल्पाङ्घ्रिपं परित्यज्य, कः करीरं समाश्रयेत् ? ॥४४॥ तव क्रमरजोराजि–र्येषां भालमभूषयत् । नरेन्द्रा-हीन्द्र-देवेन्द्र–श्रियस्तेषां वशंवदाः ॥ ४५ ॥

१ प्रान्तरम्–अरण्यम् । २ सुधाञ्जनम् ।

एवं नाम निर्लिप्त-मुनीन्द्र त्वया विभो । यथा पराश्रितं चेतः, शिवानुसरणेऽपि ते ॥ ४६ ॥ युक्तं यन्नाभवत् किंचित्, नगुरानिर्योऽपि ते । गाम्भीर्यमुन्नतत्वं च, यस्य विश्वातिवर्तिनी(हि) ॥४७॥ स्वामिन्! राजीमतीत्यागा-ज्ज्ञात्वाऽपि स्त्रीपराङ्मुखम् । यत्त्वां कामति मोक्षश्री-स्तत्ते सौभाग्यगौरवम् ॥ ४८ ॥ यद्वाऽहं तव को नाम, सामस्त्येन गुणस्तुतौ । विश्वासिकान्न एवासि, ब्रवीमि किमतः परम् ? ॥ ४९ ॥ भवारण्यभ्रमिक्लान्त-विश्वविश्रामपादपाः । सन्तु मे भवतः पादाः, कल्याणफलदायिनः ॥ ५० ॥ इत्यभिष्टुत्य नाथाग्र-मानन्दाश्रुकणान् किरन् । श्रीमन्नेमिजिनाधीशं, नमति स्म युधिष्ठिरः ॥ ५१ ॥ कदम्बमुकुलस्थूल-रोमाञ्चकलितस्ततः । पितृ-बन्धुजनैः सार्धं, सोऽनुशक्रमुपाविशत् ॥ ५२ ॥

अथ संसारसंताप-नवकादम्बिनीं विभुः । आरेभे त्रिजगद्दत्त-शर्माणं धर्मदेशनाम् ॥ ५३ ॥ अहो ! किमप्यपारेयं, संसाराख्या महाटवी । अनन्तेनापि कालेन, लङ्घन्ते यां न जन्तवः ॥ ५४ ॥ पूर्णायामपसिद्धान्त-क्षारनीरैरनेकशः । एक एव सुधाकूप-स्तस्यामस्ति सदागमः ॥ ५५ ॥ कथंचन कणेहत्य, तस्मिन् पिबति यः पयः । स एव यदि नामास्याः, पारे-शिवपुरं व्रजेत् ॥ ५६ ॥ स तु गम्यकत्वसंज्ञस्य, गिरेरतिदवीयसः । वर्तते क्वापि दुष्प्रापे, गह्वरे वासनाह्वये ॥ ५७ ॥ प्रमादान्ध्य-मान्द्यादि-गह्विप्लवकारिरोहिनः । वीक्ष्यते न महाकूपो, मन्दभाग्यैः कदाऽप्यसौ ॥ ५८ ॥ केचिदाप्तोपदेशेन, प्राप्य तं पुण्यशालिनः । नदीपरममाकण्ठं, स्वादयन्ति सुधोपमम् ॥ ५९ ॥ तन्निर्गतेन सद्ध्यान-नाम्ना सरलवर्त्मना । कालेनाल्पीयसा मुक्ति-पुरीमासादयन्ति ते ॥ ६० ॥ किं नानानादिवृत्तान्तं, तत्राटव्यां विसंकटम् । अतिनेदीय एवास्ति, मिथ्यात्वाख्यं महासरः ॥ ६१ ॥ कुकुलकौस्तैस्तै-रज्ञानसलिलोर्मिभिः । ह्रियन्ते सर्वदा तेन, केषां नाम न दृष्टयः ? ॥ ६२ ॥

तत्पर्यन्तेषु सच्छायं, विषयद्रुमकाननम् । अशेषजगदाकर्षि, तत् किमप्यस्ति दुस्त्यजम् ॥ ६३ ॥ मूढबुद्धिर्यदासाद्य, सर्वेन्द्रियमनोरमम् । मुक्तिपूःपथपान्थोऽपि, न पुरो गन्तुमीहते ॥ ६४ ॥ विकस्वरतरं तत्र, कामिनीनलिनीवनम् । यत् पुनर्वर्तते तस्य, किं नाम ब्रूमहे वयम् ? ॥ ६५ ॥ ये तु कामादयस्तत्र, खेलन्ति जलपत्रिणः । ते हरन्ति झगित्येव, कस्य नाम न मानसम् ? ॥ ६६ ॥ ततोऽस्मिन् सरसि स्नात्वा, निपीय च भृशं पयः । मूढास्तान् विषयाख्यान् ये, श्रयन्ते तीरभूरुहः ॥ ६७ ॥ तेष्वसाध्यतमः सर्व–मान्त्रिकैर्निरवग्रहः । प्रेमनामा महाभूत–स्तानाविशति तत्क्षणात् ॥ ६८ ॥ तेनाविष्टास्ततस्तेऽमी, विमुञ्चन्ति त्रपांशुकम् । विद्विषन्ति हितेभ्योऽपि, गुरूनप्यवमन्वते ॥ ६९ ॥ असंबद्धानि जल्पन्ति, दीनतां परिचिन्वते । तस्यामटव्यां सर्वस्यां, भ्रमन्ति च निरन्तरम् ॥ ७० ॥ भ्राम्यतां च सदा तेषां, कषायपरिमोषिणः । हरन्ति धर्मसर्वस्वं, निःशङ्कं प्रहरन्ति च ॥ ७१ ॥ रागकेसरिणा द्वेष–करिणा च पदे पदे । कदर्थ्यन्ते तथा किंचि–द्यथा वाचामगोचरः ॥७२॥ एवमस्यां महाटव्यां, संचरन्तो निरङ्कुशम् । सा काचिदापन्नास्त्येव, यां लभन्ते न तेऽङ्गिनः ॥ ७३ ॥ ततः संत्यज्य दूरेण, तन्मिथ्यात्वमहासरः । तत्सदागमकूपस्य, पयः पिबत हे जनाः ! ॥ ७४ ॥ येन गच्छत निर्बाध–सौख्यसंभारभासुराम् । शश्वदुज्जागरज्योति–र्मयीं शिवपुरीं जवात् ॥ ७५ ॥

इत्याकर्ण्य सुधासिन्धुं, भगवद्देशनागिरम् । प्रत्यबुध्यन्त के नाम, न प्रत्यासन्नमुक्तयः ? ॥ ७६ ॥ स्त्रियो बभूवुर्याः काश्चित्, समरे मृतभर्तृकाः । ताः सर्वाः प्रभुपादान्ते, व्रतमाददिरे मुदा ॥ ७७ ॥ गान्धारी–धृतराष्ट्रौ तु, स्वामिवाग्ब्रह्मभावितौ । ससम्यक्त्वामगृह्णीतां, श्रावकद्वादशव्रतीम् ॥ ७८ ॥ अन्येऽपि देशविरतिं, केचिज्जगृहिरे क्षणात् । केचिच्च सर्व-

तिरिं, स्वामिनश्चरणान्तिके ॥ ७९ ॥ व्यस्राक्षीद्देशनास्थानीं, समयेऽथ जगत्पतिः । शक्र-धर्मसुताद्याश्च, स्वं स्वं स्थानं ययुर्नताः ॥ ८० ॥ जगदम्भोजखण्डैक-चण्डरश्मिस्ततो विभुः । व्यहार्षीदन्यतो हर्षात्, स्वर्गिवर्गैरनुद्रुतः ॥ ८१ ॥ प्रभोर्निर्वाणपुर-स्यन्दिर्निर्यामवर्णिणः । आनन्दैकमयान्निन्यु-र्वासरान् पाण्डुसूनवः ॥ ८२ ॥ संपदामादिकन्दं च, धर्मं नित्यमसूत्रयन् । तस्यापि बीजभूतं च, न्यायमश्रान्तमाश्रयन् ॥ ८३ ॥ ते धर्मा-र्थाविरोधेन, मिथः प्रणयिचेतसः । पाञ्चालसुतया सार्धं, कामगम्यकृतार्थयन ॥ ८४ ॥

अन्येद्युर्नगदालोक-कौतुकी नारदो मुनिः । द्रौपदीमन्दिरेऽभ्यागा-दकस्मात् पवनाध्वना ॥ ८५ ॥ तया चाविरतमान्य, न तं कांचिदङ्गा । तेनाभ्यामयमत्यन्त-ममर्षादित्यचिन्तयत् ॥ ८६ ॥ क्षेप्तव्येयं मयाऽवश्यं, गम्भीरे दुःखसागरे । निश्चित्येति पर्वीर, तत्क्षणादुत्पपात सः ॥ ८७ ॥ प्रासादवलभौ सार्ध-मन्यदा धर्मसूनुना । सुखनिद्रायितां कोऽपि-ज्जहार कुपदान्मजाम् ॥ ८८ ॥ प्रातरालोक्य पल्यङ्कं, पाञ्चालीशून्यमात्मनः । संभ्रान्तो भूपतिः साकं, सर्वैरप्यनुजन्मभिः ॥ ८९ ॥ आशङ्गवेषयामास, वल्लभां तामितस्ततः । न पुनः कचिदद्राक्षु-र्भूतले तेऽखिलेऽपि ताम् ॥ ९० ॥ ततस्तत्त्वालगुम्भीर-दुःखसंभारनिर्भराः । पाण्डवाः प्रेषयन्ति स्म, कुन्तीं कंसद्विपोऽन्तिकम् ॥ ९१ ॥ गत्वा च द्वारकां कुन्त्या, तयोऽन्तो निवेदिते । कंचित् कालं हरिस्तस्थौ, किंकर्तव्यविमूढधीः ॥ ९२ ॥

नारदोऽन्येद्युरायातः, सत्कृत्य मुरविद्विषा । पृष्टः प्रवृत्तिमित्याख्यन्, पाञ्चालतनुजन्मनः ॥ ९३ ॥ द्वीपेऽस्ति धातकीखण्डे-ऽमरकङ्कति पूर्वरा । तत्पतिः पद्मनाभोऽस्ति, वासपत्र इव श्रियः ॥ ९४ ॥ तदीयसदने शौरे !, पाञ्चालीसदृ-

शाकृतिम् । मृगाक्षीं कांचिदद्राक्ष-मित्याख्यायोत्पपात सः ॥ ९५ ॥ नूनं कर्मेदमस्यैव, साऽपि द्रुपदभूर्ध्रुवम् । इति निश्चित्य कंसारिः, पितृष्वस्रे न्यवेदयत् ॥ ९६ ॥ संदिदेश तथा पाण्डु-सूनुभ्यश्च यथा जवात् । युष्माभिरभ्युपेतव्यं, तीरे प्राग्लवणोदधेः ॥ ९७ ॥ इत्युदीर्य विसृष्टेयं, विष्णुना हास्तिनं ययौ । समस्तं पाण्डवेभ्यश्च, तं वृत्तान्तमचीकथत् ॥ ९८ ॥

तेऽथ प्रियावियोगार्ताः, पौरस्त्योदधिरोधसि । प्रागगृहीतनिवासेन, संगच्छन्ते स्म शौरिणा ॥ ९९ ॥ अथ सुस्थितमाराद्धु-मधीशं लवणोदधेः । प्रयतात्मा तपोऽकार्षी-दरिष्टारातिरष्टमम् ॥ १०० ॥ ततोऽभ्येत्याभ्यधाद्विष्णुं, सुस्थितो रचिताञ्जलिः । कर्तव्याय मुरारे ! मां, किंकुर्वाणमिवादिश ॥ १०१ ॥ व्याजहार हरिर्भद्र !, केनचिद्द्रौपदी हृता । तदीया धातकीखण्डे, किंवदन्ती च विद्यते ॥ १०२ ॥ तत्तथा किंचिदाधेहि, सा प्रत्याह्रियते यथा । इत्याकर्ण्य हरेर्वाच-मुवाच लवणाधिपः ॥ १०३ ॥ सानीकमहितं हत्वा, क्षिप्त्वा च मकराकरे । तां देव ! धातकीखण्डा-दुपानीय तवार्पये ॥ १०४ ॥ मम स्वप्रेष्यदेश्यस्य, यथादेशं प्रयच्छसि । स्वयं तु कोऽयमारम्भः, कार्येऽमुष्मिन् लघीयसि ? ॥ १०५ ॥ ( युग्मम् ) ततोऽब्रवीन्मुराराति:, सर्वं त्वय्युपपद्यते । किं त्वेवं विहितं कार्य-मस्माकमयशस्करम् ॥ १०६ ॥ ततो नः सरितां नाथ-मतिक्रम्य यथा रथाः । यान्ति षड् धातकीखण्डे, तथा त्वं कर्तुमर्हसि ॥ १०७ ॥ तथैवेति कृते तेन, पञ्च पाण्डुतनूरुहाम् । षष्ठश्च स्यन्दनः शौरे-रुत्तेरुर्लवणार्णवम् ॥ १०८ ॥ ततस्ते धातकीखण्डे-ऽमरकङ्कापुरीं ययुः । बाह्योद्याने च सर्वर्तु-केलिवेश्मन्यवातरन् ॥ १०९ ॥

१ 'प्रयान्ति धातकी०' प्रत्यन्तर० ।

द्रौपद्या हरणम् अमरकंकायाम् ॥

अयं वा भवितेदानीं, वयं वा जयभाजनम् ॥ १२४ ॥ इत्युदीर्य सुताः पाण्डो-रभ्यमित्रीणतां दधुः । तथैवास्थान्मुरारिस्तु, संगरालोककौतुकी ॥ १२५ ॥ पद्मनाभपताकिन्या, सार्कं कुन्तीतनूरुहाम् । अथाभूद्भुवनाभोग-डामरः[1] समरश्चिरम् ॥१२६॥ ततः पराश्रिते[2] किंचि-दनीके पाण्डुजन्मभिः । भूपतिः स्वयमुत्तस्थे, भूरिस्थामा महाभटैः ॥ १२७॥ पाण्डवेयास्ततस्तेन, तथा बाणैर्बभञ्जिरे । यथा समरमुत्सृज्य, मुरारिं शरणं ययुः ॥ १२८ ॥ व्याहरंश्च हरे ! नैनं, विजेतुं वयमीश्महे । त्वमेव नूनमेतस्मै, स्थास्यसे समराङ्गणे ॥ १२९ ॥ ऊचेऽथ सस्मितः शौरि-र्द्विषा यूयं जितास्तदा । यदाऽयं वा वयं वाऽथ, जेतारोऽद्येत्यचोचत ॥ १३० ॥ इदानीं तु विलोकध्वं, मदीयं रणकौतुकम् । जेष्याम्येनं रणे जेष्ये, नानेन कथमप्यहम् ॥ १३१ ॥

इत्युदित्वा मुराराति-रुचण्डैर्ध्वनिडम्बरैः । क्षोभितानेकराजन्यं, पाञ्चजन्यमपूरयत् ॥ १३२ ॥ बलत्रिभागः पद्मस्य, तदीयध्वनिनाऽनशत् । पञ्चाहेनासितेनेन्दो[3]-र्बिम्बाभोगत्रिभागवत् ॥ १३३ ॥ शार्ङ्गी शार्ङ्गमथारोप्य, कोपादास्फालयद्दृढम् । तन्नादेनापि तत्सैन्य-त्रिभागस्तद्वदत्रुटत् ॥१३४॥ प्रणश्याथ पुरीं पद्मः, शेषसैन्यावृतोऽविशत् । दृढलोहार्गलाः सर्वाः, प्रतोलीश्चाप्यधापयत् ॥ ॥ १३५ ॥ उत्तीर्याथ रथाद्विष्णु-र्व्योमान्तर्व्यापि भैरवम् । व्यात्ताननं हसद्दंष्ट्रं, नारसिंहं वपुर्व्यधात् ॥ १३६ ॥ अथोन्मर्यादयन्नब्धीन्, कम्पयन् काश्यपीमपि । चालयन्नचलान् विष्णु-र्वितेने पाददर्दरान्[4] ॥ १३७॥ प्राकाराग्राणि तैः पेतु-र्दुद्रुवुर्गोपुराणि च । ध्वंसन्ते स्म च वेश्मानि, सस्रंसे चाट्टमण्डली ॥ १३८॥ निम्नेषु केऽप्यलीयन्त, निपेतुः

१ डामरः—आश्चर्यकृत् । २ पराजिते । ३ पञ्चदिनेन कृष्णपक्षेण । ४ दर्दरः—पर्वतविशेष आवातो वा ।

अमरकंकायां कृष्णपाण्डवानां गमनम् ॥ पद्मनाभेन सह युद्धम् ॥

केऽपि मूर्छिताः । आलिलिङ्गुस्तरून् केऽपि, जनाः केऽप्यप्सु चाविशन् ॥ १३९ ॥ क्षम्यतामिदमागो मे, देवि ! दौरात्म्य-
चेष्टितः । मृतं कीनाशदेशीया-न्मां रक्षास्मादधोक्षजात् ॥१४०॥ इत्यात्युदीरयन् दीनं, भिया तरलतारकः । पद्मनाभोऽथ
पाञ्चाली-पादपङ्कजेऽपतत् ॥ १४१ ॥ ( युग्मम् ) साऽप्यूचे चेद्वधूवेष-माधायाग्रे विधाय माम् । शार्ङ्गिणं शरणं यासि,
तदा जीवसि नान्यथा ॥ १४२ ॥ तेनेत्युक्तस्तथा चक्रे, पद्मनाभो भयातुरः । प्राणत्राणाय जीवा हि, नास्ति तद्यन्न
कुर्वते ॥ १४३ ॥ नृसिंहरूपमुत्सृज्य, प्रसन्नस्तं जनार्दनः । मा भैषीरिति संभाष्य, पप्रच्छ प्राक्तनीं कथाम् ॥ १४४ ॥

पद्मनाभोऽप्यवादीत् !, नारदो मुनिपुंगवः । सद्मैव कदाचिन्मा-मागादन्तःपुरस्थितम् ॥ १४५ ॥ तदाऽभ्यर्च्य यथौ-
चित्य-मप्राक्षं तं मुनिमिमम् । यदीदृश्यः क्वचिद्दृष्टाः, स्त्रियो मत्प्रेयसीसमाः ? ॥ १४६ ॥ मामथोचे स किं कूप-मण्डूक इव
भाषसे ? । पाञ्चाल्याः पुरतो यस्मात्, कीदृश्यस्तव वल्लभाः ? ॥ १४७ ॥ भूयोऽपि विस्मयस्मेर-मानसोऽहं तमभ्यधाम् ।
पाञ्चाली भगवन् ! केयं ?, यत्तवैवं प्रशस्यते ॥ १४८ ॥ अथाह स मुनिर्जम्बू-द्वीपभारतभूषणम् । हस्तिनापुरमित्यस्ति,
पुरं स्वर्गपुरोपमम् ॥ १४९ ॥ पाण्डवाखण्डदोर्दण्डा-स्तद्विन्वन्ति यशोधनाः । आदिकन्दो मुकुन्दोऽभू-द्यत्साम्राज्यमही-
रुहः ॥ १५० ॥ सीमा त्रिभुवनस्त्रैण, रूप-लावण्यसंपदाम् । पाञ्चाली नाम पञ्चानां, तेषामेकैव वल्लभा ॥ १५१ ॥ व्या-
हृत्येति क्षणादन्त-र्हितमुत्पतिते मुनौ । पाञ्चालीगुणटंकारै-रहमुज्जागरस्मरः ॥ १५२ ॥ पूर्वसंगतिकं मित्रं, देवं भवनवा-
सिनम् । संस्मृत्य प्रार्थयामास, कृष्णाऽऽहरणहेतवे ॥ १५३ ॥ ( युग्मम् ) सोऽब्रवीदथ पाञ्चाली, सतीसीमन्तमौक्तिकम् ।

१ चानिः । २ नागपुर इत्यर्थः ।

कथंचिदीहते नान्यं, वचः कुर्वे तथापि ते ॥ १५४ ॥ इत्युक्त्वा मेऽनुरोधेन, मन्दिरोपरिशायिनीम् । दत्त्वाऽवस्वापिनीं विद्यां, द्रौपदीं सोऽहरत् सुरः ॥ १५५ ॥ तेनाऽऽनीयार्पिता मह्यं, पाञ्चाली बुबुधे ततः । अपश्यन्ती निजं वेश्म, संभ्रमं चाभजत् परम् ॥ १५६ ॥ ततोऽहं तां तथाभूता-मभ्यधां मा स्म सुन्दरि ! । किंचित् कार्षीर्मनःक्षोभं, किंकरोऽस्मि पुरस्तव ॥ १५७ ॥ द्वीपेऽस्मिन् धातकीखण्डे, जम्बूद्वीपादहारयम् । नृपः पद्माभिधोऽहं त्वां, तन्मां मन्यस्व वल्लभम् ॥ १५८ ॥ ततः किंचिद्विचिन्त्येय-मूचे मां चेन्न मामकः । कश्चिदेष्यति मासान्तः, करिष्ये ते वचस्तदा ॥ १५९ ॥ सागरान्तरिता-जम्बू-द्वीपतः क इहैष्यति ? । इत्यालोच्य मयाऽप्यस्या, वचस्तदुररीकृतम् ॥१६०॥ भवन्तो भ(भु)वनातीत-महिमैकास्पदं पुनः । व्यतीत्यार्णवमप्येनं, पृष्ठतोऽस्याः समागमन् ॥ १६१ ॥ इत्याख्याय कथां कृष्ण-विसृष्टः सोऽविशत् पुरीम् । कृष्णोऽपि चचले कृष्णां, कृत्वा कौन्तेयसात्ततः ॥ १६२ ॥

तदा च तत्र चम्पाया-मारामे पूर्णभद्रके । मुनिसुव्रततीर्थेशः, समेत्य समवासरत् ॥ १६३ ॥ रणारम्भभवं कृष्ण-पाञ्चजन्यस्य निःस्वनम् । श्रुत्वाऽपृच्छत् समासीन-स्तं हरिः कपिलाभिधः ॥ १६४ ॥ भगवन् ! भुवनाभोग-भिदारम्भ-भयंकरः । मत्समानस्य कस्यैष, शङ्खनादो विजृम्भितः ? ॥ १६५ ॥ तीर्थकृत् कपिलेनेति, पृष्टे विस्पष्टविस्मयम् । पद्म-नाभमहीपाल-कथां सर्वामचीकथत् ॥ १६६ ॥ अत्रायातस्य कृष्णस्य, स्वागतं कर्तुमिच्छति । मनो मे कपिलेनेति, प्रोक्ते भूयो विभुर्जगौ ॥ १६७ ॥ कदापि न भवत्येत-द्भविष्यति बभूव वा । संगच्छेते जिनौ चक्र-भृतौ शौरी च यन्मिथः ॥ १६८ ॥ वीक्षिष्यसे तथाप्यस्य, त्वं पताकां पताकिनः । इत्याकर्ण्य विभोर्वाचं, सोऽनुकृष्णमधावत ॥ १६९ ॥ आस-

द्रौपदीं लात्वा अमर-कंकाया निवर्तनम् ॥ तत्पृष्ठे कपिल-वासुदेवस्य गमनम् ॥

॥२९२॥

सार्धं भगवानेव, लवणोदन्वतस्तटम् । अपश्यत् स कृष्णस्य, स्यन्दनप्रेषिपद्धतिम् ॥ १७० ॥ पञ्चवर्णरुचीन् संध्या-रागैरिव विनिर्मितान् । सध्येजलोऽपि निक्षिप्य, तदीयरथकेतनान् ॥ १७१ ॥ ततो मदीयमादाय, स्वागतं गन्तुमर्हसि । इति व्यक्ताक्षरं दध्मौ, कपिलो शङ्खं निजम् ॥ १७२ ॥ स्वागतं लब्धमस्माभिः, प्रणवेनामुना तव । इति विस्पष्टवर्णं स्वं, शङ्खं कृष्णो-ऽप्यपूरयत् ॥ १७३ ॥ तन्निनादमुपश्रुत्य, कपिलोऽथ न्यवर्तत । जगामामरकङ्कां च, दत्तातङ्कां मुरारिणा ॥ १७४ ॥ दुर्नीतेनैनमन्यायं, प्रतापस्य मम त्वया । चक्रे म्लानिरियं दुष्ट !, तिष्ठ मा तत् पुरो मम ॥ १७५ ॥ इत्युक्त्वा पद्मभूपालं, रोषेण निरवासयत् । कपिलः स्थापयामास, तत्पदे च तदात्मजम् ॥ १७६ ॥

गङ्गान्तःसमुद्रं च, स्थोन्मग्नं निवेदुषीम् । प्रेयसीमिति सप्रेम, व्याजहार युधिष्ठिरः ॥ १७७ ॥ प्रणीतप्रार्थने देवि !, तस्मिन् भूपालपांगने । किं विनिन्त्य तदा मासो-ऽवधित्वेन त्वयाऽर्थितः ? ॥ १७८ ॥ माऽभ्यधाद् देव ! चेन्मास-मध्ये नैष्यन्ति मत्प्रियाः । तदाऽनशनमादाय, मरिष्यामीत्यचिन्तयम् ॥ १७९ ॥

कृष्णोऽथाभ्यागमत् पारे-पारावारं यथागतम् । वल्लभालाभकल्लोलि-चेतोभिः सह पाण्डवैः ॥ १८० ॥ सुस्थितं स्वस्थानीयं, यावदासमये क्षणम् । तावन्मन्दाकिनीं यूय-मेतामुत्तरताग्रतः ॥ १८१ ॥ इत्यादेशेन कंसारे-र्नावमासाद्य कांचन । उत्तेरुः पाण्डवा गङ्गां, द्वयं द्वाषष्टियोजनीम् ॥ १८२ ॥ (युग्मम्) बलानुजन्मनो बाहु-बलं वीक्षिष्यतेऽधुना । इत्यालोच्य न ते नावं, प्राहिण्वन् वनमालिने ॥ १८३ ॥ ततः सुस्थितमापृच्छ्य, न्यस्य वामे भुजे रथम् । दोष्णाऽन्येन

१ पाठा० नानाभिः । २ शङ्खम् । ३ दशभयाम ।

हरिर्गङ्गां, तरीतुमुपचक्रमे ॥ १८४ ॥ कृच्छ्राद्गच्छन् प्रवाहान्तः, श्रान्तः शौरिरचिन्तयत् । श्लाघ्यास्ते खलु कौन्तेया-स्तीर्णेयं यैः सुरापगा ॥ १८५ ॥ अथास्मिन्नतिखिन्नेऽन्त-र्विचक्रे देवता स्थलम् । मुहूर्तं तत्र विश्रम्य, पारेगङ्गं ययौ हरिः ॥ १८६ ॥ तत्रापृच्छत् सुतान् पाण्डोः, केशवो ननु जाह्नवीम् । भवन्तः कथमुत्तीर्णा-स्तेऽपि नावेत्यचीकथन् ॥ १८७ ॥ किं नौर्न प्रेषिता मह्य-मित्युक्तेऽथ मुरारिणा । वीक्षितुं तव दोःसार-मित्याख्यान्ति स पाण्डवाः ॥ १८८ ॥ ततः कोपारुणीभूत-चक्षुर्दामोदरोऽभ्यधात् । कंस-केशि-जरासन्ध-चाणूरादिवधे पुरा ॥१८९॥ संप्रत्येव जये पद्म-नाभस्य च महीभुजः । नेक्षितं मम दोःसारं ?, दिदृक्षध्वेऽधुनैव यत् ? ॥१९०॥ इत्युदीर्य मुराराति-र्लोहदण्डेन कोपतः । स्यन्दनान् पाण्डवेयानां, लोष्टचूरमचूरयत् ॥ १९१ ॥ (त्रिभिर्विशेषकम्) जगाद च यदि क्षोणीं, मदीयामधिवत्स्यथ । सपुत्र-बान्धवा-नीका-स्तदानीं न भविष्यथ ॥ १९२ ॥ सक्रोधमभिधायेति, कंसारिर्द्वारकां ययौ । श्यामीभूतमुखाम्भोजाः, पाण्डवा अपि हास्तिनम् ॥ १९३ ॥ ते तत्राभ्येत्य तां वार्तां, माता-पित्रोर्न्यवेदयन् । "सुखदुःखैकविश्रामः, पितरौ हि तनूरुहाम्" ॥ १९४ ॥

अथ पाण्डुर्विमृश्यान्त-रनुरोधविधित्सया । द्वारकायां पुरि प्रैषीत्, कुन्तीं कंसान्तकान्तिकम् ॥ १९५ ॥ ततः कुन्ती गजारूढा, द्वारकोद्यानमीयुषी । प्रभोः समवसरणं, वीक्ष्य पद्भ्यां तदाविशत् ॥ १९६ ॥ नत्वा नाथं निषेदुष्या-मेतस्यां देवकी तदा । अप्राक्षीदाययुर्ये ह्यः, प्रभो ! मद्धाम्नि साधवः ॥ १९७ ॥ अन्योऽन्यमतिसारूप्या-दभेदभ्रमकारिणः । मम प्रीतिकराः के ते ?, कथं च सदृशा हरेः ? ॥ १९८ ॥ (युग्मम्) आख्याति स ततः स्वामी, पुरे

कृष्णपा-
ण्डवानां
स्वस्वनगरे
गमनम् ॥

महेऽस्मिन् भद्रिले । सुलसाऽनलसा धर्मे, नागस्य श्रेष्ठिनः प्रिया ॥ १९९ ॥ तस्यै प्रददिरे भक्ति-तोषिणा नैगमेषिणा ।
कृष्णाग्रजाः षडप्येते, गुणाम्बरकुक्षिकौस्तुभाः ॥ २०० ॥ तस्या मृतान्यपत्यानि, तेनार्प्यन्त पुनस्तव । गत्वा तत्र मया-
ऽमी, दीक्षिता मोक्षगामिनः ॥ २०१ ॥ अतोऽमी सदृशा विष्णो-स्त्वद्दृशोरमृताञ्जनम् । "आनन्दकन्दलीहेतु-रीदृशं
सौख्यं मदः" ॥ २०२ ॥ श्रुत्वेति देवकी स्नेह-लहरीप्रस्रुतस्तनी । ववन्दे सह कृष्णाद्यै-स्तान् प्रीतिपुलकाङ्कितैः ॥२०३॥
नामिनाऽथ विसृष्टायां, देशनायां जनार्दनः । कुन्तीं पितृष्वसारं स्वां, मुदितः स्वगृहेऽनयत् ॥ २०४ ॥
पर्यगादि समं कुन्त्या, पुनरागेदिवान् मदः । स्वां लक्ष्मीं वीक्ष्य तादृक्षा-मन्वयुङ्क्त प्रभुं हरिः ॥ २०५ ॥ अस्याः
स्फातिमिनः पुर्याः, क्षयो भावी किमन्यतः? । ममापि मृत्युरन्यस्मात्, किं स्वामिन्निति कथ्यताम् ॥ २०६ ॥ आमेति प्रभुणा
प्रोक्ते, कस्मादिति जगौ हरिः । जगावथो जिनः पुर्या, मुनेर्द्वीपायनात् क्षयः ॥२०७॥ अस्माज्जराकुमाराच्च, स्निग्धा-
दस्तोऽभिन्नात् । यदुवंशक्षये विद्धि, मद्यमाद्यं च कारणम् ॥ २०८ ॥ इत्याकर्ण्य विभोर्वाच-माचान्तहृदयो भिया । सर्वपर्व-
सनीं तां, मिनस्यमर्दीमनः ॥ २०९ ॥ धिगेनं यदसौ पात्रं, भावी बन्धुवधैनसाम् । इत्येककालमालोकि, तदा लोकै-
र्जगन्मतः ॥ २१० ॥ भ्रातुर्मानाय मा भूव-मित्यसौ धन्व सेपुधि । बिभ्रद्ययावरण्यानीं, द्वारकां च हरिः पुनः
॥ २११ ॥ नगर यादवस्वेशन्, पारिव्राज्यव्रती नमन् । द्वीपायनोऽपि शुश्राव, जनेभ्यस्तद्वचः प्रभोः ॥ २१२ ॥ ततः
पद्मापः क्षान्त, ब्रह्मचारी मुनिः शमी । पूर्वापानकाद्भीतः, कान्तारं सोऽप्यशिश्रियत् ॥२१३॥ पुरीदाह-कुलोच्छेद-

१ 'भद्रिके' पत्तनारः । २ स्वामिन्नितः ।

निदानमथ केशवः। नवीनं सीधुसंधानं, प्रत्यषेधज्जनप्रियः ॥ २१४ ॥ प्राक्तनं तु कदम्बाद्रेः, कदम्बाह्वे वने हरिः। कादम्बरीगुहाभ्यर्णे, मद्यमत्याजयज्जनैः ॥ २१५ ॥ भूरिभूमीरुहाकीर्णे, तत्र तैस्त्यक्तया तया। आकर्णान्तमपूर्यन्त, शिलाकुण्डानि शुण्डया ॥ २१६ ॥

तदानीं चाभ्यधाद्बन्धुः, सिद्धार्थः सारथिर्बलम्। अनुज्ञातस्त्वया दीक्षां, जिघृक्षामि जिनान्तिके ॥ २१७ ॥ बलोऽप्यूचे सहायं त्वां, विस्रष्टुं नाहमुत्सहे। एतेन पणबन्धेन, विदधे तु तवेप्सितम् ॥ २१८ ॥ यदि देवप्रदत्ताप–त्प्रौढिव्यामूढमानसम्। दिवं यातः कदाऽप्येत्य, स्नेहान्मां बोधयिष्यसि ॥ २१९ ॥ तथेत्युक्त्वा व्यधात् स्वार्थं, सिद्धार्थस्तदनुज्ञया। चरंश्चारित्रमन्यत्र, ययौ च स्वामिना समम् ॥ २२० ॥

चिरादवसरं प्राप्य, कुन्ती कृष्णमथावदत्। पाण्डवाः क्वाऽऽसतां वत्स !, त्वया निर्विषयीकृताः ? ॥ २२१ ॥ तवैवेयमशेषाऽपि, भरतार्धवसुंधरा। तत् प्रसीद स्वबन्धूनां, किमपि स्थानमादिश ॥ २२२॥ केशवोऽप्यब्रवीन्नन्यां, दक्षिणाम्भोधिरोधसि। निर्माय पाण्डुमथुरां, तत्र तिष्ठन्तु पाण्डवाः ॥ २२३ ॥ अथैत्य हास्तिनं कुन्ती, सुतानां तदचीकथत्। आगत्य पाण्डुविषये, तत्तथा तेऽपि चक्रिरे ॥ २२४ ॥ अभिमन्यूत्तरापुत्रं, सुभद्रापौत्रमच्युतः। हस्तिनापुरभूपालं, परीक्षितमतिष्ठिपत् ॥ २२५ ॥

अथ तां द्वारकावार्तां, परावर्तयतां हृदि। पार्थानां पाण्डुमथुरा–राज्येष्वासीन्न निर्वृतिः ॥ २२६ ॥ ध्यायन्तः

१ मदिरया। २ स्मरताम्।

द्वारकाक्षयादिवृत्तान्तः प्रभुकथितः ॥

गारिम्णां, ते कैवल्यमनिन्यताम्। दीनोद्धारदयादीनि, धर्मकर्माणि चक्रिरे ॥ २२७ ॥ पाण्डुः कुन्ती च संसार-मसारं ज्ञात्वा हृदि । तदा सम्यगतुः कामं, भगवन्तं व्रतार्थिनौ ॥ २२८ ॥ नाथोऽपि समवासार्षी-त्तत्रैत्य ज्ञाततन्मनाः । भगवांश्च तिस्मांश्च, परोपकृतिकर्मठौ ॥ २२९ ॥ धर्मजन्माऽथ सोत्कण्ठं, मातापितृपुरःसरः । गत्वाऽनमज्जगन्नाथ-माहितोन्माथ-मापदाम् ॥ २३० ॥ प्रभो सुधामुचं श्रुत्वा, वाचं संविग्नमानसौ । प्रणम्य पाण्डुः कुन्ती च, परिव्रज्यामयाचताम् ॥२३१॥ स(?)दैव मगवताना-मानमज्ञानामनुज्ञया । तयोरिष्टमपूरिष्ट, समीपेऽरिष्टनेमिनः ॥२३२॥ तावथासादितस्वामि-प्रसादमुदि-तात्मानौ । व्रताचारमधीयानौ, समं तेन विजह्रतुः ॥ २३३ ॥ प्रभोः पित्रोश्च विरहे, पाण्डवैरुन्मनायितम् । नक्तंदिवं तदादिष्टे, धर्मे तु सुमनायितम् ॥ २३४ ॥ निर्माप्य तत्र तैश्चैत्यं, स्वाम्युत्कण्ठा व्यनोद्यत । मातापित्रोर्वियोगस्तु, क्रमयामास तन्मनः ॥ २३५ ॥ कृष्णा नित्रा विशेषेण, शुश्रूषामास तांस्तदा । " प्रीतिपात्रं कलत्रं हि, सर्वक्लेशापहं नृणाम् " ॥२३६॥ ते पञ्चे-न्द्रियगोचरार्थां, विस्फुरत्पौरुषा अपि । तत्स्तदेकविषयान्, विषयाननुमेनिरे ॥ २३७ ॥

पर्याणाय भुञ्जाना, सह तैर्दयितैः सुखम् । गर्भं बभार पाञ्चाली, निधानमिव मेदिनी ॥ २३८ ॥ अन्यतेजस्विमाहात्म्य-ग्रासोऽभ्रागतेजसम् । प्रातः प्राचीव मार्तण्डं, सा क्रमात् सुषुवे सुतम् ॥ २३९ ॥ जगदानन्दने तस्मि-न्नन्दने धर्मनन्दनः । दाने दानं ददौ किंच, शोधयामास चारकान् ॥ २४० ॥ नामास्य पाण्डवैः पाण्डु-सेन इत्युज्ज्वलौजसः । दीनानाथजनोद्धार-पुरःसरमकल्प्यत ॥ २४१ ॥ पाण्डुसेनोऽथ सेनानी-रिव बाल्येऽपि विक्रमी । विज्ञः प्रज्ञावतामग्र्यो, जग्राह

१ गार्गिकुमारी ।

'१०

सकलाः कलाः ॥ २४२ ॥ जगच्चेतश्चमत्कारि-गुणगृह्यैः स पाण्डवैः । अद्भुतप्राभवप्राज्ये, यौवराज्ये न्ययुज्यत ॥ २४३ ॥ सर्वतः कुर्वतां तेषां, तां तामर्हत्प्रभावनाम् । कल्याणोदर्कराज्यानां, ययौ कालः कियानपि ॥ २४४ ॥

मषीश्यामसुखो जातु, कराग्रोपात्तकौस्तुभः । युधिष्ठिरं जरासूनु-रुपतस्थे सदःस्थितम् ॥ २४५ ॥ कृतसंमानमासीनं, वीक्ष्य हस्तेऽस्य कौस्तुभम् । अदभ्रं संभ्रमं बिभ्र-त्तं पप्रच्छ तपःसुतः ॥ २४६ ॥ एतदत्याहितं किं नु ?, भ्रातरावेदय द्रुतम् । प्रभोश्चिरंतनीं वार्ता, स्मरन्नस्मि भियाऽऽतुरः ॥ २४७ ॥ सत्यैव स्वामिनो वाणी-त्युक्तेऽनेन विषादवान् । पुनः कुन्तीसुतोऽवादी-द्यथावृत्तं तदादिश ॥ २४८ ॥ सोऽप्युवाच शृणु भ्रात-र्यातोऽरण्यमहं तदा । व्याधवृत्तिश्चिरं स्थित्वा, जातु बाणं मृगेऽक्षिपम् ॥ २४९ ॥ अथादित्सुः शरं गच्छ-न्नहमन्तरितो द्रुमैः । अहो ! कोऽयमनागस्कं, सुखसुप्तमनालपन् ॥ २५० ॥ बाणेनाङ्घ्रितले बाढं, निर्घृणो निजघान माम् ? । मया तु जातु नाज्ञात-नामगोत्रो हतः परः ॥ २५१ ॥ वेगादेप तदाख्यातु, नामगोत्रे निजे मम । येनाहमपि नाराचं, तं प्रति प्रतिसंदधे ॥ २५२ ॥ श्रुत्वेति कस्यचिद्वाचं, धीरोदात्तां महात्मनः । नैणोऽयमिति निश्चिन्वन्, खेदमासादयं परम् ॥ २५३ ॥ ( चतुर्भिः कलापकम् ) दशमस्य दशार्हस्य, सूनुरानकदुन्दुभेः । नाम्ना जराकुमारोऽस्मि, जरादेव्यास्तनूद्भवः ॥ २५४ ॥ निर्मानुपे वसाम्यत्र, वने केनापि हेतुना । कोऽसि त्वं पुनरित्युच्चै-र्दूरस्थस्तमवादिपम् ॥ २५५ ॥ ततः सोऽवदद्देह्येहि, ज्यायोभ्रातरहं हरिः । स एवास्मि प्रयत्नस्ते, विफलः सकलोऽभवत् ॥ २५६ ॥ तं दृष्ट्वा वाणिजेनेव, दत्तं शुल्कमिदं त्वया । इति शृण्वन् वचस्तस्य, समीपं प्रापमाकुलः

१ प्रभोर्भावः प्राभवं-प्रभुता । २ 'आसीनं तम्' इत्यन्वयः । ३ 'वदादितः' प्रतिद्वय० । ४ न मृगः । ५ 'मां' प्रतिद्वय० ।

॥ २५७ ॥ कृष्णमालोक्य चामूर्च्छ-मपृच्छं चास्तचेतनः । कथमेतदभूद्वा ! ते, तदा द्वैपायने वनने ॥ २५८ ॥

अवीकथत्ततः कृष्णः, प्रभुवाक्यादनन्तरम् । पौरैः समुज्झिते मद्ये, पण्मासाः प्रययुः सुखम् ॥ २५९ ॥ आयाते मासि वैशाखे कदम्बवनपालकः । सभायामायतिप्रेक्षी, मामुपेत्य व्यजिज्ञपत् ॥ २६० ॥ तत्र त्यक्तं तदा देव !, द्रुमपुष्पाधिवासितम् । उपागतेन गुल्माद्, मद्यं तत्पीतपूर्विणा ॥ २६१ ॥ केनापि सुहृदा साम्बः, प्राभृतीकृत्य पायितः । कुमारैः सह दुर्दान्तै-र्गन्तुमुद्यानमागमत् ॥ २६२ ॥ ( युग्मम् ) ते तत्रापानमाबध्य, तां सुरां स्वैरमापपुः । क्षणेन क्षीबतां प्राप्य, विचेलुश्च यदृच्छया ॥ २६३ ॥ तत्रैकान्ते तपस्यन्त-मन्तकं पापकर्मणाम् । द्वैपायनपरिव्राजं, ते निध्याय दधुः क्रुधम् ॥ २६४ ॥ हन्यतामधुनैवायं, दुरात्मा मुनिपांसनः । व्यापादितः कथं नाम, दग्धुमीशिष्यते पुरीम् ? ॥ २६५ ॥ इति साम्बगिरा लेष्टु-चपेटा-यष्टि-मुष्टिभिः । हत्वा हत्वा मृतप्रायं, तं व्यधुर्भवदात्मजाः ॥ २६६ ॥ मृतोऽयमिति मूर्च्छालं, तं त्यक्त्वा गृहमागमुः । मूर्च्छाविरामे गामपं, तं च वीक्ष्याहमागमम् ॥ २६७ ॥

इत्याख्याय स्थिते तस्मि-न्ननर्थो मा स्म भूदितः । इत्यगच्छं सरामोऽहं, सान्त्वनाय मुनेर्वनम् ॥ २६८ ॥ कोपाटोपकरालाग्र-मद्राक्षं तत्र तं मुनिम् । करौ च कुड्मलीकृत्य, सप्रश्रयमवादिपम् ॥ २६९ ॥ दुस्तपं ते तपः क्वेदं ?, मुने ! कोपः क्व चेदृशः ? । कथमेकत्र संवास-स्तेजस्तिमिरयोरयम् ? ॥ २७० ॥ मुहुः सिक्तं शमाम्भोभिः, फलिष्यन्मुक्तिसंपदा । तपोवीजमखण्डं ते, क्रोधवह्निर्दहत्ययम् ॥ २७१ ॥ अज्ञानैर्मद्यपानान्धै-र्डिम्भरूपैर्महामुने ! । अपराद्धमिदं यत्ते, तदद्य क्षन्तुमर्हसि

१ "कथमेतदभूत्तात, तदा द्वैपायनं वनम" प्रतिकृत० । २ दृष्ट्वा ।

॥ २७२ ॥ अथावादीन्मुनिर्विष्णो !, पर्याप्तं तव सान्त्वनैः । अधुनैव क्रुधाऽन्धेन, निदानं विदधे मया ॥ २७३ ॥ द्वार-
काया यदूनां च, क्षयाय स्यामतो हरे ! । सर्वस्य प्रलयो भावी, लोकस्यास्य युवां विना ॥ २७४ ॥ पुनः प्रसादनायास्य,
साभिलाषं विलोक्य माम् । न्यषेधद्बाञ्जली विष्णो !, कृतमेतस्य सान्त्वनैः ॥ २७५ ॥ वक्राङ्घ्रि-नासिका-हस्ताः, स्थूलोष्ठो-
दर-नासिकाः । हीनाङ्गा विषमाङ्गाश्च, शान्तिं यान्ति न जातुचित् ॥ २७६ ॥
ततः प्रेङ्खन्मनःखेदे, मयि हर्म्यमुपेयुषि । द्वैपायननिदानार्थः, सर्वोऽपि पुरि पप्रथे ॥ २७७ ॥ स्वभावतो ममादेशा-दुप-
देशादपि प्रभोः । बभूव धर्मकर्मैक-सज्जो द्वारवतीजनः ॥ २७८ ॥ तदा कृपालुः कालज्ञः, समेत्य भगवानपि । पितरौ स्वौ
कुमारांश्च, प्रद्युम्नादीनदीक्षयत् ॥ २७९ ॥ रुक्मिणीप्रमुखाः स्वामी, मदीया महिषीरपि । प्राव्राजयदनेकं च, द्वारका-
लोकमाकुलम् ॥ २८० ॥ वत्सरे द्वादशेऽवश्यं, भाविनं द्वारकाक्षयम् । पृष्टः पुनर्ममादिश्य, विजह्रे प्रभुरन्यतः ॥ २८१ ॥
शश्वच्चतुर्थ-षष्ठादि-तपोनिष्ठैकचेतसः । जनस्यैकादशाब्दानि, निर्विघ्नं व्यतिचक्रमुः ॥ २८२ ॥ ततश्च द्वादशे वर्षे, व्यतीयुषि
कियत्यपि । जितोऽस्मत्तपसा नष्टो, द्वैपायनमुनिर्ध्रुवम् ॥ २८३ ॥ एवं निश्चित्य पूर्लोकः, प्रमादं मदिरादिकम् । निस्तन्द्रः
पुनरादद्रे, दुर्लङ्घ्या भवितव्यता ॥ २८४ ॥ ( युग्मम् )
अथोत्पाता महीकम्प-निर्घातो-ल्कादयोऽभवन् । ग्रहेभ्यो निर्ययौ धूमः, कृशानुश्च विवस्वतः ॥ २८५ ॥ ननृतुश्चित्ररू-
पाणि, जहसुः शालभञ्जिकाः । अकाले राहुणा ग्रासः, सूर्याचन्द्रमसोरभूत् ॥ २८६ ॥ अकल्याणफलाः स्वप्ना, जनैर्ददृशिरे

१ 'नाभिकाः' प्रत्यन्तर० । २ 'विषमाक्षाश्च' प्रतिद्वय० ।

निधि । अनेशन् क्वापि रत्नानि, चक्रादीनि ममापि च ॥ २८७ ॥ ततः संवर्तको वातः, प्रावर्तत समन्ततः । स निचिक्षेप पुरान्त–र्दूरादुन्मूल्य पादपान् ॥ २८८ ॥ अन्तर्ग्रामसतिः षष्टि–र्बहिश्च कुलकोटयः । अपिण्ड्यन्त भयान्नष्टा, अप्युपानीय केनचित् ॥ २८९ ॥ मयि पश्यति रामे च, वह्निमक्षाय कश्चन । दारुणो दारुपूर्णायां, द्वारकायामदीपयत् ॥ २९० ॥ अहं शोकानलाकारेण, धूमस्तोमेन चाम्बरम् । युगपत् परितः प्राप्त–व्यासेन व्यानशेतमाम् ॥२९१॥ अभ्रंलिहाभिर्ज्वालाभि–र्धूमोऽथ निरगात । मम शोकान्धकारस्तु, कामं वृद्धिमनीयत ॥ २९२ ॥ अथाहं वसुदेवं च, देवकीं चाथ रोहिणीम् । आरोप्य रथमाकर्षु, प्रवृत्त. सह सीरिणा ॥ २९३ ॥ नाश्वैर्न वृषभैः किंचि–द्रथं क्रष्टुमशक्यत । आवां युगार्पितस्कन्धौ, ततोऽभूव धुरंधरौ ॥ २९४ ॥ अभञ्जि द्रुतमक्षाभ्यां, मध्योऽभाजि युगेन च । रथः कथंचिदावाभ्यां, निन्ये तदपि गोपुरम् ॥ २९५ ॥ अथ क्षणाद्दत्तौ तौ, कपाटौ तत्र केनचित् । रामेणाङ्घ्रिप्रहारेण, व्यघटयेतां च वेगतः ॥ २९६ ॥ महीमग्नो रथः किंचि-द्रुमनकृष्टोऽपि नाचलत् । क्लीवः पित्रोरपि त्राणे, व्यपीदं पौरुषे ततः ॥ २९७ ॥ विषादिनं तदानीं मां, देवः कश्चिदिति स्थितः । उवाच भोः कृष्ण !, कृतं तव परिश्रमैः ॥ २९८ ॥ यस्मादस्मि स एवाहं, द्वैपायनवरः सुरः । उत्पन्नोऽग्निकुमारेषु, स्मृत्वा वैरं कृतोन्मादः ॥ २९९ ॥ किं त्वेकादश वर्षाणि, परमोत्कर्षचक्षुना । जनानामप्रमादेन, नावकाशो ममाभवत् ॥ ३०० ॥ तस्मो दृष्टेनैव, सन्निदानभुवाऽमुना । अगामानेष्यते मृत्युं, मातापितृजनस्तव ॥ ३०१ ॥ यद्भावि न तद्धाति, भावि चेन्न तदन्यथा । तद्वृत्तत(तं) पुराऽऽख्यातं, मा स्म विस्मरतं मम ॥३०२॥ इति श्रुत्वाऽपि तद्वाच–माकर्षन्तौ रथं पुनः । मृगनाशमभापन्न, पितरः स्नेहकातराः ॥ ३०३ ॥ वत्सौ ! वात्मन्यमस्मासु, स्वोचितं चक्रथुर्युवाम् । अवश्यं

भाविनो भावाः, किं तु स्युर्महतामपि ॥ ३०४ ॥ ततोऽस्तु वां शिवः पन्था, विजयेथां चिरं युवाम् । अस्माभिः पुनरत्रैव, नेमिः शरणमाश्रितः ॥ ३०५ ॥ यद्बद्धं मनसाऽस्माभि-र्वचसा यच्च भाषितम् । कृतं यच्चापि कायेन, तन्नो मिथ्याऽस्तु दुष्कृतम् ॥ ३०६ ॥ क्षमयामोऽखिलान् जीवान्, सर्वे क्षाम्यन्तु तेऽपि नः । मैत्री सर्वेषु भूतेषु, वैरमस्ति न केनचित् ॥ ३०७ ॥ अशनादिकमाहारं, प्रत्याख्यामश्चतुर्विधम् । अर्हदादींश्च पञ्चापि, स्मरामः परमेष्ठिनः ॥ ३०८ ॥ वयं कस्यापि नेदानी-मस्मदीयो न कश्चन । इत्युन्मदिष्णुनिर्वेद-मात्मानमनुशास्महे ॥ ३०९ ॥ इत्याहारपरीहार-तत्परैः पितृभिः पुनः । विसृष्टौ वलितग्रीवौ, व्रजावः स्म कथंचन ॥ ३१० ॥

तदैव देवापसद[1]-स्तानधाक्षीत् क्षणेन सः । तेऽपि त्रिदिवमासेदु-र्ध्रुवं तद्ध्यानढौकितम् ॥३११॥ जरासन्धवधाख्यान-सदुपाध्याय ! पश्यति । नाथे त्वय्यप्यसह्येन, हहा ! दह्यामहेऽग्निना ॥ ३१२ ॥ इत्थमुत्थास्नुभिर्दीनैः, प्रलापैः पुरवासिनाम् । दीर्णकर्णः सरामोऽहं, जीर्णारामग्रुपागमम् ॥ ३१३ ॥ (युग्मम्) भवन्तीं भस्मसाद्वीक्ष्य, द्वारकां रङ्कवत् पुरः । तत्र स्थितं विषण्णात्मा, संकर्षणमवादिषम् ॥ ३१४ ॥ आर्य ! पुर्याः क सा लक्ष्मीः ?, क च दाहो महानयम् ? । क शौण्डीर्यमवार्यं तत् ?, क चेयं क्लीवता मम ? ॥ ३१५ ॥ आर्य ! किंकार्यतामूढः, प्रौढापत्पतितस्ततः । किं करोमि ? क गच्छामि, राजचक्रे विरोधिनि ? ॥ ३१६ ॥

सीरपाणिरथाभाणीत्, कृष्ण मा खेदमातथाः । प्रभुण्याख्यातमश्रौषीः, किं न संसारनाटकम् ? ॥ ३१७ ॥ अत्र

[1] अधमदेवः ।

कर्मरीणामः, सूत्रधारो निरर्गलः । प्राणिनो नाट्यपात्राणि, नानानेपथ्यधारिणः ॥ ३१८ ॥ स खल्वक्षुण्णलोत्साहः, स्वमनार्पितभूमिकः । हर्ष-शोकादिभिर्भाव-विवर्तैर्नर्तयत्यमून् ॥ ३१९ ॥ भवनाख्ये ततोऽनेन, सूत्रधारेण सूत्रिता । संज्ञा सर्वाऽपि पात्राणां, तद्विष्णो ! मा स्म खिद्यथाः ॥ ३२० ॥ गन्तव्यं पुनरावाभ्यां, पाण्डवेयान्तिकेऽधुना । ते ह्यावयोरुपकारं नो, नापकारं तु जातुचित् ॥ ३२१ ॥ अपकारेऽपि सौजन्यं, सुजनो नैव मुञ्चति । जहाति दह्यमानोऽपि, चन्दनागो न सौरभम् ॥ ३२२ ॥

ततः प्रचलितावावां, पाण्डवानां पुरीं प्रति । हस्तिकल्पपुरोद्यान-मागमाव श्रमार्दितौ ॥ ३२३ ॥ क्षुत्क्षामं वीक्ष्य मां रामो, भोजनानयनेच्छया । वेगाद्यस्य पुरस्यान्तः, प्रस्थितोऽभिदधे मया ॥ ३२४ ॥ अकृद्दन्ताभिधानोऽत्र, धृतराष्ट्रात्मजो नृपः । स न पाण्डवपक्षेण, मया वैरायते भृशम् ॥ ३२५ ॥ अनार्योऽयं किमप्यार्य !, चेद्वैरोचितमाचरेत् । विदधीथास्ततः क्रीडा-मापनेयमहं यथा ॥ ३२६ ॥ तत् प्रतिश्रुत्य रामेऽथ, पुरीमध्यमुपेयुषि । मम क्षणान्तरे क्ष्वेडा, कर्णमूलमुपागमत् ॥ ३२७ ॥ ततः क्रोधकरालोऽह-मन्युत्तालमधाविषम् । पिहितां च पदाऽऽहत्य, प्रतोलीमुदघाटयम् ॥ ३२८ ॥ [illegible], चतुरङ्गां वरूथिनीम् । अद्राक्षं कुञ्जरालान-स्तम्भपाणिं च सीरिणम् ॥ ३२९ ॥ पुरीपरिघमादाय, धार्तराष्ट्रमथाद्विषम् । दुरात्मन्नागमं सोऽहं, कौरवान्तकरो हरिः ॥ ३३० ॥ ततः परिघमालोक्य, प्रणतो मृत्युकातरः । बद्धाञ्जलिर्जल्पन्मां, न सुयोधनबान्धवः ॥ ३३१ ॥ किमाक्रम्यः कुरङ्गाणां, दुःस्थावस्थोऽपि केसरी ? । हरे ! मामनाक्रम्यास्य, तदागः क्षम्यतामिदम् ॥ ३३२ ॥ तं मुक्त्वाऽथ प्रमादेन, पुनस्तद्वनमागमम् । नानामनोहराहार-

पाणिना सीरिणा समम् ॥ ३३३ ॥ रामस्तत्र मयाऽप्रच्छि, लब्धं भोज्यमिदं कथम् ? । आयातोऽसि कथं चास्य, दक्पथे परिपन्थिनः ? ॥ ३३४ ॥

रामेणाख्यायि गोविन्द !, कन्दुकाद्धोज्यमद्भुतम् । सुवर्णकटकक्रीत-मानयन्तमिदं पथि ॥ ३३५ ॥ कथंचिद् ज्ञातवृत्तान्तः, कृतान्त इव भीषणः । सैन्योदन्वानरौत्सीन्मा-मच्छदन्तोऽभ्यधादपि ॥ ३३६ ॥ (युग्मम्) कुत्राहो ! रोहिणीसूनो !, यासि पाण्डवबान्धव ! ? । गृहाणायुधमाधेहि, पुनरायोधने मनः ॥३३७॥ विमुच्य भोज्यपात्राणि, ततः क्ष्वेडायितोद्धतः । स्तम्भेन दलयन् वैरि-बलं दृष्टस्त्वयाऽप्यहम् ॥ ३३८ ॥

अथावां विहिताहारौ, ततः प्रचलितौ क्रमात् । उपागाव दुरापाम्बु, कौशाम्बं नाम काननम् ॥ ३३९ ॥ पुंनागपादपस्यास्य, छायामायातवानहम् । तृषार्दितः पयःपानं, श्रान्तो राममयाचिषम् ॥ ३४० ॥ सोपद्रवे वनेऽमुष्मिन्, कृष्ण ! मा भूः प्रमद्वरः । आगतो द्रुतमेषोऽह-मिति व्याहृत्य मां मुहुः ॥ ३४१ ॥ विनियुज्य च साहाय्ये, ममेह वनदेवताः । इतो जगाम रामोऽम्बु, निर्विलम्बमवेक्षितुम् ॥ ३४२ ॥ (युग्मम्) अहं तु प्रावृतं क्षौमे-णाङ्घ्रिमारोप्य जानुनि । अस्वपं श्रमसुप्राप-निद्रोऽत्रैव तरोस्तले ॥ ३४३ ॥ ततो विद्धोऽस्मि कस्माच्चि-द्भ्रमात् पादतले त्वया । इयं तव जरासूनो !, कथिता मूलतः कथा ॥ ३४४ ॥ श्रुत्वा विष्णुमुखादेवं, द्वारकादाहवैशसम् । इत्यशोचं चिरं दुःखा-द्दैवोपालम्भपूर्वकम् ॥ ३४५ ॥ रे दुर्विधेय ! वैधेय !, विधे ! विविधकौतुकाम् । एवंविधां विधायैता-मधाक्षीरधुना कथम् ? ॥ ३४६ ॥ दग्धौ हन्त हुताशेन, हा ! मातापितरौ मम । मामकीनाः क्व ते नाम, बन्धवः स्नेहबन्धुराः ? ॥ ३४७ ॥ जितवासवसाम्राज्यं, राज्यं हारि

क्वेदः क नन ? । क चाम्लेच्छसमस्थानं, तले मिकतिलं तरोः ? ॥ ३४८ ॥ हा ! तत्राप्यस्य कुत्रेदं, मया बाणेन ताडनम् ? । जि न्मां कृष्ण ! मृगमुग्म-भ्रातृहत्यामलीमसम् ॥ ३४९ ॥ शोचन्तमिति मामूचे, वात्सल्यादुत्सुको हरिः । अलमेभिर्विलापैस्ते, मा कार्यं ते शोकमुना ॥ ३५० इत ऊर्ध्वं मुहूर्तेन, मृत्युर्भावी मम ध्रुवम् । तदिदानीं स्मरिष्यामि, श्रीनेमिपदपङ्कजम् ॥३५१॥ त्वं कौस्तुभमादाय, व्रजेन व्रज पाण्डवान् । अन्यथा भविताऽवश्य-मायातस्त्वां बलो बली ॥ ३५२ ॥ कियन्तमपि पन्थानं, यायाः पश्चान्मुखैः पदैः । यथा संकर्षणो रोषा-न्न स्यादनुपदी तव ॥ ३५३ ॥ मर्माविधमथोद्धृत्य, हरेरङ्घ्रितला-च्छरम् । कौस्तुभं च करे कृत्वा, धर्मजन्मनिकागमम् ॥ ३५४ ॥

इत्याकर्ण्य जरासूनो-र्मुरारादारवनीकथाम् । प्रापुः परमसौजन्याः, शुचं पञ्चापि पाण्डवाः ॥ ३५५ ॥ चित्तवृत्ति-कृताराम, सम्यग्दर्शनमन्त्रिणा । यति-श्रावकधर्माभ्या-मात्मजाभ्यां च राजितम् ॥ ३५६ ॥ चारित्रराजमासन्ना-सीनसंतोष-गौरवम् । कृत्वा शोकं विवेकोऽथ, पाण्डवानामदर्शयत् ॥ ३५७ ॥ ( युग्मम् ) तत्र वीक्षितमात्रेऽपि, तेऽन्वभूवन् परं सुखम् । विवेकश्च परमं, नमेऽन्मोपकारिणम् ॥ ३५८ ॥ आकालं सन्कृतास्तेषा-मत्यन्तमपकारिणः । प्रत्येकं प्रत्यभाषन्त, मोहराजादयस्तदा ॥ ३५९ ॥ निर्वेदाख्यः सखाऽस्येत्य, सतोषमहितस्ततः । मोहादीनां पृथक् पार्थान्, दोषजातमजिज्ञपत् ॥ ३६० ॥ तस्य ते पाण्डुजन्मान-स्तमोऽन्तरचिन्तयन् । अहितोऽपि हितो नूनं, मोहो नः प्रत्यभादयम् ॥ ३६१ ॥ एतस्य स्नेहपूरेण, रागकेसरिणा श्रियः । असारा अपि नः सार-रूपत्वेन प्रदर्शिताः ॥ ३६२ ॥ नाम्ना द्वेषगजेन्द्रेण, सुतेनास्य

१ सगोष्ठिभिरासंतोषाभिषेकरम ।

कनीयसा । बन्धुष्वपि वधारम्भ-मकार्यं कारिता वयम् ॥ ३६३ ॥ अन्योऽप्येतस्य संतान-स्तानवाय सुखश्रियाम् । सर्वदाऽभवदस्माकं, कषायविषयादिकः ॥३६४॥ तस्मादेनं तिरस्कृत्य, कुर्मो नेतारमात्मनः । तं चारित्रक्षमाधीशं, साक्षीकृत्य जगत्प्रभुम् ॥ ३६५ ॥ किं तु न ज्ञायते देशो, यं पुनीतेऽधुना प्रभुः । यद्वा जानन्मुमुक्षून्नः, स्वयं सोऽनुग्रहीष्यति ॥ ३६६ ॥

साधीयोऽध्यवसायसंततिमयीमारूढवन्तो दृढं, निश्रेणिं स्पृहणीयबोधपटिमस्पष्टीभवद्दृष्टयः ।
तैस्तैरुत्कलिकाशतैः कवचितं चेतो वहन्तस्तदा, पन्थानं किल पाण्डवा जिनपतेरालोकयांचक्रिरे ॥३६७॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये द्रौपदीप्रत्याहरण-द्वारकादाह-कृष्णावसानवर्णनो नाम सप्तदशः सर्गः ॥ १७ ॥

# अथ अष्टादशः सर्गः ।

अथ नेमिजिनादेशा-देशनाक्षीरसागरः । धर्मघोषमुनिः पाण्डु-मथुरोद्यानमाययौ ॥१॥ समागमं मुनेस्तस्य, विदित्वोद्यानपालकात् । सहानुजैरजातारि-र्मुदितो वन्दितुं ययौ ॥ २ ॥ अथाध्यासीनमुन्मील-दानन्दाश्रूदबिन्दुभिः । सुरा-सुरनराधीश-मण्डलैर्मण्डितं सदः ॥३॥ निविष्टममरैः सृष्टे, विकचे काञ्चनाम्बुजे । कर्तुं विश्वत्रयीं धर्म-मयीमन्यं प्रजापतिम् ॥४॥

१ लघुत्वाय । २ साधीयान्-अतिप्रशस्यः । ३ उत्कण्ठाशतैः । ४ 'कवलितं (व्याप्तं) प्रतिद्वय० ।

पञ्चशत्या महामात्य-मुनीनां परिवारितम्। धर्मं साक्षादिवोदग्रै-स्तपोदानादिभिर्वृतम् ॥ ५ ॥ रूपस्य तपसोऽप्येक-माश्रयं श्रेयसां निधिम्। अद्राक्षीत् प्रीतिफुल्लाक्ष-स्तं मुनिं मेदिनीपतिः ॥ ६ ॥ ( चतुर्भिः कलापकम् ) भक्तिनिर्भरमानम्य, तं ततो मुनिपुङ्गवम्। जगाद्जन्मना सार्धं, न्यविशत पतिः क्षितेः ॥ ७ ॥ मुनीन्द्रः सोऽथ पीयूष-स्यन्दसोदरया गिरा। वैराग्यै-करसां धर्म-देशनामुपचक्रमे ॥ ८ ॥

धर्मः शिरसाप्यादमारम्भं, संसारस्य विदन्नपि। सद्यान्मद्यप्रवृत्तसमा-न्नायं निर्विद्यते जनः ॥ ९ ॥ सुखाद्वैतमयाः कामं, ये स्वानुत्तरवासिनः। तेषामपि यतो हन्त, पर्यन्तविरमाः श्रियः ॥ १० ॥ कर्मस्तोमभुजिष्याणां, मनुष्याणां तु का कथा?। तेषामायुः श्रियः सौख्यं, योषिद्भ्रूभङ्गभङ्गुरम् ॥ ११ ॥ संपद्भिर्दोर्विलासैश्च, येऽप्यहंकारिणोऽधिकम्। तेऽपि ह्यन्यस्य दृश्यन्ते, भवन्तावगृहाश्रयः ॥ १२ ॥ येऽपि दोर्विक्रमाक्रान्त-भूचक्राश्चक्रवर्तिनः। जातुचित्तेऽपि वीक्ष्यन्ते, हन्त दीनां दशां गताः ॥ १३ ॥ दुःखैकतानमयं संप-त्तारतम्यमयं च तत्। धीराः संत्यज्य संसार-मुत्तिष्ठन्ते विमुक्तये ॥ १४ ॥

इति संवेगिर्नां वाच-मुपार्ये विरते मुनौ। पाणिकुड्मलमामील्य, जगाद जगतीपतिः ॥ १५ ॥ भवानेव प्रभो! वेद, कामं संसारमीदृशम्। गिरः प्रक्रमते नक्कु-मीदृशीं ननीदृशः ॥ १६ ॥ निश्चित्यानुभवैस्तैस्तै-र्भवस्यानभिरामताम्। तस्मादिहापि निःसारात्, प्रविव्रजिषुमानसैः ॥ १७ ॥ श्रीनेमिस्वामिनो ध्यात-श्चिरादागमनोत्सवः। नूनं तेनापि विज्ञाय, प्रतिबोधितो नः कृते ॥ १८ ॥ ( युग्मम् ) तद्द्यानपि नः साक्षा-त्तस्य मूर्तिर्जगत्पतेः। संसारसागरादस्मा-दुद्धरास्मांस्ततः

१ 'महामना' प्रतिष्ठ० । २ भुजिष्यः-दासः ।

प्रभो ! ॥ १९ ॥ किं त्वर्थोऽतीन्द्रियज्ञान-शेवधीनां भवादृशाम् । न कोऽपि क्षेत्रकालाभ्यां, दवीयानप्यगोचरः ॥ २० ॥ तद्वनेऽभूद्यथा मृत्युः, शयालोर्वनमालिनः । जराङ्गजन्मनाऽनेन, तथा नः कथितः स्वयम् ॥ २१ ॥ तत्कृते जलमाहर्तुं, गतोऽभूत्तु हली तदा । तत्कथां श्रोतुमिच्छामः, स्वामिन्नाख्यातुमर्हसि ॥ २२ ॥

अथेत्यव्याहतज्ञानो, व्याजहार मुनीश्वरः । बलः सलिलमादाय, केशवान्तिकमाययौ ॥ २३ ॥ जल्पति स्म च तं भ्रात-रुत्तिष्ठोत्तिष्ठ सत्वरम् । स्फीतमस्तीदमानीत-मम्भः सुरभि शीतलम् ॥ २४ ॥ तत् प्रक्षाल्य क्षणादास्यं, कणेहत्य निपीय च । दूरकान्तारसंचार-स्रुतिः श्रान्तिर्विनीयताम् ॥ २५ ॥ अव्याहरति कंसारौ, सीरभृत् पुनरब्रवीत् । किमु रुष्टोऽस्यरिष्टारे !, कालक्षेपान्मनागपि[1] ॥२६॥ एष तेऽसांप्रतं रोषः, सांप्रतं तु प्रसीद मे । देशे दवीयसि प्राप्ति-र्वारिणोऽत्रापराध्यति ॥ २७॥ तथाप्यस्मिन्नजल्पाके, सीरपाणिरचिन्तयत् । शयानोऽस्ति पथि श्रान्तः, शेतां नामैष तन्मनाक् ॥२८॥ इत्यालोच्य स्थितः कृष्णं, परितः कृष्णमक्षिकाः । भ्रमन्तीर्वीक्ष्य संभ्रान्तः, सोऽपि(प)निन्येऽवगुण्ठनम् ॥ २९ ॥ ततोऽपश्यदपेतासुं, कंसविध्वंसनं हली । शोणितैश्चोल्वणं भल्लि-व्रणं चरणपल्लवे ॥ ३० ॥ कोपाटोपात्ततः सिंह-नादमुच्चैश्चकार सः । येनारण्यमृगास्त्रेसुः, कम्पते स्म च काश्यपी ॥ ३१ ॥ जगाद च मदाध्मातः, पातकी ननु कोऽस्ति भोः ? । निद्राणमतुलप्राणं, योऽवधीन्मम बान्धवम् ॥३२॥ सुप्त-मत्त-प्रमत्तेषु, बाल-स्त्री-मुनि-गोष्वपि । क्रूरकर्मैकचाण्डालो-ऽप्यभिज्ञः प्रहरेत कः ? ॥ ३३ ॥ दोर्दर्पोऽप्यस्ति चेत् कश्चित्, तत् स्वमाविःकरोतु सः । भुजोष्मज्वरिणां बाहुः, सर्वेषामेष भेषजम् ॥ ३४ ॥

१ 'क्षेपागमान्मयि,' 'क्षेपान्मनाग्मयि' प्रत्यन्तरपाठौ ।

ग्नागनं क्षतः कोपा-द्रिपमुद्गीर्य लाङ्गली । तारं फूत्कारमुन्मुच्य, मूर्छितः क्ष्मातलेऽपतत् ॥ ३५ ॥ क्षणाच्चैतन्यमासाद्य, शीतैः कान्ताग्माकृतैः । रोदयन्श्वापदान् काम-माक्रन्दैर्विललाप सः ॥ ३६ ॥

हा ! विश्वैकशौण्डीर !, हा ! रिपुष्वेकरोपण ! । हा ! गुणिष्वेकधौरेय !, हा ! गुरुष्वेकवत्सल ! ॥ ३७ ॥ हा ! कंसभंगयोगंग !, हा ! कालानलनीरद ! । हा ! निःसन्धजरासन्ध !, हा ! रणक्रूरविक्रम ॥ ३८ ॥ हा ! लक्ष्मीकेलिपङ्क !, हा ! निःशङ्कशिरोमणे ! । हा ! यशःकैरवागम !, हा ! रामनयनोत्सव ! ॥ ३९ ॥ शस्त्राघातैर्द्विषां तैस्तैः, श्रमोऽप्यासीन्न ते पुरा । नैव त्वद्व्रणादस्मा-न्मृत्युः श्रद्धीयतां कथम् ? ॥ ४० ॥ तदुत्तिष्ठ द्रुतं भानु-रारोहत्यन्तरम्बरम् । न मन्ना..पेऽन्यीगो-ऽप्यग्रतो गन्तुमीश्वहे ॥ ४१ ॥ चरणव्रणपीडाभि-र्न चेच्चलितुमीशिषे । तदाऽऽरोह मम स्कन्धं, बन्धो! किमसि मौनितः ? ॥ ४२ ॥ किमिति क्रन्दतोऽप्येवं, वितरस्युत्तरं न मे ? । इमे हि श्रवसी पातु-मुत्सुके ते वचोऽमृतम् ॥ ४३ ॥ रोषं मयि पुराऽकार्षीः, माऽऽगस्यपि न जातुचित् । इदानीं तु विनाऽप्यागः, कथं ते दीर्घरोषिता ? ॥ ४४ ॥ हा ! हा ! यदयं नेतुं, निनितोऽभूद्दशामिमाम् । तत्त्वया किं कृतो विश्व-मौलिलालितशासनः ? ॥ ४५ ॥ यद्वा ज्ञातं नितान्तं ... जिह्मयितुमीहसे । तस्य रुन्दलस्येव-मतीव महतीः श्रियः ॥ ४६ ॥ एतैर्वा किमुपालम्भै-र्भ्रातर्यावः पुरः क्वचित् । दैवाय प्रगल्भ्यारा-मनामुष्मै दुरागने ॥ ४७ ॥ निद्रासुखाभिकालोभाद्, गन्तुमुत्सहसे न चेत् । भ्रातस्तदद्य तिष्ठावः, गम्भीरेऽत्रैव कानने ॥४८॥ इत्यादि प्रलपन्नुच्चा-रनेन वचसा मुहुः । सीरभृत्तं दिनं तां च, यामिनीमत्यवाहयत् ॥ ४९ ॥ ... न ...नैर्निम्नै-रनुतिष्ठन्नमच्युतम् । जीवद्बुद्ध्या निजस्कन्ध-मध्यारोप्य बलोऽचलत् ॥ ५० ॥ स्कन्धन्यस्तहरिर्बन्धु-

स्नेहव्यामोहितो हली । भ्राम्यति स्म सरि-च्छैल-काननानि दिवानिशम् ॥ ५१ ॥ पुष्पैर्वन्यद्रुमाणां च, नित्यमानर्च शार्ङ्गिणम् । एवं रामोऽतिचक्राम, षण्मासान् पर्यटन् वने ॥ ५२ ॥ प्राप प्रावृडथाऽऽशान्ता-न्नीलयन्ती बलाहकैः । नूतनैरङ्कुरोद्गारै-र्मेदिनीमण्डलं पुनः ॥ ५३ ॥

अथ ग्रावमयं शैला-दुत्तीर्णं हेलया हली । स्यन्दनं कंचिदद्राक्षीत्, समभूभागभङ्गुरम् ॥ ५४ ॥ सज्जयंस्तं जजल्पेऽथ, सारथिः सीरपाणिना । रथेऽस्मिन् कणशो भग्ने, कस्ते मूढ ! मुधा श्रमः ? ॥ ५५ ॥ सारथिस्तमथोवाच, संगरेषु सहस्रशः । निर्व्यूढोऽप्यधुना पाद-प्रहारेणापि यो मृतः ॥ ५६ ॥ सोऽयं चेद्विश्वजीवातु-र्जीविता तव बान्धवः । खण्डशस्तद्रतोऽप्येष, प्रगुणीभविता रथः ॥ ५७ ॥ क्व मे बन्धुर्मृतोऽस्तीति, कामं साक्षयमानसः । तं मुहुः कुटिलं पश्य-न्नचालील्लाङ्गली पुरः ॥ ५८ ॥ रोपयन्तं निरूप्याथ, शिलायां नलिनीं क्वचित् । सारम्भमभ्यधात् कंचि-दुच्चैःशब्दं हसन् हली ॥ ५९ ॥ व्यामूढात्मन् किमेतस्मि-न्नत्यन्तकठिनेऽश्मनि । सहस्रैरपि यत्नानां, प्ररोहति सरोजिनी ? ॥ ६० ॥ सोऽप्यवादीत्तवायं चेत्, प्राणिष्यति सहोदरः । पाषाणे तत् खरेऽप्यस्मिन्, प्ररोक्ष्यत्यरविन्दिनी ॥ ६१ ॥ इत्येतस्यापि भारत्या-मवज्ञाविवशाशयः । व्यक्तोत्प्राससस्मितस्मेर-श्चचाल मुसली पुरः ॥ ६२ ॥ ततो दावाग्निनिर्दग्धं, सिञ्चन्तमवनीरुहम् । कंचिदारामिकं रामः, पश्यति स्म व्रजन् पुरः ॥ ६३ ॥ तं चाभ्यधाद्विगेतां ते, हन्त दुर्व्यवसायताम् । मुञ्चन्ति जातुचिद्दग्ध-भूरुहोऽपि किमङ्कुरान् ? ॥ ६४ ॥ स जगाद यदि स्कन्ध-शवो वार्तयिता त्वया । शाड्वलीभविता भूय-स्तदाऽयमपि पादपः ॥ ६५ ॥ तामश्रुत्वेव

१ दिगन्तान्। २ मेघैः। ३ 'स्यन्दनः' प्रतिद्वय०, स्यन्दनमिति स्यात्। ४ उत्प्रासः-उपहासः। ५ 'दुर्व्यवसायिताम्' प्रत्य०

गतान-मुराचाल हली पुरः । दूर्वाश्च गोशवास्तेषु, क्षिपन्तं कंचिदैक्षत ॥ ६६ ॥ तमप्यभिदधे गाव:, कथमेताः परासवः । दूर्वाः कालयिष्यन्ति, गताः कङ्कालशेषताम् ? ॥ ६७ ॥ तेनाप्यूचे बलः पश्चा, गन्ता चेदेष संस्थितः । चरितारस्तदा गावो-ऽप्यमूर्दूर्वाङ्कुरानिमान् ॥ ६८ ॥

रामोऽथाचिन्तयत् सत्यं, किं मृतोऽयं ममानुजः ? । वदन्ति यदमी सर्वे-ऽप्येकरूपमिदं वचः ॥ ६९ ॥ यावदित्यासचैतन्यः, किंचिच्चलति लाङ्गली । तावदुद्योतिताऽऽशान्तः, कश्चिदस्थात् पुरः सुरः ॥ ७० ॥ सोऽब्रवीत् सीरिणं सोऽहं, सिद्धार्थः सारथिस्तव । प्रमादात्पतस्तस्य, देवभूयमुपागमम् ॥ ७१ ॥ स्मरस्येतत् परिव्रज्या-काले मामर्थयिष्यसे । यन्मामभ्युद्धरेर्भ्रातुं, पतन्तं व्यसनार्णवे ॥ ७२ ॥ तत्त्वामिदानीमालोक्य, मोहनिद्राविसंस्थुलम् । प्रबोधयितुमभ्यागां, तां तवाभ्यर्थनां स्मरन् ॥ ७३ ॥ श्रीनेमिना पुरा मृत्यु-र्मुरारातेर्जरासुतात् । यदूचे तत्तथैवाभू-दन्यथा नार्हतां गिरः ॥ ७४ ॥ एतान्यश्म-रथादीनि, वैकृतानि कियन्त्यपि । भ्रातर्मोहव्यपोहाय, दर्शितानि मयैव ते ॥ ७५ ॥ विमुच्य तमिमं मोहं, सर्वदोषैः दुःखसंपदाम् । आत्मनीनं महत् किंचित्, कर्म निर्मीयतां त्वया ॥ ७६ ॥ बान्धवः खल्ववाप्यन्ते, जीवैर्जन्मनि जन्मनि । किं तु ते मोहमेकैक-मेनसो भवहेतवः ॥ ७७ ॥ जीवाः सर्वे हहा ! बन्धु-संहतिस्नेहमोहिताः । दुःखक्षोपक्षमे कर्म-ण्युत्सहन्ते न जातुचित् ॥ ७८ ॥ बन्धुस्नेहोऽतराम्भोधि-रेष्यतीनां सुखश्रियाम् । दुःखश्रेण्याश्च विश्राम-धाम तद्भिन्धि नम् ॥ ७९ ॥

१ कृष्णः—अस्थिपिञ्जरम । २ मृतः । ३ 'भ्रातः !' प्रतिद्वय० ।

इति सिद्धार्थदेवोक्तां, गिरमाकर्ण्य लाङ्गली । जल्पति स्म त्वया बन्धो !, साधु साध्वस्मि बोधितः ॥ ८० ॥ किं तु
मे कथय भ्रात-र्भ्रातुरस्य मुरद्विषः । मृत्युनाऽत्यन्तदुःखार्तः, प्रवर्ते क्वात्मनो हिते ? ॥ ८१ ॥ देवोऽभ्यधान्ननु भ्रात-
स्त्रिलोकीकल्पपादपः । अस्त्येव भगवान्नेमि-र्दुःखार्त्तानामरुंतुदः ॥ ८२ ॥ श्रेयःपीयूषवर्षैक-प्रावृषं तत्पदान्तिके । दीक्षा-
मादाय शाश्वत्या-मुद्यच्छस्व सुखश्रिय(या)म् ॥ ८३ ॥ तथेति प्रतिपेदान-स्तद्गिरं सीरभृत्ततः । तत्समेतो मुराराते-रग्नि-
कर्मादि निर्ममे ॥ ८४ ॥

ततोऽसौ यावदत्यन्तं, संयमोत्सुकमानसः । लाङ्गली तावदद्राक्षी-द्विद्याधरमृषिं पुरः ॥ ८५ ॥ प्रत्युद्गम्य प्रणम्याथ,
रोहिणीतनयः क्षणात् । पप्रच्छ स्वागतं हर्ष-बद्धोत्कर्षमना मुनिम् ॥ ८६ ॥ मुनिरप्यभ्यधाद्भद्र !, विश्वभद्रंकरः प्रभुः ।
श्रीमन्नेमिर्द्रुतं ज्ञात-त्वन्मनाः प्रजिघाय माम् ॥ ८७ ॥ तत् कुरुष्व मनोऽभीष्टं, पुष्टये पुण्यसंपदाम् । कालोऽयमेव दुष्कर्म-
श्रेणिमर्मच्छिदे तव ॥ ८८ ॥ इत्युत्साहाग्रमानीतो, नभश्चरमुनेर्गिरा । प्रपेदे सर्वसावद्य-विरतिं सीरभृत् क्षणात् ॥ ८९ ॥
जवाद्यतिरहस्यानां, जज्ञे विज्ञश्च तत्क्षणात् । भूयान्न खलु संस्कारो, जात्यरत्नैरपेक्ष्यते ॥ ९० ॥

सांप्रतं च तपःकर्म, कुर्वन् षष्ठाष्टमादिकम् । तुल्यान्तःकरणाकारो, लोष्टेऽप्यष्टापदेऽपि वा ॥ ९१ ॥ शमाद्वैतसुधाकुण्ड-
स्नानशौण्डमनाः सदा । तानप्यति हि मन्वानो, नाकिनः क्लेशपाकिनः ॥ ९२ ॥ वैरङ्गिकः शरीरेऽपि, जीवितव्येऽप्यरागवान् ।
अरिष्वपि निरातङ्को, निःशङ्को विपिनेष्वपि ॥ ९३ ॥ धर्मामृतमयैः शान्तै-स्तैस्तैर्वचनवीचिभिः । तत्र तत्र जनांस्तांस्ता-नुप-

१ 'तन्मुखात्' प्रतिद्वय० । २ सुवर्णे ।

स्मानसौण्डमनाः सदा । तानन्यान ... ॥ ९३ ॥ धर्मामृत ...
वस्मिन्नपि निरातङ्को, निःशङ्को त्रिविनेष्वपि ... १ सुगमो ।

कर्मरागैः ॥ ९४ ॥ अरण्य-नगर-ग्राम-कर्वटेषु समीरवत् । स्वैरमप्रतिबद्धात्मा, विहरत्येककुण्डलः ॥ ९५ ॥ ( पञ्चभिः कुलकम् ) तन्मार्गाभिरथान्नं, कृतार्थमन्यमानसः । सिद्धायदेवच्छायेव, तस्याम्यर्णचरोऽभवत् ॥ ९६ ॥ एकतो भगवान्नेमि-रन्यतश्च न भीरुधीः । मेदिनीमुपकुर्वाते, सूर्याचन्द्रमसाविव ॥ ९७ ॥ तत्तयोर्बन्धवो मार्ग-माश्रित्याशु तदाश्रितम् । निरीह-मनसो गुरु-मर्चां कर्तुमर्हथ ॥ ९८ ॥ एकैव सन्मणीनां हि, लोकालंकरणं गतिः । ध्वान्तध्वंसादृते कृत्यं, प्रदीपानां च नाप-रम् ॥ ९९ ॥ द्विषः क्षिप्ताः कृतं राज्यं, भुक्तमप्रतिमं सुखम् । किंचिद्वस्तत्र संसारे, यद्यप्यवशिष्यते ॥ १०० ॥ केवलं तन्मुखार्तिं, मुक्तेर्माकन्यमस्ति वः । तद्दातरि व्रते तस्मात्, कालक्षेपो न हि क्षमः ॥ १०१ ॥

इत्युर्जितोन्नादा, धर्मघोषगुरोर्गिरा । संसारं अभिति त्यक्तु-मैषिषुः पाण्डुसूनवः ॥ १०२ ॥ ते ततः सहमोत्थाय, नमानस्य मुनीश्वरम् । उत्तरङ्गितसंवेगाः, प्राविशन्नगरीं पुनः ॥ १०३ ॥ ते मुहूर्ते शुभे कृष्ण-प्रीतेरानृण्यमिच्छवः । चक्रुर्ज-गज्जनस्मानं, स्वराज्यस्याभिषेचनम् ॥ १०४ ॥ ते रुद्धान्यवरोद्धृत्यैः, कारागाराण्यशोधयन् । आत्मानं पुनराकीर्णं, दुष्कर्म-दस्युभिः ॥ १०५ ॥ दीनानां ते हिरण्यौघै-र्दौर्गत्यमुदमूलयन् । आत्मनस्तु बृहन्मूलं, संसारविषशाखिनम् ॥ १०६ ॥ जीर्ण-भवनानि ते विश्वे, चैत्यान्युद्धरन्ताम् । गम्भीरान् पुनरात्मानं, दुर्गत्याख्यान्धकूपतः ॥ १०७ ॥ अमेयानि वपन्ति स्म, मस-क्षेत्राण्यनानि ते । मुक्तिश्रीगामशेषाणा-मेकमेवाभवन् फलम् ॥ १०८ ॥ किमन्यत्ते तथाऽवर्पन्, सर्वतः कनकोत्करैः । लुम्प-न्ति स्म यथा नामा-प्युत्तमर्णाधमर्णयोः ॥ १०९ ॥

१ मगध. ।

कुञ्जरेन्द्रानथारूढाः, सुरसिन्धुरबान्धवान् । तदात्वोचितमाणिक्य–मौक्तिकाकल्पशालिनः ॥ ११० ॥ उद्धूतचामरैः साक्षा–दप्सरोनिकरैरिव । वृताः शृङ्गारसंभार–सारैर्वाराङ्गनागणैः ॥ १११ ॥ सपौरै : सपरीवारैः, सामन्ता-मात्य-मन्त्रिभिः । अन्वीयमानाः ससुरै–रिव सामानिकामरैः ॥ ११२ ॥ लोकपाला इवाध्यक्षाः, पश्चाप्युद्दामदीप्तयः । कराग्रप्रेङ्खितै रत्नैः, प्रीणयन्तोऽर्थिमण्डलम् ॥ ११३ ॥ तन्मार्गानुगमप्रौढ–तृष्णया कृष्णयाऽन्विताः । ऊरीकर्तुं परिव्रज्यां, प्रचेलुः पाण्डुसूनवः ॥ ११४ ॥ ( पञ्चभिः कुलकम् ) सनेत्राश्रुकणान् लाज–कणान् पौरमृगीदृशाम् । पाण्डवेयाः प्रतीच्छन्तो, बाह्योद्यानमुपाययुः ॥ ११५ ॥ तत्रोत्तीर्य गजेन्द्रेभ्यो, राजचिह्नान्यपास्य ते । सपत्नीकाः प्रभुं धर्म–घोषाख्यमुपतस्थिरे ॥११६॥ विज्ञा व्यज्ञापयन्नेनं, ते निपत्य पदाम्बुजे । शिरो नः पावय स्वामिन्, दीक्षादानात् स्वपाणिना ॥ ११७ ॥ भूत्वा भगवतो नेमे–स्ततः स प्रतिहस्तकः[1]। दक्षिणो दीक्षयामास, मुनिः सप्रेयसीनमून् ॥११८॥ तदङ्गेषु तदा हर्षा–न्निर्गच्छत्पुलकच्छलात् । दृश्यन्ते स्म प्रणश्यन्ति, कल्मषाणीव सर्वतः ॥ ११९ ॥ तेषां भावारघट्टोऽन्त–र्वहति स्म तदा तथा । सिक्ताः पुण्यद्रुमाः कामं, यथाऽऽनन्दाश्रुकुल्यया ॥ १२० ॥ द्रौपद्यात्तव्रता तेषां, पश्चानामनुगा बभौ । महाव्रतानां मूर्तांना–मिव मूर्तिमती क्रिया ॥ १२१ ॥ तान् प्रणम्य ततः सर्वः, पौरा-मात्यादिको जनः । मन्दं मन्दं प्रयाति स्म, श्रेयःसंभारनिर्भरः ॥ १२२ ॥

तेऽप्यभ्यर्णे[2] गुरोस्तं त–मभ्यस्यन्तः क्रियाक्रमम् । निरीहाः स्वशरीरेऽपि, व्यहरन्नन्यतोऽन्यतः ॥ १२३ ॥ अथोन्मीलन्मनोभाव–परिचारकलालिताः । नित्यं प्रशमपीयूष–पानसौहित्य[3]शालिनः ॥ १२४ ॥ वाचमिन्द्रियखिङ्गाना–मशृण्वन्तो

१ प्रतिनिधिः । २ समीपे । ३ "पानपीयूषशा०" प्रतिद्वय० ।

मनागपि । त्यजन्तो दूरतः काम-मालस्यादीनयूथकान् ॥ १२५ ॥ आननेन्दुमपश्यन्तो. जातु निद्रामृगीदृशः । क्रमेण
ब्रह्मचर्याः ते, समभूवन्नतीतिनः ॥ १२६ ॥ ( त्रिभिर्विशेषकम् ) इत्यात्तश्रुतसंस्कारा, दधुर्गीतार्थताममी । रसेन्द्रसंस्कृता
लोह-गानवो हेमतामिव ॥ १२७ ॥ याज्ञसेन्यप्युपासाना, प्रवर्तिन्याः पदाम्बुजम् । तपो-ज्ञान-विवेकानां, परां कोटिमशि-
श्रियत् ॥ १२८ ॥ ततः कदाऽप्यनुज्ञाप्य. धर्मघोषमुनीश्वरम् । ते पृथग्विहरन्ति स्म, हरन्तो विश्वकल्मषम् ॥ १२९ ॥
[illegible] तपोऽभि-ग्रहोदग्रं पृथक् पृथक् । येन स्वं पवितुं शङ्के. माऽप्यैच्छन्मुक्तिकामिनी ॥ १३० ॥ संभाव्य सुभटं
[illegible] निजमात्मजम् । मोहदुर्निपहोन्माहः, श्रीमान् धर्मः किमप्यभूत् ॥ १३१ ॥ धर्मसूतेः सदा शान्ति-हिमानी-
महिमोदनः । [illegible] महामोह-ग्रीष्मारम्भं वृथाऽकरोत ॥ १३२ ॥ यावन्तो विद्विषः स्वान्तः-पुरमादातुमन्तरा । के नाम-
[illegible] तथाग्निपरिणामभासि ? ॥ १३३ ॥ भीमस्याभूद्यथा सत्त्वं, दुर्लङ्घ्यमरिभिः पुरा । संप्रत्यपि तथैवासी-
च्छान्तैः [illegible]भिः ॥ १३४ ॥ यथा यथाऽरिषड्वर्ग-निग्रहेऽभूदरुंतुदः । तथा तथा दधौ चित्रं, भीमः कोपमभीषणम्
॥१३५॥ भीमोऽन्तर्वैरिणः शान्ति-गदयाऽदलयत्तथा । यथा नामापि नाश्रौषी-द्वेष तेषां पुनः क्वचित् ॥१३६॥ अर्जुनस्य
मुनेर्जीव-तपो गाण्डीवताण्डवम् । येन जैनगवीवर्गः, स्वित्रितो निरुपद्रवः ॥ १३७ ॥ विधाय समताराधा-वेधं प्रशमपत्रिणा ।
पार्थः पाणौ [illegible] स्म, परमानन्दमण्डपम् ॥ १३८ ॥ ध्यानवैश्वानरः पार्थ-मुनेरजनि कोऽप्यसौ । यस्य क्रोधाग्निरेवाभू-
दिन्धनं [illegible] ॥ १३९ ॥ नकुलस्य तपोऽम्भोधे-र्निर्गतं यच्छमामृतम् । प्रीयन्ते स्म सुरास्तेन, तत् किं नामात्र

१ '[illegible]' पाठान्तर० । २ 'समता' प्रतिद्वय० ।

कौतुकम् १ ॥ १४० ॥ मन्ये मुनिषु सर्वेषु, सहदेवोऽधिदैवतम् । तपस्तरणिना यस्य, ज्ञानेन्दुरुपजीवितः ॥१४१॥ जीयते स पुरा पाण्डु–सूनुभिर्द्विषतां शतम् । तत्तदा जेतुमीषेऽष्टा–चत्वारिंशं तु कर्मणाम् ॥ १४२ ॥ ततो भीममुनिर्भीम–मित्यभिग्रहमग्रहीत् । कुन्ताग्रदत्तमेवोञ्छ–मादास्ये नान्यथा पुनः ॥ १४३ ॥ तस्य पुण्यात्मनः सोऽपि, मासैः षड्भिरपूर्यत । न किंचिदतिदुर्लम्भं, सत्त्वनिर्णिक्तचेतसाम् ॥ १४४ ॥ प्रतिस्थानं प्रतिग्रामं, प्रत्यध्व प्रतिकाननम् । जनं धर्ममयैस्तैस्तै–र्वचोभिरुपकुर्वताम् ॥ १४५ ॥ एवं तेषां तपस्तत्त–न्महाभिग्रहदुस्तरम् । कुर्वतां खर्वतां नित्यं, नयतां कर्मसंहतिम् ॥ १४६ ॥ स्वदेहेऽपि निरीहाणा–मविरामविहारिणाम् । हायनान्यतिभूयांसि, व्यतीयुः पाण्डुजन्मनाम् ॥ १४७ ॥ ( त्रिभिर्विशेषकम् )

अथ नित्यविहारेण, विहरन्तोऽवनीतले । कदाचिदपि ते जग्मु–स्तुङ्गीशैलान्तिकक्षितिम् ॥ १४८ ॥ धर्मघोषगुरुं तस्य, शैलस्योपत्यकावने । ते जनादागतं श्रुत्वा, वन्दितुं मुदिता ययुः ॥ १४९ ॥ अद्राक्षुश्च गुरुं द्राक्षा–पाकपेशलया गिरा । दिशन्तं विशदं धर्मं, तिर्य-ङ्मर्त्य-दिवौकसाम् ॥ १५० ॥ दूरादालोक्य तान् सोऽपि, गुरुः प्रीतितरङ्गितः । प्रत्युद्याति स्म विस्मेरः, संभ्रमादुज्झितासनः ॥ १५१ ॥ आनन्दाश्रुकणाकीर्ण–पक्ष्माणो रोमहर्षिणः । ते पदाम्भोरुहक्षिप्त–मौलयस्तं ववन्दिरे ॥ १५२ ॥ तानुत्थाप्य करे धृत्वा, प्रीतिगद्गदया गिरा । विकस्वरकपोलाक्षः, पप्रच्छ स्वागतं गुरुः ॥ १५३ ॥ पुनरासनमासीने, गुरौ तेऽभ्यर्णभूतले । वन्दिताः परिषद्देव–नृ-तिर्यग्भिरुपाविशन् ॥ १५४ ॥ पुण्यार्जनकृते सर्व–सदस्यानां विशेषतः । तत्तपःप्रौढिमुद्दिश्य, वितेने देशनां विभुः ॥ १५५ ॥ देशनान्तेऽखिलश्रेयः–संभारात्मंभरिर्जनः । प्रणम्य तं विभुं

१ , स्तुङ्गी ' प्रत्यन्तर० ।

तांश्च, ययौ स्थानं निजं निजम् ॥ १५६ ॥

विस्मेरमनसोऽन्यन्न–मर्थेते गुरुमभ्यधुः । कथ्यन्तेऽपराः सर्वा, वार्ताः पश्चादपि प्रभो ! ॥ १५७ ॥ कथ्यतां तावदेतस्यो, यदाग्ख्याः शरीरिणः । क्रूरा अप्यत्र दृश्यन्ते, शम–संवेगशालिनः ॥ १५८ ॥ तद्यौष्माकागमस्यैवा–नुभावोऽयं किमन्यतः ?। किं वाऽत्र किंचिदस्त्यन्य, जृम्भते कारणान्तरम् ? ॥१५९॥ ततोऽभाषिष्ट भगवान्, पुर-ग्रामादिषु क्रमात्। विहरन्नन्यदा पूर्वं, शैलेऽस्मिन्नागतो मुनिः ॥ १६० ॥ उपास्यमानः सिद्धार्थ–देवेनाद्भुतभक्तिना । मासक्षपणमातेने, मोनुज्ञस्य न धीरधीः ॥ १६१ ॥ पर्यन्ते तपसोऽमुष्य, स पारणकहेतवे । पुरे कस्मिंश्चिदासन्ने, विवेश वशिनेन्द्रियः ॥ १६२ ॥ विशन् स्मर-शरस्य–पुण्यमूर्तिः कयाऽप्यसौ । कूपकण्ठस्थया दृष्टः, समीपस्थार्पि(पि)तार्भया ॥ १६३ ॥ रूपाऽऽक्षिप्ता गले बद्ध्वा, रज्जु कुम्भशिराऽत्य सा । कूपे प्रक्षेप्तुमारेभे, तं बालं वलितानना ॥ १६४ ॥ तद्विलोक्य मुनिर्वेगा–दागत्य प्रतिबोध्य ताम् । निन्दन् व्यामोहिनीं रूप–संपदं स्वां न्यवर्तत ॥ १६५ ॥ जग्राहाभिग्रहं चेति, वने काष्ठादिहारिभिः । दत्तेनाभाडिनाऽहं, पारयिष्यामि नान्यथा ॥ १६६ ॥ ततः प्रभृति तेनैव, विधिना कृतपारणः । तप्यमानस्तपोऽत्युग्रं, सोऽत्याद्रैन कानने ॥ १६७ ॥

तमनेदंयुगीनाज्ञा–सौभमुद्गामतेजसम् । ते विलोक्य तपस्यन्तं, तृण-काष्ठादिहारिणः ॥ १६८ ॥ गत्वा स्वस्वनरेन्द्रेभ्यः, प्रशंसुर्विस्मिताः । अभ्यर्थीवने कश्चि–त्तपस्यति पुमानिति ॥ १६९ ॥ ( युग्मम् ) भीतान्तःकरणास्तेऽपि, भूभुजस्तुच्छ-

१ शिखरे ।

कोऽप्यसावस्मदी-
चेतसः । स्वतुल्यकलिताशेष-जगतोऽन्तरचिन्तयन् ॥ १७० ॥ नूनमन्यूनमाहात्म्य-तपःपल्लवितोर्जितः । सर्वं सर्वाभिसारेण, तं झगित्यभ्य-
यानि, राज्यान्याच्छेतुमिच्छति ॥ १७१ ॥ तत्संप्रत्येव तं हन्म, इत्यालोच्य महीभुजः । अभ्येत्यास्मिन् वने याव-त्ते रामं परितः स्थिताः ॥१७३॥
षेणयन् ॥१७२॥ ततः पादातिका-श्वीय-रथ्य-हास्तिकशालिनः। तावत् सिद्धार्थदेवेन, नित्यं रामोपसेविना । सिंहाः फालक्रियोत्ताला, विक्रियन्ते स्म कोटिशः ॥ १७४॥ तैश्च वित्रासिता-
शेष-सैनिकास्तेऽवनीभुजः । तत्क्षणक्षुभितस्वान्ता, न्यवर्तन्त प्रणम्य तम् ॥ १७५ ॥

तदा प्रभृति निःसीम-शमैकनिरतेरपि । रामस्य भुवने नाम, नृसिंह इव पप्रथे ॥ १७६ ॥ पश्यन्तोऽथ शमं तस्य,
शीतांशुपरिभाविनम् । लक्षयन्तोऽपरिक्षामां, भूतग्रामे दयार्द्रताम् ॥ १७७ ॥ विन्दानाः समपिण्याक-हिरण्यां च निरीह-
ताम् । शृण्वानाश्च गिरं धर्म-मयीममृतजित्वरीम् ॥१७८॥ क्रूरा अप्युज्झितक्रौर्याः, शमैकमयचेतसः। सर्वेऽप्यत्र वने वन्याः,
प्रत्यबुध्यन्त जन्तवः ॥ १७९ ॥ (त्रिभिर्विशेषकम्) सम्यक्त्वं जगृहुः केचि-त्ते देशविरतिं परे । अन्ये च भद्रकीभूय, पाप-
कर्माणि तत्यजुः ॥ १८० ॥ चक्रिरेऽनशनं केचित्, कायोत्सर्गं व्यधुः परे । शिष्या इवान्ये रामर्षे-रासन्नासन्नसेविनः
॥ १८१ ॥ कश्चित्तु प्राग्भवप्रीति-भावाज्जातिस्मरो मृगः । कल्याणभक्तिरश्रान्त-मुपासामास तं मुनिम् ॥ १८२ ॥ भ्रान्त्वा
भ्रान्त्वा च सोऽजस्रं, सार्थमावासितं वने । गृहीतान्नांश्च काष्ठादि-हारकानगवेषयत् ॥ १८३ ॥ यदा चैक्षिष्ट तान् क्वापि,
तदैवागत्य सत्वरम् । संकेतैः प्रणिपाताद्यैः, स रामर्षिमजिज्ञपत् ॥ १८४ ॥ पारयित्वा ततो ध्यानं, रामस्तस्यानुरोधतः ।

१ प्राणिसमूहे । २ पिण्याकः-तिलखलः ।

सर्वाभिलाषो मेऽयं, सार्वादिभ्योऽगदीत्तदा ॥ १८५ ॥

कर्माणि नाराणि, काष्ठान्याहर्तुमन्यदा । रथकारास्तदाऽभ्येयु-र्भूयांसः काननोदरम् ॥ १८६ ॥ भ्राम्यन्नेणः स
तान् वीक्ष्य, मासक्षपणपारणम् । विधातुमनसे राम-मुनयेऽज्ञापयद् द्रुतम् ॥ १८७ ॥ तेनाग्रगामिना सोऽपि, निराकाङ्क्ष-
मना मुनिः । ईर्यानिरतचक्षुष्का-नुगमत्तान् वनच्छिदः ॥ १८८ ॥ छेदं छेदं तरून् सारान्, तेऽपि मध्यंदिने तदा । नानारस-
वतीपाकाः, समगच्छन्त भुक्तये ॥ १८९ ॥ धर्मं साक्षादिवायान्तं, दूरादालोक्य तं मुनिम् । सानन्दो रथकाराणा-मग्रणी-
रित्यचिन्तयत् ॥ १९० ॥ यत्रादिशाप्यविनामेव, स्थानेऽस्मिन् विपिने कथम् । कल्पद्रवोऽपि दृश्यन्ते ?, भाग्यं नस्तदहो
महत् ॥ १९१ ॥ ऐहिकश्रीकराः कामं, तेऽपि कल्पद्रवोऽथवा । एते तु मुनयः स्वर्गा-पवर्गकमलाफलाः ॥ १९२ ॥ तदद्य
सफलं धन्योऽस्मि, स्तुत्यमद्य च जन्म मे । जातं सफलमद्यैव, वनागमनमप्यदः ॥ १९३ ॥ इत्यादि चिन्तयन्नन्त-रुन्मीलत्पुल-
काङ्कुरः । समुत्थाय स भून्यस्त-मौलिस्तं मुनिमानमत् ॥ १९४ ॥ प्रासुकैरेषणीयैश्च, तैस्तैरानन्दितेन्द्रियैः । पीनप्रीतिः
स पानान्नै-रतलभ्ये वन्दं मुनिम् ॥ १९५ ॥ तन्मनोवृत्तिमालोक्य, श्रद्धातिशयबन्धुराम् । रौहिणेयमुनिश्चित्ते, चिन्तयामा-
सिवानिति ॥ १९६ ॥ अहो ! महान्मनोऽमुष्य, भावः कोऽप्येष निस्तुषः । एवमानन्दवैक्लव्य-मिदानीं यद्दधात्यसौ ॥१९७॥
नास्ति कस्मिन् मार्गं, मारम्भात्कालिकोऽपि यत् । मूलादुन्मूल्यते तेषां, तेनैव भवभूरुहः ॥ १९८ ॥ तन्महात्मायमारूढ-
स्तस्मिन् मार्गेऽस्ति संप्रति । यस्मिन् करग्रहेयानि, मन्ये मुक्तिसुखान्यपि ॥ १९९ ॥ ततोऽङ्गाधारमात्राय, प्रान्ताहारेच्छुर-
साकम् । न मात्स्खलनं किंचित्, करिष्येऽस्य विवेकिनः ॥ २०० ॥ ततो राममुनिर्भैक्ष्य-मादातुमुपचक्रमे । दातुं च रथक-

द्रुर्ग-ग्रामणीर्मुदिताशयः ॥ २०१ ॥ तावुभावपि संवीक्ष्य, दातृ-पात्रशिरोमणी । स कुरङ्गोऽपि संवेग-भावनामित्यभावयत् ॥ २०२ ॥ अहो धन्योऽयमेवाद्य, ग्रामणीर्विपिनच्छिदाम् । यस्य प्रादुरभूत् पुण्य-प्राग्भारोऽयमचिन्तितः ॥ २०३ ॥ मुनिभ्यो दत्तमीदृग्भ्यो-ऽन्यदाऽपि शिवसंपदे । किं पुनस्तद्यदेतस्मिन्, मासक्षपणपारणे ॥२०४॥ अहं तु न तपः किंचित्, कर्तुमल्पमपि क्षमः । छिद्यन्ते कर्मणां मर्म-ग्रन्थयो येन तत्क्षणात् ॥ २०५ ॥ न चैतादृग्विधं किंचि-द्दानं दातुमपीश्वरः । हा ! हतोऽहमिदं जन्म, धिङ्मे तिर्यक्त्वपांसुरम् ॥ २०६ ॥ इत्यमीषां परां कोटि-मीयुषां भावसंपदः । उपरिष्टात् पपाताद्र्ध-च्छिन्नो वात्याहतस्तरुः ॥ २०७ ॥ तन्निपाताभिघातेन, ते त्रयोऽपि गतासवः । कल्पे ब्रह्माभिधेऽभूव-न्नमरास्तुल्यसंपदः ॥ २०८ ॥ तिर्य-ङ्नरा-मरानित्थं, प्रतिस्थानं प्रबोधयन् । बभार व्रतपर्यायं, सीरभृद्वत्सरान् शतम् ॥ २०९ ॥ तत्प्रभृत्यनुभावेन, मुनेर्लाङ्गललक्ष्मणः । इदं शान्ताखिलक्रूर-श्वापदं समभूद्वनम् ॥ २१० ॥

इत्याकर्ण्य कथां तस्य, धर्मघोषमुनेर्मुखात् । विषादकलुषात्मानः, पाण्डवेया बभाषिरे ॥ २११ ॥ ईदृगद्वैतचारित्र-पवित्रात्मा बलो मुनिः । हा ! धिगस्माभिरत्यन्तं, भाग्यवन्ध्यैर्न वन्दितः ॥ २१२ ॥ श्रोत्रपात्रीकृता यस्य, वार्ताऽपीयमनुत्तरा । निपिश्चत्यन्तरात्मान-मश्रान्तममृतैरिव ॥ २१३ ॥ विश्वभद्रंकरः स स्या-द्यदि साक्षादवेक्षितः । श्रेयःसंवलितानन्द-मयं नस्तज्जगद्भवेत् ॥ २१४ ॥ (युग्मम्) तन्नैवाभूदभाग्यैर्न-स्तावत् संप्रति तु प्रभो ! । श्रीनेमिस्वामिपादार-विन्दं वन्दामहे यदि ॥ २१५ ॥ तद्भवत्येव नः सर्व-पाप्मभ्यः सलिलाञ्जलिः । बिभर्ति कृतकृत्यत्वं, व्रतग्रहणमप्यदः ॥ २१६ ॥ (युग्मम्) किं तु त्रिजगदम्भोज-स्मेरणद्युमणिः प्रभुः । क्वाधुना विहरत्येवं, विद्मः किमपि नो वयम् ॥ २१७ ॥

इत्युक्ते सूनुभिः पाण्डो–र्धर्मघोषमुनीश्वरः । ज्ञानालोकमयेनाक्ष्णा, साक्षात्कृतजगज्जगौ ॥ २१८ ॥ आर्या–नार्येषु देशेषु, मध्यदेशादिषु क्रमात् । विहृत्य श्रीमदार्येषु, भूधरेष्वप्यनेकशः ॥ २१९ ॥ मार्तण्ड इव राजीव–खण्डान्निशि निमीलितान् । मोहव्यामोहितांस्तांस्तान्, प्राणिनः प्रतिबोध्य च ॥ २२० ॥ ज्ञात्वा नेदीयसीमात्म–निर्वृतिं भुवनप्रभुः । गिरिं रैवतकं नाम, नन्वलंकृतेऽधुना ॥ २२१ ॥ ( त्रिभिर्विशेषकम् ) इत्यस्य गिरमाकर्ण्य, विकुर्वोत्सुकचेतसः । स्वामिसंगममोत्कण्ठा, जजल्पुः पाण्डुसूनवः ॥ २२२ ॥ ननु त्वरितमद्यैव, तर्हि प्रस्थीयतां प्रभो ! । दर्श्यतां नः पुरोभूय, पादास्तस्य जगत्पतेः ॥ २२३ ॥ मा स्म निर्भाग्यधौरेयाः, पुरस्तादेव तं विभुम् । निर्वाणपदवीं प्राप्तं, न वन्दिष्यामहे वयम् ॥ २२४ ॥ पुरस्कृत्येति ते वेगा–न्मुनिं रैवतकं प्रति । श्रीमन्नेमिजिनं नन्तुं, पाण्डवेयाः प्रतस्थिरे ॥ २२५ ॥ अविश्रान्तं व्रजन्तस्ते, दर्शनोत्कण्ठिताः प्रभोः । हस्तिकल्पं पुरं जग्मु–र्मासक्षपणपारणे ॥ २२६ ॥ नगरेऽस्मिन् विशन्तस्ते, धर्मघोषमुनीश्वरम् । नत्वाऽऽगमस्थिति प्रीत्या, निपत्याङ्घ्रिसरोरुहे ॥ २२७ ॥ प्रभो ! रैवतकोऽमुष्मात्, पुराद्द्वादशयोजनीम् । प्रगेतनप्रयाणेन, तत्र यामो गमिष्यते ॥२२८॥ नत्वेष्ट(ष्ट) पार्थीशे, पारणानि विरस्तु नः । इत्यभिग्रहमातेनु–स्ते तरङ्गितसंमदाः ॥२२९॥ प्रविश्याथ पुरं तस्मि–न्नुज्जयन्तगिरेः पथा । जनानागच्छतो वीक्ष्य, श्यामीभूतास्यपङ्कजान् ॥२३०॥ क्षणं यावदमी तस्थुः, किंचिज्जकित ततः । चारणः श्रमणः कश्चि–त्तावदागाद्विहायसा ॥२३१॥ ( युग्मम् ) परिम्लानमुखो धर्म–घोषाय विहितानतिः । प्रणम्य पाण्डवैः पृष्टः, स व्याचष्टेति शिष्टधीः ॥२३२॥ मनकर्मारिरामन्नं, ज्ञात्वा निर्वाणमात्मनः । भगवान् समवासार्षी–द्रैवतककानने ॥२३३॥ रूप्य-काञ्चन-माणिक्य–मयवप्रत्रयाङ्कितम् । नानामणिप्रभाजाल–केलिभिर्लुप्तगोपुरम् ॥ २३४ ॥

सर्वतो रत्नभिस्यन्तः-संक्रान्तप्रतिमाच्छलात् । एकाशोकमपि व्याप्त-मशोकविपिनैरिव ॥ २३५ ॥ आनन्दानामुपादानं, निदानं पुण्यसंपदाम् । सुरा विरचयांचक्रु-र्देशनागारमन्तिमम् ॥ २३६ ॥ (त्रिभिर्विशेषकम्) विकुर्वन्ति स्म गीर्वाणाः, ककुप्सु चतसृष्वपि । तस्यान्तर्भूरिमाणिक्य-भासुरां चतुरासनीम् ॥ २३७ ॥ ततोऽस्मिन्नुल्लसद्धर्म-ध्वजमञ्जरिताङ्गणे । राकाहिमकराकार-जैत्रच्छत्रत्रयोल्बणे ॥ २३८ ॥ यथास्थानं समासीन(ने)सुरा-सुर-नरे-श्वरे । सिंहासनमलंकृत्य, कृत्यवित् पूर्वदिङ्मुखम् ॥ २३९ ॥ मोक्षं प्रति प्रतिष्ठासु-र्विश्वानुग्रहकाम्यया । चिरं चकार भगवा-नन्तिमां धर्मदेशनाम् ॥ २४० ॥ (त्रिभिर्विशेषकम्) प्रतिबुद्धास्तया केचि-द्व्रतमाददिरे क्षणात् । श्रावकत्वं परे भेजु- रन्ये भद्रकतां पुनः ॥ २४१ ॥

ततः परीतः साधूनां, षट्त्रिंशैः पञ्चभिः शतैः । पादपोपगमं चक्रे, मासिकानशनं विभुः ॥ २४२ ॥ ततः शुचिसिताष्टम्यां, चित्रायां चित्रिताशयैः । संगतः परितः शक्र-प्रमुखैस्त्रिजगज्जनैः ॥ २४३ ॥ साधुभिः सहितः शुद्ध-शैलेशीध्यान-बन्धुरः । आशु लम्भितवान् सर्वं, कर्मजातं निरंशताम् ॥ २४४ ॥ साग्रमब्दसहस्रायु-र्जगदेकदिवाकरः । निर्व्याबाधसुखां स्वामी, निर्वाणपदवीं ययौ ॥ २४५ ॥ (त्रिभिर्विशेषकम्) ततः कुमाराः प्रद्युम्न-साम्बाद्याः सत्त्वशालिनः । रथनेम्यादयः स्वामि-भ्रातरश्च तरस्विनः ॥ २४६ ॥ कृष्णस्याष्टौ महिष्यश्च, तथैव मुनयोऽपरे । साध्व्यश्च राजीमत्याद्या, भूयस्यः शिवमासदन् ॥ २४७ ॥ (युग्मम्) प्रभोर्माता शिवादेवी, समुद्रविजयः पिता । सहैव सर्वैर्दाशार्है-र्देवभूयमुपा(पे)यतुः ॥२४८॥ कुबेरः शिबिकां शक्र-शासनाद्व्यकरोत् क्षणात् । हरिर्विधिवदभ्यर्च्य, न्यधात्तस्यां वपुः प्रभोः ॥२४९॥ गोशीर्ष-चन्दनाद्यैश्च, काष्ठै रत्नशिलातले । वितेनुर्दिशि नैर्ऋत्यां, त्रिविष्टपसदश्चिताम् ॥२५०॥ उत्पाट्य शिबिकां तत्र, नीत्वा

तस्यां त्रिदशेन्द्रः । स्वयं तस्याग्निसंस्कारं, वासवोऽकारयत् सुरैः ॥ २५१ ॥ निर्वापिते चिताग्नौ च, मेघैः क्षीरोदवारिभिः ।
दंष्ट्रास्तिनेशान्ये-स्त्वस्थ्यादि जगृहे प्रभोः ॥२५२॥ तस्मिंश्च वह्निसंस्कार-पूते रत्नशिलातले । सूत्रामा सूत्रयामास, श्रीनेमिजिन-मन्दिरम् ॥२५३॥ आनर्त्यानन्त्य तत्रस्थां, स्वामिनः प्रतिमां ततः । साश्रुः सुर-नरेशाद्यैः, स्वं स्वं स्थानं ययौ जनः ॥२५४॥

निशम्य मुनेर्वाक्य-मित्युपश्रुत्य दुःश्रवाम् । दशां दुःखमयीं कांचित्, पाण्डवेयाः प्रपेदिरे ॥ २५५ ॥ जल्पन्ति स्म च भाग्यं नः, सर्वथा प्रतिलोमितम् । यत्र भीरभूता नापि, स्वामिना संगमोऽभवत् ॥ २५६ ॥ त एव जगति स्तुत्या-स्ते निर्जीर्णाघसंचयाः । धन्या माता च तेषां, तज्जन्मैव फलेग्रहि ॥ २५७ ॥ येषां दीक्षोत्सवः स्वामि-पाणिना पावितोऽभवत् । यद्भिः शान्तं पिबन्ति स्म, स्वामिवागमृतं च ये ॥ २५८ ॥ ( युग्मम् ) धन्येष्वपि हि धन्यास्ते, ते च श्लाघ्यतमाः सताम् । स्वामिना समं येषां, निर्वाणमहिमाऽप्यभूत् ॥ २५९ ॥ इयताऽपि कृतार्थत्वं, यद्व्रतं समपादि नः । चेत्तु प्रभुरपीक्ष्येत, तत् स्यात्सर्वाणि सत्त्वानि ॥ २६० ॥ प्रभोर्वागमृतैर्नित्यं, सिच्येतायं तपस्तरुः । ततो वाङ्मनसातीतं, किमप्येष फलेद् ध्रुवम् ॥ २६१ ॥ किं पुनर्भाग्यशून्यानां, फलन्ति न मनोरथाः । " न जातु स्याद्दरिद्रस्य, कल्पद्रुमसमागमः " ॥ २६२ ॥ तत्ता-दृशगुरोरस्माभि-र्दुःखेनाप्यनभिज्ञैः । यद्व्रतं पारयिष्यामो, दृष्टे स्वामिनि नान्यथा ॥ २६३ ॥ तत्तमेव पुरस्कृत्य, प्रत्यासन्ने नगोत्तमे । आहारं विमलाद्रावस्मिन्, कुर्महे निजमीप्सितम् ॥ २६४ ॥ अत्र हि क्षीणनिःशेष-कर्मसंततयः पुरा । मुनयः पुण्डरीकाद्याः, कोटिशः प्रययुः शिवम् ॥ २६५ ॥ तदयं सर्वतीर्थेषु, महत्तीर्थं गिरीश्वरः । अस्माकमप्यभीष्टार्थ-सिद्धये

१ 'स्वामिन' प्रतौ० ।

मन्त्रिताऽधुना ॥ २६६ ॥ इत्यालोच्य तमद्रीन्द्र–मारोहन् पाण्डवाः क्षणात् । दुःसाधेऽपि न साध्येऽर्थे, मन्दायन्ते महाशयाः
॥ २६७ ॥ गिरेः शिरसि ते तस्य, विधायाराधनाविधिम् । धर्मघोषगुरोः पार्श्वे, चक्रिरेऽनशनक्रियाम् ॥ २६८ ॥
अथेक्षमाणा भृशमात्मतुल्यान्, जगत्यशेषानपि देहभाजः । साम्यामृताम्भोधिनिमज्जनैक–प्रशान्तमन्तःकरणं वहन्तः
॥ २६९ ॥ मतिं सितध्यानसमाधिबन्ध–प्रबन्धमैत्रीमधुरां दधानाः । निश्रेणिकल्पां शिवमन्दिरस्य, श्रेणिं श्रयन्तः क्षपकाभि-
धानाम् ॥ २७० ॥ सर्वक्रियाकौशलशालिचेतसो, निर्याम्यमाणा गुरुणैव तेन ते । आसादयामासुरसादितौजसः, क्रमात्त्रिलो-
कीकृतकेलिकेवलम् ॥ २७१ ॥ ( त्रिभिर्विशेषकम् ) धर्मं विशुद्धमुपदिश्य ततः सदैव, मर्त्या–सुरे सदसि योगजुषो मुहूर्तम् ।
पाण्डोः सुताः क्षणमयोगिगुणास्पदे ते, विश्रम्य मुक्तिपदमक्षयसौख्यमीयुः ॥ २७२ ॥ तत्पथानुगमकाम्यविक्रमा, निर्मला-
नशनकर्मपावनी । नन्दिनी द्रुपदभूभुजोऽपि सा, ब्रह्मलोकमतुलश्रियं ययौ ॥२७३॥ हुताशैः संस्कारं त्रिदशतरुदारुप्रणयिभि–
स्तदङ्गानां तत्तद्विधिमधुरमाधाय विबुधाः । जगत्काम्ये तस्मिन् गिरिशिरसि निर्वाणमहिमा–महं चक्रुर्नृत्यत्सुरयुवतिसंगीतकम-
यम् ॥ २७४ ॥ इत्येतत्किल पाण्डवेयचरितं पर्याप्तमेतस्य तु (नु), ब्रूमः किं महिमानमन्वहमपि व्यातन्महेऽस्मै नमः । यस्यै-
कक्रमलङ्घितान्यचरितारण्यापि विद्वद्गवी, श्राम्यन्तीव पदे पदे बत परां सीमानमालम्बते ॥ २७५ ॥ एतस्य स्तुतये कुतूहलि-
तया जिह्वान्तयोगासना–न्यध्यास्ते कविमण्डलस्य नियतं देवी गिरामीश्वरी । कुण्ठीयन्ति कनीयसोऽपि कवितुं येऽन्ये प्रबन्धा-
न्मुहुः, तेऽप्यस्मिन् किमपि प्रगल्भवचसो वाचस्पतीयन्ति यत् ॥२७६॥ एतस्मिन् व्यवहारकौशलमिह व्युत्पत्तयः प्रश्रय-प्रायेषु
प्रसभं गुणेषु दधते वैदग्ध्यमस्मद्गिरः । अस्मिन् संवननप्रपञ्चपटिमा कीर्तेरुदात्तक्रम-त्रैलोक्याभयदानपीनमहिमा धर्मोऽप्य-

स्मिन् परः ॥ २७७ ॥ एकस्यापि महान्मनोऽस्ति चरितं यस्मिंस्तदाश्चर्यास्पदं, कल्याणस्य न कस्य यत्पुनरलंचक्रुस्त एते-
ऽद्भुताः । श्रीनेमिर्मुशली हरि-प्रतिहरी पाण्डोः सुताः कौरवा, भीष्मः कर्ण-कृपादयश्च बहवस्तस्यास्य किं ब्रूमहे ॥ २७८ ॥
किं स्वर्गिभिरिममस्ति श्रोत्रकणिका रक्ता यदस्माद्दृशः, सन्तः सच्चरितामृतैकरसिकास्तस्यामनास्थापराः । सौरभ्यस्पृहयावतंम-
यन्ती गन्धं स्तनयन्. यद्वोनापि कलङ्कमस्य मतिमान् को नाम मीमांसते ? ॥२७९॥ षष्ठाङ्गोपनिषत्-त्रिषष्टिचरितान्यालोक्य
कौतुक्या देवप्रभकल्पकल्याणिकारि चरितं पाण्डोः सुतानामहम् । तत्राज्ञानतमस्तिरस्कृतिवशादुत्सूत्रमाख्यन्मयं. यत्किंचित्तु
तत्सानुग्रहया शोध्यं तदेतद्बुधैः ॥ २८० ॥

यावत् संसारतापव्यनिकरभिदुरा वाग् जिनानां मुनीन्द्र-
प्रज्ञाकान्तावगाढा विधुरयति सुधादीर्घिकादर्पमुद्राम् ।
तावन्निर्निद्रकार्तस्वरकमलकलां पुष्पदश्रान्तमस्यां
विश्वं विद्वद्भिरेकार्पितमहिममहाकाव्यमेतद्विनोतु ॥ २८१ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये बलदेवस्वर्गगमन-श्रीनेमिनाथ-
पाण्डवनिर्वाणवर्णनो नामाष्टादशः सर्गः ॥ १८ ॥

---

मुनिचन्द्रसूरिपट्टे, श्रीदेवानन्दसूरयोऽभूवन् । स्तोत्राय यद्गुणानां, ध्रुवं न वेधा अपि सुमेधाः ॥ ८ ॥
तेषां कल्पनकत्रिविष्टपगवीचिन्ताश्मवैहासिका–दादेशात् कविमार्गवल्गनकलानैपुण्यशून्यैरपि ।
श्रीदेवप्रभसूरिभिस्तनुधियां पाण्डोश्चरित्रं किम–प्येतत्तद्विबुधादिशिष्यहृदयोल्लासार्थमग्रथ्यत ॥ ९ ॥
श्रीयशोभद्रसूरीणां, नवाज्ञ व्यापृता दृशः । यथैतदगमत् सर्वं, विद्वल्लोकावलोक्यताम् ॥ १० ॥
ज्ञानैकमयपूर्णाना–मस्मिन्नवरसान्विते । श्रीनरचन्द्रसूरीणां, प्रज्ञया कैतकायितम् ॥ ११ ॥
शीतयाऽऽलोकनेनेव, कर्णक्रोडनमातिथेः । कर्तुमातिथ्यमर्हन्ति, ग्रन्थस्यास्य मनीषिणः ॥ १२ ॥

॥ इति प्रशस्तिः ॥

**समाप्तश्चायं ग्रन्थः**

१ वैहासिकः–हास्यकारकः । २ 'च प्रकाशितम्' प्रत्यन्त० ।

समाप्तं श्रीपाण्डवचरित्र-महाकाव्यम्

॥३१०॥